# श्रीमन्महाभारतम्।

श्रीमन्महर्षिवेदव्यासविरचितम्।

## आदिपर्व्व।

---

रायोपाधिकेन श्रीप्रतापचन्द्रेण

प्रकाशितम्

मूल्यं विना वितरितञ्च

हस्तपादादिसम्पन्ना यत्र किमवरोदय।



कलिकाता राजधान्यां भारत यन्त्रे

श्रीप्रतापचन्द्ररायेण मुद्रितम्।

शकाब्दाः १८०४।

# PREFACE TO THE FOURTH EDITION OF THE MOHABHARAT.

Amongst the characteristics of a great nation, that which brings it most prominently forward to the notice of the civilized world is its literature. India had a literature of its own, which made it the object of envy and admiration of nations. Though the glory and renown of the Hindoos have passed away, they live still in the memory of the world by the renown of the imperishable monuments which are still preserved to them in their poetry and philosophy. " Many of our countrymen are it is true, deeply learned in the language, literature and science of England, but being unacquainted with the sanskrit language, they can form no conception of the wealth of lore, locked up in ancient sanskrit works, which they laugh at, without being able to appreciate or test their real value " It is very natural to expect, therefore, that every Hindoo who has any respect for his creed and nationality, should encourage with patriotic ardour, every endeavour to revive his national literature and diffuse among the races of his creed as well as among other races and nations a knowledge of that literature, and foster among them a desire for its cultivation and improvement. Under the benign influence of British rule, Bengal has made rapid strides in its progress in the path of knowledge and civilization, but with all its progress we cannot but lament a sad want of zeal and earnestness in its people in their appreciation of their national literature. A rage for imitation of foreign manners has grown of late in a form which threatens to extinguish all feelings of patriotism and national individuality which cannot but be deeply regretted. To foster amongst my country-

men, a love for Hindoo literature and religion and infuse into them a patriotic affection for the religious relics of the ancient Hindoo literature, I was induced to undertake the publication of eminent works of the ancient Hindoos. The first work which I took in hand was the editing of the Mohabharat and the publishing of a Bengali translation of the same. I commenced by publishing the translation in parts at a time and issuing 3,000 copies of each part monthly at the nominal price of 8 Annas a part, to the subscribers and 12 annas to non subscribers. The whole work was completed in 76 parts each of which was punctually delivered to the subscribers at the end of every month.

After the completion of the first edition I was overtaken by a domestic calamity which obliged me to seek rest by change of scene and climate by travelling in the interior of the country. This sojourn amongst other things did me good, the recollection of which makes my heart leap with joy. I was almost a stranger to the people with whom I fell in my rambles but I saw that my publication has made my name familiar to them and they all accorded to me in flattering reception. While there my entertainers acknowledged the great obligation the Hindoo public were under, to the projector and publisher of the new Bengali edition of the Mohabharat. Most of them complained of even the small price set upon it, being prohibitive. On my return home I found that there was still a large number of spare copies in store and remembering the complaint I had heard in my travels, I advertised them for gratuitous distribution. As was expected the demand proved excessive and the stock consisting of 1,900 copies was exhausted within a few days after the publication of the notice. Town applicants who presented themselves in person were supplied without any charge but Moffisil applicants were charged simply with postage.

The avidity with which the publication was sought and the eagerness shown by a numerous class of readers in the middle station of life, suggested to me the idea of establishing the present Datavya Bharat Karjalaya or the Institution for gratuitous distribution of the Mohabharat and its kindred publications As I was *not in a position to bear unassisted the whole expense of printing* and publication of the Mohabharat, I appealed to the patriotism and generosity of the Hindoo public and I gratefully acknowledge that my appeal met with a cordial and hearty response. Thus the work proceeded smoothly, and there was no hitch in its progress; no sound and noise about the gigantic nature of the undertaking, no pomp and no beating of drum. In course of time, however, it came to my knowledge that dishonest and unprincipled recipients of the Bharat abused the gift They sold for profit, copies of the Bharat which they received free of charge. I had no choice but put some restriction on this abuse of charity by demanding a nominal price from unknown applicants. This charge scarcely exceeded the postage charge paid by the moffisil recipients. Under this restriction about 9 000 copies of the Bharat and 2,000 of Harivansá were distributed.

It occurred to me afterward, that the value of the series which I had undertaken to publish, might be exhausted, if the translation and the original correct text were published together, I carried out the idea in the edition of the Ramayan which is in course of publication. Considerable progress has been made in the last mentioned work which is also being issued in monthly parts of 2,500 copies each. I had long intended to republish another edition of the Mohabharat with the original text and translation, but it is a costly work. There is, I perceive, an earnest desire on the part of many readers of the Mohabharat to be furnished with such an edition, and on the strength of

their eagerness I have ventured to commence the new edition. I am now obliged again to depend upon the support and encouragement of the generous public and to express a hope that they will extend to me the same patronage which they had heretofore vouchsafed to enable me to complete an undertaking which is beyond the limit of any private resource. I may, in conclusion, crave leave to express a hope that my confidence in the growing spirit of patriotism amongst my countrymen has not been misplaced and that the Bharat institution will not be allowed to languish for want of support.

Besides, it has several other objects in view materially conducive to the improvement of our society, which will be laid open to the public notice in due course.

Datavya Bharat Karjyalaya
Jorasanka.

PROTAP CHUNDRA ROY

ॐ नमो गणेशाय ।

भागीरथीमधुस्यन्दं भक्तभृङ्गनिषेवितम् ।
जयत्यक्षतसौगन्ध्यं भगवत्पादपङ्कजम् ॥

---

उपहृतिः ।

अखिलश्रवणमङ्गलनामधेयाप्रतिमवीर्य्यवारांनिधि-सकललोक-
शुभदर्शनैकधर्मवीर-यशःकुसुमसुरभीकृतदशदिग्वधूमुख-पर-
वीरवारणकुम्भपाटनैकपटुमृगपति-क्ष्मापति—

श्रीलश्रीमन्महाराजाधिराजरणवीरसिंहबाहादुर

जि, सि, एस, आइ,

काश्मीरमहामहीपति-रणवीरसिंहवरणीयेषु—

काश्मीरे नगरे शुभे निवसति क्षीरोदगर्भोपमे
प्रद्योतद्विमलद्युतिश्च कुमुदं प्रोल्लासयन् प्राक्षयः ।
सौम्यानां धुरि संस्थितोऽतिमहितः क्षमामृतप्रोद्भवः
प्रेयांस्त्वमवनीशचन्द्र सततं प्रोद्भूय सर्वोपरि ॥

सकलभुवनगीतो वर्द्धमानोदितश्री-
रभिमतगुणशाली सज्जनानां मनोज्ञः ।
विबुधकविगुरूणां सन्निधानाश्रितश्री-
र्जयति च नृपसूर्य्यः पद्मिनीनां रसज्ञः ॥

भवादृशानां खलु पुण्यकर्मणां
विद्याव्रतस्नानजुषां कृतात्मनाम् ।
दीनेषु विश्राणितसर्वसम्पदां
यज्जीवनं तच्च शुभावहं शुभम् ॥

त्वद्गेहे नरदेव देवदयिता लक्ष्मीः सदा राजते
देवी वाक् सततं पितामहमहोजुष्टा स्थिता पुष्कला ।
यत्कीर्तिर्भुवनेऽवने च विदिता हेतुः परः शूलिनः
सा चैवाधिगता गताघ पुरुषौ ब्रह्मा त्वया निर्जिताः ॥
रामस्त्वं लक्ष्मणस्त्वं हि शत्रुघ्नो भरतोसि च ।
त्वं स राजा दशरथः अयोध्या ते पुरी मता ॥
हंसस्त्वं हि राजहंसतमोसि त्वं तमोपहः ।
कौरव्यो राजन् विराजन् वा तेजसा ते वरोऽवरः ॥
युधिष्ठिरोसि भीमोसि भीष्मोसि त्वं धनञ्जयः ।
दुर्योधनस्त्वं विदुरो धृतराष्ट्रस्त्वमेव हि ॥

जितमनोभव ईश इवात्मवान्
गुणवरैः कमलापतिसाम्यधृक् ।
त्वमहसा कृतलोकगतिर्विभु-
स्त्वमपरो भुवि वीर चतुर्मुखः ॥
त्रिविधकाञ्चनरत्नवराम्वितः
सततमुन्नतिभाग्बहुसेवितः ।
धृतमहीभृदनीशमहोदय-
स्त्वमसि यो जितवान् स हिमाचलम् ॥
वरतनुर्वरणीयवरार्चितो
वरकृतिर्वरदो वरसेवितः ।
वरदयालुतया वरलाञ्छितः
सकललोकवरो वरभावितः ॥

एतत्ते नृप चक्रचिह्नरुचिरे पद्माङ्कगं भाकरे
चौर्योभाऽस्वरेऽरिवीरकलनासौभाग्यगर्वोद्धुरे ।

॥

दत्तोऽयमतरेऽतिपाटनपटौ श्रीकोल्कातायां करे
श्रद्धाप्रीतिभरेण पूतमनसा भक्त्यार्पितं भारतम् ॥

देव !

दिष्ट्यैव मया चतुर्वर्णप्रार्थितस्य निर्विघ्नपरिसमाप्तिकामनया भावितात्मनां भवतां सुपवित्रनामधेयमुद्दिश्य शुभ इव क्षणे समारब्धमन्तो रामायणवितरणकार्य्यम् तेनैव निरन्तरमेतत् सम्वर्द्धते। नाममाहात्म्येनैवेदं सुसम्पन्नमिति इत्यपि सर्वे समाश्वसन्ति। कालवैगुण्यादनाथाश्च संवृत्ता वयं भारतीयाः। आर्य्यधर्माचारं पुष्णाति भारतेऽधुना हतभाग्यवशादस्माकमीदृशो नरपतिः क्वचित् दृश्यते। देव एवैको धर्मवीरः सततं समाश्रितः सनातनधर्मपरिरक्षणार्थं जागर्त्ति विभर्त्ति च मुमूर्षुप्रायं बहुविघ्ननिपीड़ितमार्य्यजनानां धर्माचारम्। अतो ह्यनाथा अपि वयं श्रीमता देवेन नरपतिचूड़ामणिना भवता सर्वथा सनाथान् मन्यामहे आशास्महे च यद्वैगुण्यवशादधःपतितेऽस्मिन् भारते भवत्कृपाकटाक्षपातात् पुनरप्युद्देष्यति विमलं धर्मज्योतिः। प्रत्यक्षीकृतश्च मद्रामायणानुकूल्यमुखेन भारतीयान् प्रति देवस्यानुग्रहः। तस्मात् बहुकृतप्रधियैव सुपुण्यं पुण्यावहं भरतवंशचरितं भारतमिदं भक्तिश्रद्धासमन्वितमुपहियते। स्वीकृतेऽस्मिन् कृपया देवेन सम्पद्यतेऽस्माकं बहुशः कृतकृत्यतेति।

भक्तिभारावनतोऽनुगतः
किंकरः
श्रीप्रतापचन्द्ररायः।



## विज्ञप्तिः ।

विज्ञापितपूर्वमेवेदं बहुशो मया यत् पापबाहुल्यवशात् कालवेगाद्वास्मिन् पवित्रभूमि भारते धर्माचारविप्लवरूपं महद्भयमापतितमिति। पूर्वेषां धर्माचारादिभिः सम्यक्परिचयाभाव एवास्य निदानमित्यप्युद्घोषितञ्चासीत्। पुराणादिशास्त्रालोचनमेवेदं महद्भयमपनेष्यति। शास्त्रवितरणमन्तरेण च सर्वशः शास्त्रालोचना दुर्लभेति च धिया मया दातव्यभारतकार्य्यालय इति नाम्ना सप्तवर्षाणि यावदयं कार्य्यालयः प्रतिष्ठापितः। देशहितैषिणां धार्मिकानामानुकूल्यमेव मे समुद्दिष्टावलम्बनमासीत्। दिष्ट्या प्रार्थिता एवास्यानुकूल्याय समुद्युक्ता यथासम्भवं मुक्तहस्ताश्चान्यस्माद्दशप्रिया वदान्याः। पवित्रश्लोकानां तेषामेवानुकूल्यमिदं धर्म्यं कर्म पुष्णाति।

प्रथमं तावत् भारतस्य वङ्गीयानुवादमेव वितरितुमारब्धम्। संस्करणत्रयेणास्य च प्रायशो नव सहस्राणि वितरितानि अतीते च काले बहुविज्ञधियां परामर्शेन विविच्य स्थिरीकृतं यत् परतो मूलमपि प्रतिनिबन्धस्यानुवादेन सह प्रकाशनीयं वितरितव्यञ्च। तदनु रामायणं प्रकाश्यते।

बहुविज्ञानवारांनिधेर्धर्माचारनिलयभूतस्य भारतस्य मूलप्रचारश्चिरोद्दिष्ट एवासीत्। बहुलव्ययसाध्यतयास्य कर्मणः तत्सिद्धिस्तु सुदूरं पराहता। तेन च वयं मर्मणि तुदिता आसन्। धर्माभिमुख्येन भाग्यवशाच्च तन्महत् कार्य्यमधुनारब्धमभवत्। स्वदेशीयानां भिन्नदेशीयानाञ्च बहूनां कृतधियां वचनाग्रहं वारयितुमशक्ता वयं गत्यन्तरमदृष्ट्वा ईदृशं दुर्वहकार्य्यभारमीदृशं दुर्बलस्कन्धमारोपितवन्तः। दुर्बला अपि वयं नावसीदाम; साधारण-

मद्गाण्यतैव साक्षात् सञ्चरन्ति । आशास्महे च वयमधुना सर्वेषा-
मेवार्य्यतनूजानां भारतीयानामनुपमरीतिप्रयत्नं सहायानुगमनम्।
निष्किञ्चनीकृतेऽप्यस्मिन् भारते ऐहिकामुष्मिकसुखसाधनमत्यनर्घं
हि धर्मरत्नं नाधुनापि हृतम्। अतस्तद्रक्षणार्थं सर्वे समाश्रिताः
सततं यतन्त। आर्य्याः खलु धर्मधनैरेव च धनिकाः। धर्ममेव ते
बहुमन्यन्त। धर्म एव तेषां माहात्म्यं गौरवञ्च प्रतिष्ठितम्।
यावद्धर्मस्तिष्ठति तावत् न तेषां किमपि गतम्। धिगस्मान्
यदि वयमेतादृशस्य धर्मरत्नस्य प्रभवोऽपि सीदामः। यद्यन्यत्
सर्वं याति यातु धर्मं सर्वात्मना रक्षत अचिरादवश्यमेवेह परत्र
च समृद्धाः प्रतिष्ठिताश्च भविष्यथ।

वक्तव्यस्यैवेदमुपसंहारे यद्धूर्त्तानां वञ्चनावारणार्थं डाक-
योगेन प्रकाशितपुस्तकानां प्रेषणनियमो व्यवस्थापितस्तच्छुल्कार्थञ्च
प्रतिनिबन्धं किञ्चिद्गृह्यत इत्यलं विस्तरेण।

दातव्यभारतकार्य्यालयः
योड़ासांको कलिकाता।
शकाब्दाः १८०४।

श्रीप्रतापचन्द्रराय।

# महाभारतम्।

## आदिपर्व्व।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥

लोमहर्षणपुत्र उग्रश्रवाः सौतिः पौराणिको नैमिषारण्ये।
शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे ॥ १ ॥ सुखासीनानभ्य-
गच्छन्महर्षीन् संशितव्रतान्। विनयावनतो भूत्वा कदाचित्
सूतनन्दनः ॥ २ ॥ तमाश्रममनुप्राप्तं नैमिषारण्यवासिनाम्।
चित्राः श्रोतुं कथास्तत्र परिवव्रुस्तपस्विनः ॥ ३ ॥ अभिवाद्य
मुनींस्तांस्तु सर्व्वानेव कृताञ्जलिः। अपृच्छत् स तपोवृद्धिं सद्भि-
श्चैवाभिपूजितः ॥ ४ ॥ अथ तेषूपविष्टेषु सर्व्वेष्वेव तपस्विषु।
निर्द्दिष्टमासनं भेजे विनयाल्लोमहर्षणिः ॥ ५ ॥ सुखासीनं तत-
स्तन्तु विश्रान्तमुपलक्ष्य च। अथापृच्छदृषिस्तत्र कश्चित् प्रस्तावयन्
कथाः ॥ ६ ॥ कुत आगम्यते सौते क्व चायं विहृतस्त्वया। कालः
कमलपत्राक्ष शंसैतत् पृच्छतो मम ॥ ७ ॥ एवं पृष्टोऽब्रवीत् सम्य-
ग्यथावल्लोमहर्षणिः। वाक्यं वचनसम्पन्नस्तेषाञ्च चरिताश्रयम्
॥ ८ ॥ तस्मिन् सदसि विस्तीर्णे मुनीनां भावितात्मनाम्।

सौतिरुवाच। जनमेजयस्य राजर्षेः सर्पसत्रे महात्मनः ॥ ९ ॥
समीपे पार्थिवेन्द्रस्य सम्यक् पारीक्षितस्य च। कृष्णद्वैपायन-



प्रोक्ताः सुपुण्या विविधा कथितायापि विधि-
वत्ता वैशम्पायनेन वै । श्रुतास्ता विचित्रार्था महाभारत-
संश्रिताः ॥ ११ ॥ बहूनि सम्परिक्रम्य तीर्थान्यायतनानि च ।
समन्तपञ्चकं नाम पुण्यं द्विजनिषेवितम् ॥ १२ ॥ गतवानस्मि तं
देशं युद्धं यत्राभवत् पुरा । कुरूणां पाण्डवानां च सर्व्वेषां च
महीक्षिताम् ॥ १३ ॥ दिदृक्षुरागतस्तस्मात् समीपं भवतामिह ।
आयुष्मन्तः सर्व्व एव ब्रह्मभूता हि मे मताः ॥ १४ ॥ अस्मिन् यज्ञे
महाभागाः सूर्य्यपावकवर्च्चसः । कृताभिषेकाः शुचयः कृत-
जप्याहुताग्नयः । भवन्त आसने स्वस्था ब्रवीमि किमहं द्विजाः
॥ १५ ॥ पुराणसंश्रिताः पुण्याः कथा धर्मार्थसंश्रिताः । इति-
वृत्तं नरेन्द्राणामृषीणाञ्च महात्मनाम् ॥ १६ ॥

ऋषय ऊचुः । द्वैपायनेन यत् प्रोक्तं पुराणं परमर्षिणा ।
सुरैर्ब्रह्मर्षिभिश्चैव श्रुत्वा यदभिपूजितम् ॥ १७ ॥ तस्याख्यान-
वरिष्ठस्य विचित्रपदपर्व्वणः । सूक्ष्मार्थन्याययुक्तस्य वेदार्थैर्भूषि-
तस्य च ॥ १८ ॥ भारतस्येतिहासस्य पुण्यां ग्रन्थार्थसंयुताम् ।
संस्कारोपगतां ब्राह्मीं नानाशास्त्रोपबृंहिताम् ॥ १९ ॥ जनमे-
जयस्य यां राज्ञो वैशम्पायन उक्तवान् । यथावत् स ऋषिस्तुष्ट्या
सत्रे द्वैपायनाज्ञया ॥ २० ॥ वेदैश्चतुर्भिः संयुक्तां व्यासस्याद्भुत-
कर्म्मणः । संहितां श्रोतुमिच्छामः पुण्यां पापभयापहाम् ॥ २१ ॥

सौतिरुवाच । आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतम् ।
ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम् ॥ २२ ॥ असच्च सद-
सच्चैव यद्विश्वं सदसत्परम् । परावराणां स्रष्टारं पुराणं परम-
व्ययम् ॥ २३ ॥ मङ्गल्यं मङ्गलं विष्णुं वरेण्यमनघं शुचिम् ।
नमस्कृत्य हृषीकेशं चराचरगुरुं हरिम् ॥ २४ ॥ महर्षेः पूजित-
स्येह सर्व्वलोकैर्महात्मनः । प्रवक्ष्यामि मतं पुण्यं व्यासस्याद्भुत-
कर्म्मणः ॥ २५ ॥ आचख्युः कवयः केचित् संप्रत्याचक्षते परे ।

सुभ्राडिति ततः स्मृतः ॥ ४३ ॥ सुभ्राजस्तु त्रयः पुत्राः प्रजावन्तो बहुश्रुताः। दशज्योतिः शतज्योतिः सहस्रज्योतिरेव च ॥ ४४ ॥ दश पुत्रसहस्राणि दशज्योतेर्महात्मनः। ततो दशगुणाश्चान्ये शतज्योतेरिहात्मजाः ॥ ४५ ॥ भूयस्ततो दशगुणाः सहस्रज्योतिषः सुताः। तेभ्योऽयं कुरुवंशश्च यदूनां भरतस्य च ॥ ४६ ॥ ययातीक्ष्वाकुवंशश्च राजर्षीणाञ्च सर्वशः। संभूता बहवो वंशा भूतसर्गाः सुविस्तराः ॥ ४७ ॥ भूतस्थानानि सर्वाणि रहस्यं त्रिविधञ्च यत्। वेदा योगः सविज्ञानो धर्मोऽर्थः काम एव च ॥ ४८ ॥ धर्मकामार्थयुक्तानि शास्त्राणि विविधानि च। लोकयात्राविधानञ्च सर्वं तद्दृष्टवानृषिः ॥ ४९ ॥ इतिहासाः सवैयाख्या विविधाः श्रुतयोऽपि च। इह सर्वमनुक्रान्तमुक्तं ग्रन्थस्य लक्षणम् ॥ ५० ॥ विस्तीर्यैतन्महज्ज्ञानमृषिः संक्षिप्य चाब्रवीत्। इष्टं हि विदुषां लोके समासव्यासधारणम् ॥ ५१ ॥ मन्वादि भारतं केचिदास्तीकादि तथापरे। तथोपरिचराद्यन्ये विप्राः सम्यगधीयते ॥ ५२ ॥ विविधं संहिताज्ञानं दीपयन्ति मनीषिणः। व्याख्यातुं कुशलाः केचिद्ग्रन्थान् धारयितुं परे ॥ ५३ ॥ तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम्। इतिहासमिमं चक्रे पुण्यं सत्यवतीसुतः ॥ ५४ ॥ पराशरात्मजो विद्वान् ब्रह्मर्षिः संशितव्रतः। तदाख्यानवरिष्ठं स कृत्वा द्वैपायनः प्रभुः ॥ ५५ ॥ कथमध्यापयानीह शिष्यानित्यन्वचिन्तयत्। तस्य तच्चिन्तितं ज्ञात्वा ऋषेर्द्वैपायनस्य च ॥ ५६ ॥ तत्राजगाम भगवान् ब्रह्मा लोकगुरुः स्वयम्। प्रीत्यर्थं तस्य चैवर्षेर्लोकानां हितकाम्यया ॥ ५७ ॥ तं दृष्ट्वा विस्मितो भूत्वा प्राञ्जलिः प्रणतः स्थितः। आसनं कल्पयामास सर्वैर्मुनिगणैर्वृतः ॥ ५८ ॥ हिरण्यगर्भमासीनं तस्मिंस्तु परमासने। परिवृत्यासनाभ्याशे वासवेयः स्थितोऽभवत् ॥ ५९ ॥ अनुज्ञातोऽथ कृष्णस्तु ब्रह्मणा परमेष्ठिना। निष-

ताद्दा समाख्याते प्रीयमाणः सुविस्मितः ॥ ६० ॥ उवाच स महातेजा ब्रह्माणं परमेष्ठिनम् । कृतं मयेदं भगवन् काव्यं परमपूजितम् ॥ ६१ ॥ ब्रह्मन् वेदरहस्यञ्च यच्चान्यत् स्थापितं मया । साङ्गोपनिषदाञ्चैव वेदानां विस्तरक्रिया ॥ ६२ ॥ इतिहासपुराणानामुन्मेषं निर्मितञ्च यत् । भूतं भव्यं भविष्यञ्च त्रिविधं कालसंज्ञितम् ॥ ६३ ॥ जरामृत्युभयव्याधिभावाभावविनिश्चयः । विविधस्य च धर्मस्य ह्याश्रमाणाञ्च लक्षणम् ॥ ६४ ॥ चातुर्वर्ण्यविधानञ्च पुराणानाञ्च कृत्स्नशः । तपसो ब्रह्मचर्यस्य पृथिव्याश्चन्द्रसूर्ययोः ॥ ६५ ॥ ग्रहनक्षत्रताराणां प्रमाणञ्च युगैः सह । ऋचो यजूंषि सामानि वेदाध्यात्मं तथैव च ॥ ६६ ॥ न्यायशिक्षा चिकित्सा च दानं पाशुपतं तथा । हेतुनैव समं जन्म दिव्यमानुषसंज्ञितम् ॥ ६७ ॥ तीर्थानाञ्चैव पुण्यानां देशानाञ्चैव कीर्त्तनम् । नदीनां पर्वतानाञ्च वनानां सागरस्य च ॥ ६८ ॥ पुराणां चैव दिव्यानां कल्पानां युद्धकौशलम् । वाक्यजातिविशेषाश्च लोकयात्राक्रमश्च यः ॥ ६९ ॥ यच्चापि सर्वगं वस्तु तच्चैव प्रतिपादितम् । परं न लेखकः कश्चिदेतस्य भुवि विद्यते ॥ ७० ॥

ब्रह्मोवाच । तपोविशिष्टादपि वै विशिष्टान् मुनिसञ्चयात् । मन्ये श्रेष्ठतरं त्वां वै रहस्यज्ञानवेदनात् ॥ ७१ ॥ जन्मप्रभृति सत्यान्ते वेद्मि गां ब्रह्मवादिनीम् । त्वया च काव्यमित्युक्तं तस्मात् काव्यं भविष्यति ॥ ७२ ॥ अस्य काव्यस्य कवयो न समर्था विशेषणे । विशेषणे गृहस्थस्य शेषास्त्रय इवाश्रमाः ॥ ७३ ॥ काव्यस्य लेखनार्थाय गणेशः स्मर्यतां मुने ।

सौतिरुवाच । एवमाभाष्य तं ब्रह्मा जगाम स्वं निवेशनम् ॥ ७४ ॥ ततः सस्मार हेरम्बं व्यासः सत्यवतीसुतः । स्मृतमात्रो गणेशानो भक्तचिन्तितपूरकः ॥ ७५ ॥ तत्राजगाम विघ्नेशो

वेदव्यासो यतः स्थितः । पूजितश्चोपविष्टश्च व्यासेनोक्तस्तदानघ
॥ ७६ ॥ लेखको भारतस्यास्य भव त्वं गणनायक । मयैव
प्रोक्तग्रन्थस्य मनसा कल्पितस्य च ॥ ७७॥ श्रुत्वैतत् प्राह विघ्नेशो
यदि मे लेखनी क्षणम् । लिखतो नावतिष्ठेत तदा स्यां
लेखको ह्यहम् ॥७८॥ व्यासोऽप्युवाच तं देवमबुद्ध्वा मा लिख
क्वचित् । ओमित्युक्त्वा गणेशोऽपि बभूव किल लेखकः ॥ ७९ ॥
ग्रन्थग्रन्थिं तदा चक्रे मुनिर्गूढं कुतूहलात् । यस्मिन् प्रतिज्ञया
प्राह मुनिर्द्वैपायनस्त्विदम् ॥ ८० ॥ अष्टौ श्लोकसहस्राणि अष्टौ
श्लोकशतानि च । अहं वेद्मि शुको वेत्ति सञ्जयो वेत्ति वा नवा
॥ ८१ ॥ तत् श्लोककूटमद्यापि ग्रथितं सुदृढं मुने । भेत्तुं न
शक्यतेऽर्थस्य गूढत्वात् प्रश्रितस्य च ॥ ८२ ॥ सर्वज्ञोऽपि गणेशो
यत् क्षणमास्ते विचारयन् । तावच्चकार व्यासोऽपि श्लोकान-
न्यान् बहूनपि ॥८३ ॥ अज्ञानतिमिरान्धस्य लोकस्य तु विचेष्टतः ।
ज्ञानाञ्जनशलाकाभिर्नेत्रोन्मीलनकारकम् ॥ ८४ ॥ धर्मार्थकाम-
मोक्षार्थैः समासव्यासकीर्तनैः । तथा भारतसूर्येण नृणां विनि-
हतं तमः ॥ ८५ ॥ पुराणपूर्णचन्द्रेण श्रुतिज्योत्स्नाः प्रका-
शिताः । नृबुद्धिकैरवाणां च कृतमेतत् प्रकाशनम् ॥ ८६ ॥ इति-
हासप्रदीपेन मोहावरणघातिना । लोकगर्भगृहं कृत्स्नं यथावत्
संप्रकाशितम् ॥ ८७ ॥ संग्रहाध्यायबीजो वै पौलोमास्तीकमूल-
वान् । संभवस्कन्धविस्तारः सभारण्यविटङ्कवान् ॥८८॥ अरणी-
पर्वरूपाढ्यो विराटोद्योगसारवान् । भीष्मपर्वमहाशाखो द्रोणपर्व-
पलाशवान् ॥ ८९ ॥ कर्णपर्वसितैः पुष्पैः शल्यपर्वसुगन्धिभिः ।
स्त्रीपर्वैषीकविश्रामः शान्तिपर्वमहाफलः ॥ ९० ॥ अश्वमेधा-
मृतरसस्त्वाश्रमस्थानसंश्रयः । मौसलश्रुतिसंक्षेपः शिष्टद्विज-
निषेवितः ॥ ९१ ॥ सर्वेषां कविमुख्यानामुपजीव्यो भविष्यति ।
पर्जन्य इव भूतानामक्षयो भारतद्रुमः ॥ ९२ ॥

सूत उवाच॰॥ तस्य वृक्षस्य वक्ष्यामि शश्वत्पुष्पफलोदयम्। स्वादुमेध्यरसोपेतमच्छेद्यममरैरपि ॥ ९३ ॥ मातुर्नियोगाद्धर्म्मात्मा गाङ्गेयस्य च धीमतः। क्षेत्रे विचित्रवीर्य्यस्य कृष्णद्वैपायनः पुरा। त्रीनग्नीनिव कौरव्यान् जनयामास वीर्य्यवान् ॥ ९४ ॥ उत्पाद्य धृतराष्ट्रञ्च पाण्डुं विदुरमेव च। जगाम तपसे धीमान् पुनरेवाश्रमं प्रति ॥ ९५ ॥ तेषु जातेषु वृद्धेषु गतेषु परमां गतिम्। अब्रवीद्भारतं लोके मानुषेऽस्मिन्महानृषिः ॥९६॥ जनमेजयेन पृष्टः सन् ब्राह्मणैश्च सहस्रशः। शशास शिष्यमासीनं वैशम्पायनमन्तिके ॥ ९७ ॥ स सदस्यैः सहासीनः श्रावयामास भारतम्। कर्म्मान्तरेषु यज्ञस्य चोद्यमानः पुनः पुनः ॥ ९८ ॥ विस्तरं कुरुवंशस्य गान्धार्य्या धर्म्मशीलताम्। क्षत्तुः प्रज्ञां धृतिं कुन्त्याः सम्यक् द्वैपायनोऽब्रवीत् ॥ ९९ ॥ वासुदेवस्य माहात्म्यं पाण्डवानाञ्च सत्यताम्। दुर्वृत्तं धार्त्तराष्ट्राणामुक्तवान् भगवानृषिः ॥ १०० ॥ चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम्। उपाख्यानैर्विना तावद्भारतं प्रोच्यते बुधैः ॥ १०१ ॥ ततोऽध्यर्द्धशतं भूयः संक्षेपं कृतवानृषिः। अनुक्रमणिकाध्यायं वृत्तान्तानां सपर्व्वणाम् ॥ १०२ ॥ इदं द्वैपायनः पूर्व्वं पुत्रमध्यापयत् शुकम्। ततोऽन्येभ्योऽनुरूपेभ्यः शिष्येभ्यः प्रददौ विभुः ॥ १०३ ॥ षष्टिं शतसहस्राणि चकारान्यां स संहिताम्। त्रिंशच्छतसहस्रञ्च देवलोके प्रतिष्ठितम् ॥ १०४ ॥ पित्र्ये पञ्चदश प्रोक्तं गन्धर्व्वेषु चतुर्द्दश। एकं शतसहस्रन्तु मानुषेषु प्रतिष्ठितम् ॥ १०५ ॥ नारदोऽश्रावयद्देवानसितो देवलः पितॄन्। गन्धर्व्वयक्षरक्षांसि श्रावयामास वै शुकः ॥ १०६ ॥ अस्मिंस्तु मानुषे लोके वैशम्पायन उक्तवान्। शिष्यो व्यासस्य धर्म्मात्मा सर्व्ववेदविदाम्बरः। एकं शतसहस्रन्तु मयोक्तं वै निबोधत ॥ १०७ ॥ दुर्य्योधनो मन्युमयो महाद्रुमः स्कन्धः कर्णः शकुनिस्तस्य शाखाः। दुःशासनः पुष्प-

पुष्पे समृद्धे मूलं राजा धृतराष्ट्रो मनीषी ॥ १०८ ॥ युधिष्ठिरो धर्ममयो महाद्रुमः स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः। माद्रीसुतौ पुष्पफले समृद्धे मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ॥ १०९ ॥ पाण्डुर्जित्वा बहून् देशान् युधा विक्रमणेन च। अरण्ये मृगयाशीलो न्यवसन्मुनिभिः सह ॥ ११० ॥ मृगव्यवायनिधनात् कृच्छ्रां प्राप स आपदम्। जन्मप्रभृति पार्थानां तत्राचारविधिक्रमः ॥ १११ ॥ मात्रोरभ्युपपत्तिश्च धर्मोपनिषदं प्रति। धर्मस्य वायोः शक्रस्य देवयोश्च तथाश्विनोः ॥ ११२ ॥ तापसैः सह संवृद्धा मातृभ्यां परिरक्षिताः। मेध्यारण्येषु पुण्येषु महतामाश्रमेषु च ॥ ११३ ॥ ऋषिभिर्यत्तदा नीता धार्त्तराष्ट्रान् प्रति स्वयम्। शिशवश्चाभिरूपाश्च जटिला ब्रह्मचारिणः ॥ ११४ ॥ पुत्राश्च भ्रातरश्चेमे शिष्याश्च सुहृदश्च वः। पाण्डवा एत इत्युक्त्वा मुनयोऽन्तर्हितास्ततः ॥ ११५ ॥ तांस्तैर्निवेदितान् दृष्ट्वा पाण्डवान् कौरवास्तदा। शिष्टाश्च वर्णाः पौरा ये ते हर्षाच्चुक्रुशुर्भृशम् ॥ ११६ ॥ आहुः केचिन्न तस्यैते तस्यैत इति चापरे। यदा चिरमृतः पाण्डुः कथन्तस्येति चापरे ॥ ११७ ॥ स्वागतं सर्वथा दिष्ट्या पाण्डोः पश्याम सन्ततिम्। उच्यतां स्वागतमिति वाचोऽश्रूयन्त सर्वशः ॥ ११८ ॥ तस्मिन्नुपरते शब्दे दिशः सर्वा निनादयन्। अन्तर्हितानां भूतानां निःस्वनस्तुमुलोऽभवत् ॥ ११९ ॥ पुष्पवृष्टिः शुभा गन्धाः शङ्खदुन्दुभिनिःस्वनाः। आसन् प्रवेशे पार्थानां तदद्भुतमिवाभवत् ॥ १२० ॥ तत्प्रीत्या चैव सर्वेषां पौराणां हर्षसम्भवः। शब्द आसीन्महांस्तत्र दिवस्पृक्कीर्त्तिवर्द्धनः ॥ १२१ ॥ तेऽधीत्य निखिलान्वेदाञ्छास्त्राणि विविधानि च। न्यवसन् पाण्डवास्तत्र पूजिता अकुतोभयाः ॥ १२२ ॥ युधिष्ठिरस्य शौचेन प्रीताः प्रकृतयोऽभवन्। धृत्या च भीमसेनस्य विक्रमेणार्जुनस्य च ॥ १२३ ॥ गुरुशुश्रूषया कुन्त्या यमयोर्विनयेन च।

तृतीय लोकः सकलश्रेष्ठां भीष्मं गुणेन च ॥ १२४ ॥ समवाये ततो राज्ञः कन्यां भर्तृस्वयम्बराम् । प्राप्तवानर्जुनः कृष्णां कृत्वा कर्म्म सुदुष्करम् ॥ १२५ ॥ ततःप्रभृति लोकेऽस्मिन् पूज्यः सर्व्व-धनुष्मताम् । आदित्य इव दुष्प्रेक्ष्यः समरेष्वपि चाभवत् ॥ १२६ ॥ स सर्व्वान् पार्थिवान् जित्वा सर्व्वांश्च महतो गणान् । आजहारा-र्जुनो राज्ञो राजसूयं महाक्रतुम् ॥ १२७ ॥ अन्नवान् दक्षिणावांश्च सर्व्वैः समुदितो गुणैः ॥ युधिष्ठिरेण संप्राप्तो राजसूयो महा-क्रतुः ॥ १२८ ॥ सुनयाद्वासुदेवस्य भीमार्जुनबलेन च । घात-यित्वा जरासन्धं चैद्यञ्च बलगर्व्वितम् ॥ १२९ ॥ दुर्य्योधनं समा-गच्छन्नर्हणानि ततस्ततः । मणिकाञ्चनरत्नानि गोहस्त्यश्वधनानि च ॥ १३० ॥ विचित्राणि च वासांसि प्रावारावरणानि च । कम्बलाजिनरत्नानि राङ्कवास्तरणानि च ॥ १३१ ॥ समृद्धां तथा दृष्ट्वा पाण्डवानां तदा श्रियम् । ईर्ष्यासमुत्थः सुमहांस्तस्य मन्युरजायत ॥ १३२ ॥ विमानप्रतिमां तत्र मयेन सुकृतां सभाम् । पाण्डवानामुपहृतां स दृष्ट्वा पर्य्यतप्यत ॥ १३३ ॥ तत्रावहसित-श्चासीत् प्रस्कन्दन्निव सम्भ्रमात् । प्रत्यक्षं वासुदेवस्य भीमेना-नभिजातवत् ॥ १३४ ॥ स भोगान् विविधान् भुञ्जन् रत्नानि विविधानि च । कथितो धृतराष्ट्रस्य विवर्णो हरिणः कृशः ॥ १३५ ॥ अन्वजानात्ततो द्यूतं धृतराष्ट्रः सुतप्रियः । तच्छ्रुत्वा वासुदेवस्य कोपः समभवन्महान् ॥ १३६ ॥ नातिप्रीतमनाश्चासीद्विवादांश्चान्वमोदत । द्यूतादीननयान् घोरान् विविधां-श्चाप्युपैक्षत ॥ १३७ ॥ निरस्य विदुरं भीष्मं द्रोणं शारद्वतं कृपम् । विग्रहे तुमुले तस्मिन् दहन् क्षत्रं परस्परम् ॥ १३८ ॥ जयत्सु पाण्डुपुत्रेषु श्रुत्वा सुमहदप्रियम् । दुर्य्योधनमतं ज्ञात्वा कर्णस्य शकुनेस्तथा ॥ १३९ ॥ धृतराष्ट्रश्चिरं ध्यात्वा सञ्जयं वाक्यमब्रवीत् । शृणु सञ्जय सर्व्वं मे न चासूयितुमर्हसि ॥ १४० ॥ श्रुतवानसि

मेधावी बुद्धिमान् प्राज्ञसम्मतः। न विग्रहे मम मतिर्न च प्रीये कुलक्षये ॥ १४१ ॥ न मे विशेषः पुत्रेषु स्वेषु पाण्डुसुतेषु वा। वृद्धं मामभ्यसूयन्ति पुत्रा मन्युपरायणाः ॥ १४२ ॥ अहं त्वचक्षुः कार्पण्यात् पुत्रप्रीत्या सहामि तत्। मुह्यन्तं चानुमुह्यामि दुर्योधनमचेतनम् ॥ १४३ ॥ राजसूये श्रियं दृष्ट्वा पाण्डवस्य महौजसः। तच्चावहसनं प्राप्य सभारोहणदर्शने ॥ १४४ ॥ अमर्षितः स्वयं जेतुमशक्तः पाण्डवान् रणे। निरुत्साहश्च संप्राप्तुं सुश्रियं क्षत्रियोऽपि सन् ॥ १४५ ॥ गान्धारराजसहितश्छद्मद्यूतममन्त्रयत्। तत्र यद्यद्यथा ज्ञातं मया सञ्जय तच्छृणु ॥ १४६ ॥ श्रुत्वा तु मम वाक्यानि बुद्धियुक्तानि तत्त्वतः। ततो ज्ञास्यसि मां सौते प्रज्ञाचक्षुषमित्युत ॥ १४७ ॥ यदाश्रौषं धनुरायम्य चित्रं विद्धं लक्ष्यं पातितं वै पृथिव्याम्। कृष्णां हृतां प्रेक्षतां सर्वराज्ञां तदा नाशंसे विजयाय सञ्जय ॥ १४८ ॥ यदाश्रौषं द्वारकायां सुभद्रां प्रसह्योढां माधवीमर्जुनेन। इन्द्रप्रस्थं वृष्णिवीरौ च यातौ तदा नाशंसे विजयाय सञ्जय ॥ १४९ ॥ यदाश्रौषं देवराजं प्रवृष्टं शरैर्दिव्यैर्वारितं चार्जुनेन। अग्निं तदा तर्पितं खाण्डवे च तदा नाशंसे विजयाय सञ्जय ॥ १५० ॥ यदाश्रौषं जातुषाद्वेश्मनस्तान्मुक्तान् पार्थान् पञ्च कुन्त्या समेतान्। युक्तं चैषां विदुरं स्वार्थसिद्धौ तदा नाशंसे विजयाय सञ्जय ॥ १५१ ॥ यदाश्रौषं द्रौपदीं रङ्गमध्ये लक्ष्यं भित्त्वा निर्जितामर्जुनेन। शूरान् पञ्चालान् पाण्डवेयांश्च युक्तांस्तदा नाशंसे विजयाय सञ्जय ॥ १५२ ॥ यदाश्रौषं मागधानां वरिष्ठं जरासन्धं क्षत्रमध्ये ज्वलन्तम्। दोर्भ्यां हतं भीमसेनेन गत्वा तदा नाशंसे विजयाय सञ्जय ॥ १५३ ॥ यदाश्रौषं दिग्जये पाण्डुपुत्रैर्वशीकृतान् भूमिपालान् प्रसह्य। महाक्रतुं राजसूयं कृतञ्च तदा नाशंसे विजयाय सञ्जय ॥ १५४ ॥ यदाश्रौषं द्रौपदीमश्रुकण्ठीं सभां नीता

दुःखितामेकवस्त्राम् । रजस्वलां नाथवतीमनाथवत्तदा नाशंसे
विजयाय सञ्जय ॥ १५५ ॥ यदाश्रौषं वाससां तत्र राशिं समा-
क्षिपत्कितवो मन्दबुद्धिः । दुःशासनो गतवान्नैव चान्तं तदा नाशंसे
विजयाय सञ्जय ॥ १५६ ॥ यदाश्रौषं हृतराज्यं युधिष्ठिरं परा-
जितं सौबलेनाक्षवत्याम् । अन्वागतं भ्रातृभिरप्रमेयैस्तदा नाशंसे
विजयाय सञ्जय ॥ १५७ ॥ यदाश्रौषं विविधास्तत्र चेष्टा धर्मा-
त्मनां प्रस्थितानां वनाय । ज्येष्ठप्रीत्या क्लिश्यतां पाण्डवानां तदा
नाशंसे विजयाय सञ्जय ॥ १५८ ॥ यदाश्रौषं स्नातकानां सहस्रै-
रन्वागतं धर्मराजं वनस्थम् । भिक्षाभुजां ब्राह्मणानां महात्मनां तदा
नाशंसे विजयाय सञ्जय ॥ १५९ ॥ यदाश्रौषमर्जुनं देवदेवं किरात-
रूपं त्र्यम्बकं तोष्य युद्धे । अवाप्तवन्तं पाशुपतं महास्त्रं तदा नाशंसे
विजयाय सञ्जय ॥ १६० ॥ यदाश्रौषं त्रिदिवस्थं धनञ्जयं शक्रात्
साक्षाद्दिव्यमस्त्रं यथावत् । अधीयानं शंसितं सत्यसन्धं तदा
नाशंसे विजयाय सञ्जय ॥ १६१ ॥ यदाश्रौषं कालकेयास्ततस्ते
पौलोमानो वरदानाच्च दृप्ताः । देवैरजेया निर्जिताश्चार्जुनेन
तदा नाशंसे विजयाय सञ्जय ॥ १६२ ॥ यदाश्रौषमसुराणां वधार्थे
किरीटिनं यातममित्रकर्षणम् । कृतार्थं चाप्यागतं शक्रलोका-
त्तदा नाशंसे विजयाय सञ्जय ॥ १६३ ॥ यदाश्रौषं वैश्रवणेन
सार्द्धं समागतं भीममन्यांश्च पार्थान् । तस्मिन्देशे मानुषाणा-
मगम्ये तदा नाशंसे विजयाय सञ्जय ॥ १६४ ॥ यदाश्रौषं घोष-
यात्रागतानां बन्धं गन्धर्वैर्मोक्षणं चार्जुनेन । स्वेषां सुतानां
कर्णबुद्धौ रतानां तदा नाशंसे विजयाय सञ्जय ॥ १६५ ॥ यदा-
श्रौषं यक्षरूपेण धर्मं समागतं धर्मराजेन सूत । प्रश्नान् कांश्चि-
द्विब्रुवाणञ्च सम्यक् तदा नाशंसे विजयाय सञ्जय ॥ १६६ ॥
यदाश्रौषं न विदुर्मामकास्ते प्रच्छन्नरूपान्वसतः पाण्डवेयान् ।
विराटराष्ट्रे सह कृष्णया तांस्तदा नाशंसे विजयाय सञ्जय ॥ १६७ ॥

यदाश्रौषं मामकानां वरिष्ठान् धनञ्जयेनैकरथेन भग्नान्। विराट-
राष्ट्रे वसता महात्मना तदा नाशंसे विजयाय सञ्जय ॥ १६८ ॥
यदाश्रौषं सत्कृतां मत्स्यराज्ञा सुतां दत्तामुत्तरामर्जुनाय।
तामर्जुनः प्रत्यगृह्णात् सुतार्थे तदा नाशंसे विजयाय सञ्जय
॥ १६९ ॥ यदाश्रौषं निर्जितस्याधनस्य प्रव्राजितस्य स्वजनात्
प्रच्युतस्य। अक्षौहिणीः सप्त युधिष्ठिरस्य तदा नाशंसे विज-
याय सञ्जय ॥ १७० ॥ यदाश्रौषं माधवं वासुदेवं सर्वात्मना
पाण्डवार्थे निविष्टम्। यस्येमां मां विक्रममेकमाहुस्तदा नाशंसे
विजयाय सञ्जय ॥ १७१ ॥ यदाश्रौषं नरनारायणौ तौ कृष्णा-
र्जुनौ वदतो नारदस्य। अहं द्रष्टा ब्रह्मलोके च सम्यक् तदा
नाशंसे विजयाय सञ्जय ॥ १७२ ॥ यदाश्रौषं लोकहिताय
कृष्णं शमार्थिनमुपयातं कुरूणाम्। शमं कुर्वाणमकृतार्थञ्च यातं
तदा नाशंसे विजयाय सञ्जय ॥ १७३ ॥ यदाश्रौषं कर्णदुर्यो-
धनाभ्यां बुद्धिं कृतां निग्रहे केशवस्य। तं चात्मानं बहुधा दर्श-
यानं तदा नाशंसे विजयाय सञ्जय ॥ १७४ ॥ यदाश्रौषं वासु-
देवे प्रयाते रथस्यैकामग्रतस्तिष्ठमानाम्। आर्त्तां पृथां सान्त्वितां
केशवेन तदा नाशंसे विजयाय सञ्जय ॥ १७५ ॥ यदाश्रौषं
मन्त्रिणं वासुदेवं तथा भीष्मं शान्तनवञ्च तेषाम्। भारद्वाज-
ञ्चाशिषोऽनुब्रुवाणं तदा नाशंसे विजयाय सञ्जय ॥ १७६ ॥ यदा
कर्णो भीष्ममुवाच वाक्यं नाहं योत्स्ये युध्यमाने त्वयीति। हित्वा
सेनामपचक्राम चापि तदा नाशंसे विजयाय सञ्जय ॥ १७७ ॥
यदाश्रौषं वासुदेवार्जुनौ तौ तथा धनुर्गाण्डिवमप्रमेयम्। त्रीण्यु-
ग्रवीर्याणि समागतानि तदा नाशंसे विजयाय सञ्जय ॥ १७८ ॥
यदाश्रौषं कश्मलेनाभिपन्ने रथोपस्थे सीदमानेऽर्जुने वै। कृष्णं
लोकान् दर्शयानं शरीरे तदा नाशंसे विजयाय सञ्जय ॥ १७९ ॥
यदाश्रौषं भीष्मममित्रकर्षणं निघ्नन्तमाजावयुतं रथानाम्।

नैषां कश्चिद्वध्यते ख्यातरूपस्तदा नाशंसे विजयाय सञ्जय ॥ १८० ॥ यदाश्रौषं चापगेयेन संख्ये स्वयं मृत्युं विहितं धार्म्मिकेण। तच्चाकार्षुः पाण्डवेयाः प्रहृष्टास्तदा नाशंसे विजयाय सञ्जय ॥ १८१ ॥ यदाश्रौषं भीष्ममत्यन्तशूरं हतं पार्थेनाहवेष्वप्रधृष्यम्। शिखण्डिनं पुरतः स्थापयित्वा तदा नाशंसे विजयाय सञ्जय ॥ १८२ ॥ यदाश्रौषं शरतल्पे शयानं वृद्धं वीरं सादितं चित्रपुङ्खैः। भीष्मं कृत्वा सोमकानल्पशेषांस्तदा नाशंसे विजयाय सञ्जय ॥ १८३ ॥ यदाश्रौषं शान्तनवे शयाने पानीयार्थे चोदितेनार्जुनेन। भूमिं भित्वा तर्पितं तत्र भीष्मं तदा नाशंसे विजयाय सञ्जय ॥ १८४ ॥ यदा वायुः शक्रसूर्य्यौ च युक्तौ कौन्तेयानामनुलोमा जयाय। नित्यं चास्मान् श्वापदा भीषयन्ति तदा नाशंसे विजयाय सञ्जय ॥ १८५ ॥ यदा द्रोणो विविधानस्त्रमार्गान्निदर्शयन् समरे चित्रयोधी। न पाण्डवान् श्रेष्ठतरान्निहन्ति तदा नाशंसे विजयाय सञ्जय ॥ १८६ ॥ यदाश्रौषं चास्मदीयान्महारथान् व्यवस्थितानर्जुनस्यान्तकाय। संशप्तकान्निहतानर्जुनेन तदा नाशंसे विजयाय सञ्जय ॥ १८७ ॥ यदाश्रौषं व्यूहमभेद्यमन्यैर्भारद्वाजेनात्तशस्त्रेण गुप्तम्। भित्त्वा सौभद्रं वीरमेकं प्रविष्टं तदा नाशंसे विजयाय सञ्जय ॥ १८८ ॥ यदाभिमन्युं परिवार्य्य बालं सर्व्वे हत्वा हृष्टरूपा बभूवुः। महारथाः पार्थमशक्नुवन्तस्तदा नाशंसे विजयाय सञ्जय ॥ १८९ ॥ यदाश्रौषमभिमन्युं निहत्य हर्षान्मूढान् क्रोशतो धार्त्तराष्ट्रान्। क्रोधादुक्तं सैन्धवे चार्जुनेन तदा नाशंसे विजयाय सञ्जय ॥ १९० ॥ यदाश्रौषं सैन्धवार्थे प्रतिज्ञां प्रतिज्ञातां तद्वधायार्जुनेन। सत्यान्तीर्णां शत्रुमध्ये च तेन तदा नाशंसे विजयाय सञ्जय ॥ १९१ ॥ यदाश्रौषं श्रान्तहये धनञ्जये मुक्त्वा हयान् पाययित्वोपवृत्तान्। पुनर्युक्त्वा वासुदेवं प्रयातं तदा नाशंसे विजयाय सञ्जय ॥ १९२ ॥ यदा-

श्रौषं वाहनेष्वश्वमिषु रथोपस्थे तिष्ठता पाण्डवेन । सर्वान् योधान् वारितानर्जुनेन तदा नाशंसे विजयाय सञ्जय ॥ १९३॥ यदाश्रौषं नागबलैः सुदुःसहं द्रोणानीकं युयुधानं प्रमथ्य । यातं वार्ष्णेयं यत्र तौ कृष्णपार्थौ तदा नाशंसे विजयाय सञ्जय ॥१९४॥ यदाश्रौषं कर्णमासाद्य मुक्तं वधाद्भीमं कुत्सयित्वा वचोभिः । धनुःकोट्या तुद्य कर्णेन वीरं तदा नाशंसे विजयाय सञ्जय ॥ १९५ ॥ यदाश्रौषं द्रोणः कृतवर्मा कृपश्च कर्णो द्रौणिर्मद्रराजश्च शूरः । अमर्षयन् सैन्धवं वध्यमानं तदा नाशंसे विजयाय सञ्जय ॥ १९६ ॥ यदाश्रौषं देवराजेन दत्तां दिव्यां शक्तिं व्यंसितां माधवेन । घटोत्कचे राक्षसे घोररूपे तदा नाशंसे विजयाय सञ्जय ॥ १९७ ॥ यदाश्रौषं कर्णघटोत्कचाभ्यां युद्धे मुक्तां सूतपुत्रेण शक्तिम् । यया वध्यः समरे सव्यसाची तदा नाशंसे विजयाय सञ्जय ॥ १९८ ॥ यदाश्रौषं द्रोणमाचार्यमेकं धृष्टद्युम्नेनाभ्यतिक्रम्य धर्मम् । रथोपस्थे प्रायगतं विशस्तं तदा नाशंसे विजयाय सञ्जय ॥ १९९ ॥ यदाश्रौषं द्रौणिना द्वैरथस्थं माद्रीसुतं नकुलं लोकमध्ये । समं युद्धे मण्डलशश्चरन्तं तदा नाशंसे विजयाय संजय ॥ २०० ॥ यदा द्रोणे निहते द्रोणपुत्रो नारायणं दिव्यमस्त्रं विकुर्वन् । नैषामन्तं गतवान् पाण्डवानां तदा नाशंसे विजयाय संजय ॥ २०१ ॥ यदाश्रौषं भीमसेनेन पीतं रक्तं भ्रातुर्युधि दुःशासनस्य । निवारितं नान्यतमेन भीमं तदा नाशंसे विजयाय संजय ॥ २०२ ॥ यदाश्रौषं कर्णमत्यन्तशूरं हतं पार्थेनाहवेष्वप्रधृष्यम् । तस्मिन् भ्रातृणां विग्रहे देवगुह्ये तदा नाशंसे विजयाय संजय ॥ २०३॥ यदाश्रौषं द्रोणपुत्रञ्च शूरं दुःशासनं कृतवर्माणमुग्रम् । युधिष्ठिरं धर्मराजं जयन्तं तदा नाशंसे विजयाय संजय ॥ २०४ ॥ यदाश्रौषं निहतं मद्रराजं रणे शूरं धर्मराजेन सूत । सदा

संग्रामे स्पर्द्धते यस्तु कृष्णं तदा नाशंसे विजयाय संजय ॥२०५॥
यदाश्रौषं कलहद्यूतमूलं मायाबलं सौबलं पाण्डवेन। हतं
संग्रामे सहदेवेन पापं तदा नाशंसे विजयाय संजय ॥ २०६ ॥
यदाश्रौषं श्रान्तमेकं शयानं ह्रदं गत्वा स्तम्भयित्वा तदम्भः।
दुर्य्योधनं विरथं भग्नशक्तिं तदा नाशंसे विजयाय संजय॥२०७॥
यदाश्रौषं पाण्डवांस्तिष्ठमानान् गत्वा ह्रदे वासुदेवेन सार्द्धम्।
अमर्षणं धर्षयतः सुतं मे तदा नाशंसे विजयाय संजय। २०८॥
यदाश्रौषं विविधांस्तत्रमार्गान् गदायुद्धे मण्डलशश्चरन्तम्।
मिथ्याहतं वासुदेवस्य बुद्ध्या तदा नाशंसे विजयाय संजय
॥ २०९॥ यदाश्रौषं द्रोणपुत्रादिभिस्तैर्हतान् पाञ्चालान्द्रौपदेयांश्च
सुप्तान्। कृतं बीभत्समयशस्यञ्च कर्म तदा नाशंसे विजयाय
सञ्जय ॥ २१० ॥ यदाश्रौषं भीमसेनानुयातेनाश्वत्थाम्ना पर-
मास्त्रं प्रयुक्तम्। क्रुद्धेनैषीकमवधीद्येन गर्भं तदा नाशंसे विज-
याय सञ्जय ॥ २११ ॥ यदाश्रौषं ब्रह्मशिरोऽर्जुनेन स्वस्तीत्युक्त्वा-
स्त्रमस्त्रेण शान्तम्। अश्वत्थाम्ना मणिरत्नञ्च दत्तं तदा नाशंसे
विजयाय संजय ॥ २१२ ॥ यदाश्रौषं द्रोणपुत्रेण गर्भे वैराट्या
वै पात्यमाने महास्त्रैः। द्वैपायनः केशवो द्रोणपुत्रं परस्परे-
णाभिशापैः शशाप ॥ २१३ ॥ शोच्या गान्धारी पुत्रपौत्रैर्विहीना
तथा बन्धुभिः पितृभिर्भ्रातृभिश्च। कृतं कार्य्यं दुष्करं पाण्डवेयैः
प्राप्तं राज्यमसपत्नं पुनस्तैः ॥२१४ ॥ कष्टं युद्धे दश शेषाः श्रुता
मे त्रयोऽस्माकं पाण्डवानाञ्च सप्त। द्व्यूना विंशतिराहताक्षौ-
हिणीनां तस्मिन् संग्रामे भैरवे क्षत्रियाणाम् ॥ २१५ ॥ तमस्त्वतीव
विस्तीर्णं मोह आविशतीव माम्। संज्ञां नोपलभे सूत मनो
विह्वलतीव मे ॥ २१६ ॥

सौतिरुवाच। इत्युक्त्वा धृतराष्ट्रोऽथ विलप्य बहुदुःखितः।
मूर्च्छितः पुनराश्वस्तः संजयं वाक्यमब्रवीत् ॥ २१७ ॥

धृतराष्ट्र उवाच। संजयैवं गते प्राणांस्त्यक्तुमिच्छामि मा चिरम्। स्तोकं ह्यपि न पश्यामि फलं जीवितधारणे ॥ २१८ ॥

सौतिरुवाच। तं तथा वादिनं दीनं विलपन्तं महीपतिम्। निश्वसन्तं यथा नागं मुह्यमानं पुनः पुनः ॥ २१९ ॥ गावल्गणिरिदं धीमान्महार्थं वाक्यमब्रवीत्।

संजय उवाच। श्रुतवानसि वै राजन्महोत्साहान्महाबलान् ॥ २२० ॥ द्वैपायनस्य वदतो नारदस्य च धीमतः। महत्सु राजवंशेषु गुणैः समुदितेषु च ॥ २२१ ॥ जातान् दिव्यास्त्रविदुषः शक्रप्रतिमतेजसः। धर्मेण पृथिवीं जित्वा यज्ञैरिष्ट्वा सुदक्षिणैः॥ २२२ ॥ अस्मिल्लोके यशः प्राप्य ततः कालवशं गतान्। शैब्यं महारथं वीरं सृंजयं जयतांवरम् ॥ २२३ ॥ सुहोत्रं रन्तिदेवञ्च काक्षीवन्तं महाद्युतिम्। वाह्लीकं दमनञ्चैव शर्यातिमजितं नलम् ॥ २२४ ॥ विश्वामित्रममित्रघ्नमम्बरीषं महाबलम्। मरुत्तं मनुमिक्ष्वाकुं गयं भरतमेव च ॥ २२५ ॥ रामं दाशरथिञ्चैव शशविन्दुं भगीरथम्। कृतवीर्यं महाभागं तथैव जनमेजयम् ॥ २२६ ॥ ययातिं शुभकर्माणं देवैर्यो याजितः स्वयम् ॥ २२७ ॥ चैत्ययूपाङ्किता भूमिर्यस्येयं सवनाकरा। इति राज्ञां चतुर्विंशं नारदेन सुरर्षिणा ॥ २२८ ॥ पुत्रशोकाभितप्ताय पुरा शैब्याय कीर्त्तितम्। तेभ्यश्चान्ये गताः पूर्वं राजानो बलवत्तराः ॥ २२९ ॥ महारथा महात्मानः सर्वैः समुदिता गुणैः। पुरुः कुरुर्यदुः शूरो विश्वगश्वो महाद्युतिः ॥२३०॥ अणुहो युवनाश्वश्च ककुत्स्थो विक्रमी रघुः। विजयो वीतिहोत्रोऽङ्गो भवः श्वेतो वृहद्गुरुः ॥ २३१ ॥ उशीनरः शतरथः कंको दुलिदुहो द्रुमः। दम्भोद्भवः परो वेणः सगरः संकृतिर्निमिः ॥ २३२ ॥ अजेयः परशुः पुण्ड्रः शम्भुर्देवावृधोऽनघः। देवाह्वयः सुप्रतिमः सुप्रतीको वृहद्रथः ॥ २३३ ॥ महोत्साहो विनी-

नाभा सुक्रतुर्नैषधो नलः । सत्यव्रतः शान्तभयः सुमित्रः सुबलः
प्रभुः ॥ २३४ ॥ जानुजंघोऽनरण्योऽर्कः प्रियभृत्यः शुचिव्रतः ।
बलबन्धुर्निरामर्द्दः केतुशृङ्गो बृहद्बलः ॥ २३५ ॥ धृष्टकेतुर्बृहत्-
केतुर्दीप्तकेतुर्निरामयः । अविक्षिच्चपलो धूर्त्तः कृतबन्धुर्दृढे-
षुधिः ॥ २३६ ॥ महापुराणसम्भाव्यः प्रत्यङ्गः परहा श्रुतिः । एते
चान्ये च राजानः शतशोऽथ सहस्रशः ॥ २३७ ॥ श्रूयन्ते शतश-
श्चान्ये संख्याताश्चैव पद्मशः । हित्वा सुविपुलान् भोगान् बुद्धि-
मन्तो महाबलाः ॥ २३८ ॥ राजानो निधनं प्राप्तास्तव पुत्रा इव
प्रभो । येषां दिव्यानि कर्म्माणि विक्रमस्त्याग एव च ॥ २३९ ॥
माहात्म्यमपि चास्तिक्यं सत्यं शौचं दयार्जवम् । विद्वद्भिः कथ्यते
लोके पुराणे कविसत्तमैः ॥ २४० ॥ सर्व्वर्द्धिगुणसम्पन्नास्ते चापि
निधनं गताः । तव पुत्रा दुरात्मानः प्रतप्ताश्चैव मन्युना ॥ २४१ ॥
लुब्धा दुर्वृत्तभूयिष्ठा न ताञ्छोचितुमर्हसि। श्रुतवानसि मेधावी
बुद्धिमान् प्राज्ञसंमतः ॥२४२॥ येषां शास्त्रानुगा बुद्धिर्न ते मुह्यन्ति
भारत । निग्रहानुग्रहौ चापि विदितौ ते नराधिप ॥ २४३ ॥
नात्यन्तमेवानुवृत्तिः कार्य्या ते पुत्ररक्षणे । भवितव्यं तथा तच्च
नानुशोचितुमर्हसि ॥ २४४ ॥ दैवं प्रज्ञाविशेषेण को निवर्त्तितु-
मर्हति । विधातृविहितं मार्गं न कश्चिदतिवर्त्तते । काल-
मूलमिदं सर्व्वं भावाभावौ सुखासुखे ॥ २४५ ॥ कालः सृजति
भूतानि कालः संहरते प्रजाः । निर्द्दहन्तं प्रजाः कालं कालः
शमयते पुनः ॥ २४६ ॥ कालो हि कुरुते भावान् सर्व्वलोके शुभा-
शुभान् । कालः संक्षिपते सर्व्वाः प्रजा विसृजते पुनः ॥ २४७ ॥
कालः सुप्तेषु जागर्त्ति कालो हि दुरतिक्रमः । कालः सर्व्वेषु
भूतेषु चरत्यविधृतः समः ॥ २४८ ॥ अतीतानागता भावा ये
च वर्त्तन्ति सांप्रतम् । तान् कालनिर्म्मितान् बुद्ध्वा न संज्ञां हातु-
मर्हसि ॥ २४९ ॥

सौतिरुवाच। इत्येवं पुत्रशोकार्त्तं धृतराष्ट्रं जनेश्वरम्। आश्वास्य स्वस्थमकरोत् सूतो गावल्गणिस्तदा॥ २५०॥ अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत्। विद्वद्भिः कथ्यते लोके पुराणे कविसत्तमैः॥ २५१॥ भारताध्ययनं पुण्यमपि पादमधीयतः। श्रद्दधानस्य पूयन्ते सर्वपापान्यशेषतः॥ २५२॥ देवा देवर्षयो ह्यत्र तथा ब्रह्मर्षयोऽमलाः। कीर्त्त्यन्ते शुभकर्माणस्तथा यक्षा महोरगाः॥ २५३॥ भगवान् वासुदेवश्च कीर्त्त्यतेऽत्र सनातनः। स हि सत्यमृतञ्चैव पवित्रं पुण्यमेव च॥ २५४॥ शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम्। यस्य दिव्यानि कर्माणि कथयन्ति मनीषिणः॥ २५५॥ असच्च सदसच्चैव यस्माद्विश्वं प्रवर्त्तते। सन्ततिश्च प्रवृत्तिश्च जन्ममृत्युपुनर्भवाः॥ २५६॥ अध्यात्मं श्रूयते यच्च पञ्चभूतगुणात्मकम्। अव्यक्तादि परं यच्च स एव परिगीयते॥ २५७॥ यत्तद्यतिवरा मुक्ता ध्यानयोगबलान्विताः। प्रतिबिम्बमिवादर्शे पश्यन्त्यात्मन्यवस्थितम्॥ २५८॥ श्रद्दधानः सदायुक्तः सदाधर्मपरायणः। आसेवन्निममध्यायं नरः पापात् प्रमुच्यते॥ २५९॥ अनुक्रमणिकाध्यायं भारतस्येममादितः। आस्तिकः सततं शृण्वन्न कृच्छ्रेष्ववसीदति॥ २६०॥ उभे सन्ध्ये जपन् किञ्चित्सद्यो मुच्येत किल्बिषात्। अनुक्रमण्या यावत् स्यादह्ना रात्र्या च सञ्चितम्॥ २६१॥ भारतस्य वपुर्ह्येतत्सत्यं चामृतमेव च। नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा॥ २६२॥ आरण्यकं च वेदेभ्य ओषधिभ्योऽमृतं यथा। ह्रदानामुदधिः श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम्॥ २६३॥ यथैतानीतिहासानां तथा भारतमुच्यते। यश्चैनं श्रावयेच्छ्राद्धे ब्राह्मणान् पादमन्ततः। अक्षय्यमन्नपानं वै पितॄंस्तस्योपतिष्ठते॥ २६४॥ इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति॥ २६५॥ कार्ष्णं वेदमिमं विद्वान् श्रावयित्वार्थमश्नुते।

भ्रूणहत्यादिकं चापि पापं दह्यादसंशयम् ॥ २६६ ॥ य इमं शुचिरध्यायं पठेत् पर्व्वणि पर्व्वणि । अधीतं भारतं तेन कृत्स्नं स्यादिति मे मतिः ॥ २६७ ॥ यश्चैनं शृणुयान्नित्यमार्षं श्रद्धा-समन्वितः । स दीर्घमायुः कीर्त्तिञ्च स्वर्गतिं चाप्नुयान्नरः ॥२६८॥ एकतश्चतुरो वेदान् भारतं चैतदेकतः । पुरा किल सुरैः सर्व्वैः समेत्य तुलया धृतम् ॥ २६९ ॥ चतुर्भ्यः सरहस्येभ्यो वेदेभ्यो ह्यधिकं यदा । तदाप्रभृति लोकेऽस्मिन्महाभारतमुच्यते ॥२७०॥ महत्त्वे च गुरुत्वे च ध्रियमाणं यतोऽधिकम् । महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते । निरुक्तमस्य यो वेद सर्व्वपापैः प्रमुच्यते ॥२७१॥ तपो न कल्कोऽध्ययनं न कल्कः स्वाभाविको वेदविधिर्न कल्कः प्रसह्य वित्ताहरणं न कल्कस्तान्येव भावोपहतानि कल्कः ॥२७२॥

इतिश्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां आदिपर्व्वण्यनुक्रमणिकाध्यायः प्रथमः ॥ १ ॥

ऋषय ऊचुः । समन्तपञ्चकमिति यदुक्तं सूतनन्दन । एतत् सर्व्वं यथातत्त्वं श्रोतुमिच्छामहे वयम् ॥ १ ॥

सौतिरुवाच । शृणुध्वं मम भो विप्रा ब्रुवतश्च कथाः शुभाः । समन्तपञ्चकाख्यञ्च श्रोतुमर्हथ सत्तमाः ॥ २ ॥ त्रेताद्वापरयोः सन्धौ रामः शस्त्रभृतां वरः । असकृत्पार्थिवं क्षत्रं जघानामर्ष-चोदितः ॥ ३ ॥ स सर्व्वं क्षत्रमुत्साद्य स्ववीर्य्येणानलद्युतिः । सम-न्तपञ्चके पञ्च चकार रौधिरान् ह्रदान् ॥ ४ ॥ स तेषु रुधिरा-म्भःसु ह्रदेषु क्रोधमूर्च्छितः । पितॄन् सन्तर्पयामास रुधिरेणेति नः श्रुतम् ॥ ५ ॥ अथर्च्चीकादयोऽभ्येत्य पितरो राममब्रुवन् । राम राम महाभाग प्रीताः स्मस्तव भार्गव ॥ ६ ॥ अनया पितृ-

भक्त्या च विक्रमेण तव प्रभो। वरं वृणीष्व भद्रं ते यमिच्छसि महाद्युते ॥ ७ ॥

राम उवाच। यदि मे पितरः प्रीता यद्यनुग्राह्यता मयि। यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया ॥ ८ ॥ अतश्च पापान्मुच्येऽहमेष मे प्रार्थितो वरः। ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः ॥ ९ ॥ एवं भविष्यतीत्येवं पितरस्तमथाब्रुवन्। तं क्षमस्वेति निषिषिधुस्ततः स विरराम ह ॥ १० ॥ तेषां समीपे यो देशो ह्रदानां रुधिराम्भसाम्। समन्तपञ्चकमिति पुण्यं तत्परिकीर्त्तितम् ॥ ११ ॥ येन लिङ्गेन यो देशो युक्तः समुपलक्ष्यते। तेनैव नाम्ना तं देशं वाच्यमाहुर्मनीषिणः ॥ १२ ॥ अन्तरे चैव सम्प्राप्ते कलिद्वापरयोरभूत्। समन्तपञ्चके युद्धं कुरुपाण्डवसेनयोः ॥ १३ ॥ तस्मिन् परमधर्मिष्ठे देशे भूदोषवर्जिते। अष्टादश समाजग्मुरक्षौहिण्यो युयुत्सया ॥ १४ ॥ समेत्य तं द्विजास्ताश्च तत्रैव निधनं गताः। एतन्नामाभिनिर्वृत्तं तस्य देशस्य वै द्विजाः ॥ १५ ॥ पुण्यश्च रमणीयश्च स देशो वः प्रकीर्त्तितः। तदेतत् कथितं सर्वं मया ब्राह्मणसत्तमाः ॥ १६ ॥ यथा देशः स विख्यातस्त्रिषु लोकेषु सुव्रताः।

ऋषय ऊचुः। अक्षौहिण्य इति प्रोक्तं यत्त्वया सूतनन्दन। एतदिच्छामहे श्रोतुं सर्वमेव यथातथम् ॥ १७ ॥ अक्षौहिण्याः परीमाणं नराश्वरथदन्तिनाम्। यथावच्चैव नो ब्रूहि सर्वं हि विदितं तव ॥ १८ ॥

सौतिरुवाच। एको रथो गजश्चैको नराः पञ्च पदातयः। त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ १९ ॥ पत्तिं तु त्रिगुणामेतामाहुः सेनामुखं बुधाः। त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते ॥ २० ॥ त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः। स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः ॥ २१ ॥

चमूस्तु पृतनास्तिस्रस्तिस्रस्त्वनीकिनी । अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः ॥ २२ ॥ अक्षौहिण्याः प्रसंख्याता रथानां द्विजसत्तमाः । संख्यागणिततत्त्वज्ञैः सहस्राण्येकविंशतिः ॥ २३ ॥ शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः । गजानाञ्च परीमाणमेतदेव विनिर्द्दिशेत् ॥ २४ ॥ ज्ञेयं शतसहस्रन्तु सहस्राणि नवैव तु । नराणामपि पञ्चाशच्छतानि त्रीणि चानघाः ॥ २५ ॥ पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च । दशोत्तराणि षट् प्राहुर्यथावदिह संख्यया ॥ २६ ॥ एतामक्षौहिणीं प्राहुः संख्यातत्त्वविदो जनाः । यथा कथितवानस्मि विस्तरेण तपोधनाः ॥ २७ ॥ एतया संख्यया ह्यासन् कुरुपाण्डवसेनयोः । अक्षौहिण्यो द्विजश्रेष्ठाः पिण्डिताष्टादशैव तु ॥ २८ ॥ समेतास्तत्र वै देशे तत्रैव निधनं गताः । कौरवान् कारणं कृत्वा कालेनाद्भुतकर्म्मणा ॥ २९ ॥ अहानि युयुधे भीष्मो दशैव परमास्त्रवित् । अहानि पञ्च द्रोणस्तु ररक्ष कुरुवाहिनीम् ॥ ३० ॥ अहनी युयुधे द्वे तु कर्णः परबलार्द्दनः । शल्योऽर्द्धदिवसञ्चैव गदायुद्धमतःपरम् । दुर्य्योधनस्य भीमस्य दिनार्द्धमभवत्तयोः ॥ ३१ ॥ तस्यैव दिवसस्यान्ते द्रौणिहार्द्दिक्यगौतमाः । प्रसुप्तं निशि विश्वस्तं जघ्नुर्यौधिष्ठिरं बलम् ॥ ३२ ॥ यत्तु शौनकसत्रे ते भारताख्यानमुत्तमम् । जनमेजयस्य तत्सत्रे व्यासशिष्येण धीमता ॥ ३३ ॥ कथितं विस्तरार्थञ्च यशो वीर्य्यं महीक्षिताम् । पौष्यं तत्र च पौलोममास्तीकं चादितः स्मृतम् ॥ ३४ ॥ विचित्रार्थपदाख्यानमनेकसमयान्वितम् । प्रतिपन्नं नरैः प्राज्ञैर्वैराग्यमिव मोक्षिभिः ॥ ३५ ॥ आत्मेव वेदितव्येषु प्रियेष्विव हि जीवितम् । इतिहासः प्रधानार्थः श्रेष्ठः सर्व्वागमेष्वयम् ॥ ३६ ॥ अनाश्रित्यैदमाख्यानं कथा भुवि न विद्यते । आहारमनपाश्रित्य शरीरस्येव धारणम् ॥ ३७ ॥ तदेतद्भारतं नाम कविभिस्तूप-

जीव्यते । उदयप्रेप्सुभिर्भृत्यैरभिजात इवेश्वरः ॥ ३८ ॥ इति-
हासोत्तमे ह्यस्मिन्नर्पिता बुद्धिरुत्तमा । स्वरव्यञ्जनयोः कृत्स्ना
लोकवेदाश्रयेव वाक् ॥ ३९ ॥ तस्य प्रज्ञाभिपन्नस्य विचित्रपद-
पर्वणः । सूक्ष्मार्थन्याययुक्तस्य वेदार्थैर्भूषितस्य च ॥ ४० ॥ भार-
तस्येतिहासस्य श्रूयतां पर्वसंग्रहः । पर्वानुक्रमणीपूर्वं द्वितीयः
पर्वसंग्रहः ॥ ४१ ॥ पौष्यं पौलोममास्तीकमादिवंशावतारणम् ।
ततः सम्भवपर्वोक्तमद्भुतं रोमहर्षणम् ॥ ४२ ॥ दाहो जतुगृहस्यात्र
हैडिम्बं पर्व चोच्यते । ततो वकवधः पर्व पर्व चैत्ररथं ततः ॥४३॥
ततः स्वयम्बरो देव्याः पाञ्चाल्याः पर्व चोच्यते । क्षात्रधर्मेण
निर्जित्य ततो वैवाहिकं स्मृतम् ॥ ४४ ॥ विदुरागमनं पर्व राज्य-
लाभस्तथैव च । अर्जुनस्य वने वासः सुभद्राहरणं ततः ॥ ४५ ॥
सुभद्राहरणादूर्द्धं ज्ञेयं हरणहारिकम् । ततः खाण्डवदाहाख्यं
तत्रैव मयदर्शनम् ॥ ४६ ॥ सभापर्व ततः प्रोक्तं मन्त्रपर्व ततः
परम् । जरासन्धवधः पर्व पर्व दिग्विजयं तथा ॥ ४७ ॥ पव
दिग्विजयादूर्द्धं राजसूयिकमुच्यते । ततश्चार्घाभिहरणं शिशु-
पालवधस्ततः ॥ ४८ ॥ द्यूतपर्व ततः प्रोक्तमनुद्यूतमतः परम् ।
तत आरण्यकं पर्व किर्मीरवध एव च ॥ ४९ ॥ अर्जुनस्याभि-
गमनं पर्व ज्ञेयमतः परम् । ईश्वरार्जुनयोर्युद्धं पर्व कैरात-
संज्ञितम् ॥ ५० ॥ इन्द्रलोकाभिगमनं पर्व ज्ञेयमतः परम् ।
नलोपाख्यानमपि च धार्मिकं करुणोदयम् ॥ ५१ ॥ तीर्थयात्रा
ततः पर्व कुरुराजस्य धीमतः । जटासुरवधः पर्व यक्षयुद्धमतः
परम् ॥ ५२ ॥ निवातकवचैर्युद्धं पर्व चाजगरं ततः । मार्क-
ण्डेयसमस्या च पर्वानन्तरमुच्यते ॥ ५३ ॥ संवादश्च ततः पर्व
द्रौपदीसत्यभामयोः । घोषयात्रा ततः पर्व मृगस्वप्नोद्भवस्ततः ॥५४॥
व्रीहिद्रौणिकमाख्यानमैन्द्रद्युम्नं तथैव च । द्रौपदीहरणं पव
जयद्रथविमोक्षणम् ॥ ५५ ॥ पतिव्रताया माहात्म्यं सावित्र्याः

श्चैवमद्भुतम्। रामोपाख्यानमत्रैव पर्व्व ज्ञेयमतः परम्॥ ५६॥
कुण्डलाहरणं पर्व्व ततः परमिहोच्यते। आरण्येयं ततः पर्व्व
वैराटं तदनन्तरम्। पाण्डवानां प्रवेशश्च समयस्य च पालनम्
॥ ५७॥ कीचकानां वधः पर्व्व पर्व्व गोग्रहणं ततः। अभि-
मन्योश्च वैराट्याः पर्व्व वैवाहिकं स्मृतम्॥ ५८॥ उद्योगपर्व्व विज्ञेय-
मत ऊर्द्ध्वं महाद्भुतम्। ततः सञ्जययानाख्यं पर्व्व ज्ञेयमतः
परम्॥ ५९॥ प्रजागरस्तथा पर्व्व धृतराष्ट्रस्य चिन्तया। पर्व्व
सानत्सुजातं वै गुह्यमध्यात्मदर्शनम्॥ ६०॥ यानसन्धिस्ततः
पर्व्व भगवद्यानमेव च। मातलीयमुपाख्यानं चरितं गालवस्य
च॥ ६१॥ सावित्रवामदेवञ्च वैण्योपाख्यानमेव च। जाम-
दग्न्यमुपाख्यानं पर्व्व षोड़शराजिकम्॥ ६२॥ सभाप्रवेशः कृष्णस्य
विदुलापुत्रशासनम्। उद्योगः सैन्यनिर्य्याणं श्वेतोपाख्यानमेव च
॥ ६३॥ ज्ञेयं विवादपर्व्वात्र कर्णस्यापि महात्मनः। निर्य्याणञ्च
ततः पर्व्व कुरुपाण्डवसेनयोः॥ ६४॥ रथातिरथसंख्या च पर्व्वोक्तं
तदनन्तरम्। उलूकदूतागमनं पर्व्वामर्षविवर्द्धनम्॥ ६५॥ अम्बो-
पाख्यानमत्रैव पर्व्व ज्ञेयमतः परम्। भीष्माभिषेचनं पर्व्व तत-
श्चाद्भुतमुच्यते॥ ६६॥ जम्बूखण्डविनिर्म्माणं पर्व्वोक्तं तदन-
न्तरम्। भूमिपर्व्व ततः प्रोक्तं द्वीपविस्तारकीर्त्तनम्॥ ६७॥
पर्व्वोक्तं भगवद्गीता पर्व्व भीष्मवधस्ततः। द्रोणाभिषेचनं पर्व्व संस-
प्तकवधस्ततः॥ ६८॥ अभिमन्युवधः पर्व्व प्रतिज्ञापर्व्व चोच्यते।
जयद्रथवधः पर्व्व घटोत्कचवधस्ततः॥ ६९॥ ततो द्रोणवधः पर्व्व
विज्ञेयं लोमहर्षणम्। मोक्षो नारायणास्त्रस्य पर्व्वानन्तरमुच्यते
॥ ७०॥ कर्णपर्व्व ततो ज्ञेयं शल्यपर्व्व ततः परम्। ह्रदप्रवेशनं
पर्व्व गदायुद्धमतः परम्॥ ७१॥ सारस्वतं ततः पर्व्व तीर्थवंशा-
नुकीर्त्तनम्। अत ऊर्द्ध्वं सुबीभत्सं पर्व्व सौप्तिकमुच्यते॥ ७२॥
ऐषीकं पर्व्व चोद्दिष्टमत ऊर्द्ध्वं सुदारुणम्। जलप्रदानिकं पर्व्व

स्त्रीविलापस्ततःपरम् ॥ ७३ ॥ श्राद्धपर्व ततो ज्ञेयं कुरूणामौर्द्ध्वदेहिकम् । चार्वाकस्य वधः पर्व रक्षसो ब्रह्मरूपिणः ॥ ७४ ॥ आभिषेचनिकं पर्व धर्मराजस्य धीमतः । प्रविभागो गृहाणाञ्च पर्वोक्तं तदनन्तरम् ॥ ७५ ॥ शान्तिपर्व ततो यत्र राजधर्मानुशासनम् । आपद्धर्मश्च पर्वोक्तं मोक्षधर्मस्ततः परम् ॥ ७६ ॥ शुकप्रश्नाभिगमनं ब्रह्मप्रश्नानुशासनम् । प्रादुर्भावश्च दुर्वासःसंवादश्चैव मायया ॥ ७७ ॥ ततः पर्व परिज्ञेयमानुशासनिकं परम् । स्वर्गारोहणिकञ्चैव ततो भीष्मस्य धीमतः ॥ ७८ ॥ ततोऽश्वमेधिकं पर्व सर्वपापप्रणाशनम् । अनुगीता ततः पर्व ज्ञेयमध्यात्मवाचकम् ॥ ७९ ॥ पर्व चाश्रमवासाख्यं पुत्रदर्शनमेव च । नारदागमनं पर्व ततःपरमिहोच्यते ॥ ८० ॥ मौसलं पर्व चोद्दिष्टं ततो घोरं सुदारुणम् । महाप्रस्थानिकं पर्व स्वर्गारोहणिकं ततः ॥ ८१ ॥ हरिवंशस्ततः पर्व पुराणं खिलसंज्ञितम् । विष्णुपर्व शिशोश्चर्य्या विष्णोः कंसवधस्तथा ॥ ८२ ॥ भविष्यं पर्व चाप्युक्तं खिले चैवाद्भुतं महत् । एतत् पर्वशतं पूर्णं व्यासेनोक्तं महात्मना ॥ ८३ ॥ यथावत् सूतपुत्रेण लोमहर्षणिना ततः । उक्तानि नैमिषारण्ये पर्वाण्यष्टादशैव तु ॥ ८४ ॥ समासो भारतस्यायमत्रोक्तः पर्वसंग्रहः । पौष्यं पौलोममास्तीकमादिवंशावतारणम् ॥ ८५ ॥ सम्भवो जतुवेश्माख्यं हिडिम्बवकयोर्वधः । तथा चैत्ररथं देव्याः पाञ्चाल्याश्च स्वयम्वरः ॥ ८६ ॥ क्षात्रधर्मेण निर्जित्य ततो वैवाहिकं स्मृतम् । विदुरागमनञ्चैव राज्यलम्भस्तथैव च ॥ ८७ ॥ वनवासोऽर्जुनस्यापि सुभद्राहरणं ततः । हरणाहरणञ्चैव दहनं खाण्डवस्य च ॥ ८८ ॥ मयस्य दर्शनञ्चैव आदिपर्वणि कथ्यते । पौष्ये पर्वणि माहात्म्यमुत्तङ्कस्योपवर्णितम् ॥ ८९ ॥ पौलोमे भृगुवंशस्य विस्तारः परिकीर्त्तितः । आस्तीके सर्वनागानां गरुड़स्य च सम्भवः ॥ ९० ॥ क्षीरोदमथनञ्चैव जन्मोच्चैः-

अवस्थया। यजतः सर्पसत्रेण राज्ञः पारीक्षितस्य च ॥ ९१ ॥
कथेयमभिनिर्वृत्ता भरतानां महात्मनाम्। विविधा सम्भवा
राज्ञामुक्ताः सम्भवपर्वणि ॥ ९२ ॥ अन्येषाञ्चैव शूराणामृषे-
र्द्वैपायनस्य च। अंशावतरणं चात्र देवानां परिकीर्त्तितम् ॥ ९३॥
दैत्यानां दानवानाञ्च यक्षाणाञ्च महौजसाम्। नागानामथ
सर्पाणां गन्धर्वाणां पतत्रिणाम् ॥ ९४ ॥ अन्येषाञ्चैव भूतानां
विविधानां समुद्भवः। महर्षेराश्रमपदे कण्वस्य च तपस्विनः
॥ ९५ ॥ शकुन्तलायां दुष्मन्ताद्भरतश्चापि जज्ञिवान्। यस्य
लोकेषु नाम्नेदं प्रथितं भारतं कुलम् ॥ ९६ ॥ वसूनां पुनरुत्-
पत्तिर्भागीरथ्यां महात्मनाम्। शान्तनोर्वेश्मनि पुनस्तेषाञ्चारो-
हणं दिवि ॥ ९७॥ तेजोंऽशानाञ्च सम्पातो भीष्मस्याप्यत्र सम्भवः।
राज्यान्निवर्त्तनं तस्य ब्रह्मचर्य्यव्रते स्थितिः ॥ ९८ ॥ प्रतिज्ञा-
पालनञ्चैव रक्षा चित्राङ्गदस्य च। हते चित्राङ्गदे चैव रक्षा
भ्रातुर्यवीयसः ॥ ९९ ॥ विचित्रवीर्य्यस्य तथा राज्ये संप्रति-
पादनम्। धर्मस्य नृषु संभूतिरणीमाण्डव्यशापजा ॥ १०० ॥
कृष्णद्वैपायनाच्चैव प्रसूतिर्वरदानजा। धृतराष्ट्रस्य पाण्डोश्च
पाण्डवानाञ्च सम्भवः ॥ १०१ ॥ वारणावतयात्रायां मन्त्रो दुर्य्यो-
धनस्य च। कूटस्य धार्त्तराष्ट्रेण प्रेषणं पाण्डवान् प्रति ॥१०२॥
हितोपदेशश्च पथि धर्मराजस्य धीमतः। विदुरेण कृतो यत्र
हितार्थं म्लेच्छभाषया ॥ १०३ ॥ विदुरस्य च वाक्येन सुरङ्गोप-
क्रमक्रिया। निषाद्याः पञ्चपुत्रायाः सुप्ताया जतुवेश्मनि ॥१०४॥
पुरोचनस्य चात्रैव दहनं संप्रकीर्त्तितम्। पाण्डवानां वने घोरे
हिड़िम्बायाश्च दर्शनम् ॥ १०५ ॥ तत्रैव च हिड़िम्बस्य वधो
भीमान्महाबलात्। घटोत्कचस्य चोत्पत्तिरत्रैव परिकीर्त्तिता
॥ १०६ ॥ महर्षेर्दर्शनञ्चैव व्यासस्यामिततेजसः। तदाज्ञयैक-
चक्रायां ब्राह्मणस्य निवेशने ॥ १०७ ॥ अज्ञातचर्य्यया वासो यत्र

धृतराष्ट्र उवाच। संजयैवं गते प्राणांस्त्यक्तुमिच्छामि मा चिरम्। स्तोकं ह्यपि न पश्यामि फलं जीवितधारणे ॥ २१८ ॥

सौतिरुवाच। तं तथा वादिनं दीनं विलपन्तं महीपतिम्। निश्वसन्तं यथा नागं मुह्यमानं पुनः पुनः ॥ २१९ ॥ गावल्गणिरिदं धीमान्महार्थं वाक्यमब्रवीत्।

संजय उवाच। श्रुतवानसि वै राजन्महोत्साहान्महाबलान् ॥ २२० ॥ द्वैपायनस्य वदतो नारदस्य च धीमतः। महत्सु राजवंशेषु गुणैः समुदितेषु च ॥ २२१ ॥ जातान् दिव्यास्त्रविदुषः शक्रप्रतिमतेजसः। धर्मेण पृथिवीं जित्वा यज्ञैरिष्ट्वा सुदक्षिणैः ॥ २२२ ॥ अस्मिंल्लोके यशः प्राप्य ततः कालवशं गतान्। शैब्यं महारथं वीर सृञ्जयं जयतांवरम् ॥ २२३ ॥ सुहोत्रं रन्तिदेवञ्च काक्षीवन्तं महाद्युतिम्। वाह्लीकं दमनञ्चैव शर्यातिमजितं नलम् ॥ २२४ ॥ विश्वामित्रममित्रघ्नमम्बरीषं महाबलम्। मरुत्तं मनुमिक्ष्वाकुं गयं भरतमेवच ॥ २२५ ॥ रामं दाशरथिञ्चैव शशबिन्दुं भगीरथम्। कृतवीर्यं महाभागं तथैव जनमेजयम् ॥ २२६ ॥ ययातिं शुभकर्माणं देवैर्यो याजितः स्वयम् ॥ २२७ ॥ चैत्ययूपाङ्किता भूमिर्यस्येयं सवनाकरा। इति राज्ञां चतुर्विंशं नारदेन सुरर्षिणा ॥ २२८ ॥ पुत्रशोकाभितप्ताय पुरा शैब्याय कीर्त्तितम्। तेभ्यश्चान्ये गताः पूर्वं राजानो बलवत्तराः ॥ २२९ ॥ महारथा महात्मानः सर्वैः समुदिता गुणैः। पुरुः कुरुर्यदुः शूरो विश्वगश्वो महाद्युतिः ॥२३०॥ अणुहो युवनाश्वश्च ककुत्स्थो विक्रमी रघुः। विजयो वीतिहोत्रोऽङ्गो भवः श्वेतो बृहद्गुरुः ॥ २३१ ॥ उशीनरः शतरथः कङ्को दुलिदुहो द्रुमः। दम्भोद्भवः परो वेणः सगरः संकृतिर्निमिः ॥ २३२ ॥ अजेयः परशुः पुण्ड्रः शम्भुर्देवावृधोऽनघः। देवाह्वयः सुप्रतिमः सुप्रतीको बृहद्रथः ॥ २३३ ॥ महोत्साहो विनी-

नामा सुशर्म्मा नैषधो नलः। सत्यव्रतः शान्तभयः सुमित्रः सुबलः
प्रभुः॥ २३४॥ जानुजङ्घोऽनरण्योऽर्कः प्रियभृत्यः शुचिव्रतः।
बलबन्धुर्निरामर्द्दः केतुशृङ्गो बृहद्बलः॥ २३५॥ धृष्टकेतुर्बृहत्-
केतुर्दीप्तकेतुर्निरामयः। अविक्षिच्चपलो धूर्त्तः कृतबन्धुर्दृढे-
षुधिः॥ २३६॥ महापुराणसम्भाव्यः प्रत्यङ्गः परहा श्रुतिः। एते
चान्ये च राजानः शतशोऽथ सहस्रशः॥ २३७॥ श्रूयन्ते शतश-
श्चान्ये संख्याताश्चैव पद्मशः। हित्वा सुविपुलान् भोगान् बुद्धि-
मन्तो महाबलाः॥ २३८॥ राजानो निधनं प्राप्तास्तव पुत्रा इव
प्रभो। येषां दिव्यानि कर्म्माणि विक्रमस्त्याग एव च॥ २३९॥
माहात्म्यमपि चास्तिक्यं सत्यं शौचं दयार्जवम्। विद्वद्भिः कथ्यते
लोके पुराणैः कविसत्तमैः॥ २४०॥ सर्व्वर्द्धिगुणसम्पन्नास्ते चापि
निधनं गताः। तव पुत्रा दुरात्मानः प्रतप्ताश्चैव मन्युना॥ २४१॥
लुब्धा दुर्वृत्तभूयिष्ठा न ताञ्छोचितुमर्हसि। श्रुतवानसि मेधावी
बुद्धिमान् प्राज्ञसंमतः॥२४२॥ येषां शास्त्रानुगा बुद्धिर्न ते मुह्यन्ति
भारत। निग्रहानुग्रहौ चापि विदितौ ते नराधिप॥ २४३॥
नात्यन्तमेवानुवृत्तिः कार्य्या ते पुत्ररक्षणे। भवितव्यं तथा तच्च
नानुशोचितुमर्हसि॥ २४४॥ दैवं प्रज्ञाविशेषेण को निवर्त्तितु-
मर्हति। विधातृविहितं मार्गं न कश्चिदतिवर्त्तते। काल-
मूलमिदं सर्व्वं भावाभावौ सुखासुखे॥ २४५॥ कालः सृजति
भूतानि कालः संहरते प्रजाः। निर्द्दहन्तं प्रजाः कालं कालः
शमयते पुनः॥ २४६॥ कालो हि कुरुते भावान् सर्व्वलोके शुभा-
शुभान्। कालः संक्षिपते सर्व्वाः प्रजा विसृजते पुनः॥ २४७॥
कालः सुप्तेषु जागर्त्ति कालो हि दुरतिक्रमः। कालः सर्व्वेषु
भूतेषु चरत्यविधृतः समः॥ २४८॥ अतीतानागता भावा ये
च वर्त्तन्ति साम्प्रतम्। तान् कालनिर्म्मितान् बुद्ध्वा न संज्ञां हातु-
मर्हसि॥ २४९॥

सौतिरुवाच । इत्येवं पुत्रशोकार्त्तं धृतराष्ट्रं जनेश्वरम् । आश्वास्य स्वस्थमकरोत् सूतो गावल्गणिस्तदा ॥ २५० ॥ अत्रो- पनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत् । विद्वद्भिः कथ्यते लोके पुराणे कविसत्तमैः ॥ २५१ ॥ भारताध्ययनं पुण्यमपि पाद- मधीयतः । श्रद्दधानस्य पूयन्ते सर्वपापान्यशेषतः ॥ २५२ ॥ देवा देवर्षयो ह्यत्र तथा ब्रह्मर्षयोऽमलाः । कीर्त्यन्ते शुभकर्माण- स्तथा यक्षा महोरगाः ॥ २५३ ॥ भगवान् वासुदेवश्च कीर्त्यते- ऽत्र सनातनः । स हि सत्यमृतञ्चैव पवित्रं पुण्यमेव च ॥ २५४ ॥ शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम् । यस्य दिव्यानि कर्माणि कथयन्ति मनीषिणः ॥ २५५ ॥ असच्च सदसच्चैव यस्मा- द्विश्वं प्रवर्त्तते । सन्ततिश्च प्रवृत्तिश्च जन्ममृत्युपुनर्भवाः ॥ २५६ ॥ अध्यात्मं श्रूयते यच्च पञ्चभूतगुणात्मकम् । अव्यक्तादि परं यच्च स एव परिगीयते ॥ २५७ ॥ यत्तद्यतिवरा मुक्ता ध्यानयोगबला- न्विताः । प्रतिबिम्बमिवादर्शे पश्यन्त्यात्मन्यवस्थितम् ॥ २५८ ॥ श्रद्दधानः सदायुक्तः सदाधर्मपरायणः । आसेवन्निममध्यायं नरः पापात् प्रमुच्यते ॥ २५९ ॥ अनुक्रमणिकाध्यायं भारतस्येममा- दितः । आस्तिकः सततं शृण्वन्न कृच्छ्रेष्ववसीदति ॥ २६० ॥ उभे सन्ध्ये जपन् किञ्चित्सद्यो मुच्येत किल्बिषात् । अनुक्रमण्या यावत् स्यादह्ना रात्र्या च सञ्चितम् ॥ २६१ ॥ भारतस्य वपुर्ह्येतत्सत्यं चामृतमेव च । नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ॥२६२॥ आरण्यकं च वेदेभ्य ओषधिभ्योऽमृतं यथा । ह्रदानामुदधिः श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ॥ २६३ ॥ यथैतानीतिहासानां तथा भारतमुच्यते । यश्चैनं श्रावयेच्छ्राद्धे ब्राह्मणान् पादमन्ततः । अक्षय्यमन्नपानं वै पितॄंस्तस्योपतिष्ठते ॥ २६४ ॥ इतिहासपुरा- णाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरि- ष्यति ॥ २६५ ॥ कार्ष्णं वेदमिमं विद्वान् श्रावयित्वार्थमश्नुते ।

भ्रूणहत्यादिकं चापि पापं दद्यादसंशयम् ॥ २६६ ॥ य इमं शुचिरध्याय पठेत् पर्व्वणि पर्व्वणि । अधीतं भारतं तेन कृत्स्नं स्यादिति मे मतिः ॥ २६७ ॥ यश्चैनं शृणुयान्नित्यमार्षं श्रद्धासमन्वितः । स दीर्घमायुः कीर्त्तिञ्च स्वर्गतिं चाप्नुयान्नरः ॥२६८॥ एकतश्चतुरो वेदान् भारतं चैतदेकतः । पुरा किल सुरैः सर्व्वैः समेत्य तुलया धृतम् ॥ २६९ ॥ चतुर्भ्यः सरहस्येभ्यो वेदेभ्यो ह्यधिकं यदा । तदाप्रभृति लोकेऽस्मिन्महाभारतमुच्यते ॥२७०॥ महत्त्वे च गुरुत्वे च ध्रियमाणं यतोऽधिकम् । महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते । निरुक्तमस्य यो वेद सर्व्वपापैः प्रमुच्यते ॥२७१॥ तपो न कल्कोऽध्ययनं न कल्कः स्वाभाविको वेदविधिर्न्न कल्कः प्रसह्य वित्ताहरणं न कल्कस्तान्येव भावोपहतानि कल्कः ॥२७२॥

इतिश्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां आदिपर्व्वण्यनुक्रमणिकाध्यायः प्रथमः ॥ १ ॥

---

ऋषय ऊचुः । समन्तपञ्चकमिति यदुक्तं सूतनन्दन । एतत् सर्व्वं यथातत्त्वं श्रोतुमिच्छामहे वयम् ॥ १ ॥

सौतिरुवाच । शृणुध्वं मम भो विप्रा ब्रुवतश्च कथाः शुभाः । समन्तपञ्चकाख्यञ्च श्रोतुमर्हथ सत्तमाः ॥ २ ॥ त्रेताद्वापरयोः सन्धौ रामः शस्त्रभृतां वरः । असकृत्पार्थिवं क्षत्रं जघानामर्षचोदितः ॥ ३ ॥ स सर्व्वं क्षत्रमुत्साद्य स्ववीर्य्येणानलद्युतिः । समन्तपञ्चके पञ्च चकार रौधिरान् ह्रदान् ॥ ४ ॥ स तेषु रुधिराम्भःसु ह्रदेषु क्रोधमूर्च्छितः । पितॄन् सन्तर्पयामास रुधिरेणेति नः श्रुतम् ॥ ५ ॥ अथर्च्चीकादयोऽभ्येत्य पितरो राममब्रुवन् । राम राम महाभाग प्रीताः स्मस्तव भार्गव ॥ ६ ॥ अनया पितृ-

भक्त्या च विक्रमेण तव प्रभो। वरं वृणीष्व भद्रं ते यमिच्छसि महाद्युते ॥ ७ ॥

राम उवाच। यदि मे पितरः प्रीता यद्यनुग्राह्यता मयि। यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया ॥ ८ ॥ अतश्च पापान्मुच्येऽहमेष मे प्रार्थितो वरः। ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः ॥ ९ ॥ एवं भविष्यतीत्येवं पितरस्तमथाब्रुवन्। तं क्षमस्वेति निषिषिधुस्ततः स विरराम ह ॥ १० ॥ तेषां समीपे यो देशो ह्रदानां रुधिराम्भसाम्। समन्तपञ्चकमिति पुण्यं तत्परिकीर्त्तितम् ॥ ११ ॥ येन लिङ्गेन यो देशो युक्तः समुपलक्ष्यते। तेनैव नाम्ना तं देशं वाच्यमाहुर्मनीषिणः ॥ १२ ॥ अन्तरे चैव सम्प्राप्ते कलिद्वापरयोरभूत्। समन्तपञ्चके युद्धं कुरुपाण्डवसेनयोः ॥ १३ ॥ तस्मिन् परमधर्मिष्ठे देशे भूदोषवर्जिते। अष्टादश समाजग्मुरक्षौहिण्यो युयुत्सया ॥ १४ ॥ समेत्य तं द्विजास्ताश्च तत्रैव निधनं गताः। एतन्नामाभिनिर्वृत्तं तस्य देशस्य वै द्विजाः ॥ १५ ॥ पुण्यश्च रमणीयश्च स देशो वः प्रकीर्त्तितः। तदेतत् कथितं सर्वं मया ब्राह्मणसत्तमाः ॥ १६ ॥ यथा देशः स विख्यातस्त्रिषु लोकेषु सुव्रताः।

ऋषय ऊचुः। अक्षौहिण्य इति प्रोक्तं यत्त्वया सूतनन्दन। एतदिच्छामहे श्रोतुं सर्वमेव यथातथम् ॥ १७ ॥ अक्षौहिण्याः परीमाणं नराश्वरथदन्तिनाम्। यथावच्चैव नो ब्रूहि सर्वं हि विदितं तव ॥ १८ ॥

सौतिरुवाच। एको रथो गजश्चैको नराः पञ्च पदातयः। त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ १९ ॥ पत्तिं तु त्रिगुणामेतामाहुः सेनामुखं बुधाः। त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते ॥ २० ॥ त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः। स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः ॥ २१ ॥

चमूस्तु पृतनास्तिस्रस्तिस्रस्त्वनीकिनी। अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः॥ २२॥ अक्षौहिण्याः प्रसंख्याता रथानां द्विजसत्तमाः। संख्यागणिततत्त्वज्ञैः सहस्राण्येकविंशतिः॥ २३॥ शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः। गजानाञ्च परीमाणमेतदेव विनिर्द्दिशेत्॥ २४॥ ज्ञेयं शतसहस्रन्तु सहस्राणि नवैव तु। नराणामपि पञ्चाशच्छतानि त्रीणि चानघाः॥ २५॥ पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च। दशोत्तराणि षट् प्राहुर्यथावदिह संख्यया॥ २६॥ एतामक्षौहिणीं प्राहुः संख्यातत्त्वविदो जनाः। यथा कथितवानस्मि विस्तरेण तपोधनाः॥ २७॥ एतया संख्यया ह्यासन् कुरुपाण्डवसेनयोः। अक्षौहिण्यो द्विजश्रेष्ठाः पिण्डिताष्टादशैव तु॥ २८॥ समेतास्तत्र वै देशे तत्रैव निधनं गताः। कौरवान् कारणं कृत्वा कालेनाद्भुतकर्म्मणा॥ २९॥ अहानि युयुधे भीष्मो दशैव परमास्त्रवित्। अहानि पञ्च द्रोणस्तु ररक्ष कुरुवाहिनीम्॥ ३०॥ अहनी युयुधे द्वे तु कर्णः परबलार्द्दनः। शल्योऽर्द्धदिवसञ्चैव गदायुद्धमतःपरम्। दुर्य्योधनस्य भीमस्य दिनार्द्धमभवत्तयोः॥ ३१॥ तस्यैव दिवसस्यान्ते द्रौणिहार्द्दिक्यगौतमाः। प्रसुप्तं निशि विश्वस्तं जघ्नुर्य्यौधिष्ठिरं बलम्॥ ३२॥ यत्तु शौनकसत्रे ते भारताख्यानमुत्तमम्। जनमेजयस्य तत्सत्रे व्यासशिष्येण धीमता॥ ३३॥ कथितं विस्तरार्थञ्च यशो वीर्य्यं महीक्षिताम्। पौष्यं तत्र च पौलोममास्तीकं चादितः स्मृतम्॥ ३४॥ विचित्रार्थपदाख्यानमनेकसमयान्वितम्। प्रतिपन्नं नरैः प्राज्ञैर्वैराग्यमिव मोक्षिभिः॥ ३५॥ आत्मेव वेदितव्येषु प्रियेष्विव हि जीवितम्। इतिहासः प्रधानार्थः श्रेष्ठः सर्व्वागमेष्वयम्॥ ३६॥ अनाश्रित्यैदमाख्यानं कथा भुवि न विद्यते। आहारमनपाश्रित्य शरीरस्येव धारणम्॥ ३७॥ तदेतद्भारतं नाम कविभिस्तूप-

दीप्यते । उदयप्रेप्सुभिर्मर्त्यैरभिजात इवेश्वरः ॥ ३८ ॥ इति-
हासोत्तमे ह्यस्मिन्नर्पिता बुद्धिरुत्तमा । स्वरव्यञ्जनयोः कृत्स्ना
लोकवेदाश्रयेव वाक् ॥ ३९ ॥ तस्य प्रज्ञाभिपन्नस्य विचित्रपद-
पर्वणः । सूक्ष्मार्थन्याययुक्तस्य वेदार्थैर्भूषितस्य च ॥ ४० ॥ भार-
तस्येतिहासस्य श्रूयतां पर्वसंग्रहः । पर्वानुक्रमणी पूर्वं द्वितीयः
पर्वसंग्रहः ॥ ४१ ॥ पौष्यं पौलोममास्तीकमादिवंशावतारणम् ।
ततः सम्भवपर्वोक्तमद्भुतं रोमहर्षणम् ॥ ४२ ॥ दाहो जतुगृहस्यात्र
हैडिम्बं पर्व चोच्यते । ततो वकवधः पर्व पर्व चैत्ररथं ततः ॥ ४३ ॥
ततः स्वयम्बरो देव्याः पाञ्चाल्याः पर्व चोच्यते । क्षात्रधर्मेण
निर्जित्य ततो वैवाहिकं स्मृतम् ॥ ४४ ॥ विदुरागमनं पर्व राज्य-
लाभस्तथैव च । अर्जुनस्य वने वासः सुभद्राहरणं ततः ॥ ४५ ॥
सुभद्राहरणादूर्द्ध्वं ज्ञेयं हरणहारिकम् । ततः खाण्डवदाहाख्यं
तत्रैव मयदर्शनम् ॥ ४६ ॥ सभापर्व ततः प्रोक्तं मन्त्रपर्व ततः
परम् । जरासन्धवधः पर्व पर्व दिग्विजयं तथा ॥ ४७ ॥ पर्व
दिग्विजयादूर्द्ध्वं राजसूयिकमुच्यते । ततश्चार्घाभिहरणं शिशु-
पालवधस्ततः ॥ ४८ ॥ द्यूतपर्व ततः प्रोक्तमनुद्यूतमतः परम् ।
तत आरण्यकं पर्व किर्मीरवध एव च ॥ ४९ ॥ अर्जुनस्याभि-
गमनं पर्व ज्ञेयमतः परम् । ईश्वरार्जुनयोर्युद्धं पर्व कैरात-
संज्ञितम् ॥ ५० ॥ इन्द्रलोकाभिगमनं पर्व ज्ञेयमतः परम् ।
नलोपाख्यानमपि च धार्मिकं करुणोदयम् ॥ ५१ ॥ तीर्थयात्रा
ततः पर्व कुरुराजस्य धीमतः । जटासुरवधः पर्व यक्षयुद्धमतः
परम् ॥ ५२ ॥ निवातकवचैर्युद्धं पर्व चाजगरं ततः । मार्क-
ण्डेयसमस्या च पर्वानन्तरमुच्यते ॥ ५३ ॥ संवादश्च ततः पर्व
द्रौपदीसत्यभामयोः । घोषयात्रा ततः पर्व मृगस्वप्नोद्भवस्ततः ॥ ५४ ॥
व्रीहिद्रौणिकमाख्यानमैन्द्रद्युम्नं तथैव च । द्रौपदीहरणं पर्व
जयद्रथविमोक्षणम् ॥ ५५ ॥ पतिव्रताया माहात्म्यं सावित्र्याः

श्चैवमद्भुतम्। रामोपाख्यानमत्रैव पर्व ज्ञेयमतः परम् ॥ ५६ ॥
कुण्डलाहरणं पर्व ततः परमिहोच्यते। आरणेयं ततः पर्व
वैराटं तदनन्तरम्। पाण्डवानां प्रवेशश्च समयस्य च पालनम्
॥ ५७ ॥ कीचकानां वधः पर्व पर्व गोग्रहणं ततः। अभि-
मन्योश्च वैराट्याः पर्व वैवाहिकं स्मृतम् ॥५८॥ उद्योगपर्व विज्ञेय-
मत ऊर्द्ध्वं महाद्भुतम्। ततः सञ्जययानाख्यं पर्व ज्ञेयमतः
परम् ॥ ५९ ॥ प्रजागरस्तथा पर्व धृतराष्ट्रस्य चिन्तया। पर्व
सानत्सुजातं वै गुह्यमध्यात्मदर्शनम् ॥ ६० ॥ यानसन्धिस्ततः
पर्व भगवद्यानमेव च। मातलीयमुपाख्यानं चरितं गालवस्य
च ॥ ६१ ॥ सावित्रवामदेव्यञ्च वैन्योपाख्यानमेव च। जाम-
दग्न्यमुपाख्यानं पर्व षोड़शराजिकम् ॥ ६२ ॥ सभाप्रवेशः कृष्णस्य
विदुलापुत्रशासनम्। उद्योगः सैन्यनिर्य्याणं श्वेतोपाख्यानमेव च
॥ ६३ ॥ कर्णविवादपर्वात्र कर्णस्यापि महात्मनः। निर्य्याणञ्च
ततः पर्व कुरुपाण्डवसेनयोः ॥ ६४ ॥ रथातिरथसंख्या च पर्वोक्तं
तदनन्तरम्। उलूकदूतागमनं पर्वामर्षविवर्द्धनम् ॥ ६५ ॥ अम्बो-
पाख्यानमत्रैव पर्व ज्ञेयमतः परम्। भीष्माभिषेचनं पर्व तत-
श्चाद्भुतमुच्यते ॥ ६६ ॥ जम्बूखण्डविनिर्माणं पर्वोक्तं तदन-
न्तरम। भूमिपर्व ततः प्रोक्तं द्वीपविस्तारकीर्त्तनम् ॥ ६७ ॥
पर्वोक्तं भगवद्गीता पर्व भीष्मवधस्ततः। द्रोणाभिषेचनं पर्व संस-
प्तकवधस्ततः ॥ ६८ ॥ अभिमन्युवधः पर्व प्रतिज्ञापर्व चोच्यते।
जयद्रथवधः पर्व घटोत्कचवधस्ततः ॥ ६९ ॥ ततो द्रोणवधः पर्व
विज्ञेयं लोमहर्षणम्। मोक्षो नारायणास्त्रस्य पर्वानन्तरमुच्यते
॥ ७० ॥ कर्णपर्व ततो ज्ञेयं शल्यपर्व ततः परम्। ह्रदप्रवेशनं
पर्व गदायुद्धमतः परम् ॥ ७१ ॥ सारस्वतं ततः पर्व तीर्थवंशा-
नुकीर्त्तनम्। अत ऊर्द्धं सुवीभत्सं पर्व सौप्तिकमुच्यते ॥ ७२ ॥
ऐषीकं पर्व चोद्दिष्टमत ऊर्द्धं सुदारुणम्। जलप्रदानिकं पर्व

स्त्रीविलापस्ततःपरम् ॥ ७३ ॥ श्राद्धपर्व ततो ज्ञेयं कुरूणामौर्द्धदेहिकम् । चार्वाकस्य वधः पर्व रक्षसो ब्रह्मरूपिणः ॥ ७४ ॥ आभिषेचनिकं पर्व धर्मराजस्य धीमतः । प्रविभागो गृहाणाञ्च पर्वोक्तं तदनन्तरम् ॥ ७५ ॥ शान्तिपर्व ततो यत्र राजधर्मानुशासनम् । आपद्धर्मश्च पर्वोक्तं मोक्षधर्मस्ततः परम् ॥ ७६ ॥ शुकप्रश्नाभिगमनं ब्रह्मप्रश्नानुशासनम् । प्रादुर्भावश्च दुर्वाससःसंवादश्चैव मायया ॥ ७७ ॥ ततः पर्व परिज्ञेयमानुशासनिकं परम् । स्वर्गारोहणिकञ्चैव ततो भीष्मस्य धीमतः ॥ ७८ ॥ ततोऽश्वमेधिकं पर्व सर्वपापप्रणाशनम् । अनुगीता ततः पर्व ज्ञेयमध्यात्मवाचकम् ॥ ७९ ॥ पर्व चाश्रमवासाख्यं पुत्रदर्शनमेव च । नारदागमनं पर्व ततःपरमिहोच्यते ॥ ८० ॥ मौसलं पर्व चोद्दिष्टं ततो घोरं सुदारुणम् । महाप्रस्थानिकं पर्व स्वर्गारोहणिकं ततः ॥ ८१ ॥ हरिवंशस्ततः पर्व पुराणं खिलसंज्ञितम् । विष्णुपर्व शिशोश्चर्या विष्णोः कंसवधस्तथा ॥ ८२ ॥ भविष्यं पर्व चाप्युक्तं खिले चैवाद्भुतं महत् । एतत् पर्वशतं पूर्णं व्यासेनोक्तं महात्मना ॥ ८३ ॥ यथावत् सूतपुत्रेण लोमहर्षणिना ततः । उक्तानि नैमिषारण्ये पर्वाण्यष्टादशैव तु ॥ ८४ ॥ समासो भारतस्यायमत्रोक्तः पर्वसंग्रहः । पौष्यं पौलोममास्तीकमादिवंशावतारणम् ॥ ८५ ॥ सम्भवो जतुवेश्माख्यं हिड़िम्बबकयोर्वधः । तथा चैत्ररथं देव्याः पाञ्चाल्याश्च स्वयम्वरः ॥ ८६ ॥ क्षात्रधर्मेण निर्जित्य ततो वैवाहिकं स्मृतम् । विदुरागमनञ्चैव राज्यलम्भस्तथैव च ॥ ८७ ॥ वनवासोऽर्जुनस्यापि सुभद्राहरणं ततः । हरणाहरणञ्चैव दहनं खाण्डवस्य च ॥ ८८ ॥ मयस्य दर्शनञ्चैव आदिपर्वणि कथ्यते । पौष्ये पर्वणि माहात्म्यमुत्तङ्कस्योपवर्णितम् ॥ ८९ ॥ पौलोमे भृगुवंशस्य विस्तारः परिकीर्त्तितः । आस्तीके सर्वनागानां गरुड़स्य च सम्भवः ॥ ९० ॥ क्षीरोदमथनञ्चैव जन्मोच्चैः-

अवसत्सुता । यजतः सर्पसत्रे या राज्ञः पारीक्षितस्य च ॥ ९१ ॥ कथेयमभिनिर्वृत्ता भरतानां महात्मनाम् । विविधा सम्भवा राज्ञामुक्ताः सम्भवपर्व्वणि ॥ ९२ ॥ अन्येषाञ्चैव शूराणामृषेर्द्वैपायनस्य च । अंशावतारणं चात्र देवानां परिकीर्त्तितम् ॥ ९३ ॥ दैत्यानां दानवानाञ्च यक्षाणाञ्च महौजसाम् । नागानामथ सर्पाणां गन्धर्व्वाणां पतत्रिणाम् ॥ ९४ ॥ अन्येषाञ्चैव भूतानां विविधानां समुद्भवः । महर्षेराश्रमपदे कण्वस्य च तपस्विनः ॥ ९५ ॥ शकुन्तलायां दुष्मन्ताद्भरतश्चापि जज्ञिवान् । यस्य लोकेषु नाम्नेदं प्रथितं भारतं कुलम् ॥ ९६ ॥ वसूनां पुनरुत्पत्तिर्भागीरथ्यां महात्मनाम् । शान्तनोर्वेश्मनि पुनस्तेषां चारोहणं दिवि ॥ ९७ ॥ तेजोऽशानाञ्च सम्पाती भीष्मस्याप्यत्र सम्भवः । राज्यान्निवर्त्तनं तस्य ब्रह्मचर्य्यव्रते स्थितिः ॥ ९८ ॥ प्रतिज्ञापालनञ्चैव रक्षा चित्राङ्गदस्य च । हते चित्राङ्गदे चैव रक्षा भ्रातुर्यवीयसः ॥ ९९ ॥ विचित्रवीर्य्यस्य तथा राज्ये संप्रतिपादनम् । धर्मस्य नृषु संभूतिरणीमाण्डव्यशापजा ॥ १०० ॥ कृष्णद्वैपायनाच्चैव प्रसूतिर्वरदानजा । धृतराष्ट्रस्य पाण्डोश्च पाण्डवानाञ्च सम्भवः ॥ १०१ ॥ वारणावतयात्रायां मन्त्रो दुर्य्योधनस्य च । कूटस्य धार्त्तराष्ट्रेण प्रेषणं पाण्डवान् प्रति ॥१०२॥ हितोपदेशश्च पथि धर्मराजस्य धीमतः । विदुरेण कृतो यत्र हितार्थं म्लेच्छभाषया ॥ १०३ ॥ विदुरस्य च वाक्येन सुरङ्गोपक्रमक्रिया । निषाद्याः पञ्चपुत्रायाः सुप्ताया जतुवेश्मनि ॥१०४॥ पुरोचनस्य चात्रैव दहनं संप्रकीर्त्तितम् । पाण्डवानां वने घोरे हिडिम्बायाश्च दर्शनम् ॥ १०५ ॥ तत्रैव च हिडिम्बस्य वधो भीमाद्महाबलात् । घटोत्कचस्य चोत्पत्तिरत्रैव परिकीर्त्तिता ॥ १०६ ॥ महर्षेर्दर्शनञ्चैव व्यासस्यामिततेजसः । तदाज्ञयैकचक्रायां ब्राह्मणस्य निवेशने ॥ १०७ ॥ अज्ञातचर्य्यया वासो यत्र

तेषां प्रकीर्त्तितः। बकस्य निधने चैव नागराणाञ्च विस्मयः ॥१०८॥
सम्भवश्चैव कृष्णाया धृष्टद्युम्नस्य चैव हि। ब्राह्मणात् समुपश्रुत्य
व्यासवाक्यप्रचोदिताः ॥ १०९ ॥ द्रौपदीं प्रार्थयन्तस्ते स्वयम्बर-
दिदृक्षया। पाञ्चालानभितो जग्मुर्यत्र कौतूहलान्विताः ॥११०॥
अङ्गारपर्णं निर्जित्य गङ्गाकूलेऽर्जुनस्तदा। सख्यं कृत्वा तत-
स्तेन तस्मादेव च शुश्रुवे ॥१११॥ तापत्यमथ वाशिष्ठमौर्वञ्चाख्यान-
मुत्तमम्। भ्रातृभिः सहितः सर्वैः पाञ्चालानभितो ययौ ॥११२॥
पाञ्चालनगरे चापि लक्ष्यं भित्त्वा धनञ्जयः। द्रौपदीं लब्धवानत्र
मध्ये सर्वमहीक्षिताम् ॥ ११३ ॥ भीमसेनार्जुनौ यत्र संरब्धान्
पृथिवीपतीन्। शल्यकर्णौ च तरसा जितवन्तौ महामृधे ॥११४॥
दृष्ट्वा तयोश्च तद्वीर्य्यमप्रमेयममानुषम्। शङ्कमानौ पाण्डवांस्तान्
रामकृष्णौ महामती ॥ ११५ ॥ जग्मतुस्तैः समागन्तुं शाला-
म्भार्गववेश्मनि। पञ्चानामेकपत्नीत्वे विमर्शो द्रुपदस्य च ॥ ११६ ॥
पञ्चेन्द्राणामुपाख्यानमत्रैवाद्भुतमुच्यते। द्रौपद्या देवविहितो
विवाहश्चाप्यमानुषः ॥११७॥ क्षत्तुश्च धार्त्तराष्ट्रेण प्रेषणं पाण्ड-
वान् प्रति। विदुरस्य च सम्प्राप्तिर्दर्शनं केशवस्य च ॥ ११८ ॥
खाण्डवप्रस्थवासश्च तथा राज्यार्द्धशासनम्। नारदस्याज्ञया चैव
द्रौपद्याः समयक्रिया ॥ ११९ ॥ सुन्दोपसुन्दयोस्तद्वदाख्यानं परि-
कीर्त्तितम्। अनन्तरञ्च द्रौपद्या सहासीनं युधिष्ठिरम् ॥ १२० ॥
अनुप्रविश्य विप्रार्थे फाल्गुनो गृह्य चायुधम्। मोक्षयित्वा गृहं
गत्वा विप्रार्थं कृतनिश्चयः ॥ १२१ ॥ समयं पालयन्वीरो वनं यत्र
जगाम ह। पार्थस्य वनवासे च उलूप्या पथि सङ्गमः ॥ १२२ ॥
पुण्यतीर्थानुसंयानं बभ्रुवाहनजन्म च। तत्रैव मोक्षयामास पञ्च
सोऽप्सरसः शुभाः ॥ १२३ ॥ शापाद्ग्राहत्वमापन्ना ब्राह्मणस्य
तपस्विनः। प्रभासतीर्थे पार्थेन कृष्णस्य च समागमः ॥ १२४ ॥
द्वारकायां सुभद्रा च कामयानेन कामिनी। वासुदेवस्यानुमते

माप्ता चैव किरीटिना ॥ १२५ ॥ स्वयं भार्य्या धर्म्यां प्राप्ते लब्धो देवकिनन्दने । अभिमन्योः सुभद्रायां जन्म चोत्तमतेजसः ॥१२६॥ द्रौपद्यास्तनयानाञ्च सम्भवोऽत्र प्रकीर्त्तितः । विहारार्थञ्च गतयोः कृष्णयोर्यमुनामनु ॥ १२७ ॥ सम्प्राप्तिश्चक्रधनुषोः खाण्डवस्य च दाहनम् । मयस्य मोक्षो ज्वलनाद्भुजङ्गस्य च मोक्षणम् ॥ १२८ ॥ महर्षेर्मन्दपालस्य शार्ङ्ग्यां तनयसम्भवः ॥ १२९ ॥ इत्येतदादिपर्व्वोक्तं प्रथमम्बहुविस्तरम् । अध्यायानां शते द्वे तु संख्याते परमर्षिणा । सप्तविंशतिरध्याया व्यासेनोत्तमतेजसा ॥ १३० ॥ अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च । श्लोकाश्च चतुरशीतिश्च पुनरुक्ता महात्मना ॥ १३१ ॥ द्वितीयन्तु सभापर्व्व बहुवृत्तान्तमुच्यते । सभाक्रिया पाण्डवानां किङ्कराणाञ्च दर्शनम् ॥ १३२ ॥ लोकपालसभाख्यानं नारदाद्देवदर्शिनः । राजसूयस्य चारम्भो जरासन्धवधस्तथा ॥ १३३ ॥ गिरिव्रजे निरुद्धानां राज्ञां कृष्णेन मोक्षणम् । तथा दिग्विजयोऽत्रैव पाण्डवानां प्रकीर्त्तितः ॥ १३४ ॥ राज्ञामागमनञ्चैव सार्हणानां महाक्रतौ । राजसूयेऽर्घसंवादे शिशुपालवधस्तथा ॥ १३५ ॥ यज्ञे विभूतिं तां दृष्ट्वा दुःखामर्षान्वितस्य च । दुर्य्योधनस्यावहासो भीमेन च सभातले ॥ १३६ ॥ यत्रास्य मन्युरुद्भूतो येन द्यूतमकारयत् । यत्र धर्म्मसुतं द्यूते शकुनिः कितवोऽजयत् ॥ १३७ ॥ यत्र द्यूतार्णवे मग्नां द्रौपदीं नौरिवार्णवात् । धृतराष्ट्रो महाप्राज्ञः स्नुषां परमदुःखिताम् ॥ १३८ ॥ तारयामास तांस्तीर्णान् ज्ञात्वा दुर्य्योधनो नृपः । पुनरेव ततो द्यूते समाह्वयत पाण्डवान् ॥ १३९ ॥ जित्वा स वनवासाय प्रेषयामास तांस्ततः । एतत् सर्व्वं सभापर्व्व समाख्यातं महात्मना ॥ १४० ॥ अध्यायाः सप्ततिर्ज्ञेयास्तथा चाष्टौ प्रसंख्यया । श्लोकानां द्वे सहस्रे तु पञ्चश्लोकशतानि च ॥ १४१ ॥ श्लोकाश्चैकादश ज्ञेयाः पर्व्वण्यस्मिन् द्विजोत्तमाः । अतः परं

तृतीयन्तु ज्ञेयमारण्यकं महत् ॥ १४२ ॥ वनवासं प्रयातेषु पाण्ड-
वेषु महात्मसु। पौरानुगमनञ्चैव धर्मपुत्रस्य धीमतः ॥ १४३ ॥
अन्नौषधीनाञ्च कृते पाण्डवेन महात्मना। द्विजानां भरणार्थञ्च
कृतमाराधनं रवेः ॥ १४४ ॥ धौम्योपदेशात्तिग्मांशुप्रसादादन्न-
सम्भवः। हितञ्च ब्रुवतः क्षत्तुः परित्यागोऽम्बिकासुतात् ॥ १४५ ॥
त्यक्तस्य पाण्डुपुत्राणां समीपगमनं तथा। पुनरागमनञ्चैव धृत-
राष्ट्रस्य शासनात् ॥ १४६ ॥ कर्णप्रोत्साहनाच्चैव धार्त्तराष्ट्रस्य
दुर्मतेः। वनस्थान् पाण्डवान् हन्तुं मन्त्रो दुर्य्योधनस्य च ॥ १४७ ॥
तं दुष्टभावं विज्ञाय व्यासस्यागमनं द्रुतम्। निर्य्याणप्रतिषेधश्च
सुरभ्याख्यानमेव च ॥ १४८ ॥ मैत्रेयागमनं चात्र राज्ञश्चैवानु-
शासनम्। शापोत्सर्गश्च तेनैव राज्ञो दुर्य्योधनस्य च ॥ १४९ ॥
किर्मीरस्य वधश्चात्र भीमसेनेन संयुगे। वृष्णीनामागमश्चात्र
पाञ्चालानाञ्च सर्वशः ॥ १५० ॥ श्रुत्वा शकुनिना द्यूते निकृत्या-
निर्जितांश्च तान्। क्रुद्धस्यानुप्रशमनं हरेश्चैव किरीटिना ॥ १५१ ॥
परिदेवनञ्च पाञ्चाल्या वासुदेवस्य सन्निधौ। आश्वासनञ्च कृष्णेन
दुःखार्त्तायाः प्रकीर्त्तितम् ॥ १५२ ॥ तथा सौभवधाख्यान-
मत्रैवोक्तं महर्षिणा। सुभद्रायाः सपुत्रायाः कृष्णेन द्वारकां
पुरीम् ॥ १५३ ॥ नयनं द्रौपदेयानां धृष्टद्युम्नेन चैव हि।
प्रवेशः पाण्डवेयानां रम्ये द्वैतवने ततः ॥ १५४ ॥ धर्मराजस्य
चात्रैव संवादः कृष्णया सह। संवादश्च तथा राज्ञा भीमस्यापि
प्रकीर्त्तितः ॥ १५५ ॥ समीपं पाण्डुपुत्राणां व्यासस्यागमनं
तथा। प्रतिस्मृत्याथ विद्याया दानं राज्ञो महर्षिणा ॥ १५६ ॥
गमनं काम्यके चापि व्यासे प्रतिगते ततः। अस्त्रहेतोर्विवा-
सश्च पार्थस्यामिततेजसः ॥ १५७ ॥ महादेवेन युद्धञ्च किरात-
वपुषा सह। दर्शनं लोकपालानामस्त्रप्राप्तिस्तथैव च ॥ १५८ ॥
महेन्द्रलोकगमनमस्त्रार्थे च किरीटिनः। यत्र चिन्ता महत्यासी

धृतराष्ट्रस्य भूयसी ॥ १५९ ॥ दर्शनं बृहदश्वस्य महर्षेर्भाविता-
त्मनः। युधिष्ठिरस्य चार्त्तस्य व्यसनं परिदेवनम् ॥ १६० ॥
नलोपाख्यानमत्रैव धर्मिष्ठं करुणोदयम्। दमयन्त्याः स्थिति-
र्यत्र नलस्य चरितं तथा ॥ १६१ ॥ तथाक्षहृदयप्राप्तिस्तस्मादेव
महर्षितः। लोमशस्यागमस्तत्र स्वर्गात् पाण्डुसुतान् प्रति ॥१६२॥
वनवासगतानाञ्च पाण्डवानां महात्मनाम्। स्वर्गे प्रवृत्तिरा-
ख्याता लोमशेनार्जुनस्य वै ॥ १६३ ॥ सन्देशादर्जुनस्यात्र तीर्था-
भिगमनक्रिया। तीर्थानाञ्च फलप्राप्तिः पुण्यत्वञ्चापि कीर्त्तितम्
॥ १६४ ॥ पुलस्त्यतीर्थयात्रा च नारदेन महर्षिणा। तीर्थ-
यात्रा च तत्रैव पाण्डवानां महात्मनाम् ॥ १६५ ॥ कर्णस्य
परिमोक्षोऽत्र कुण्डलाभ्यां पुरन्दरात्। तथा यज्ञविभूतिश्च गय-
स्यात्र प्रकीर्त्तिता ॥ १६६ ॥ आगस्त्यमपि चाख्यानं यत्र वाता-
पिभक्षणम्। लोपामुद्राभिगमनमपत्यार्थमृषेस्तथा ॥ १६७ ॥
ऋष्यशृङ्गस्य चरितं कौमारब्रह्मचारिणः। जामदग्न्यस्य रामस्य
चरितं भूरितेजसः ॥ १६८ ॥ कार्त्तवीर्य्यवधो यत्र हैहयानाञ्च
वर्ण्यते। प्रभासतीर्थे पाण्डूनां वृष्णिभिश्च समागमः ॥ १६९ ॥
सौकन्यमपि चाख्यानं च्यवनो यत्र भार्गवः। शर्य्यातियज्ञे
नासत्यौ कृतवान् सोमपीतिनौ ॥ १७० ॥ ताभ्याञ्च यत्र स
मुनिर्यौवनं प्रतिपादितः। मान्धातुश्चाप्युपाख्यानं राज्ञोऽत्रैव
प्रकीर्त्तितम् ॥ १७१ ॥ जन्तूपाख्यानमत्रैव यत्र पुत्रेण सोमकः।
पुत्रार्थमयजद्राजा लेभे पुत्रशतञ्च सः ॥ १७२ ॥ ततः श्येन-
कपोतीयमुपाख्यानमनुत्तमम्। इन्द्राग्नी यत्र धर्मार्थमजिज्ञा-
सच्छिविं नृपः ॥ १७३ ॥ अष्टावक्रीयमत्रैव विवादो यत्र वन्दिना।
अष्टावक्रस्य विप्रर्षेर्जनकस्याध्वरेऽभवत् ॥ १७४ ॥ नैयायिकानां
मुख्येन वरुणस्यात्मजेन च। पराजितो यत्र बन्दी विवादेन
महात्मना ॥ १७५ ॥ विजित्य सागरं प्राप्तं पितरं लब्धवा-

गृषिः। यवक्रीतस्य चाख्यानं रैभ्यस्य च महात्मनः। गन्ध-
मादनयात्रा च वासो नारायणाश्रमे ॥ १७६ ॥ नियुक्तो भीम-
सेनश्च द्रौपद्या गन्धमादने। व्रजन् पथि महाबाहुर्दृष्टवान् पव-
नात्मजम् ॥ १७७ ॥ कदलीषण्डमध्यस्थं हनूमन्तं महाबलम्।
यत्र सौगन्धिकार्थेऽसौ नलिनीं तामधर्षयत् ॥ १७८ ॥ यत्रास्य
युद्धमभवत् सुमहद्राक्षसैः सह। यत्तैश्चैव महावीर्यैर्मणिमत्-
प्रमुखैस्तदा ॥ १७९ ॥ जटासुरस्य च वधो राक्षसस्य वृको-
दरात्। वृषपर्वणो राजर्षेस्ततोऽभिगमनं स्मृतम् ॥ १८० ॥ आर्ष्टि-
षेणाश्रमे चैषां गमनं वास एव च। प्रोत्साहनञ्च पाञ्चाल्या
भीमस्यात्र महात्मनः ॥ १८१ ॥ कैलासारोहणं प्रोक्तं यत्र यत्रै-
र्बलोत्कटैः। युद्धमासीन्महाघोरं मणिमत्प्रमुखैः सह ॥ १८२ ॥
अवाप्य दिव्यान्यस्त्राणि गुर्वर्थं सव्यसाचिना। निवातकवचैर्युद्धं
हिरण्यपुरवासिभिः ॥ १८३ ॥ निवातकवचैर्घोरैर्दानवैः सुर-
शत्रुभिः। पौलोमैः कालकेयैश्च यत्र युद्धं किरीटिनः ॥ १८४ ॥
वधश्चैषां समाख्यातो राज्ञस्तेनैव धीमता। अस्त्रसन्दर्शनारम्भो
धर्मराजस्य सन्निधौ ॥ १८५ ॥ पार्थस्य प्रतिषेधश्च नारदेन
सुरर्षिणा। पुनश्चैवावरोहणं पाण्डूनां गन्धमादनात् ॥ १८६ ॥
भीमस्य ग्रहणं चात्र पर्वताभोगवर्ष्मणा। भुजगेन्द्रेण बलिना
तस्मिन् सुगहने वने ॥ १८७ ॥ अमोचयद्यत्र चैनं प्रश्नानुक्त्वा
युधिष्ठिरः। काम्यकागमनञ्चैव पुनस्तेषां महात्मनाम् ॥ १८८ ॥
तत्रस्थांश्च पुनर्द्रष्टुं पाण्डवान् पुरुषर्षभान्। वासुदेवस्यागमन-
मत्रैव परिकीर्त्तितम् ॥ १८९ ॥ मार्कण्डेयसमास्यायामुपाख्या-
नानि सर्वशः। पृथोर्वैन्यस्य यत्रोक्तमाख्यानं परमर्षिणा ॥ १९० ॥
संवादश्च सरस्वत्यास्तार्क्ष्यर्षेः सुमहात्मनः। मत्स्योपाख्यानमत्रैव
प्रोच्यते तदनन्तरम् ॥ १९१ ॥ मार्कण्डेयसमास्या च पुराणं
परिकीर्त्यते। ऐन्द्रद्युम्नमुपाख्यानं धौन्धुमारस्तथैव च ॥ १९२ ॥

पतिव्रतायाश्चाख्यानं तथैवाङ्गिरसं स्मृतम्। द्रौपद्याः कीर्त्तित-
श्चात्र संवादः सत्यभामया ॥ १९३ ॥ पुनर्द्वैतवनञ्चैव पाण्डवाः
समुपागताः। घोषयात्रा च गन्धर्वैर्यत्र बद्धः सुयोधनः ॥१९४॥
ह्रियमाणस्तु मन्दात्मा मोक्षितोऽसौ किरीटिना। धर्मराजस्य
चात्रैव मृगस्वप्ननिदर्शनम् ॥ १९५ ॥ काम्यके काननश्रेष्ठे पुन-
र्गमनमुच्यते। व्रीहिद्रौणिकमाख्यानमत्रैव बहुविस्तरम् ॥१९६॥
दुर्वाससोऽप्युपाख्यानमत्रैव परिकीर्त्तितम्। जयद्रथेनापहारो
द्रौपद्याश्चाश्रमान्तरात् ॥ १९७ ॥ यत्रैतमन्वयाद्भीमो वायुवेग-
समो जवे। चक्रे चैनं पञ्चशिखं यत्र भीमो महाबलः॥ १९८ ॥
रामायणमुपाख्यानमत्रैव बहुविस्तरम्। यत्र रामेण विक्रम्य
निहतो रावणो युधि ॥ १९९ ॥ सावित्र्याश्चाप्युपाख्यानमत्रैव
परिकीर्त्तितम्। कर्णस्य परिमोक्षोऽत्र कुण्डलाभ्यां पुरन्दरात्
॥ २०० ॥ यत्रास्य शक्तिं तुष्टोऽसावदादेकवधाय च। आर-
णेयमुपाख्यानं यत्र धर्मोऽन्वशात् सुतम् ॥ २०१ ॥ जग्मुर्लब्ध-
वरा यत्र पाण्डवाः पश्चिमां दिशम्। एतदारण्यकं पर्व तृतीयं
परिकीर्त्तितम् ॥ २०२ ॥ अत्राध्यायशते द्वे तु संख्यया परि-
कीर्त्तिते। एकोनसप्ततिश्चैव तथाध्यायाः प्रकीर्त्तिताः ॥ २०३ ॥
एकादश सहस्राणि श्लोकानां षट्शतानि च। चतुःषष्टिस्तथा
श्लोकाः पर्वण्यस्मिन् प्रकीर्त्तिताः ॥ २०४ ॥ अतः परं निबोधेदं
वैराटं पर्व विस्तरम्। विराटनगरे गत्वा श्मशाने विपुलां शमीम्
॥ २०५ ॥ दृष्ट्वा संनिदधुस्तत्र पाण्डवा ह्यायुधान्युत। यत्र प्रविश्य
नगरं छद्मना न्यवसंस्तु ते ॥ २०६ ॥ पाञ्चालीं प्रार्थयानस्य कामो-
पहतचेतसः। दुष्टात्मनो वधो यत्र कीचकस्य वृकोदरात् ॥२०७॥
पाण्डवान्वेषणार्थञ्च राज्ञो दुर्य्योधनस्य च। चराः प्रस्थापिता-
स्तत्र निपुणाः सर्वतो दिशम् ॥ २०८ ॥ न च प्रवृत्तिस्तैर्लब्धा
पाण्डवानां महात्मनाम्। गोग्रहश्च विराटस्य त्रिगर्त्तैः प्रथमं

कृतः ॥ २०९ ॥ यत्रास्य युद्धं सुमहत्तैरासील्लोमहर्षणम्। ह्रियमाणश्च यत्रासौ भीमसेनेन मोचितः ॥ २१० ॥ गोधनञ्च विराटस्य मोचितं यत्र पाण्डवैः। अनन्तरञ्च कुरुभिस्तस्य गोग्रहणं कृतम् ॥ २११ ॥ समस्ता यत्र पार्थेन निर्जिताः कुरवो युधि। प्रत्याहृतं गोधनञ्च विक्रमेण किरीटिना ॥ २१२ ॥ विराटेनोत्तरा दत्ता स्नुषा यत्र किरीटिनः। अभिमन्युं समुद्दिश्य सौभद्रमरिघातिनम् ॥ २१३ ॥ चतुर्थमेतद्विपुलं वैराटं पर्व वर्णितम्। अत्रापि परिसंख्याता अध्यायाः परमर्षिणा ॥ २१४ ॥ सप्तषष्टिरथो पूर्णा श्लोकानामपि मे शृणु। श्लोकानां द्वे सहस्रे तु श्लोकाः पञ्चाशदेव तु ॥ २२५ ॥ उक्तानि वेदविदुषा पर्वण्यस्मिन्महर्षिणा। उद्योगपर्व विज्ञेयं पञ्चमं शृण्वतः परम् ॥ २२६ ॥ उपप्लव्ये निविष्टेषु पाण्डवेषु जिगीषया। दुर्य्योधनोऽर्जुनश्चैव वासुदेवमुपास्थितौ ॥ २२७ ॥ साहाय्यमस्मिन् समरे भवान्नौ कर्त्तुमर्हति। इत्युक्ते वचने कृष्णो यत्रोवाच महामतिः ॥ २२८ ॥ अयुध्यमानमात्मानं मन्त्रिणं पुरुषर्षभौ। अक्षौहिणीं वा सैन्यस्य कस्य किं वा ददाम्यहम् ॥ २२९ ॥ वव्रे दुर्य्योधनः सैन्यं मन्दात्मा यत्र दुर्मतिः। अयुध्यमानं सचिवं वव्रे कृष्णं धनञ्जयः ॥ २३० ॥ मद्रराजञ्च राजानमायान्तं पाण्डवान् प्रति। उपहारैर्वञ्चयित्वा वर्त्मन्येव सुयोधनः ॥ २३१ ॥ वरदं तं वरं वव्रे साहाय्यं क्रियतां मम। शल्यस्तस्मै प्रतिश्रुत्य जगामोद्दिश्य पाण्डवान् ॥ २३२ ॥ शान्तिपूर्वं चाकथयद्यत्रेन्द्रविजयं नृपः। पुरोहितप्रेषणञ्च पाण्डवैः कौरवान् प्रति ॥ २३३ ॥ वैचित्रवीर्य्यस्य वचः समादाय पुरोधसः। तथेन्द्रविजयञ्चापि यानञ्चैव पुरोधसः ॥ २३४ ॥ सञ्जयं प्रेषयामास शमार्थी पाण्डवान् प्रति। यत्र दूतं महाराजो धृतराष्ट्रः प्रतापवान् ॥ २३५ ॥ श्रुत्वा च पाण्डवान्यत्र वासुदेवपुरोगमान्। प्रजागरं संप्रजज्ञे धृतराष्ट्रस्य चिन्तया ॥ २३६ ॥

विदुरो यत्र वाक्यानि विचित्राणि हितानि च। श्रावयामास राजानं धृतराष्ट्रं मनीषिणम् ॥ २३७ ॥ तथा सनत्सुजातेन यत्राध्यात्ममनुत्तमम्। मनस्तापान्वितो राजा श्रावितः शोक-लालसः ॥ २३८ ॥ प्रभाते राजसमितौ सञ्जयो यत्र वा विभोः। ऐकात्म्यं वासुदेवस्य प्रोक्तवानर्ज्जुनस्य च ॥ २३९ ॥ यत्र कृष्णो-दयापन्नः सन्धिमिच्छन्महामतिः। स्वयमागाच्छमं कर्त्तुं नगरं नागसाह्वयम् ॥ २४० ॥ प्रत्याख्यानञ्च कृष्णस्य राज्ञा दुर्य्योधनेन वै। शमार्थे याचमानस्य पक्षयोरुभयोर्हितम् ॥ २४१ ॥ दम्भो-द्भवस्य चाख्यानमत्रैव परिकीर्त्तितम्। वरान्वेषणमत्रैव मात-लेश्च महात्मनः ॥ २४२ ॥ महर्षेश्चापि चरितं कथितं गालवस्य वै। विदुलायाश्च पुत्रस्य प्रोक्तं चाप्यनुशासनम् ॥ २४३ ॥ कर्ण-दुर्य्योधनादीनां दुष्टं विज्ञाय मन्त्रितम्। योगेश्वरत्वं कृष्णेन यत्र राज्ञां प्रदर्शितम् ॥ २४४ ॥ रथमारोप्य कृष्णेन यत्र कर्णो-ऽनुमन्त्रितः। उपायपूर्व्वं शौटीर्य्यात् प्रत्याख्यातश्च तेन सः ॥२४५॥ आगम्य हास्तिनपुरादुपप्लव्यमरिन्दमः। पाण्डवानां यथावृत्तं सर्व्वमाख्यातवान् हरिः ॥ २४६ ॥ ते तस्य वचनं श्रुत्वा मन्त्र-यित्वा च यद्धितम्। सांग्रामिकं ततः सर्व्वं सज्जं चक्रुः पर-न्तपाः ॥ २४७ ॥ ततो युद्धाय निर्य्याता नराश्वरथदन्तिनः। नगराद्धास्तिनपुराद्बलसंख्यानमेव च ॥ २४८ ॥ यत्र राज्ञा उलूक-कस्य प्रेषणं पाण्डवान् प्रति। श्वोभाविनि महायुद्धे दौत्येन कृतवान् प्रभुः ॥ २४९ ॥ रथातिरथसंख्यानमम्बोपाख्यानमेव च। एतत्सुबहुवृत्तान्तं पञ्चमं पर्व्व भारते ॥ २५० ॥ उद्योगपर्व्व निर्द्दिष्टं सन्धिविग्रहमिश्रितम्। अध्यायानां शतं प्रोक्तं षड्-शीतिर्महर्षिणा ॥ २५१ ॥ श्लोकानां षट्सहस्राणि तावन्त्येव शतानि च। श्लोकाश्च नवतिः प्रोक्तास्तथैवाष्टौ महात्मना ॥२५२॥ व्यासेनोदारमतिना पर्व्वण्यस्मिंस्तपोधनाः। अतः परं विचि-

त्रार्थं भीष्मपर्व प्रचक्ष्यते ॥ २५३ ॥ जम्बूखण्डविनिर्माणं यत्रोक्तं
सञ्जयेन च । यत्र यौधिष्ठिरं सैन्यं विषादमगमत्परम् ॥ २५४॥
यत्र युद्धमभूद्घोरं दशाहानि सुदारुणम् । कश्मलं यत्र पार्थस्य
वासुदेवो महामतिः ॥ २५५ ॥ मोहजं नाशयामास हेतुभि-
र्मोक्षदर्शिभिः । समीक्ष्याधोक्षजः क्षिप्रं युधिष्ठिरहिते रतः ॥२५६॥
रथादाप्लुत्य वेगेन स्वयं कृष्ण उदारधीः । प्रतोदपाणिराधाव-
द्भीष्मं हन्तुं व्यपेतभीः ॥ २५७ ॥ वाक्यप्रतोदाभिहतो यत्र
कृष्णेन पाण्डवः । गाण्डीवधन्वा समरे सर्वशस्त्रभृतांवरः ॥२५८॥
शिखण्डिनं पुरस्कृत्य यत्र पार्थो महाधनुः । विनिघ्नन्निशितै-
र्बाणैरथाद्भीष्ममपातयत् ॥ २५८ ॥ शरतल्पगतश्चैव भीष्मो यत्र
बभूव ह । षष्ठमेतत्समाख्यातं भारते पर्व विस्तृतम् ॥ २५९ ॥
अध्यायानां शतं प्रोक्तं तथा सप्त दशापरे । पञ्चश्लोकसहस्राणि
संख्ययाष्टौ शतानि च ॥ २६० ॥ श्लोकाश्च चतुरशीतिरस्मिन्
पर्वणि कीर्त्तिताः । व्यासेन वेदविदुषा संख्याता भीष्मपर्वणि
॥ २६१ ॥ द्रोणपर्व ततश्चित्रं बहुवृत्तान्तमुच्यते । सैनापत्ये
ऽभिषिक्तोऽथ यत्राचार्य्यः प्रतापवान् ॥ २६२ ॥ दुर्य्योधनस्य
प्रीत्यर्थं प्रतिजज्ञे महास्त्रवित् । ग्रहणं धर्मराजस्य पाण्डुपुत्रस्य
धीमतः । यत्र संशप्तकाः पार्थमपनिन्यूरणाजिरात् ॥ २६३ ॥
भगदत्तो महाराजो यत्र शक्रसमो युधि । सुप्रतीकेन नागेन स
हि शान्तः किरीटिना ॥ २६४ ॥ यत्राभिमन्युं बहवो जघ्नुरेकं
महारथाः । जयद्रथमुखा बालं शूरमप्राप्तयौवनम् ॥ २६५ ॥
हतेऽभिमन्यौ क्रुद्धेन यत्र पार्थेन संयुगे । अक्षौहिणीः सप्त हत्वा
हतो राजा जयद्रथः ॥ २६६ ॥ यत्र भीमो महाबाहुः सात्य-
किश्च महारथः । अन्वेषणार्थं पार्थस्य युधिष्ठिरनृपाज्ञया ।
प्रविष्टौ भारतीं सेनामप्रधृष्यां सुरैरपि ॥ २६७ ॥ संशप्तकावशेषञ्च
कृतं निःशेषमाहवे । अलम्बुषः श्रुतायुश्च जलसन्धश्च वीर्य्यवान्

॥ २६८ ॥ सोऽभद्‌गिरिविराटस्य द्रुपदस्य महारथः। घटोत्कचा-
दयश्चान्ये निहता द्रोणपर्वणि ॥ २६९ ॥ अश्वत्थामापि चात्र च
द्रोणे युधि निपातिते। अस्त्रं प्रादुश्चकारोग्रं नारायणममर्षितः
॥ २७० ॥ आग्नेयं कीर्त्यते यत्र रुद्रमाहात्म्यमुत्तमम्। व्यासस्य
चाप्यागमनं माहात्म्यं कृष्णपार्थयोः ॥ २७१ ॥ सप्तमं भारते पर्व
महदेतदुदाहृतम्। यत्र ते पृथिवीपालाः प्रायशो निधनं गताः
॥ २७२ ॥ द्रोणपर्वणि ये शूरा निर्दिष्टाः पुरुषर्षभाः। अत्रा-
ध्यायशतं प्रोक्तं तथाध्यायाश्च सप्ततिः ॥ २७३ ॥ अष्टौ श्लोक-
सहस्राणि तथा नवशतानि च। श्लोका नव तथैवात्र संख्याता-
स्तत्त्वदर्शिना। पाराशर्य्येण मुनिना सञ्चिन्त्य द्रोणपर्वणि ॥२७४॥
अतः परं कर्णपर्व प्रोच्यते परमाद्भुतम्। सारथ्ये विनियोगश्च
मद्रराजस्य धीमतः ॥ २७५ ॥ आख्यातं यत्र पौराणं त्रिपुरस्य
निपातनम्। प्रयाणे परुषश्चात्र संवादः कर्णशल्ययोः। हंस-
काकीयमाख्यानं तत्रैवाक्षेपसंहितम् ॥ २७६ ॥ वधः पाण्ड्यस्य
च तथा अश्वत्थाम्ना महात्मना। दण्डसेनस्य च ततो दण्डस्य
च वधस्तथा ॥ २७७ ॥ द्वैरथे यत्र कर्णेन धर्मराजो युधिष्ठिरः।
संशयं गमितो युद्धे मिषतां सर्वधन्विनाम् ॥ २७८ ॥ अन्योन्यं
प्रति च क्रोधो युधिष्ठिरकिरीटिनोः। यत्रैवानुनयः प्रोक्तो
माधवेनार्जुनस्य हि ॥ २७९ ॥ प्रतिज्ञापूर्वकश्चापि वक्षो दुःशा-
सनस्य च। भित्वा वृकोदरो रक्तं पीतवान्यत्र संयुगे ॥ २८० ॥
द्वैरथे यत्र पार्थेन हतः कर्णो महारथः। अष्टमं पर्व निर्दिष्ट-
मेतद्भारतचिन्तकैः ॥ २८१ ॥ एकोनसप्ततिः प्रोक्ता अध्यायाः
कर्णपर्वणि। चत्वार्य्येव सहस्राणि नव श्लोकशतानि च ॥२८२॥
चतुःषष्टिस्तथा श्लोकाः पर्वण्यस्मिन् प्रकीर्त्तिताः। अतः परं
विचित्रार्थं शल्यपर्व प्रकीर्त्तितम् ॥ २८३ ॥ हतप्रवीरे सैन्ये तु
नेता मद्रेश्वरोऽभवत्। वृत्तानि रथयुद्धानि कीर्त्त्यन्ते यत्र

आगमः ॥ २८४ ॥ विनाशः कुरुमुख्यानां शल्यपर्वणि कीर्त्तिते। शल्यस्य निधनं चात्र धर्मराजान्महात्मनः ॥ २८५ ॥ शकुनेश्च वधोऽत्रैव सहदेवेन संयुगे। सैन्ये च हतभूयिष्ठे किञ्चिच्छिष्टे सुयोधनः ॥२८६॥ ह्रदं प्रविश्य यत्रासौ संस्तभ्यापो व्यवस्थितः। प्रवृत्तिस्तत्र चाख्याता यत्र भीमस्य लुब्धकैः ॥ २८७ ॥ क्षेपयुक्तैर्वचोभिश्च धर्मराजस्य धीमतः। ह्रदात् समुत्थितो यत्र धार्त्तराष्ट्रोऽत्यमर्षणः ॥ २८८ ॥ भीमेन गदया युद्धं यत्रासौ कृतवान् सह। समवाये च युद्धस्य रामस्यागमनं स्मृतम् ॥ २८९ ॥ सरस्वत्याश्च तीर्थानां पुण्यता परिकीर्त्तिता। गदायुद्धञ्च तुमुलमत्रैव परिकीर्त्तितम् ॥ २९० ॥ दुर्य्योधनस्य राज्ञोऽथ यत्र भीमेन संयुगे। ऊरू भग्नौ प्रसह्याजौ गदया भीमवेगया ॥२९१॥ नवमं पर्व निर्दिष्टमेतदद्भुतमर्थवत्। एकोनषष्टिरध्यायाः पर्वण्यत्र प्रकीर्त्तिताः ॥२९२॥ संख्याता बहुवृत्तान्ताः श्लोकसंख्यात्र कथ्यते। त्रीणि श्लोकसहस्राणि द्वे शते विंशतिस्तथा ॥ २९३ ॥ मुनिना सम्प्रणीतानि कौरवाणां यशोभृता। अतः परं प्रवक्ष्यामि सौप्तिकं पर्व दारुणम् ॥ २९४ ॥ भग्नोरुं यत्र राजानं दुर्य्योधनममर्षणम्। अपयातेषु पार्थेषु त्रयस्तेऽभ्याययू रथाः। कृतवर्म्मा कृपो द्रौणिः सायाह्ने रुधिरोक्षितम् ॥ २९५ ॥ समेत्य ददृशुर्भूमौ पतितं रणमूर्द्धनि। प्रतिजज्ञे दृढक्रोधो द्रौणिर्यत्र महारथः ॥ २९६ ॥ अहत्वा सर्वपाञ्चालान् धृष्टद्युम्नपुरोगमान्। पाण्डवांश्च सहामात्यान्न विमोक्ष्यामि दंशनम् ॥ २९७ ॥ यत्रैवमुक्त्वा राजानमपक्रम्य त्रयो रथाः। सूर्य्यास्तमनवेलायामासेदुस्ते महद्वनम् ॥ २९८ ॥ न्यग्रोधस्याथ महतो यत्राधस्तादवस्थिताः। ततः काकान् बहून् रात्रौ दृष्ट्वोलूकेन हिंसितान् ॥२९९॥ द्रौणिः क्रोधसमाविष्टः पितुर्वधमनुस्मरन्। पाञ्चालानां प्रसुप्तानां वधं प्रति मनो दधे ॥ ३०० ॥ गत्वा च शिविरद्वारि दुर्द्धर्षं तत्र

रायसम्। घोररूपमपश्यत्स दिवमाहत्य धिष्ठितम् ॥ २०१ ॥
तेन व्याघातमस्त्राणां क्रियमाणमवेक्ष्य च। द्रौणिर्यत्र विरूपाक्षं
रुद्रमाराध्य सत्वरः ॥ २०२ ॥ प्रसुप्तान्निशि विश्वस्तान्धृष्टद्युम्न-
पुरोगमान्। पाञ्चालान् सपरीवारान्द्रौपदेयांश्च सर्व्वशः। कृत-
वर्म्मणा च सहितः कृपेण च विजघ्निवान् ॥ २०३ ॥ यत्रामुच्यन्त
ते पार्थाः पञ्च कृष्णबलाश्रयात्। सात्यकिश्च महेष्वासः शेषाश्च
निधनं गताः ॥ २०४ ॥ पाञ्चालानां प्रसुप्तानां यत्र द्रोणसुता-
द्वधः। धृष्टद्युम्नस्य सूतेन पाण्डवेषु निवेदितः ॥ २०५ ॥
द्रौपदी पुत्रशोकार्त्ता पितृभ्रातृवधार्दिता। कृतानशनसङ्कल्पा
यत्र भर्तॄनुपाविशत् ॥ २०६ ॥ द्रौपदीवचनाद्यत्र भीमो भीम-
पराक्रमः। प्रियं तस्याश्चिकीर्षन् वै गदामादाय वीर्य्यवान्।
अन्वधावत् सुसंक्रुद्धो भारद्वाजगुरोः सुतम् ॥ २०७ ॥ भीम-
सेनभयाद्यत्र दैवेनाभिप्रचोदितः। अपाण्डवायेति रुषा द्रौणि-
रस्त्रमवासृजत् ॥ २०८ ॥ नैवमित्यब्रवीत् कृष्णः शमयंस्तस्य तद्वचः।
यत्रास्त्रमस्त्रेण च तच्छमयामास फाल्गुनः ॥ २०९ ॥ द्रौणेश्च
द्रोहबुद्धित्वं वीक्ष्य पापात्मनस्तदा। द्रौणिद्वैपायनादीनां शापा-
श्चान्योन्यकारिताः ॥ २१० ॥ मणिं तथा समादाय द्रोणपुत्रा-
न्महारथात्। पाण्डवाः प्रददुर्हृष्टा द्रौपद्यै जितकाशिनः ॥ २११ ॥
एतद्वै दशमं पर्व्व सौप्तिकं समुदाहृतम्। अष्टादशास्मिन्नध्यायाः
पर्व्वण्युक्ता महात्मना ॥ २१२ ॥ श्लोकानां कथितान्यत्र शतान्यष्टौ
प्रसंख्यया। श्लोकाश्च सप्ततिः प्रोक्ता मुनिना ब्रह्मवादिना ॥ २१३ ॥
सौप्तिकैषीकसंबद्धे पर्व्वण्युत्तमतेजसा। अत ऊर्द्ध्वमिदं प्राहुः
स्त्रीपर्व्व करुणोदयम् ॥ २१४ ॥ पुत्रशोकाभिसन्तप्तः प्रज्ञाचक्षु-
र्नराधिपः। कृष्णोपनीतां यत्रासावायसीं प्रतिमां दृढाम्। भीम-
सेनद्रोहबुद्धिर्धृतराष्ट्रो बभञ्ज ह ॥ २१५ ॥ तथा शोकाभितप्तस्य
धृतराष्ट्रस्य धीमतः। संसारगहनं बुद्ध्या हेतुभिर्मोक्षदर्शनैः ॥ २१६ ॥

विदुरेण च यत्रास्य राज्ञ आश्वासनं कृतम् । धृतराष्ट्रस्य चात्रैव कौरवायोधनं तथा । सान्तःपुरस्य गमनं शोकार्त्तस्य प्रकीर्त्तितम् ॥ ३१७ ॥ विलापो वीरपत्नीनां यत्रातिकरुणः स्मृतः । क्रोधावेशः प्रमोहश्च गान्धारीधृतराष्ट्रयोः ॥ ३१८ ॥ यत्र तान् क्षत्रियान् शूरान् संग्रामेष्वनिवर्त्तिनः । पुत्रान् भ्रातॄन् पितॄंश्चैव ददृशुर्निहतान् रणे ॥३१९॥ पुत्रपौत्रवधार्त्तायास्तथात्रैव प्रकीर्त्तिता । गान्धार्य्याश्चापि कृष्णेन क्रोधोपशमनक्रिया ॥३२०॥ यत्र राजा महाप्राज्ञः सर्वधर्मभृतांवरः । राज्ञां तानि शरीराणि दाहयामास शास्त्रतः ॥ ३२१ ॥ तोयकर्मणि चारब्धे राज्ञामुदकदानिके । गूढोत्पन्नस्य चाख्यानं कर्णस्य पृथयात्मनः ॥ ३२२ ॥ सुतस्यैतदिह प्रोक्तं व्यासेन परमर्षिणा । एतदेकादशं पर्व शोकवैक्लव्यकारकम् ॥ ३२३ ॥ प्रणीतं सज्जनमनोवैक्लव्याश्रुप्रवर्त्तकम् । सप्तविंशतिरध्यायाः पर्वण्यस्मिन् प्रकीर्त्तिताः ॥३२४॥ श्लोकसप्तशतो चापि पञ्चसप्ततिसंयुता । संख्यया भारताख्यानमुक्तं व्यासेन धीमता ॥ ३२५ । अतः परं शान्तिपर्व द्वादशम्बुद्धिवर्द्धनम् । यत्र निर्वेदमापन्नो धर्मराजो युधिष्ठिरः । घातयित्वा पितॄन् भ्रातॄन् पुत्रान् सम्बन्धिमातुलान् ॥ ३२६ ॥ शान्तिपर्वणि धर्माश्च व्याख्याताः शारतल्पिकाः । राजभिर्वेदितव्यास्ते सम्यग्ज्ञानबुभुत्सुभिः ॥ ३२७ । आपद्धर्माश्च तत्रैव कालहेतुप्रदर्शिनः । यान्बुद्ध्वा पुरुषः सम्यक् सर्वज्ञत्वमवाप्नुयात् ॥ ३२८ ॥ मोक्षधर्माश्च कथिता विचित्रा बहुविस्तराः । द्वादशं पर्व निर्दिष्टमेतत् प्राज्ञजनप्रियम् ॥ ३२९ ॥ अत्र पर्वणि विज्ञेयमध्यायानां शतत्रयम् । त्रिंशच्चैव तथाध्याया नव चैव तपोधनाः ॥ ३३० । चतुर्दशसहस्राणि तथा सप्तशतानि च । सप्तश्लोकास्तथैवात्र पञ्चविंशतिसंख्यया ॥ ३३१ ॥ अत ऊर्द्ध्वं च विज्ञेयमनुशासनमुत्तमम् । यत्र प्रकृतिमापन्नः श्रुत्वा

धर्म्मविनिश्चयम् । भीष्माद्भागीरथीपुत्रात् कुरुराजो युधिष्ठिरः ॥३३२॥ व्यवहारोऽत्र कार्त्स्न्येन धर्मार्थीयः प्रकीर्त्तितः । विविधानाञ्च दानानां फलयोगाः प्रकीर्त्तिताः ॥ ३३३ ॥ तथा पात्रविशेषाश्च दानानाञ्च परो विधिः । आचारविधियोगश्च सत्यस्य च परा गतिः ॥ ३३४ ॥ महाभाग्यं गवाञ्चैव ब्राह्मणानां तथैव च । रहस्यञ्चैव धर्माणां देशकालोपसंहितम् ॥३३५॥ एतत् सुबहुवृत्तान्तमुत्तमं चानुशासनम् । भीष्मस्यात्रैव सम्प्राप्तिः स्वर्गस्य परिकीर्त्तिता ॥ ३३६ ॥ एतत्त्रयोदशं पर्व धर्मनिश्चयकारकम् । अध्यायानां शतन्त्वत्र षट्चत्वारिंशदेव तु ॥ ३३७ ॥ श्लोकानान्तु सहस्राणि प्रोक्तान्यष्टौ प्रसंख्यया । ततोऽश्वमेधिकं नाम पर्व प्रोक्तं चतुर्द्दशम् ॥ ३३८ ॥ तत् सम्वर्त्तमरुत्तीयं यत्राख्यानमनुत्तमम् । सुवर्णकोषसम्प्राप्तिर्जन्म चोक्तं परीक्षितः । दग्धस्यास्त्राग्निना पूर्वं कृष्णात् सञ्जीवनं पुनः । ३३९ ॥ चर्य्यायां हयमुत्सृष्टं पाण्डवस्यानुगच्छतः । तत्र तत्र च युद्धानि राजपुत्रैरमर्षणैः ॥ ३४० ॥ चित्राङ्गदायाः पुत्रेण पुत्रिकाया धनञ्जयः । संग्रामे बभ्रुवाहेण संशयं चात्र दर्शितम् ॥ ३४१ ॥ अश्वमेधे महायज्ञे नकुलाख्यानमेव च । इत्याश्वमेधिकं पर्व प्रोक्तमेतन्महाद्भुतम् ॥३४२॥ अध्यायानां शतञ्चैव त्रयोऽध्यायाश्च कीर्त्तिताः । त्रीणि श्लोकसहस्राणि तावन्त्येव शतानि च । विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना ॥ ३४३ ॥ ततश्चाश्रमवासाख्यं पर्व पञ्चदशं स्मृतम् । यत्र राज्यं समुत्सृज्य गान्धार्य्या सहितो नृपः । धृतराष्ट्रोऽश्रमपदं विदुरश्च जगाम ह ॥ ३४४ ॥ यं दृष्ट्वा प्रस्थितं साध्वी पृथाप्यनुययौ तदा । पुत्रराज्यं परित्यज्य गुरुशुश्रूषणे रता ॥ ३४५ ॥ यत्र राजा हतान् पुत्रान् पौत्रानन्यांश्च पार्थिवान् । लोकान्तरगतान् वीरानपश्यत् पुनरागतान् ॥ ३४६ ॥ ऋषेः प्रसादात् कृष्णस्य दृष्ट्वाश्चर्य्यमनुत्तमम् । त्यक्त्वा शोकं सदा-

एव सिद्धिं परमिकां गतः ॥ ३४७ ॥ यत्र धर्मं समाश्रित्य विदुरः
सुगतिं गतः। सञ्जयश्च महामात्यो विद्वान् गावल्गणिर्वशी
॥ ३४८ ॥ ददर्श नारदं यत्र धर्मराजो युधिष्ठिरः। नारदा-
च्चैव शुश्राव वृष्णीनां कदनं महत् ॥ ३४९ ॥ एतदाश्रम-
वासाख्यं पर्वोक्तं सुमहाद्भुतम्। द्विचत्वारिंशदध्यायाः पर्वैतदभि-
संख्यया ॥ ३५० ॥ सहस्रमेकं श्लोकानां पञ्चश्लोकशतानि च।
षडेव च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना ॥ ३५१ ॥ अतः
परं निबोधेदं मौषलं पर्व दारुणम्। यत्र ते पुरुषव्याघ्राः शस्त्र-
स्पर्शहता युधि। ब्रह्मदण्डविनिष्पिष्टाः समीपे लवणाम्भसः ॥३५२॥
आपाने पानकलिता दैवेनाभिप्रचोदिताः। एरकारूपिभिर्वज्रै-
र्निजघ्नुरितरेतरम् ॥ ३५३ ॥ यत्र सर्वक्षयं कृत्वा तावुभौ राम-
केशवौ। नातिचक्रमतुः कालं प्राप्तं सर्वहरं महत् ॥ ३५४ ॥
यत्रार्जुनो द्वारवतीमेत्य वृष्णिविनाकृताम्। दृष्ट्वा विषादमगमत्
परां चार्त्तिं नरर्षभः ॥ ३५५ ॥ स संस्कृत्य नरश्रेष्ठं मातुलं
शौरिमात्मनः। ददर्श यदुवीराणामापाने वैशसं महत् ॥ ३५६ ॥
शरीरं वासुदेवस्य रामस्य च महात्मनः। संस्कारं लम्भयामास
वृष्णीनां च प्रधानतः ॥३५७॥ स वृद्धबालमादाय द्वारवत्यास्ततो
जनम्। ददर्शापदि कष्टायां गाण्डीवस्य पराभवम् ॥ ३५८ ॥
सर्वेषाञ्चैव दिव्यानामस्त्राणामप्रसन्नताम्। नाशं वृष्णिकलत्राणां
प्रभावाणामनित्यताम् ॥ ३६० ॥ दृष्ट्वा निर्वेदमापन्नो व्यासवाक्य-
प्रचोदितः। धर्मराजं समासाद्य सन्न्यासं समरोचयत् ॥ ३६१ ॥
इत्येतन्मौषलं पर्व षोडशं परिकीर्त्तितम्। अध्यायाष्टौ समा-
ख्याताः श्लोकानाञ्च शतत्रयम्। श्लोकानां विंशतिश्चैव संख्याता-
स्तत्त्वदर्शिना। ३६२ ॥ महाप्रास्थानिकं तस्मादूर्द्ध्वं सप्तदशं
स्मृतम्। यत्र राज्यं परित्यज्य पाण्डवाः पुरुषर्षभाः ॥ ३६३ ॥
द्रौपद्या सहिता देव्या महाप्रस्थानमास्थिताः। यत्र तेऽग्निं ददृ-

थिवं लौहित्यं प्राप्य सागरम् ॥ ३६४ ॥ यत्राग्निना चोदितश्च पार्थस्तस्मै महात्मने। ददौ सम्पूज्य तद्दिव्यं गाण्डीवं धनुरुत्तमम् ॥ ३६५ ॥ यत्र भ्रातॄन्निपतितान्द्रौपदीं च युधिष्ठिरः। दृष्ट्वा हित्वा जगामैव सर्वाननवलोकयन् ॥ ३६५ ॥ एतत् सप्तदशं पर्व महाप्रास्थानिकं स्मृतम्। यत्राध्यायास्त्रयः प्रोक्ताः श्लोकानाञ्च शतत्रयम्। विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना ॥३६६॥ स्वर्गपर्व ततो ज्ञेयं दिव्यं यत्तदमानुषम्। प्राप्तं दैवरथं स्वर्गान्नेष्टवान् यत्र धर्म्मराट्। आरोढुं सुमहाप्राज्ञ आनृशंस्याच्छुना विना ॥३६७॥ तामस्याविचलां ज्ञात्वा स्थितिं धर्म्मे महात्मनः। स्वरूपं यत्र तत्त्यक्त्वा धर्म्मेणासौ समन्वितः ॥ ३६८ ॥ स्वर्गं प्राप्तः स च तथा यातनां विपुलां भृशम्। देवदूतेन नरकं यत्र व्याजेन दर्शितम् ॥ ३६९ ॥ शुश्राव यत्र धर्म्मात्मा भ्रातॄणां करुणा गिरः। निदेशे वर्त्तमानानां देशे तत्रैव वर्त्तताम् ॥३७०॥ अनुदर्शितश्च धर्म्मेण देवराज्ञा च पाण्डवः। आप्लुत्याकाशगङ्गायां देहं त्यक्त्वा स मानुषम् ॥ ३७१ ॥ स्वधर्म्मनिर्ज्जितं स्थानं स्वर्गे प्राप्य स धर्म्मराट्। मुमुदे पूजितः सर्वैः सेन्द्रैः सुरगणैः सह ॥ ३७२ ॥ एतदष्टादशं पर्व प्रोक्तं व्यासेन धीमता। अध्यायाः पञ्च संख्याताः पर्वण्यस्मिन्महात्मना ॥ ३७३ ॥ श्लोकानां द्वे शते चैव प्रसंख्याते तपोधनाः। नव श्लोकास्तथैवान्ये संख्याताः परमर्षिणा ॥ ३७४ ॥ अष्टादशैवमुक्तानि पर्वाण्येतान्यशेषतः। खिलेषु हरिवंशश्च भविष्यच्च प्रकीर्त्तितम् ॥ ३७५ ॥ दशश्लोकसहस्राणि विंशत् श्लोकशतानि च। खिलेषु हरिवंशे च संख्यातानि महर्षिणा ॥ ३७६ ॥ एतत्सर्वं समाख्यातं भारते पर्वसंग्रहः। अष्टादश समाजग्मुरक्षौहिण्यो युयुत्सया। तन्महादारुणं युद्धमहान्यष्टादशाभवत् ॥ ३७७ ॥ यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः। न चाख्यानमिदं विद्यान्नैव स

स्मादिह जनाः ॥ ३७८ ॥ अर्थशास्त्रमिदं प्रोक्तं धर्मशास्त्रमिदं महत् । कामशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना ॥ ३७९ ॥ श्रुत्वा त्विदमुपाख्यानं श्राव्यमन्यन्न रोचते । पुंस्कोकिलगिरं श्रुत्वा यथा ध्वाङ्क्षस्य वागिव ॥ ३८० ॥ इतिहासोत्तमादस्माज्जायन्ते कविबुद्धयः । पञ्चभ्य इव भूतेभ्यो लोकसंविधयस्त्रयः ॥ ३८१ ॥ अस्याख्यानस्य विषये पुराणं वर्त्तते द्विजाः । अन्तरीक्षस्य विषये प्रजा इव चतुर्विधाः ॥ ३८२ ॥ क्रियागुणानां सर्वेषामिदमाख्यानमाश्रयः । इन्द्रियाणां समस्तानां चित्रा इव मनःक्रिया ॥ ३८३ ॥ अनाश्रित्यैतदाख्यानं कथा भुवि न विद्यते । आहारमनपाश्रित्य शरीरस्येव धारणम् ॥३८४॥ इदं कविवरैः सर्वैराख्यानमुपजीव्यते । उदयप्रेप्सुभिर्भृत्यैरभिजात इवेश्वरः ॥ ३८५ ॥ अस्य काव्यस्य कवयो न समर्था विशेषणे । साधोरिव गृहस्थस्य शेषास्त्रय इवाश्रमाः ॥३८६॥ धर्मे मतिर्भवतु वः सततोत्थितानां स ह्येक एव परलोकगतस्य बन्धुः । अर्थाः स्त्रियश्च निपुणैरपि सेव्यमाना नैवाप्तभावमुपयान्ति न च स्थिरत्वम् ॥ ३८७ ॥ द्वैपायनौष्ठपुटनिःसृतमप्रमेयं पुण्यं पवित्रमथ पापहरं शिवञ्च । यो भारतं समधिगच्छति वाच्यमानं किं तस्य पुष्करजलैरभिषेचनेन ॥ ३८८ ॥ यदह्ना कुरुते पापं ब्राह्मणस्त्विन्द्रियैश्चरन् । महाभारतमाख्याय सन्ध्यां मुच्यति पश्चिमाम् ॥ ३८९ ॥ यद्रात्रौ कुरुते पापं कर्मणा मनसा गिरा । महाभारतमाख्याय पूर्वां सन्ध्यां प्रमुच्यते ॥३९०॥ यो गोशतं कनकशृङ्गमयं ददाति विप्राय वेदविदुषे च बहुश्रुताय । पुण्याञ्च भारतकथां शृणुयाच्च नित्यं तुल्यं फलं भवति तस्य च तस्य चैव ॥ ३९१ ॥ आख्यानं तदिदमनुत्तमं महार्थं विज्ञेयं महदिह पर्वसंग्रहेण । श्रुत्वादौ भवति नृणां सुखावगाहं विस्तीर्णं लवणजलं यथा प्लवेन ॥ ३९२ ॥

इति श्रीमहाभारते आदिपर्वणि पर्वसंग्रहः समाप्तः ॥ २ ॥

## अथ पौष्यपर्व ॥ ३ ॥

सौतिरुवाच। जनमेजयः पारिक्षितः सह भ्रातृभिः कुरुक्षेत्रे दीर्घसत्रमुपास्ते ॥ १ ॥ तस्य भ्रातरस्त्रयः श्रुतसेन उग्रसेनो भीमसेन इति। तेषु तत्सत्रमुपासीनेष्वागच्छत् सारमेयः ॥ २ ॥ स जनमेजयस्य भ्रातृभिरभिहतो रोरूयमाणो मातुः समीपमुपागच्छत् ॥ ३ ॥ तं माता रोरूयमाणमुवाच किं रोदिषि केनास्यभिहत इति ॥ ४ ॥ स एवमुक्तो मातरं प्रत्युवाच जनमेजयस्य भ्रातृभिरभिहतोऽस्मीति ॥ ५ ॥ तं माता प्रत्युवाच व्यक्तं त्वया तत्रापराद्धं येनास्यभिहत इति ॥ ६ ॥ स तां पुनरुवाच नापराध्यामि किञ्चिन्नावेक्षे हवींषि नावलिह इति ॥ ७ ॥ तच्छ्रुत्वा तस्य माता सरमा पुत्रदुःखार्त्ता तत् सत्रमुपागच्छद्यत्र स जनमेजयः सह भ्रातृभिर्दीर्घं सत्रमुपास्ते ॥ ८ ॥ स तया क्रुद्धया तत्रोक्तोऽयं मे पुत्रो न किञ्चिदपराध्यति नावेक्षते हवींषि नावलेढि किमर्थमभिहत इति ॥ ९ ॥ न किञ्चिदुक्तवन्तस्ते सा तानुवाच यस्मादयमभिहतोऽनपकारी तस्माददृष्टं त्वां भयमागमिष्यतीति ॥ १० ॥ जनमेजय एवमुक्तो देवशुन्या सरमया भृशं संभ्रान्तो विषण्णश्चासीत् ॥ ११ ॥ स तस्मिन् सत्रे समाप्ते हास्तिनपुरं प्रत्येत्य पुरोहितमनुरूपमन्विच्छमानः परं यत्नमकरोत् यो मे पापकृत्यां शमयेदिति ॥ १२ ॥ स कदाचिन्मृगयां गतः पारीक्षितो जनमेजयः कस्मिंश्चित् स्वविषये आश्रममपश्यत् ॥ १३ ॥ तत्र कश्चिदृषिरासाञ्चक्रे श्रुतश्रवा नाम तस्य तपस्यभिरतः पुत्र आस्ते सोमश्रवा नाम ॥ १४ ॥ तस्य तं पुत्रमभिगम्य जनमेजयः पारीक्षितः पौरोहित्याय वव्रे ॥ १५ ॥ स नमस्कृत्य तमृषिमुवाच भगवन्नयं तव पुत्रो मम पुरोहितोऽस्त्विति ॥ १६ ॥ स एवमुक्तः प्रत्युवाच जनमेजयं भो जनमेजय पुत्रोऽयं मम सर्प्यां जातो महातपस्वी स्वाध्यायसम्पन्नो मत्तपो-

वीर्य्यसम्भूतो मच्छुक्रपीतवत्यास्तस्याः कुक्षौ जातः ॥१७॥ समर्थो-ऽयं भवतः सर्वाः पापकृत्याः शमयितुमन्तरेण महादेवकृत्याम् ॥ १८ ॥ अस्य त्वेकमुपांशुव्रतं यदेनं कश्चिद्ब्राह्मणः कञ्चिदर्थ-मभियाचेत्तं तस्मै दद्यादयं यद्येतदुत्सहसे ततो नयस्वैनमिति ॥ १९ ॥ तेनैवमुक्तो जनमेजयस्तं प्रत्युवाच भगवंस्तत्तथा भविष्यतीति ॥ २० ॥ स तं पुरोहितमुपादायोपावृत्तो भ्रातॄ-नुवाच मयायं वृत उपाध्यायो यदयं ब्रूयात्तत् कार्य्यमविचा-रयद्भिर्भवद्भिरिति ॥ २१ ॥ तेनैवमुक्ता भ्रातरस्तस्य तथा चक्रुः । स तथा भ्रातॄन् सन्दिश्य तक्षशिलाम् प्रत्यभिप्रतस्थे तञ्च देशं वशे स्थापयामास ॥ २२ ॥ एतस्मिन्नन्तरे कश्चिदृषिर्धौम्यो-नामायोदस्तस्य शिष्यास्त्रयो बभूवुः उपमन्युरारुणिर्वेदश्चेति ॥२३॥ स एकं शिष्यमारुणिं पाञ्चाल्यं प्रेषयामास गच्छ केदारखण्डं बधानेति ॥ २४ ॥ स उपाध्यायेन संदिष्ट आरुणिः पाञ्चाल्यस्तत्र गत्वा तत् केदारखण्डं बद्धुं नाशकत् ॥ २५ ॥ स क्लिश्यमानो-ऽपश्यदुपायं भवत्वेवं करिष्यामीति ॥ २६ ॥ स तत्र संविवेश केदारखण्डे शयाने च तथा तस्मिंस्तदुदकं तस्थौ ॥ २७ ॥ ततः कदाचिदुपाध्याय आयोदो धौम्यः शिष्यानपृच्छत् क आरुणिः पाञ्चाल्यो गत इति ॥ २८ ॥ ते तं प्रत्यूचुर्भगवंस्त्वयैव प्रेषितो गच्छ केदारखण्डं बधानेति । स एवमुक्तस्तान् शिष्यान् प्रत्यु-वाच तस्मात्तत्र सर्वे गच्छामो यत्र स गत इति ॥ २९ ॥ स तत्र गत्वा तस्याह्वानाय शब्दञ्चकार भो आरुणे पाञ्चाल्य क्वासि वत्सैहीति ॥ ३० ॥ स तच्छ्रुत्वारुणिरुपाध्यायवाक्यं तस्मात् केदारखण्डात् सहसोत्थाय तमुपाध्यायमुपतस्थे ॥ ३१ ॥ प्रोवाच चैनमयमस्म्यत्र केदारखण्डे निःसरमाणमुदकमवारणीयं संरोद्धुं संविष्टो भगवच्छब्दं श्रुत्वैव सहसा विदार्य्य केदारखण्डं भव-न्तमुपस्थितः ॥ ३२ ॥ तदभिवादये भगवन्तमाज्ञापयतु भवान्

कमर्थं करवाणीति ॥ ३३ ॥ स एवमुक्त उपाध्यायः प्रत्युवाच यस्माद्भवान् केदारखण्डं विदार्य्योत्थितस्तस्मादुद्दालक एव नाम्ना भवान् भविष्यतीत्युपाध्यायेनानुगृहीतः ॥ ३४ ॥ यस्माच्च त्वया मद्वचनमनुष्ठितं तस्माच्छ्रेयोऽवाप्स्यसि। सर्वे एव ते वेदाः प्रतिभास्यन्ति सर्वाणि च धर्मशास्त्राणीति ॥ ३५ ॥ स एवमुक्त उपाध्यायेनेष्टं देशं जगाम। अथापरः शिष्यस्तस्यैवायोदधौम्यस्योपमन्युर्नाम ॥ ३६ ॥ तं चोपाध्यायः प्रेषयामास वत्सोपमन्यो गा रक्षस्वेति ॥ ३७ ॥ स उपाध्यायवचनादरक्षद्गाः स चाहनि गा रक्षित्वा दिवसक्षये गुरुगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ॥ ३८ ॥ तमुपाध्यायः पीवानमपश्यदुवाच चैनं वत्सोपमन्यो केन वृत्तिं कल्पयसि पीवानसि दृढमिति ॥ ३९ ॥ स उपाध्यायं प्रत्युवाच भो भैक्ष्येण वृत्तिं कल्पयामीति ॥ ४० ॥ तमुपाध्यायः प्रत्युवाच मय्यनिवेद्य भैक्ष्यं नोपयोक्तव्यमिति। स तथेत्युक्तो भैक्ष्यं चरित्वोपाध्यायाय न्यवेदयत् ॥ ४१ ॥ स तस्मादुपाध्यायः सर्वमेव भैक्ष्यमगृह्णात्। स तथेत्युक्तः पुनररक्षद्गाः अहनि रक्षित्वा निशामुखे गुरुकुलमागम्य गुरोरग्रतः स्थित्वा नमश्चक्रे ॥ ४२ ॥ तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वोवाच वत्सोपमन्यो सर्वमशेषतस्ते भैक्ष्यं गृह्णामि केनेदानीं वृत्तिं कल्पयसीति ॥ ४३ ॥ स एवमुक्त उपाध्यायं प्रत्युवाच भगवते निवेद्य पूर्वमपरं चरामि तेन वृत्तिं कल्पयामीति ॥ ४४ ॥ तमुपाध्यायः प्रत्युवाच नैषा न्याय्या गुरुवृत्तिरन्येषामपि भैक्ष्योपजीविनां वृत्त्युपरोधं करोषि इत्येवं वर्त्तमानो लुब्धोऽसीति ॥ ४५ ॥ स तथेत्युक्त्वा गा अरक्षत् रक्षित्वा च पुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ॥ ४६ ॥ तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वा पुनरुवाच वत्सोपमन्यो अहं ते सर्वं भैक्ष्यं गृह्णामि न चान्यच्चरसि पीवानसि कथं केन वृत्तिं कल्पय-

सीति ॥ ४७ ॥ स एवमुक्तस्तमुपाध्यायं प्रत्युवाच भो एतासां
गवां पयसा वृत्तिं कल्पयामीति तमुवाचोपाध्यायो नैतन्न्याय्यं पय
उपयोक्तुं भवतो मया नाभ्यनुज्ञातमिति ॥ ४८ ॥ स तथेति
प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायगृहमेत्य गुरोरग्रतः स्थित्वा
नमश्चक्रे ॥ ४९ ॥ तमुपाध्यायः पीवानमेव दृष्ट्वोवाच वत्सोपमन्यो
भैक्ष्यं नाश्नासि नचान्यच्चरसि पयो न पिबसि पीवानसि भृशं
केनेदानीं वृत्तिं कल्पयसीति ॥ ५० ॥ स एवमुक्त उपाध्यायं
प्रत्युवाच भोः फेनं पिबामि यमिमे वत्सा मातॄणां स्तनान् पिबन्त
उद्गिरन्ति ॥ ५१ ॥ तमुपाध्यायः प्रत्युवाच एते त्वदनुकम्पया
गुणवन्तो वत्साः प्रभूततरं फेनमुद्गिरन्ति तदेषामपि वत्सानां
वृत्त्युपरोधं करोष्येवं वर्त्तमानः फेनमपि भवान्न पातुमर्हतीति
स तथेति प्रतिश्रुत्य पुनररक्षद्गाः ॥ ५२ ॥ तथा प्रतिषिद्धो भैक्ष्यं
नाश्नाति न चान्यच्चरति पयो न पिबति फेनं नोपयुङ्क्ते स कदा-
चिदरण्ये क्षुधार्त्तोऽर्कपत्राण्यभक्षयत् ॥ ५३ ॥ स तैरर्कपत्रै-
र्भक्षितैः क्षारतिक्तकटुरूक्षैस्तीक्ष्णविपाकैश्चक्षुष्युपहतोऽन्धो बभूव
ततः सोऽन्धोऽपि चंक्रम्यमाणः कूपे पपात ॥ ५४ ॥ अथ तस्मि-
न्ननागच्छति सूर्य्ये चास्ताचलावलम्बिनि उपाध्यायः शिष्यानवो-
चत् नायात्युपमन्युः त ऊचुर्वनं गतो गा रक्षितुमिति ॥ ५५ ॥
तानाह उपाध्यायः मयोपमन्युः सर्वतः प्रतिषिद्धः स नियतं
कुपितस्ततो नागच्छति चिरं ततोऽन्वेष्य इत्येवमुक्त्वा शिष्यैः
सार्द्धमरण्यं गत्वा तस्याह्वानाय शब्दं चकार भो उपमन्यो क्वासि
वत्सैहीति ॥ ५६ ॥ स उपाध्यायवचनं श्रुत्वा प्रत्युवाचोच्चैरय-
मस्मिन् कूपे पतितोऽहमिति तमुपाध्यायः प्रत्युवाच कथं त्वम-
स्मिन् कूपे पतित इति ॥ ५७ ॥ स उपाध्यायं प्रत्युवाच अर्क-
पत्राणि भक्षयित्वान्धीभूतोऽस्म्यतः कूपे पतित इति ॥ ५८ ॥
तमुपाध्यायः प्रत्युवाच अश्विनौ स्तुहि तौ देवभिषजौ त्वां

चक्षुष्मन्तं कर्त्ताराविति स एवमुक्त उपाध्यायेनोपमन्युरश्विनौ स्तोतुमुपचक्रमे देवावश्विनौ वाग्भिरृग्भिः ॥ ५९ ॥ प्रपूर्वगौ पूर्वजौ चित्रभानू गिरा वां शंसामि तपसा ह्यनन्तौ। दिव्यौ सुपर्णौ विरजौ विमानावधिक्षियन्तौ भुवनानि विश्वा ॥ ६० ॥ हिरण्मयौ शकुनी साम्परायौ नासत्यदस्रौ सुनसौ वैजयन्तौ। शुक्लं वयन्तौ तरसा सुवेमावभिव्ययन्तावसितं विवस्वतः ॥ ६१ ॥ ग्रस्तां सुपर्णस्य बलेन वर्त्तिकाममुञ्चतामश्विनौ सौभगाय। तावत् सुवृत्तावनमन्त मायया वसत्तमा गा अरुणा उदावहन् ॥ ६२ ॥ षष्टिश्च गावस्त्रिशताश्च धेनव एकं वत्सं सुवते तं दुहन्ति। नानागोष्ठा विहिता एकदोहनास्तावश्विनौ दुहतो घर्ममुक्थ्यम् ॥ ६३ ॥ एकां नाभिं सप्तशता अराः श्रिता प्रधिष्वन्या विंशतिरर्पिता अराः। अनेमि चक्रं परिवर्त्ततेऽजरं मायाश्विनौ समनक्ति चर्षणी ॥ ६४ ॥ एकं चक्रं वर्त्तते द्वादशारं षण्णाभिमेकाक्षममृतस्य धारणम्। यस्मिन्देवा अधिविश्वे विषक्तास्तावश्विनौ मुञ्चतो मा विषीदतम् ॥ ६५ ॥ अश्विनाविन्दुममृतं वृत्तभूयौ तिरोधत्तामश्विनौ दासपत्नी। हित्वा गिरिमश्विनौ गामुदा चरन्तौ तद्वृष्टिमह्ना प्रस्थितौ बलस्य ॥ ६६ ॥ युवां दिशो जनयथो दशाग्रे समानं मूर्द्ध्नि रथयातं वियन्ति। तासां यातमृषयोऽनुप्रयान्ति देवा मनुष्याः क्षितिमाचरन्ति ॥ ६७ ॥ युवां वर्णान्विकुरुथो विश्वरूपांस्तेऽधिक्षियन्ते भुवनानि विश्वा। ते भानवोऽप्यनुसृताश्चरन्ति देवा मनुष्याः क्षितिमाचरन्ति ॥ ६८ ॥ तौ नासत्यावश्विनौ वां महेऽहं स्रजं च यां बिभृथः पुष्करस्य। तौ नासत्यावमृतावृतावृधावृते देवास्तत् प्रपदे न सूते ॥ ६९ ॥ मुखेन गर्भं लभेतां युवानौ गतासुरेतत् प्रपदे न सूते। सद्यो जातो मातरमत्ति गर्भस्तावश्विनौ मुञ्चथो जीवसे गाः ॥ ७० ॥ इत्येवं तेनाभिष्टुतावश्विनावाजग्मतुराहतुश्चैनं प्रीतौ स्व एष ते-

ऽपूपोऽश्यानेनमिति ॥ ७१ ॥ स एवमुक्तः प्रत्युवाच नानृतमूचतुर्भगवन्तौ । न त्वहमेतमपूपमुपयोक्तुमुत्सहे गुरवेऽनिवेद्येति ॥ ७२ ॥ ततस्तमश्विनावूचतुः आवाभ्यां पुरस्ताद्भवत उपाध्यायेनैवमेवाभिष्टुताभ्यामपूपो दत्त उपयुक्तः स तेनानिवेद्य गुरवे त्वमपि तथैव कुरुष्व यथाकृतमुपाध्यायेनेति ॥ ७३ ॥ स एवमुक्तः प्रत्युवाच एतत् प्रत्यनुनये भगवन्तावश्विनौ नोत्सहेऽहमनिवेद्य गुरवेऽपूपमेनमुपयोक्तुमिति ॥ ७४ ॥ तमश्विनावाहतुः प्रीतौ स्वस्तवानया गुरुभक्त्या उपाध्यायस्य ते कार्ष्णायसा दन्ता भवतोऽपि हिरण्मया भविष्यन्ति चक्षुष्मांश्च भविष्यसि श्रेयश्चावाप्स्यसीति ॥ ७५ ॥ स एवमुक्तोऽश्विभ्यां लब्धचक्षुरुपाध्यायसकाशमागम्योपाध्यायमभ्यवादयत् आचचक्षे च स चास्य प्रीतिमानभूत् आह चैनं यथाश्विनावाहतुस्तथा त्वं श्रेयोऽवाप्स्यसीति ॥ ७६ ॥ सर्वे च ते वेदाः प्रतिभास्यन्ति सर्वाणि च धर्मशास्त्राणीति एषा तस्यापि परीक्षोपमन्योः ॥ ७७ ॥ अथापरः शिष्यस्तस्यैवायोदधौम्यस्य वेदो नाम तमुपाध्यायः समादिदेश वत्स वेद इहास्यतां तावन्मम गृहे कञ्चित्कालं शुश्रूषुणा च भवितव्यं श्रेयस्ते भविष्यतीति ॥ ७८ ॥ स तथेत्युक्त्वा गुरुकुले दीर्घकालं गुरुशुश्रूषणपरोऽवसत् गौरिव नित्यं गुरुषु धूर्षु नियोज्यमानः शीतोष्णक्षुत्तृष्णादुःखसहः सर्वत्राप्रतिकूलस्तस्य महता कालेन गुरुः परितोषं जगाम ॥ ७९ ॥ तत्परितोषाच्च श्रेयः सर्वज्ञतां चावाप एषा तस्यापि परीक्षा वेदस्य ॥ ८० ॥ स उपाध्यायेनानुज्ञातः समावृत्तस्तस्माद्गुरुकुलवासाद्गृहाश्रमं प्रत्यपद्यत ॥ ८१ ॥ तस्यापि स्वगृहे वसतस्त्रयः शिष्या बभूवुः स शिष्यान्न किञ्चिदुवाच कर्म वा क्रियतां गुरुशुश्रूषा वेति ॥ ८२ ॥ दुःखाभिज्ञो हि गुरुकुलवासस्य शिष्यान् परिक्लेशेन योजयितुं नेयेष ॥ ८३ ॥ अथ कस्मिंश्चित्काले वेदं ब्राह्मणं जनमेजयः पौष्यश्च क्षत्रियाववेत्य

वरश्चित्वोपाध्यायं चक्रतुः ॥ ८४ ॥ स कदाचिद्याज्यकार्येणा-
भिप्रस्थित उत्तङ्कनामानं शिष्यं नियोजयामास ॥ ८५ ॥ भो
यत्किञ्चिदस्मद्गृहे परिहीयते तदिच्छाम्यहमपरिहीयमानं भवता
क्रियमाणमिति स एवं प्रतिसन्दिश्योत्तङ्कं वेदः प्रवासं जगाम
॥ ८६ ॥ अथोत्तङ्कः शुश्रूषुर्गुरुनियोगमनुतिष्ठमानो गुरुकुले
वसतिस्म। स तत्र वसमान उपाध्यायस्त्रीभिः सहिताभिराहूयोक्तः
॥ ८७ ॥ उपाध्यायानी ते ऋतुमती उपाध्यायश्च प्रोषितोऽस्या
यथायमृतुर्वन्ध्यो न भवति तथा क्रियतामेषा विषीदतीति ॥ ८८॥
एवमुक्तस्ताः स्त्रियः प्रत्युवाच न मया स्त्रीणां वचनादिदमकार्यं
करणीयं न ह्यहमुपाध्यायेन सन्दिष्टोऽकार्यमपि त्वया कार्य-
मिति ॥ ८९ ॥ तस्य पुनरुपाध्यायः कालान्तरेण गृहमाज-
गाम तस्मात् प्रवासात् स तु तद्वृत्तं तस्याशेषमुपलभ्य प्रीतिमान-
भूत् ॥ ९० ॥ उवाच चैनं वत्सोत्तङ्क किन्ते प्रियं करवाणीति
धर्मतो हि शुश्रूषितोऽस्मि भवता तेन प्रीतिः परस्परेण नौ
सम्वृद्धा तदनुजाने भवन्तं सर्वानेव कामानवाप्स्यसि गम्यतामिति
॥ ९१ ॥ स एवमुक्तः प्रत्युवाच किन्ते प्रियं करवाणीति एव-
माहुः ॥ ९२ ॥ यश्चाधर्मेण वै ब्रूयाद्यश्चाधर्मेण पृच्छति तयो-
रन्यतरः प्रैति विद्वेषं चाधिगच्छति ॥ ९३ ॥ सोऽहमनुज्ञातो
भवता इच्छामीष्टं गुर्वर्थमुपहर्तुमिति तेनैवमुक्त उपाध्यायः
प्रत्युवाच वत्सोत्तङ्क उष्यतां तावदिति ॥ ९४ ॥ स कदाचि-
दुपाध्यायमाहोत्तङ्कः आज्ञापयतु भवान् किं ते प्रियमुपहरामि
गुर्वर्थमिति ॥ ९५ ॥ तमुपाध्यायः प्रत्युवाच वत्सोत्तङ्क बहुशो
मां चोदयसि गुर्वर्थमुपहरामीति तद्गच्छैनां प्रविश्योपाध्यायानीं
पृच्छ किमुपहरामीति एषा यद्ब्रवीति तदुपहरस्वेति स एव-
मुक्तो उपाध्यायेनोपाध्यायानीमपृच्छत् भगवत्युपाध्यायेनाभ्यनु-
ज्ञातो गृहं गन्तुमिच्छामीष्टं ते गुर्वर्थमुपहृत्यानृणो गन्तुमिति

॥ ९६ ॥ तदाज्ञापयतु भवती किमुपहरामि गुर्वर्थमिति सैव-मुक्तोपाध्यायानी तमुत्तङ्कं प्रत्युवाच गच्छ पौष्यं प्रति राजानं कुण्डले भिक्षितुं तस्य क्षत्रियया पिनद्धे ॥ ९७ ॥ ते आनयस्व चतुर्थेऽहनि पुण्यकं भविता ताभ्यामाबद्धाभ्यां शोभमाना ब्राह्म-णान् परिवेष्टुमिच्छामि तत्सम्पादयस्व एवं हि कुर्वतः श्रेयो भवि-तान्यथा कुतः श्रेय इति ॥ ९८ ॥ स एवमुक्तस्तया प्रातिष्ठतो-त्तङ्कः स पथि गच्छन्नपश्यदृषभमतिप्रमाणं तमधिरूढञ्च पुरुषमति-प्रमाणमेव स पुरुष उत्तङ्कमभ्यभाषत ॥ ९९ ॥ भो उत्तङ्कैतत् पुरीषमस्य ऋषभस्य भक्षयस्वेति स एवमुक्तो नैच्छत् ॥ १०० ॥ तमाह पुरुषो भूयो भक्षयस्वोत्तङ्क माविचारयोपाध्यायेनापि ते भक्षितं पूर्वमिति ॥ १०१ ॥ स एवमुक्तो बाढमित्युक्त्वा तदा तदृषभस्य मूत्रं पुरीषञ्च भक्षयित्वोत्तङ्कः स संभ्रमादुत्थित एवा-पोऽपस्पृश्य प्रतस्थे ॥ १०२ ॥ यत्र स क्षत्रियः पौष्यस्तमुपेत्या-सीनमपश्यदुत्तङ्कं स उत्तङ्कस्तमुपेत्याशीर्भिरभिनन्द्योवाच ॥ १०३ ॥ अर्थी भवन्तमुपागतोऽस्मीति स एनमभिवाद्योवाच भगवन् पौष्यः खल्वहं किङ्करवाणीति ॥ १०४ ॥ स तमुवाच गुर्वर्थे कुण्डलयो-रर्थेनाभ्यागतोऽस्मीति ये वै ते क्षत्रियया पिनद्धे कुण्डले ते भवा-न्दातुमर्हतीति ॥ १०५ ॥ तं प्रत्युवाच पौष्यः प्रविश्यान्तःपुरं क्षत्रिया याच्यतामिति स तेनैवमुक्तः प्रविश्यान्तःपुरं क्षत्रियां नापश्यत् ॥ १०६ ॥ स पौष्यं पुनरुवाच न युक्तं भवताहमनृते-नोपचरितुं न हि तेऽन्तःपुरे क्षत्रिया सन्निहिता नैनां पश्यामि ॥ १०७ ॥ स एवमुक्तः पौष्यः क्षणमात्रं विमृश्योत्तङ्कं प्रत्युवाच नियतं भवानुच्छिष्टः स्मर तावन्न हि सा क्षत्रिया उच्छिष्टेना-शुचिना शक्या द्रष्टुं पतिव्रतात्वात् सैषा नाशुचेर्दर्शनमुपैतीति ॥ १०८ ॥ अथैवमुक्त उत्तङ्कः स्मृत्वोवाचास्ति खलु मयोत्थितेनो-पस्पृष्टं शीघ्रं गच्छता चेति तं पौष्यः प्रत्युवाच एष ते व्यति-

श्रमोनोच्छिष्टेनोपस्पृष्टं भवतीति शीघ्रं गच्छता चेति ॥ १०८ ॥
अथोतङ्कस्तं तथेत्युक्का प्राङ्मुख उपविश्य सुप्रक्षालितपाणिपाद-
वदनो निःशब्दाभिरफेनाभिरनुष्णाभिर्हृद्गताभिरद्भिस्त्रिः पीत्वा
द्विः परिमृज्य खान्यद्भिरुपस्पृश्य चान्तःपुरं प्रविवेश ॥ ११० ॥
ततस्तां क्षत्रियामपश्यत् सा च दृष्ट्वैवोतङ्कं प्रत्युत्थायाभिवाद्यो-
वाच स्वागतं ते भगवन्नाज्ञापय किङ्करवाणीति ॥ १११ ॥ स
तामुवाचैतं कुण्डले गुर्वर्थं मे भिक्षिते दातुमर्हसीति सा प्रीता
तेन तस्य सद्भावेन पात्रोऽयमनतिक्रमणीयश्चेति मत्वा ते कुण्डले-
ऽवमुच्यास्मै प्रायच्छदाह चैनमेते कुण्डले तक्षको नागराजः सुभृशं
प्रार्थयत्यप्रमत्तो नेतुमर्हसीति ॥ ११२ ॥ स एवमुक्तस्तां क्षत्रियां
प्रत्युवाच भवती सुनिर्वृता भव न मां शक्तस्तक्षको नागराजो
धर्षयितुमिति ॥ ११३ ॥ स एवमुक्त्वा तां क्षत्रियामामन्त्र्य
पौष्यसकाशमागच्छत् आह चैनं भोः पौष्य प्रीतोऽस्मीति तमु-
तङ्कं पौष्यः प्रत्युवाच ॥ ११४ ॥ भगवंश्चिरेण पात्रमासाद्य-
ते भवांश्च गुणवानतिथिस्तदिच्छे श्राद्धं कर्तुं क्रियतां क्षण
इति ॥ ११५ ॥ तमुतङ्कः प्रत्युवाच कृतक्षण एवास्मि शीघ्र-
मिच्छामि यथोपपन्नमुपस्कृतं भवतेति स तथेत्युक्त्वा यथो-
पपन्नेनान्नेनैनं भोजयामास ॥ ११६ ॥ अथोतङ्कः सकेशं शीत-
मन्नं दृष्ट्वा अशुच्येतदिति मत्वा तं पौष्यमुवाच यस्मान्मे अशुच्यन्नं
ददासि तस्मादन्धो भविष्यसीति ॥ ११७ ॥ तं पौष्यः प्रत्युवाच
यस्मात्त्वमप्यदुष्टमन्नं दूषयसि तस्मात्त्वमनपत्यो भविष्यसीति तमु-
तङ्कः प्रत्युवाच ॥ ११८ ॥ न युक्तं भवतान्नमशुचि दत्त्वा प्रति-
शापं दातुं तस्मादन्नमेव प्रत्यक्षीकुरु ततः पौष्यस्तदन्नमशुचि
दृष्ट्वा तस्याशुचिभावमपरोक्षयामास ॥ ११९ ॥ अथ तदन्नं
मुक्तकेश्या स्त्रियोपहृतमनुष्णं सकेशं चाशुच्येतदिति मत्वा
तमृषिमुतङ्कं प्रसादयामास ॥ १२० ॥ भगवन्नेतदज्ञानादन्नं

सकेशमुपाहृतं शीतं तत् क्षामये भवन्तं न भवेयमन्ध इति। तमुत्तङ्कः प्रत्युवाच ॥ १२१ ॥ न मृषा ब्रवीमि भूत्वा त्वमन्धो नचिरादनन्धो भविष्यसीति ममापि शापो भवता दत्तो न भवेदिति ॥ १२२ ॥ तं पौष्यः प्रत्युवाच न चाहं शक्तः शापं प्रत्यादातुं न हि मे मन्युरद्याप्युपशमं गच्छति किञ्चैतद्भवता न ज्ञायते यथा ॥ १२३ ॥ नवनीतं हृदयं ब्राह्मणस्य वाचि क्षुरो निशितस्तीक्ष्णधारः। तदुभयमेतद्विपरीतं क्षत्रियस्य वाङ्नवनीतं हृदयं तीक्ष्णधारमिति ॥१२४॥ तदेवं गते न शक्तोऽहं तीक्ष्णहृदयत्वात्तं शापमन्यथाकर्त्तुं गम्यतामिति तमुत्तङ्कः प्रत्युवाच भवताहमन्नस्याशुचिभावमालक्ष्य प्रत्यनुनीतः प्राक्तेऽभिहितम् ॥ १२५ ॥ यस्माददुष्टमन्नं दूषयसि तस्मादनपत्यो भविष्यसीति। दुष्टे चान्ने नैष मम शापो भविष्यतीति ॥ १२६ ॥ साधयामस्तावदित्युक्त्वा प्रातिष्ठतोत्तङ्कः ते कुण्डले गृहीत्वा सोऽपश्यदथ पथि नग्नं क्षपणकमागच्छन्तं मुहुर्मुहुर्दृश्यमानमदृश्यमानञ्च ॥ १२७ ॥ अथोत्तङ्कस्ते कुण्डले सन्न्यस्य भूमावुदकार्थं प्रचक्रमे एतस्मिन्नन्तरे स क्षपणकस्त्वरमाण उपसृत्य ते कुण्डले गृहीत्वा प्राद्रवत् ॥ १२८ ॥ तमुत्तङ्कोऽभिसृत्य कृतोदककार्य्यः शुचिः प्रयतो नमो देवेभ्यो गुरुभ्यश्च कृत्वा महता जवेन तमन्वयात् ॥ १२९ ॥ तस्य तक्षको दृढमासन्नः स तं जग्राह गृहीतमात्रः स तद्रूपं विहाय तक्षकस्वरूपं कृत्वा सहसा धरण्यां विवृतं महाविलं प्रविवेश ॥ १३० ॥ प्रविश्य च नागलोकं स्वभवनमगच्छत् अथोत्तङ्कस्तस्याः क्षत्रियाया वचः स्मृत्वा तं तक्षकमन्वगच्छत् ॥ १३१ ॥ स तद्विलं दण्डकाष्ठेन चखान न चाशकत् तं क्लिश्यमानमिन्द्रोऽपश्यत्स वज्रं प्रेषयामास ॥ १३२ ॥ गच्छास्य ब्राह्मणस्य साहाय्यं कुरुष्वेति। अथ वज्रं दण्डकाष्ठमनुप्रविश्य तद्विलमदारयत् ॥ १३३ ॥ तमुत्तङ्कोऽनुविवेश तेनैव विलेन प्रविश्य च तं नागलोकमपर्य्यन्त-

मनेकविधप्रासादहर्म्यवलभीनिर्य्यूहशतसङ्कुलमुच्चावचक्रीड़ाश्चर्य्य-स्थानावकीर्णमपश्यत् ॥ १३४ ॥ स तत्र नागांस्तानस्तुवदेभिः श्लोकैः ये ऐरावतराजानः सर्पाः समितिशोभनाः। क्षरन्त इव जीमूताः सविद्युत्पवनेरिताः ॥ १३५ ॥ सुरूपा बहुरूपाश्च तथा कल्माषकुण्डलाः। आदित्यवन्नाकपृष्ठे रेजुरैरावतोद्भवाः ॥ १३६ ॥ बहूनि नागवेश्मानि गङ्गायास्तीर उत्तरे। तत्रस्थानपि संस्तौमि महतः पन्नगानहम् ॥ १३७ ॥ इच्छेत्कोऽर्कांशुसेनायां चर्तुमैरावतं विना। शतान्यशीतिरष्टौ च सहस्राणि च विंशतिः। सर्पाणां प्रग्रहा यान्ति धृतराष्ट्रोऽयमेजति ॥१३८॥ ये चैनमुपसर्पन्ति ये च दूरपथङ्गताः। अहमैरावतज्येष्ठभ्रातृभ्योऽकरवं नमः ॥ १३९ ॥ यस्य वासः कुरुक्षेत्रे खाण्डवे चाभवत् पुरा। तं नागराजमस्तौषं कुण्डलार्थाय तक्षकम् ॥ १४० ॥ तक्षकश्चाश्वसेनश्च नित्यं सहचरावुभौ। कुरुक्षेत्रे च वसतां नदीमिक्षुमतीमनु ॥ १४१ ॥ जघन्यजस्तक्षकस्य श्रुतसेनेति यः सुतः। अवसद्यो महद्द्युम्नि प्रार्थयन्नागमुख्यताम्। करवाणि सदा चाहं नमस्तस्मै महात्मने ॥१४२॥ एवं स्तुत्वा स विप्रर्षिरुत्तङ्को भुजगोत्तमान्। नैव ते कुण्डले लेभे ततश्चिन्तामुपागमत् ॥ ४३॥ एवं स्तुवन्नपि नागान् यदा ते कुण्डले नालभत्तदापश्यत् स्त्रियौ तन्त्रे अधिरोप्य सुवेमे पटं वयन्त्यौ तस्मिंस्तन्त्रे कृष्णाः सिताश्च तन्तवश्चक्रं चापश्यत् द्वादशारं षड्भिः कुमारैः परिवर्त्त्यमानं पुरुषं चापश्यदश्वञ्च दर्शनीयम्। स तान् सर्वांस्तुष्टाव एभिर्मन्त्रवादश्लोकैः ॥ १४४ ॥ त्रीण्यर्पितान्यत्र शतानि मध्ये षष्टिश्च नित्यं चरति ध्रुवेऽस्मिन्। चक्रे चतुर्विंशतिपर्वयोगे षड् वै कुमाराः परिवर्त्तयन्ति ॥ १४५ ॥ तन्त्रञ्चेदं विश्वरूपे युवत्यौ वयतस्तन्तून् सततं वर्त्तयन्त्यौ। कृष्णान् सितांश्चैव विवर्त्तयन्त्यौ भूतान्यजस्रं भुवनानि चैव ॥ १४६ ॥ वज्रस्य भर्त्ता भुवनस्य गोप्ता वृत्रस्य

हन्ता नमुचेर्निहन्ता । कृष्णे वसानो वसने महात्मा सत्यानृते
यो विविनक्ति लोके ॥ १४७ ॥ यो वाजिनं गर्भमपां पुराणं
वैश्वानरं वाहनमभ्युपैति । नमोऽस्तु तस्मै जगदीश्वराय लोक-
त्रयेशाय पुरन्दराय ॥ १४८ ॥ ततः स एनं पुरुषः प्राह प्रीतो-
ऽस्मि तेऽहमनेन स्तोत्रेण किन्ते प्रियं करवाणीति ॥ १४९ ॥
स तमुवाच नागा मे वशमीयुरिति स चैनं पुरुषः पुनरुवाच एत-
मश्वमपाने धमस्वेति ॥ १५० ॥ ततोऽश्वस्यापानमधमत्ततो-
ऽश्वाद्धम्यमानात् सर्वस्रोतोभ्यः पावकार्चिषः सधूमा निष्पेतुः ॥१५१॥
ताभिर्नागलोक उपधूपितेऽथ सम्भ्रान्तस्तक्षकोऽग्नेस्तेजोभयाद्विषण्णः
कुण्डले गृहीत्वा सहसा भवनान्निष्क्रम्योत्तङ्कमुवाच ॥ १५२ ॥
इमे कुण्डले गृह्णातु भवानिति स ते प्रतिजग्राहोत्तङ्कः प्रतिगृह्य
च कुण्डलेऽचिन्तयत् ॥ १५३ ॥ अद्य तत् पुण्यकमुपाध्यायान्याः
दूरं चाहमभ्यागतः स कथं सम्भावयेयमिति तत एनं चिन्तयान-
मेव स पुरुष उवाच ॥ १५४ ॥ उत्तङ्क एनमेवाश्वमधिरोह त्वां
क्षणेनैवोपाध्यायकुलं प्रापयिष्यतीति ॥ १५५ ॥ स तथेत्युक्त्वा
तमश्वमधिरुह्य प्रत्याजगामोपाध्यायकुलं उपाध्यायानी च स्नाता
केशानावापयन्त्युपविष्टोत्तङ्को नागच्छतीति शापायास्य मनो दधे
॥ १५६ ॥ अथैतस्मिन्नन्तरे स उत्तङ्कः प्रविश्योपाध्यायगृहे
उपाध्यायानीमभ्यवादयत् ते चास्यै कुण्डले प्रायच्छत् सा चैनं
प्रत्युवाच ॥ १५७ ॥ उत्तङ्क देशे कालेऽभ्यागतः स्वागतं ते वत्स
त्वमनागसि मया न शप्तः श्रेयस्तवोपस्थितं सिद्धिमाप्नुहीति
॥ १५८ ॥ अथोत्तङ्क उपाध्यायमभ्यवादयत् । तमुपाध्यायः प्रत्यु-
वाच वत्सोत्तङ्क स्वागतं ते किं चिरं कृतमिति ॥ १५९ ॥ तमुत्तङ्क
उपाध्यायं प्रत्युवाच भोस्तक्षकेण मे नागराजेन विघ्नः कृतोऽस्मिन्
कर्मणि तेनास्मि नागलोकं गतः ॥ १६० ॥ तत्र च मया दृष्टे
स्त्रियौ तन्त्रेऽधिरोप्य पटं वयन्त्यौ तस्मिंश्च कृष्णाः सिताश्च तन्तवः

किं तत् ॥ १६१ ॥ तत्र च मया चक्रं दृष्टं द्वादशारं षट् चैनं कुमाराः परिवर्त्तयन्ति तदपि किं पुनश्चापि मया दृष्टः स चापि कः अश्वश्चातिप्रमाणो दृष्टः स चापि कः ॥ १६२ ॥ पथि गच्छता च मया वृषभो दृष्टस्तञ्च पुरुषोऽधिरूढस्तेनास्मि सोपचारमुक्तः उतङ्कास्य ऋषभस्य पुरीषं भक्षय उपाध्यायेनापि ते भक्षितमिति ॥१६३॥ ततस्तस्य वचनान्मया तदृषभस्य पुरीषमुपयुक्तं स चापि वा कः तदेतद्भवतोपदिष्टमिच्छेयं श्रोतुं किं तदिति ॥१६४॥ स तेनैवमुक्त उपाध्यायः प्रत्युवाच ये ते स्त्रियौ धाता विधाता च ये च ते कृष्णाः सितास्तन्तवस्ते रात्र्यहनी यदपि तच्चक्रं द्वादशारं षड् वै कुमाराः परिवर्त्तयन्ति तेऽपि षड्ऋतवः संवत्सरश्चक्रम् ॥ १६५ ॥ यः पुरुषः स पर्जन्यः योऽश्वः सोऽग्निः य ऋषभस्त्वया पथि गच्छता दृष्टः स ऐरावतो नागराट् ॥१६६॥ यश्चैनमधिरूढः पुरुषः स चेन्द्रः यदपि ते भक्षितं तस्य ऋषभस्य पुरीषं तदमृतं तेन खल्वसि तस्मिन्नागभवने न व्यापन्नस्त्वम् ॥१६७॥ स हि भगवानिन्द्रो मम सखा त्वदनुक्रोशादिममनुग्रहं कृतवान् तस्मात् कुण्डले गृहीत्वा पुनरागतोऽसि ॥१६८॥ तत् सौम्य गम्यतामनुजाने भवन्तं श्रेयोऽवाप्स्यसीति स उपाध्यायेनानुज्ञातो भगवानुतङ्कः क्रुद्धस्तक्षकं प्रतिचिकीर्षमाणो हास्तिनपुरं प्रतस्थे ॥१६९॥ स हास्तिनपुरं प्राप्य न चिराद्विप्रसत्तमः। समागच्छत राजानमुतङ्को जनमेजयम् ॥१७०॥ पुरा तक्षशिलासंस्थं निवृत्तमपराजितम्। सम्यग्विजयिनं दृष्ट्वा समन्तान्मन्त्रिभिर्वृतम् ॥१७१॥ तस्मै जयाशिषः पूर्वं यथान्यायं प्रयुज्य सः। उवाचैनं वचः काले शब्दसम्पन्नया गिरा ॥१७२॥

उतङ्क उवाच। अन्यस्मिन् करणीये तु कार्य्ये पार्थिवसत्तम। बाल्यादिवान्यदेव त्वं कुरुषे नृपसत्तम ॥ १७३ ॥

सौतिरुवाच। एवमुक्तस्तु विप्रेण स राजा जनमेजयः। अर्च्चयित्वा यथान्यायं प्रत्युवाच द्विजोत्तमम् ॥ १७४ ॥

जनमेजय उवाच । आसां प्रजानां परिपालनेन स्वं क्षत्रधर्मं परिपालयामि । प्रब्रूहि मे किं करणीयमद्य येनासि कार्य्येण समागतस्त्वम् ॥ १७५ ॥

सौतिरुवाच । स एवमुक्तस्तु नृपोत्तमेन द्विजोत्तमः पुण्यकृतां वरिष्ठः । उवाच राजानमदीनसत्त्वं स्वमेव कार्य्यं नृपते कुरुष्व ॥ १७६ ॥

उतङ्क उवाच । तक्षकेण महीन्द्रेन्द्र येन ते हिंसितः पिता । तस्मै प्रतिकुरुष्व त्वं पन्नगाय दुरात्मने ॥ १७७ ॥ कार्य्यकालं हि मन्येऽहं विधिदृष्टस्य कर्मणः । तद्गच्छापचितिं राजन् पितुस्तस्य महात्मनः ॥ १७८ ॥ तेन ह्यनपराधी स दष्टो दुष्टान्तरात्मना । पञ्चत्वमगमद्राजा वज्राहत इव द्रुमः ॥ १७९ ॥ बलदर्पसमुत्सिक्तस्तक्षकः पन्नगाधमः । अकार्य्यं कृतवान् पापो योऽदशत् पितरं तव ॥ १८० ॥ राजर्षिवंशगोप्तारममरप्रतिमं नृपम् । यियासुं काश्यपञ्चैव न्यवर्त्तयत पापकृत् ॥ १८१ ॥ होतुमर्हसि तं पापं ज्वलिते हव्यवाहने । सर्पसत्रे महाराज त्वरितं तद्विधीयताम् ॥ १८२ ॥ एवं पितुश्चापचितिं कृतवांस्त्वं भविष्यसि । मम प्रियञ्च सुमहत् कृतं राजन् भविष्यति ॥ १८३ ॥ कर्मणः पृथिवीपाल मम येन दुरात्मना । विघ्नः कृतो महाराज गुर्वर्थं चरतोऽनघ ॥ १८४ ॥

सौतिरुवाच । एतच्छ्रुत्वा तु नृपतिस्तक्षकाय चुकोप ह । उतङ्कवाक्यहविषा दीप्तोऽग्निर्हविषा यथा ॥ १८५ ॥ अपृच्छत् स तदा राजा मन्त्रिणस्तान् सुदुःखितः । उतङ्कस्यैव सान्निध्ये पितुः स्वर्गगतिं प्रति ॥ १८६ ॥ तदैव हि स राजेन्द्रो दुःखशोकाप्लुतोऽभवत् । यदैव वृत्तं पितरमुतङ्कादशृणोत्तदा ॥ १८७ ॥

इति श्रीमहाभारते आदिपर्वणि पौष्याख्यानं समाप्तं

तृतीयोऽध्यायः ॥ ३ ॥

— ०:० —

## अथ पौलोमपर्व ॥ ४ ॥

लोमहर्षणपुत्र उग्रश्रवाः सौतिः पौराणिको नैमिषारण्ये शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे ऋषीनभ्यागतानुपतस्थे ॥ १ ॥ पौराणिकः पुराणे कृतश्रमः स कृताञ्जलिस्तानुवाच किम्भवन्तः श्रोतुमिच्छन्ति किमहं ब्रुवाणीति ॥ २ ॥ तमृषय ऊचुः परमं लोमहर्षणे वक्ष्यामस्त्वां नः प्रतिवक्ष्यसि वचः शुश्रूषतां कथायोगं नः कथायोगे ॥ ३ ॥ तत्र भगवान् कुलपतिस्तु शौनकोऽग्निशरणमध्यास्ते ॥ ४ ॥ योऽसौ दिव्याः कथा वेद देवतासुरसंश्रिताः। मनुष्योरगगन्धर्वकथा वेद च सर्वशः ॥५॥ स चाप्यस्मिन्मखे सौते विद्वान् कुलपतिर्द्विजः। दक्षो धृतव्रतो धीमाञ्छास्त्रे चारण्यके गुरुः ॥ ६ ॥ सत्यवादी शमपरस्तपस्वी नियतव्रतः। सर्वेषामेव नो मान्यः स तावत् प्रतिपाल्यताम् ॥ ७ ॥ तस्मिन्नध्यासति गुरावासनं परमर्चितम्। ततो वक्ष्यसि यत्त्वां स प्रक्ष्यति द्विजसत्तमः ॥ ८ ॥

सौतिरुवाच। एवमस्तु गुरौ तस्मिन्नुपविष्टे महात्मनि। तेन पृष्टः कथाः पुण्या वक्ष्यामि विविधाश्रयाः ॥ ९ ॥ सोऽथ विप्रर्षभः सर्वं कृत्वा कार्यं यथाविधि। देवान्वाग्भिः पितॄनद्भिस्तर्पयित्वाजगाम ह ॥ १० ॥ यत्र ब्रह्मर्षयः सिद्धाः सुखासीना धृतव्रताः। यज्ञायतनमाश्रित्य सूतपुत्रपुरःसराः ॥ ११ ॥ ऋत्विक्ष्वथ सदस्येषु स वै गृहपतिस्तदा। उपविष्टेषूपविष्टः शौनकोऽथाब्रवीदिदम् ॥ १२ ॥

इति आदिपर्वणि कथाप्रवेशो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

शौनक उवाच । पुराणमखिलं तात पिता तेऽधीतवान् पुरा । कच्चित्त्वमपि तत् सर्वमधीषे लौमहर्षणे ॥ १ ॥ पुराणे हि कथा दिव्या आदिवंशाश्च धीमताम् । कथ्यन्ते ये पुराऽस्माभिः श्रुतपूर्वाः पितुस्तव ॥ २ ॥ तत्र वंशमहं पूर्वं श्रोतुमिच्छामि भार्गवम् । कथयस्व कथामेतां कल्याः स्म श्रवणे तव ॥ ३ ॥

सूत उवाच । यदधीतं पुरा सम्यक् द्विजश्रेष्ठैर्महात्मभिः । वैशम्पायनविप्राग्र्यैस्तैश्चापि कथितं यथा ॥ ४ ॥ यदधीतञ्च पित्रा मे सम्यक् चैव ततो मया । तावच्छृणुष्व यो देवैः सेन्द्रैः सर्षिमरुद्गणैः ॥ ५ ॥ पूजितः प्रवरो वंशो भार्गवो भृगुनन्दन । इमं वंशमहं पूर्वं भार्गवन्ते महामुने ॥ ६ ॥ निगदामि यथायुक्तं पुराणाश्रयसंयुतम् । भृगुर्महर्षिर्भगवान् ब्रह्मणा वै स्वयम्भुवा ॥ ७ ॥ वरुणस्य क्रतौ जातः पावकादिति नः श्रुतम् । भृगोः सुदयितः पुत्रश्च्यवनो नाम भार्गवः ॥ ८ ॥ च्यवनस्य च दायादः प्रमतिर्नाम धार्मिकः । प्रमतेरप्यभूत् पुत्रो घृताच्यां रुरुरित्युत ॥ ९ ॥ रुरोरपि सुतो जज्ञे शुनको वेदपारगः । प्रमद्वरायां धर्मात्मा तव पूर्वपितामहः ॥ १० ॥ तपस्वी च यशस्वी च श्रुतवान् ब्रह्मवित्तमः । धार्मिकः सत्यवादी च नियतो नियताशनः ॥ ११ ॥

शौनक उवाच । सूतपुत्र यथा तस्य भार्गवस्य महात्मनः । च्यवनत्वं परिख्यातं तन्ममाचक्ष्व पृच्छतः ॥ १२ ॥

सौतिरुवाच । भृगोः सुदयिता भार्य्या पुलोमेत्यभिविश्रुता । तस्यां समभवद्गर्भो भृगुवीर्य्यसमुद्भवः ॥ १३ ॥ तस्मिन् गर्भेऽथ संभूते पुलोमायां भृगूद्वह । समये समशीलिन्यां धर्मपत्न्यां यशस्विनः ॥ १४ ॥ अभिषेकाय निष्क्रान्ते भृगौ धर्मभृतांवरे । आश्रमं तस्य रक्षोऽथ पुलोमाभ्याजगाम ह ॥ १५ ॥ तं प्रविश्याश्रमं दृष्ट्वा भृगोर्भार्य्यामनिन्दिताम् । हृच्छयेन समाविष्टो विचेताः

समपद्यत ॥ १६ ॥ अभ्यागतन्तु तद्रक्षः पुलोमा चारुदर्शना। न्यमन्त्रयत वन्येन फलमूलादिना तदा ॥ १७ ॥ तान्तु रक्षस्तदा ब्रह्मन् हृच्छयेनाभिपीड़ितम्। दृष्ट्वा हृष्टमभूद्राजन् जिहीर्षुस्तामनिन्दिताम् ॥ १८ ॥ जातमित्यब्रवीत् कार्य्यं जिहीर्षुर्मुदितः शुभाम्। सा हि पूर्वं वृता तेन पुलोम्ना तु शुचिस्मिता ॥ १९ ॥ तान्तु प्रादात्पिता पश्चाद्भृगवे शास्त्रवत्तदा। तस्य तत् किल्बिषं नित्यं हृदि वर्त्तति भार्गव ॥ २० ॥ इदमन्तरमित्येवं हर्त्तुं चक्रे मनस्तदा। अथाग्निशरणेऽपश्यज्ज्वलन्तं जातवेदसम् ॥ २१ ॥ तमपृच्छत्ततो रक्षः पावकं ज्वलितं तदा। शंस मे कस्य भार्य्येयमग्ने पृच्छे ऋतेन वै ॥ २२ ॥ मुखं त्वमसि देवानां वद पावक पृच्छते। मया हीयं वृता पूर्व्वम्भार्य्यार्थे वरवर्णिनी ॥ २३ ॥ पश्चादिमां पिता प्रादाद्भृगवेऽनृतकारिणे। सेयं यदि वरारोहा भृगोर्भार्य्या रहोगता ॥ २४ ॥ तथा सत्यं समाख्याहि जिहीर्षाम्याश्रमादिमाम्। स मन्युस्तत्र हृदयं प्रदहन्निव तिष्ठति। मत्पूर्व्वभार्य्यां यदिमां भृगुराप सुमध्यमाम् ॥ २५ ॥

सौतिरुवाच। एवं रक्षस्तमामन्त्र्य ज्वलितं जातवेदसम्। शङ्कमानं भृगोर्भार्य्यां पुनः पुनरपृच्छत ॥ २६ ॥ त्वमग्ने सर्व्वभूतानामन्तश्चरसि नित्यदा। साक्षिवत् पुण्यपापेषु सत्यं ब्रूहि कवे वचः ॥ २७ ॥ मत्पूर्व्वापहृता भार्य्या भृगुणानृतकारिणा। सेयं यदि तथा मे त्वं सत्यमाख्यातुमर्हसि ॥ २८ ॥ श्रुत्वा त्वत्तो भृगोर्भार्य्यां हरिष्याम्याश्रमादिमाम्। जातवेदः पश्यतस्ते वद सत्यां गिरं मम ॥ २९ ॥

सूत उवाच। तस्यैतद्वचनं श्रुत्वा सप्तार्च्चिर्दुःखितोऽभवत्। भीतोऽनृताच्च शापाच्च भृगोरित्यब्रवीच्छनैः ॥ ३० ॥

अग्निरुवाच। त्वया वृता पुलोमेयं पूर्व्वं दानवनन्दन। किं त्वियं विधिना पूर्व्वं मन्त्रवन्न वृता त्वया ॥ ३१ ॥ पित्रा तु

भृगवे दत्ता पुलोमेयं यशस्विनी। प्रदत्ता नतु वै तुभ्यं वरलोभान्महायशाः ॥ ३२ ॥ अथेमां वेददृष्टेन कर्मणा विधिपूर्वकम्। भार्य्यामृषिर्भृगुः प्राप मां पुरस्कृत्य दानव ॥ ३३ ॥ सेयमित्यवगच्छामि नानृतं वक्तुमुत्सहे। नानृतं हि सदा लोके पूज्यते दानवोत्तम ॥ ३४ ॥

इत्यादिपर्वणि पौलोमे पञ्चमोऽध्यायः ॥ ५ ॥

—०:०—

सौतिरुवाच। अग्नेरथ वचः श्रुत्वा तद्रक्षः प्रजहार ताम्। ब्रह्मन् वराहरूपेण मनोमारुतरंहसा ॥१॥ ततः स गर्भो निवसन् कुक्षौ भृगुकुलोद्वह। रोषान्मातुश्च्युतः कुक्षेश्च्यवनस्तेन सोऽभवत् ॥२॥ तं दृष्ट्वा मातुरुदराच्च्युतमादित्यवर्च्चसम्। तद्रक्षो भस्मसाद्भूतं पपात परिमुच्य ताम् ॥ ३ ॥ सा तमादाय सुश्रोणी ससार भृगुनन्दन। च्यवनं भार्गवं पुत्रं पुलोमा दुःखमूर्च्छिता ॥ ४ ॥ तां ददर्श स्वयं ब्रह्मा सर्वलोकपितामहः। रुदन्तीं वाष्पपूर्णाक्षीं भृगोर्भार्य्यामनिन्दिताम् ॥ ५ ॥ सान्त्वयामास भगवान् वधूं ब्रह्मा पितामहः। अश्रुविन्दूद्भवा तस्याः प्रावर्त्तत महानदी ॥ ६ ॥ अनुवर्त्तयिता तस्या भृगोः पत्न्यास्तपस्विनः। तस्या मार्गं सृतवतीं दृष्ट्वा तु सरितं तदा ॥७॥ नाम तस्यास्तदा नद्याश्चक्रे लोकपितामहः। वधूसरेति भगवांश्च्यवनस्याश्रमं प्रति ॥८॥ स एवं च्यवनो जज्ञे भृगोः पुत्रः प्रतापवान्। तं ददर्श पिता तत्र च्यवनं ताञ्च भाविनीम्। स पुलोमां ततो भार्य्यां पप्रच्छ कुपितो भृगुः ॥ ९ ॥

भृगुरुवाच। केनासि रक्षसे तस्मै कथिता त्वं जिहीर्षते। न हि त्वां वेद तद्रक्षो मद्भार्य्यां चारुहासिनि ॥ १० ॥ तत्त्वमाख्याहि तं ह्यद्य शप्तुमिच्छाम्यहं रुषा। बिभेति को न शापान्मे कस्य चायं व्यतिक्रमः ॥ ११ ॥

पुलोमोवाच। अग्निना भगवंस्तस्मै रक्षसेऽहं निवेदिता। ततो मामनयद्रक्षः क्रोशन्तीं कुररीमिव ॥ १२ ॥ साहं तव सुतस्यास्य तेजसा परिमोचिता। भस्मीभूतं तु तद्रक्षो मामुत्सृज्य पपात वै ॥ १३ ॥

सूत उवाच। इति श्रुत्वा पुलोमाया भृगुः परममन्युमान्। शशापाग्निमतिक्रुद्धः सर्व्वभक्षो भविष्यसि ॥ १४ ॥

इत्यादिपर्व्वणि पौलोमेऽग्निशापः षष्ठोऽध्यायः ॥ ६ ॥

—o—

सौतिरुवाच। शप्तस्तु भृगुणा वह्निः क्रुद्धो वाक्यमथाब्रवीत्। किमिदं साहसं ब्रह्मन् कृतवानसि मां प्रति ॥ १ ॥ धर्म्मे प्रयतमानस्य सत्यञ्च वदतः समम्। पृष्टो यदब्रुवं सत्यं व्यभिचारोऽत्र को मम ॥ २ ॥ पृष्टो हि साक्षी यः साक्ष्यं जानानोऽप्यन्यथा वदेत्। स पूर्व्वानात्मनः सप्त कुले हन्यात्तथापरान् ॥ ३ ॥ यश्च कार्य्यार्थतत्त्वज्ञो जानानोऽपि न भाषते। सोऽपि तेनैव पापेन लिप्यते नात्र संशयः ॥ ४ ॥ शक्तोऽहमपि शप्तुं त्वां मान्यास्तु ब्राह्मणा मम। जानतोऽपि च ते ब्रह्मन् कथयिष्ये निबोध तत् ॥ ५ ॥ योगेन बहुधात्मानं कृत्वा तिष्ठामि मूर्त्तिषु। अग्निहोत्रेषु सत्रेषु क्रियासु च मखेषु च ॥ ६ ॥ वेदोक्तेन विधानेन मयि यद्धूयते हविः। देवताः पितरश्चैव तेन तृप्ता भवन्ति वै ॥ ७ ॥ आपो देवगणाः सर्व्वे आपः पितृगणास्तथा। दर्शश्च पौर्णमासश्च देवानां पितृभिः सह ॥ ८ ॥ देवताः पितरस्तस्मात्पितरश्चापि देवताः। एकीभूताश्च दृश्यन्ते पृथक्त्वेन च पर्व्वसु ॥ ९ ॥ देवताः पितरश्चैव भुञ्जते मयि यद्धुतम्। देवतानां पितृणाञ्च मुखमेतदहं स्मृतम् ॥ १० ॥ अमावास्यां हि पितरः

पौर्णमास्यां हि देवताः । मन्मुखेनैव हूयन्ते भुञ्जते च हुतं हविः । सर्वभक्षः कथं तेषां भविष्यामि मुखं त्वहम् ॥ ११ ॥

सौतिरुवाच । चिन्तयित्वा ततो वह्निश्चक्रे संहारमात्मनः । द्विजानामग्निहोत्रेषु यज्ञसत्रक्रियासु च ॥ १२ ॥ निरोङ्कारवषट्काराः स्वधास्वाहाविवर्जिताः । विनाग्निना प्रजाः सर्वास्तत आसन् सुदुःखिताः ॥ १३ ॥ अथर्षयः समुद्विग्ना देवान् गत्वाब्रुवन्वचः । अग्निनाशात् क्रियाभ्रंशाद्भ्रान्ता लोकास्त्रयोऽनघाः ॥ १४ ॥ विदध्वमत्र यत्कार्यं न स्यात्कालात्ययो यथा । अथर्षयश्च देवाश्च ब्रह्माणमुपगम्य तु ॥ १५ ॥ अग्नेरावेदयञ्छापं क्रियासंहारमेव च । भृगुणा वै महाभाग शप्तोऽग्निः कारणान्तरे ॥ १६ ॥ कथं देवमुखो भूत्वा यज्ञभागाग्रभुक्तथा । हुतभुक् सर्वलोकेषु सर्वभक्षत्वमेष्यति ॥ १७ ॥ श्रुत्वा तु तद्वचस्तेषामग्निमाहूय विश्वकृत् । उवाच वचनं श्लक्ष्णं भूतभावनमव्ययम् ॥ १८ ॥ लोकानामिह सर्वेषां त्वं कर्त्ता चान्त एव च । त्वं धारयसि लोकांस्त्रीन् क्रियाणाञ्च प्रवर्त्तकः ॥ १९ ॥ स तथा कुरु लोकेश नोच्छिद्येरन्यथा क्रियाः । कस्मादेवं विमूढस्त्वमीश्वरः सन् हुताशन ॥ २० ॥ त्वं पवित्रं सदा लोके सर्वभूतगतिश्च ह । न त्वं सर्वशरीरेण सर्वभक्षत्वमेष्यसि ॥ २१ ॥ अपाने ह्यर्चिषो यास्ते सर्वं भोक्ष्यन्ति ताः शिखिन् । क्रव्यादा च तनुर्या ते सा सर्वं भक्षयिष्यति । यथा सूर्यांशुभिः स्पृष्टं सर्वं शुचि विभाव्यते ॥ २२ ॥ तथा त्वदर्च्चिर्भिर्दग्धं सर्वं शुचि भविष्यति । त्वमग्ने परमं तेजः स्वप्रभावाद्विनिर्गतम् ॥ २३ ॥ स्वतेजसैव तं शापं कुरु सत्यमृषेर्विभो । देवानां चात्मनो भागं गृहाण त्वं मुखे हुतम् ॥ २४ ॥

सौतिरुवाच । एवमस्त्विति तं वह्निः प्रत्युवाच पितामहम् । जगाम शासनं कर्त्तुं देवस्य परमेष्ठिनः ॥ २५ ॥ देवर्षयश्च

मुदितास्ततो जग्मुर्यथागतम् । ऋषयश्च यथापूर्वं क्रियाः सर्वाः प्रचक्रिरे ॥ २६ ॥ दिवि देवा मुमुदिरे भूतसङ्घाश्च लौकिकाः । अग्निश्च परमां प्रीतिमवाप हतकल्मषः ॥ २७ ॥ एवं स भगवाञ्छापं लेभेऽग्निर्भृगुतः पुरा । एवमेष पुरावृत्त इतिहासोऽग्निशापजः । पुलोम्नश्च विनाशोऽयं च्यवनस्य च सम्भवः ॥२८॥

इत्यादिपर्वणि पौलोमे सप्तमोऽध्यायः ॥ ७ ॥

—०*०—

सूत उवाच । स चापि च्यवनो ब्रह्मन् भार्गवोऽजनयत् सुतम् । सुकन्यायां महात्मानं प्रमतिं दीप्ततेजसम् ॥ १ ॥ प्रमतिस्तु रुरुं नाम घृताच्यां समजीजनत् । रुरुः प्रमद्वरायान्तु शुनकं समजीजनत् ॥ २ ॥ तस्य ब्रह्मन् रुरोः सर्वं चरितं भूरितेजसः । विस्तरेण प्रवक्ष्यामि तच्छृणु त्वमशेषतः ॥ ३ ॥ ऋषिरासीन्महान् पूर्वं तपोविद्यासमन्वितः । स्थूलकेश इति ख्यातः सर्वभूतहिते रतः ॥ ४ ॥ एतस्मिन्नेव काले तु मेनकायां प्रजज्ञिवान् । गन्धर्वराजो विप्रर्षे विश्वावसुरिति स्मृतः ॥ ५ ॥ अप्सरा मेनका तस्य तं गर्भं भृगुनन्दन । उत्ससर्ज यथाकालं स्थूलकेशाश्रमं प्रति ॥ ६ ॥ उत्सृज्य चैव तं गर्भं नद्यास्तीरे जगाम सा । अप्सरा मेनका ब्रह्मन्निर्दया निरपत्रपा ॥ ७ ॥ कन्याममरगर्भाभां ज्वलन्तीमिव च श्रिया । तान्ददर्श समुत्सृष्टां नदीतीरे महानृषिः ॥ ८ ॥ स्थूलकेशः स तेजस्वी विजने बन्धुवर्ज्जिताम् । स तां दृष्ट्वा तदा कन्यां स्थूलकेशो महाद्विजः ॥ ९ ॥ जग्राह च मुनिश्रेष्ठः कृपाविष्टः पुपोष च । ववृधे सा वरारोहा तस्याश्रमपदे शुभे ॥ १० ॥ जातकाद्याः क्रियाश्चास्या विधिपूर्वं यथाक्रमम् । स्थूलकेशो महाभागश्चकार सुमहानृषिः ॥ ११ ॥ प्रमदाभ्यो वरा सा तु सत्त्वरूपगुणान्विता ।

ततः प्रमद्वरेत्यस्या नाम चक्रे महानृषिः ॥ १२ ॥ तामाश्रमपदे तस्य रुरुर्दृष्ट्वा प्रमद्वराम् । बभूव किल धर्मात्मा मदनोपहतस्तदा ॥ १३ ॥ पितरं सखिभिः सोऽथ श्रावयामास भार्गवम् । प्रमतिश्चाभ्ययाचत्तां स्थूलकेशं यशस्विनम् ॥ १४ ॥ ततः प्रादात्पिता कन्यां रुरवे तां प्रमद्वराम् । विवाहं स्थापयित्वाग्रे नक्षत्रे भगदैवते ॥ १५ ॥ ततः कतिपयाहस्य विवाहे समुपस्थिते । सखीभिः क्रीड़ती सार्द्धं सा कन्या वरवर्णिनी । १६ ॥ नापश्यत् संप्रसुप्तं वै भुजङ्गं तिर्य्यगायतम् । पदा चैनं समाक्रामन्मुमूर्षुः कालचोदिता ॥ १७ ॥ स तस्याः संप्रमत्तायाश्चोदितः कालधर्म्मणा । विषोपलिप्तान्दशनान् भृशमङ्गे न्यपातयत् ॥ १८ ॥ सा दष्टा तेन सर्पेण पपात सहसा भुवि । विवर्णा विगतश्रीका भ्रष्टाभरणचेतना ॥ १९ ॥ निरानन्दकरी तेषां बन्धूनां मुक्तमूर्द्धजा । व्यसुरप्रेक्षणीया सा प्रेक्षणीयतमाभवत् ॥ २० ॥ प्रसुप्तेवाभवच्चापि भुवि सर्पविषार्द्दिता । भूयो मनोहरतरा बभूव तनुमध्यमा ॥ २१ ॥ ददर्श तां पिता चैव ये चैवान्ये तपस्विनः । विचेष्टमानां पतितां भूतले पद्मवर्च्चसम् ॥ २२ ॥ ततः सर्वे द्विजवराः समाजग्मुः कृपान्विताः । स्वस्त्यात्रेयो महाजानुः कुशिकः शङ्खमेखलः ॥ २३ ॥ उद्दालकः कठश्चैव श्वेतश्चैव महायशाः । भरद्वाजः कौणकुत्स्य आर्ष्टिषेणोऽथ गौतमः ॥ २४ ॥ प्रमतिः सह पुत्रेण तथान्ये वनवासिनः । तां ते कन्यां व्यसुं दृष्ट्वा भुजङ्गस्य विषार्द्दिताम् । रुरुदुः कृपयाविष्टा रुरुस्त्वार्त्तो वहिर्ययौ ॥ २५ ॥

इत्यादिपर्व्वणि पौलोमेऽष्टमोऽध्यायः ॥ ८ ॥

—०—

सौतिरुवाच । तेषु तत्रोपविष्टेषु ब्राह्मणेषु महात्मसु । रुरु-श्चुक्रोश गहनं वनं गत्वातिदुःखितः ॥ १ ॥ शोकेनाभिहतः सोऽथ विलपन् करुणं बहु । अब्रवीद्वचनं शोचन् प्रियां स्मृत्वा प्रमद्वराम् ॥ २ ॥ शेते सा भुवि तन्वङ्गी मम शोकविवर्द्धिनी । बान्धवानाञ्च सर्व्वेषां किं नु दुःखमतःपरम् ॥ ३ ॥ यदि दत्तं तपस्तप्तं गुरवो वा मया यदि । सम्यगाराधितास्तेन सञ्जीवतु मम प्रिया ॥ ४ ॥ यथा च जन्मप्रभृति यतात्माहं धृतव्रतः । प्रमद्वरा तथा-द्यैषा समुत्तिष्ठतु भाविनी ॥ ५ ॥ एवं लालप्यतस्तस्य भार्य्यार्थे दुःखितस्य च । देवदूतस्तदाभ्येत्य वाक्यमाह रुरुं वने ॥ ६ ॥

देवदूत उवाच । अभिधत्से ह यद्वाक्यं रुरो दुःखेन तन्मृषा । यतो मर्त्त्यस्य धर्म्मात्मन्नायुरस्ति गतायुषः ॥ ७ ॥ गतायुरेषा कृपणा गन्धर्व्वाप्सरसोः सुता । तस्माच्छोके मनस्तात मा कृथास्त्वं कथ-ञ्चन ॥ ८ ॥ उपायश्चात्र विहितः पूर्व्वं देवैर्महात्मभिः । तं यदी-च्छसि कर्त्तुं त्वं प्राप्स्यसीह प्रमद्वराम् ॥ ९ ॥

रुरुरुवाच । क उपायः कृतो देवैर्ब्रूहि तत्त्वेन खेचर । करिष्येऽहं तथा श्रुत्वा त्रातुमर्हति मां भवान् ॥ १० ॥

देवदूत उवाच । आयुषोऽर्द्धं प्रयच्छ त्वं कन्यायै भृगुनन्दन । एवमुत्थास्यति रुरो तव भार्य्या प्रमद्वरा ॥ ११ ॥

रुरुरुवाच । आयुषोऽर्द्धं प्रयच्छामि कन्यायै खेचरोत्तम । शृङ्गाररूपाभरणा समुत्तिष्ठतु मे प्रिया ॥ १२ ॥

सूत उवाच । ततो गन्धर्व्वराजश्च देवदूतश्च सत्तमौ । धर्म्म-राजमुपेत्येदं वचनं प्रत्यभाषताम् ॥ १३ ॥ धर्म्मराजायुषोऽर्द्धेन रुरोर्भार्य्या प्रमद्वरा । समुत्तिष्ठतु कल्याणी मृतैवं यदि मन्यसे ॥ १४ ॥

धर्म्मराज उवाच । प्रमद्वरां रुरोर्भार्य्यां देवदूत यदीच्छसि । उत्तिष्ठत्वायुषोऽर्द्धेन रुरोरेव समन्विता ॥ १५ ॥

सौतिरुवाच । एवमुक्ते ततः कन्या सोदतिष्ठत् प्रमद्वरा । रुरोस्तस्यायुषोऽर्द्धेन सुप्तेव वरवर्णिनी ॥१६॥ एतद्दृष्टं भविष्ये हि रुरोरुत्तमतेजसः । आयुषोऽतिप्रवृद्धस्य भार्य्यार्थेऽर्द्धमल्पयत ॥ १७ ॥ तत इष्टेऽहनि तयोः पितरौ चक्रतुर्मुदा । विवाहं तौ च रेमाते परस्परहितैषिणौ ॥ १८ ॥ स लब्ध्वा दुर्लभां भार्य्यां पद्मकिञ्जल्कसुप्रभाम् । व्रतं चक्रे विनाशाय जिह्मगानां धृतव्रतः ॥ १९ ॥ स दृष्ट्वा जिह्मगान् सर्वांस्तीव्रकोपसमन्वितः । अभिहन्ति यथासत्त्वं गृह्य प्रहरणं सदा ॥ २० ॥ स कदाचिद्वनं विप्रो रुरुरभ्यागमन्महत् । शयानं तत्र चापश्यत् डुण्डुभं वयसान्वितम् ॥२१॥ तत उद्यम्य दण्डं स कालदण्डोपमं तदा । जिघांसुः कुपितो विप्रस्तमुवाचाथ डुण्डुभः ॥ २२ ॥ नापराध्यामि ते किञ्चिदहमद्य तपोधन । संरम्भात्तु किमर्थं मामभिहंसि रुषान्वितः ॥ २३ ॥

इत्यादिपर्वणि पौलोमे नवमोऽध्यायः ॥ ९ ॥

—०—

रुरुरुवाच । मम प्राणसमा भार्य्या दष्टासीद्भुजगेन ह । तत्र मे समयो घोर आत्मनोरग वै कृतः ॥ १ ॥ भुजङ्गं वै सदा हन्यां यं यं पश्येयमित्युत । ततोऽहं त्वां जिघांसामि जीवितेनाद्य मोक्ष्यसे ॥ २ ॥

डुण्डुभ उवाच । अन्ये ते भुजगा ब्रह्मन् ये दशन्तीह मानवान् । डुण्डुभानहिगन्धेन न त्वं हिंसितुमर्हसि ॥ ३ ॥ एकानर्थान् पृथगर्थानेकदुःखान् पृथक्सुखान् । डुण्डुभान्धर्मविद्भूत्वा न त्वं हिंसितुमर्हसि ॥ ४ ॥

सौतिरुवाच । इति श्रुत्वा वचस्तस्य भुजगस्य रुरुस्तदा । नावधीद्भयसंविग्नमृषिमत्वाथ डुण्डुभम् ॥ ५ ॥ उवाच चैनं

भगवान् रुरुः संशमयन्निव । कामं मां भुजग ब्रूहि कोऽसीमां विक्रियां गतः ॥ ६ ॥

डुण्डुभ उवाच । अहं पुरा रुरो नाम्ना ऋषिरासं सहस्रपात् । सोऽहं शापेन विप्रस्य भुजगत्वमुपागतः ॥ ७ ॥

रुरुरुवाच । किमर्थं शप्तवान् क्रुद्धो द्विजस्त्वां भुजगोत्तम । कियन्तं चैव कालं ते वपुरेतद्भविष्यति ॥ ८ ॥

इत्यादिपर्वणि पौलोमे दशमोऽध्यायः ॥ १० ॥

—•❖•—

डुण्डुभ उवाच । सखा बभूव मे पूर्वं खगमो नाम वै द्विजः । भृशं संशितवाक् सोऽथ तपोबलसमन्वितः ॥ १ ॥ स मया क्रीड़ता बाल्ये कृत्वा तार्णं भुजङ्गमम् । अग्निहोत्रे प्रसक्तस्तु भीषितः प्रमुमोह वै ॥ २ ॥ लब्ध्वा स च पुनः संज्ञां मामुवाच तपोधनः । निर्दहन्निव कोपेन सत्यवाक् संशितव्रतः ॥ ३ ॥ यथावीर्यस्त्वया सर्पः कृतोऽयं मद्विभीषया । तथावीर्यो भुजङ्गस्त्वं मम शापाद्भविष्यसि ॥ ४ ॥ तस्याहं तपसो वीर्यं जानानस्तत् तपोधन । भृशमुद्विग्नहृदयस्तमवोचमहं तदा ॥ ५ ॥ प्रयतः सम्भ्रमाच्चैव प्राञ्जलिः पुरतः स्थितः । सखेति हसतेदन्ते नर्मार्थं वै कृतं मया ॥ ६ ॥ क्षन्तुमर्हसि मे ब्रह्मन् शापोऽयं विनिवर्त्यताम् । सोऽथ मामब्रवीद्दृष्ट्वा भृशमुद्विग्नचेतसम् ॥ ७ ॥ मुहुरुष्णं विनिःश्वस्य सुसम्भ्रान्तस्तपोधनः । नानृतं वै मया प्रोक्तं भवितेदं कथञ्चन ॥ ८ ॥ यत्तु वक्ष्यामि ते वाक्यं शृणु तन्मे तपोधन । श्रुत्वा च हृदि ते वाक्यमिदमस्तु सदानघ ॥ ९ ॥ उत्पत्स्यति रुरुर्नाम प्रमतेरात्मजः शुचिः । तं दृष्ट्वा शापमोक्षस्ते भविता नचिरादिव ॥ १० ॥ स त्वं रुरुरिति ख्यातः प्रमते-

रात्मनोऽपि च । स्वं रूपं प्रतिपद्यास्व नमामि ते, द्विजसत्
॥ ११ ॥ स डौण्डुभं परित्यज्य रूपं विप्रर्षभस्तदा । स्वरूपं
भास्वरं भूयः प्रतिपेदे महायशाः ॥ १२ ॥ इदं चोवाच वचनं
रुरुमप्रतिमौजसम् । अहिंसा परमो धर्मः सर्वप्राणभृतां स्मर
॥ १३ ॥ तस्मात् प्राणभृतः सर्वान्न हिंस्याद्ब्राह्मणः क्वचित् ।
ब्राह्मणः सौम्य एवेह भवतीति परा श्रुतिः ॥ १४ ॥ वेदवेदाङ्ग-
विन्नाम सर्वभूताभयप्रदः । अहिंसा सत्यवचनं क्षमा चेति विनि-
श्चितम् ॥ १५ ॥ ब्राह्मणस्य परो धर्मो वेदानां धारणापि च ।
क्षत्रियस्य हि यो धर्मः स हि नेष्येत वै तव ॥ १६ ॥ दण्ड-
धारणमुग्रत्वं प्रजानां परिपालनम् । तदिदं क्षत्रियस्यासीत्कर्म
वै शृणु मे रुरो ॥ १७ ॥ जनमेजयस्य यज्ञेऽस्मिन् सर्पाणां हिंसनं
पुरा । परित्राणञ्च भीतानां सर्पाणां ब्राह्मणादपि ॥ १८ ॥
तपोवीर्यबलोपेताद्वेदवेदाङ्गपारगात् । आस्तीकाद्द्विजमुख्याद्वै
सर्पसत्रे द्विजोत्तम ॥ १९ ॥

इत्यादिपर्वणि पौलोमे एकादशोऽध्यायः ॥ ११ ॥

रुरुरुवाच । कथं हिंसितवान् सर्पान् स राजा जनमेजयः ।
सर्पा वा हिंसितास्तत्र किमर्थं द्विजसत्तम ॥ १ ॥ किमर्थं
मोक्षिताश्चैव पन्नगास्तेन धीमता । आस्तीकेन द्विजश्रेष्ठ श्रोतु-
मिच्छाम्यशेषतः ॥ २ ॥

ऋषिरुवाच । श्रोष्यसि त्वं रुरो सर्वमास्तीकचरितं महत् ।
ब्राह्मणानां कथयतामित्युक्त्वान्तरधीयत ॥ ३ ॥

सौतिरुवाच । रुरुश्चापि वनं सर्वं पर्यधावत्समन्ततः ।
तमृषिं नष्टमन्विच्छन् संश्रान्तो न्यपतद्भुवि ॥ ४ ॥ स मोहं परमं
गत्वा नष्टसंज्ञ इवाभवत् । तदृषेर्वचनं तथ्यं चिन्तयानः पुनः पुनः

॥ ५ ॥ लब्धसंज्ञो रुरुश्चायात्तदाचख्यौ पितुस्तदा । पिता चास्य तदाख्यानं पृष्टः सर्वं न्यवेदयत् ॥ ६ ॥

इत्यादिपर्व्वणि सर्पसत्रप्रस्तावना पौलोमं समाप्तम्

द्वादशोऽध्यायः ॥ १२ ॥

---

## अथास्तीकपर्व ।

शौनक उवाच । किमर्थं राजशार्दूलः स राजा जनमेजयः । सर्पसत्रेण सर्पाणां गतोऽन्तं तद्वदस्व मे ॥ १ ॥ निखिलेन यथातत्त्वं सौते सर्वमशेषतः । आस्तीकश्च द्विजश्रेष्ठः किमर्थं जपतां वरः । मोक्षयामास भुजगान् प्रदीप्ताद्वसुरेतसः ॥ २ ॥ कस्य पुत्रः स राजासीत् सर्पसत्रं य आहरत् । स च द्विजातिप्रवरः कस्य पुत्रोऽभिधत्स्व मे ॥ ३ ॥

सौतिरुवाच । महदाख्यानमास्तीकं यथैतत् प्रोच्यते द्विज । सर्वमेतदशेषेण शृणु मे वदताम्बर ॥ ४ ॥

शौनक उवाच । श्रोतुमिच्छाम्यशेषेण कथामेतां मनोरमाम् । आस्तीकस्य पुराणर्षेर्ब्राह्मणस्य यशस्विनः ॥ ५ ॥

सौतिरुवाच । इतिहासमिमं विप्राः पुराणं परिचक्षते । कृष्णद्वैपायनप्रोक्तं नैमिषारण्यवासिषु ॥ ६ ॥ पूर्वं प्रचोदितः सूतः पिता मे लोमहर्षणः । शिष्यो व्यासस्य मेधावी ब्राह्मणेष्विदमुक्तवान् ॥ ७ ॥ तस्मादहमुपश्रुत्य प्रवक्ष्यामि यथातथम् । इदमास्तीकमाख्यानं तुभ्यं शौनक पृच्छते ॥ ८ ॥ कथयिष्याम्यशेषेण सर्वपापप्रणाशनम् । आस्तीकस्य पिता ह्यासीत् प्रजापतिसमः प्रभुः ॥ ९ ॥ ब्रह्मचारी यताहारस्तपस्युग्रे रतः सदा । जरत्कारुरिति ख्यात ऊर्द्धरेता महातपाः ॥ १० ॥ यायावराणां प्रवरो धर्मज्ञः संशितव्रतः । स कदाचिन्महाभागस्तपोबलसम-

ष्ठितः॥ ११॥ चचार पृथिवीं सर्वां यत्रसायंगृहो मुनिः। तीर्थेषु च समाप्लावं कुर्वन्नटति सर्वशः॥ १२॥ चरन्दीक्षां महातेजा दुश्चरामकृतात्मभिः। वायुभक्षो निराहारः शुष्यन्ननिमिषो मुनिः॥ १३॥ इतस्ततः परिचरन्दीप्तपावकसप्रभः। अटमानः कदाचित् स्वान् स ददर्श पितामहान्॥ १४॥ लम्बमानान्महागर्ते पादैरूर्ध्वैरवाङ्मुखान्। तानब्रवीत्स दृष्ट्वैव जरत्कारुः पितामहान्॥ १५॥ के भवन्तोऽवलम्बन्ते गर्ते ह्यस्मिन्नधोमुखाः। वीरणस्तम्बके लग्नाः सर्वतः परिभक्षिते। मूषिकेण निगूढेन गर्तेऽस्मिन्नित्यवासिना॥ १६॥

पितर ऊचुः। यायावरा नाम वयमृषयः संशितव्रताः। सन्तानप्रक्षयाद्ब्रह्मन्नधो गच्छाम मेदिनीम्॥ १७॥ अस्माकं सन्ततिस्त्वेको जरत्कारुरिति स्मृतः। मन्दभाग्योऽल्पभाग्यानां तप एकं समास्थितः॥ १८॥ न स पुत्रान् जनयितुं दारान्मूढश्चिकीर्षति। तेन लम्बामहे गर्ते सन्तानस्य क्षयादिह॥ १९॥ अनाथास्तेन नाथेन यथा दुष्कृतिनस्तथा। कस्त्वं बन्धुरिवास्माकमनुशोचसि सत्तम॥ २०॥ ज्ञातुमिच्छामहे ब्रह्मन् को भवानिह नः स्थितः। किमर्थं चैव नः शोच्यानशोचसि सत्तम ॥ २१॥

जरत्कारुरुवाच। मम पूर्वे भवन्तो वै पितरः सपितामहाः। ब्रूत किं करवाण्यद्य जरत्कारुरहं स्वयम्॥ २२॥

पितर ऊचुः। यतस्व यत्नवांस्तात सन्तानाय कुलस्य नः। आत्मनोऽर्थेऽस्मदर्थे च धर्म इत्येव वा विभो॥ २३॥ न हि धर्मफलैस्तात न तपोभिः सुसञ्चितैः। तां गतिं प्राप्नुवन्तीह पुत्रिणो यां व्रजन्ति वै॥ २४॥ तद्दारग्रहणे यत्नं सन्तत्यां च मनः कुरु। पुत्रकास्मन्नियोगात्त्वमेतन्नः परमं हितम्॥ २५॥

जरत्कारुरुवाच। न दारान्वै करिष्येऽहं न धनं जीविता-

र्थेत: । भवतान्तु हितार्थाय करिष्ये दारसंग्रहम् ॥ २६ ॥ समयेन च कर्त्तोऽहमनेन विधिपूर्वकम् । तथा यद्युपलप्स्यामि करिष्ये नान्यथा ह्यहम् ॥२७॥ सनाम्नी या भवित्री मे दित्सिता चैव बन्धुभि: । भैक्ष्यवत्तामहं कन्यामुपयंस्ये विधानत: ॥ २८ ॥ दरिद्राय हि भार्य्यां को मे दास्यति विशेषत: । प्रतिग्रहीष्ये भिक्षान्तु यदि कश्चित् प्रदास्यति ॥ २६ ॥ एवं दारक्रियाहेतो: प्रयतिष्ये पितामहा: । अनेन विधिना शश्वन्न करिष्येऽहमन्यथा ॥ ३०॥ तत्र चोत्पत्स्यते जन्तुर्भवतां तारणाय वै । शाश्वतं स्थानमासाद्य मोदन्तां पितरो मम ॥ ३१ ॥

इत्यादिपर्व्वण्यास्तीके त्रयोदशोऽध्याय: ॥ १३ ॥

—०:०—

सौतिरुवाच । ततो निवेशाय तदा स विप्र: शंसितव्रत: । महीं चचार दारार्थी न च दारानविन्दत ॥ १ ॥ स कदाचिद्वनं गत्वा विप्र: पितृवच: स्मरन् । चुक्रोश कन्याभिक्षार्थी तिस्रो वाच: शनैरिव ॥ २ ॥ तं वासुकि: प्रत्यगृह्णादुद्यम्य भगिनीं तदा । न स तां प्रतिजग्राह न सनाम्नीति चिन्तयन् ॥ ३ ॥ सनाम्नीं चोद्यतां भार्य्यां गृह्णीयामिति तस्य हि । मनो निविष्टमभवज्जरत्कारोर्महात्मन: ॥ ४ ॥ तमुवाच महाप्राज्ञो जरत्कारुर्महातपा: । किंनाम्नी भगिनीयं ते ब्रूहि सत्यं भुजङ्गम ॥ ५ ॥

वासुकिरुवाच । जरत्कारो जरत्कारु: स्वसेयमनुजा मम । प्रतिगृह्णीष्व भार्य्यार्थे मया दत्तां सुमध्यमाम् । त्वदर्थं रक्षिता पूर्वं प्रतीच्छ मां द्विजोत्तम ॥ ६ ॥ एवमुक्त्वा तत: प्रादाद्भार्य्यार्थे वरवर्णिनीम् । स च तां प्रतिजग्राह विधिदृष्टेन कर्म्मणा ॥ ७ ॥

इत्यादिपर्व्वणि आस्तीके चतुर्दशोऽध्याय: ॥ १४ ॥

—•—

सौतिरुवाच। मात्रा हि भुजगाः शप्ताः पूर्वं ब्रह्मविदाम्वर। जनमेजयस्य वो यज्ञे धक्ष्यत्यनिलसारथिः ॥ १ ॥ तस्य शापस्य शान्त्यर्थं प्रददौ पन्नगोत्तम। स्वसारमृषये तस्मै सुव्रताय महात्मने ॥ २ ॥ स च तां प्रतिजग्राह विधिदृष्टेन कर्मणा। आस्तीको नाम पुत्रश्च तस्यां जज्ञे महामनाः ॥ ३ ॥ तपस्वी च महात्मा च वेदवेदाङ्गपारगः। समः सर्वस्य लोकस्य पितृमातृभयापहः ॥ ४ ॥ अथ दीर्घस्य कालस्य पाण्डवेयो नराधिपः। आजहार महायज्ञं सर्पसत्रमिति श्रुतिः ॥ ५ ॥ तस्मिन् प्रवृत्ते सत्रे तु सर्पाणामन्तकाय वै। मोचयामास तान्नागानास्तीकः सुमहातपाः ॥ ६ ॥ भ्रातृंश्च मातुलांश्चैव तथैवान्यान् स पन्नगान्। पितृंश्च तारयामास सन्तत्या तपसा तथा ॥ ७ ॥ व्रतैश्च विविधैर्ब्रह्मन् स्वाध्यायैश्चानृणोऽभवत्। देवांश्च तर्पयामास यज्ञैर्विविधदक्षिणैः ॥ ८ ॥ ऋषींश्च ब्रह्मचर्य्येण सन्तत्या च पितामहान्। अपहृत्य गुरुं भारं पितृणां शंसितव्रतः ॥ ९ ॥ जरत्कारुर्गतः स्वर्गं सहितः स्वैः पितामहैः। आस्तीकञ्च सुतं प्राप्य धर्मं चानुत्तमं मुनिः ॥ १० ॥ जरत्कारुः सुमहता कालेन स्वर्गमीयिवान्। एतदाख्यानमास्तीकं यथावत्कथितं मया। प्रब्रूहि भृगुशार्दूल किमन्यत्कथयामि ते ॥ ११ ॥

इत्यादिपर्वणि आस्तीके पञ्चदशोऽध्यायः ॥ १५ ॥

—•—

शौनक उवाच। सौते त्वं कथयस्वेमां विस्तरेण कथां पुनः। आस्तीकस्य कवेः साधोः शुश्रूषा परमा हि नः ॥ १ ॥ मधुरं कथ्यते सौम्य श्लक्ष्णाक्षरपदं त्वया। प्रीयामहे भृशं तात पितेवेदं प्रभाषसे ॥ २ ॥ अस्मच्छुश्रूषणे नित्यं पिता हि निरतस्तव। आचष्टैतद्यथाख्यानं पिता ते त्वं तथा वद ॥ ३ ॥

सौतिरुवाच। आयुष्मन्निदमाख्यानमास्तीकं कथयामि ते।
यथाश्रुतं कथयतः सकाशाद्वै पितुर्मया ॥ ४ ॥ पुरा देवयुगे ब्रह्मन्
प्रजापतिसुते शुभे। आस्तां भगिन्यौ रूपेण समुपेतेऽद्भुतेऽनघ
॥ ५ ॥ ते भार्य्ये कश्यपस्यास्तां कद्रूश्च विनता च ह। प्रादा-
त्ताभ्यां वरं प्रीतः प्रजापतिसमः पतिः ॥ ६ ॥ कश्यपो धर्म्म-
पत्नीभ्यां मुदा परमया युतः। वरातिसर्गं श्रुत्वैवं कश्यपादुत्तमञ्च
ते ॥ ७ ॥ हर्षादप्यधिकां प्रीतिं प्रापतुः स्म वरस्त्रियौ। वव्रे
कद्रूः सुतान्नागान् सहस्रं तुल्यवर्च्चसः ॥ ८ ॥ द्वौ पुत्रौ विनता
वव्रे कद्रूः पुत्राधिकौ बले। तेजसा वपुषा चैव विक्रमेणाधिकौ
च तौ ॥ ९ ॥ तस्यै भर्त्ता वरं प्रादादध्यर्थं पुत्रमीप्सितम्।
एवमस्त्विति तं चाह कश्यपं विनता तदा ॥ १० ॥ यथावत्
प्रार्थितं लब्ध्वा वरं तुष्टाभवत्तदा। कृतकृत्या तु विनता लब्ध्वा
वीर्य्याधिकौ सुतौ ॥ ११ ॥ कद्रूश्च लब्ध्वा पुत्राणां सहस्रं तुल्य-
वर्च्चसाम्। धार्य्यौ प्रयत्नतो गर्भावित्युक्त्वा स महातपाः ॥ १२ ॥
ते भार्य्ये वरसन्तुष्टे कश्यपो वनमाविशत्।

सौतिरुवाच। कालेन महता कद्रूरण्डानां दशतीर्दश।
जनयामास विप्रेन्द्र द्वे चाण्डे विनता तदा ॥ १३ ॥ तयोरण्डानि
निदधुः प्रहृष्टाः परिचारिकाः। सोपस्वेदेषु भाण्डेषु पञ्चवर्ष-
शतानि च ॥ १४ ॥ ततः पञ्चशते काले कद्रूपुत्रा विनिःसृताः।
अण्डाभ्यां विनतायास्तु मिथुनं न व्यदृश्यत ॥ १५ ॥ ततः पुत्रा-
र्थिनी देवी व्रीड़िता च तपस्विनी। अण्डं बिभेद विनता तत्र
पुत्रमपश्यत ॥ १६ ॥ पूर्व्वार्द्धकायसम्पन्नमितरेणाप्रकाशता। स
पुत्रः क्रोधसंरब्धः शशापैनामिति श्रुतिः ॥ १७ ॥ योऽहमेवं कृतो
मातस्त्वया लोभपरीतया। शरीरेणासमग्रेण तस्माद्दासी भवि-
ष्यसि ॥ १८ ॥ पञ्चवर्षशतान्यस्या यया विस्पर्द्धसे सह। एष च
त्वां सुतो मातर्दासीत्वान्मोचयिष्यति ॥ १९ ॥ यद्येनमपि मातस्त्वं

माभिबाण्डविभेदनात् । न करिष्यस्त्वनङ्गं वा व्यङ्गं वापि यशस्विनम् ॥ २० ॥ प्रतिपालयितव्यस्ते जन्मकालोऽस्य धीरया । विशिष्टं बलमीप्सन्त्या पञ्चवर्षशतात्परः ॥ २१ ॥ एवं शप्त्वा ततः पुत्रो विनतामन्तरीक्षगः । अरुणो दृश्यते ब्रह्मन् प्रभातसमये सदा ॥ २२ ॥ आदित्यरथमध्यास्ते सारथ्यं समकल्पयत् । गरुडोऽपि यथाकालं जज्ञे पन्नगभोजनः ॥ २३ ॥ स जातमात्रो विनतां परित्यज्य खमाविशत् । आदास्यन्नात्मनो भोज्यमन्नं विहितमस्य यत् । विधात्रा भृगुशार्दूल क्षुधितः पतगेश्वरः ॥२४॥

इत्यादिपर्वणि आस्तीके षोड़शोऽध्यायः ॥ १६ ॥

---

सूत उवाच । एतस्मिन्नेव काले तु भगिन्यौ ते तपोधन । अपश्यतां समायातमुच्चैःश्रवसमन्तिकात् ॥ १ ॥ यन्तं देवगणाः सर्वे हृष्टरूपमपूजयन् । मथ्यमानेऽमृते जातमश्वरत्नमनुत्तमम् ॥ २ ॥ अमोघबलमश्वानामुत्तमं जगतां वरम् । श्रीमन्तमजरं दिव्यं सर्वलक्षणपूजितम् ॥ ३ ॥

शौनक उवाच । कथं तदमृतं देवैर्मथितं क्व च शंस मे । यत्र जज्ञे महावीर्य्यः सोऽश्वराजो महाद्युतिः ॥ ४ ॥

सौतिरुवाच । ज्वलन्तमचलं मेरुं तेजोराशिमनुत्तमम् । आक्षिपन्तं प्रभां भानोः स्वशृङ्गैः काञ्चनोज्ज्वलैः ॥ ५ ॥ कनकाभरणं चित्रं देवगन्धर्वसेवितम् । अप्रमेयमनाधृष्यमधर्मबहुलैर्जनैः ॥ ६ ॥ व्यालैराचरितं घोरैर्दिव्यौषधिविदीपितम् । नाकमावृत्य तिष्ठन्तमुच्छ्रयेण महागिरिम् ॥ ७ ॥ अगम्यं मनसाप्यन्यैर्नदीवृक्षसमन्वितम् । नानापतगसङ्घैश्च नादितं सुमनोहरैः ॥ ८ ॥ तस्य शृङ्गमुपारुह्य बहुरत्नाचितं शुभम् । अनन्तकल्पमुद्विद्धं सुराः सर्वे महौजसः ॥ ९ ॥ ते मन्त्रयितुमारब्धा-

सुखासीना दिवौकसः । अमृतार्थं समागम्य तपोनियमसंयुताः ॥ १० ॥ तत्र नारायणो देवो ब्रह्माणमिदमब्रवीत् । चिन्तयत्सु सुरेष्वेवं मन्त्रयत्सु च सर्वशः ॥ ११ ॥ देवैरसुरसङ्घैश्च मथ्यतां कलशोदधिः । भविष्यत्यमृतं तत्र मथ्यमाने महोदधौ ॥ १२ ॥ सर्वौषधीः समावाप्य सर्वरत्नानि चैव ह । मथध्वमुदधिं देवा वेत्स्यध्वममृतं ततः ॥ १३ ॥

इत्यादिपर्वणि अमृतमन्थने सप्तदशोऽध्यायः ॥ १७ ॥

---

सौतिरुवाच । ततोऽभ्रशिखराकारैर्गिरिशृङ्गैरलङ्कृतम् । मन्दरं पर्वतवरं लताजालसमाकुलम् ॥ १ ॥ नानाविहगसङ्घुष्टं नानादंष्ट्रिसमाकुलम् । किन्नरैरप्सरोभिश्च देवैरपि च सेवितम् ॥ २ ॥ एकादश सहस्राणि योजनानां समुच्छ्रितम् । अधोभूमेः सहस्रेषु तावत्स्वेव प्रतिष्ठितम् ॥ ३ ॥ तमुद्धर्त्तुमशक्ता वै सर्वे देवगणास्तदा । विष्णुमासीनमभ्येत्य ब्रह्माणं चेदमब्रुवन् ॥ ४ ॥ भवन्तावत्र कुर्वीतां बुद्धिं नैःश्रेयसीं पराम् । मन्दरोद्धरणे यत्नः क्रियताञ्च हिताय नः ॥ ५ ॥

सौतिरुवाच । तथेति चाब्रवीद्विष्णुर्ब्रह्मणा सह भार्गव । अचोदयदमेयात्मा फणीन्द्रं पद्मलोचनः ॥ ६ ॥ ततोऽनन्तः समुत्थाय ब्रह्मणा परिचोदितः । नारायणेन चाप्युक्तस्तस्मिन् कर्मणि वीर्य्यवान् ॥ ७ ॥ अथ पर्वतराजानं तमनन्तो महाबलः । उज्जहार बलाद्ब्रह्मन् सवनं सवनौकसम् ॥ ८ ॥ ततस्तेन सुराः सार्द्धं समुद्रमुपतस्थिरे । तमूचुरमृतस्यार्थे निर्मथिष्यामहे जलम् ॥ ९ ॥ अपाम्पतिरथोवाच ममाप्यंशो भवेत्ततः । सोढास्मि विपुलं मर्द्दं मन्दरभ्रमणादिति ॥ १० ॥ ऊचुश्च कूर्मराजानमकूपारे सुरासुराः । अधिष्ठानं गिरेरस्य भवान् भवितुमर्हति

॥ ११ ॥ कूर्मेण तु तथेत्युक्ता पृष्ठमस्य समर्पितम् । तं शैलं तस्य पृष्ठस्थं यन्त्रेणेन्द्रो न्यपीडयत् ॥ १२ ॥ मन्थानं मन्दरं कृत्वा तथा नेत्रञ्च वासुकिम् । देवा मथितुमारब्धाः समुद्रं निधिमम्भसाम् ॥ १३ ॥ अमृतार्थे पुरा ब्रह्मंस्तथैवासुरदानवाः । एकमन्तमुपाश्लिष्टा नागराज्ञो महासुराः ॥ १४ ॥ विबुधाः सहिताः सर्वे यतः पुच्छं ततः स्थिताः । अनन्तो भगवान्देवो यतो नारायणस्ततः । शिर उत्क्षिप्य नागस्य पुनः पुनरवाक्षिपत् ॥ १५ ॥ वासुकेरथ नागस्य सहसा क्षिप्यतः सुरैः । सधूमाः सार्चिषो वाता निष्पेतुरसकृन्मुखात् ॥ १६ ॥ ते धूमसङ्घाः सम्भूता मेघसङ्घाः सविद्युतः । अभ्यवर्षन् सुरगणान् श्रमसन्तापकर्षितान् ॥ १७ ॥ तस्माच्च गिरिकूटाग्रात् प्रच्युताः पुष्पवृष्टयः । सुरासुरगणान् सर्वान् समन्तात्समवाकिरन् ॥ १८ ॥ बभूवात्र महानादो महामेघरवोपमः उदधेर्मथ्यमानस्य मन्दरेण सुरासुरैः ॥ १९ ॥ तत्र नानाजलचरा विनिष्पिष्टा महाद्रिणा । विलयं समुपाजग्मुः शतशो लवणाम्भसि ॥२०॥ वारुणानि च भूतानि विविधानि महीधरः । पातालतलवासीनि विलयं समुपानयत् ॥ २१ ॥ तस्मिंश्च भ्राम्यमाणेऽद्रौ सङ्घृष्यन्तः परस्परम् । न्यपतन् पतगोपेताः पर्वताग्रान्महाद्रुमाः ॥ २२ ॥ तेषां सङ्घर्षजश्चाग्निरर्चिर्भिः प्रज्वलन्मुहुः । विद्युद्भिरिव नीलाभ्रमावृणोन्मन्दरं गिरिम् ॥ २३ ॥ ददाह कुञ्जरांस्तत्र सिंहांश्चैव विनिर्गतान् । विगतासूनि सर्वाणि सत्त्वानि विविधानि च ॥२४ ॥ तमग्निममरश्रेष्ठः प्रदहन्तमितस्ततः । वारिणा मेघजेनेन्द्रः शमयामास सर्वशः ॥ २५ ॥ ततो नानाविधास्तत्र सुस्रुवुः सागराम्भसि । महाद्रुमाणां निर्यासा बहवश्चौषधीरसाः ॥ २६ ॥ तेषाममृतवीर्य्याणां रसानां पयसैव च । अमरत्वं सुरा जग्मुः काञ्चनस्य च निस्रवात् ॥ २७ ॥ ततस्तस्य समुद्रस्य तज्जात-

मुदकं पयः । रसोत्तमैर्विमिश्रञ्च ततः क्षीरादभूद्घृतम् ॥ २८ ॥
ततो ब्रह्माणमासीनं देवा वरदमब्रुवन् । श्रान्ताः स्म सुभृशं
ब्रह्मन्नोद्भवत्यमृतञ्च तत् ॥ २९ ॥ विना नारायणं देवं सर्वेऽन्ये
देवदानवाः । चिरारब्धमिदञ्चापि सागरस्यापि मन्थनम् ॥३०॥
ततो नारायणं देवं ब्रह्मा वचनमब्रवीत् । विधत्स्वैषां बलं विष्णो
भवानत्र परायणम् ॥ ३१ ॥

विष्णुरुवाच । बलं ददामि सर्वेषां कर्मैतद्ये समास्थिताः ।
क्षोभ्यतां कलशः सर्वैर्मन्दरः परिवर्त्त्यताम् ॥ ३२ ॥

सूत उवाच । नारायणवचः श्रुत्वा बलिनस्ते महोदधेः ।
तत्पयः सहिता भूयश्चक्रिरे भृशमाकुलम् ॥ ३३ ॥ ततः शत-
सहस्रांशुर्मथ्यमानात्तु सागरात् । प्रसन्नात्मा समुत्पन्नः सोमः
शीतांशुरुज्ज्वलः ॥३४॥ श्रीरनन्तरमुत्पन्ना घृतात्पाण्डरवासिनी ।
सुरादेवी समुत्पन्ना तुरगः पाण्डरस्तथा ॥ ३५ ॥ कौस्तुभस्तु
मणिर्दिव्य उत्पन्नो घृतसम्भवः । मरीचिविकचः श्रीमान्नारा-
यण उरोगतः ॥ ३६ ॥ (पारिजातस्तु तत्रैव सुरभिस्तु महामुने ।
अजायत तदा ब्रह्मन् सर्वकामफलप्रदे ॥३७॥) श्रीः सुरा चैव सोमश्च
तुरगश्च मनोजवः । यतो देवास्ततो जग्मुरादित्यपथमाश्रिताः
॥ ३८ ॥ धन्वन्तरिस्ततो देवो वपुष्मानुदतिष्ठत । श्वेतं कम-
ण्डलुं बिभ्रदमृतं यत्र तिष्ठति ॥३९॥ एतदत्यद्भुतं दृष्ट्वा दानवानां
समुत्थितः । अमृतार्थे महान्नादो ममेदमिति जल्पताम् ॥ ४० ॥
श्वेतैर्दन्तैश्चतुर्भिस्तु महाकायस्ततः परम् । ऐरावणो महानागो-
ऽभवद्वज्रभृता धृतः ॥ ४१ ॥ अतिनिर्मथनादेव कालकूटस्तथा-
परः । जगदावृत्य सहसा सधूमोऽग्निरिव ज्वलन् ॥ ४२ ॥
त्रैलोक्यं मोहितं यस्य गन्धमाघ्राय तद्विषम् । प्राग्रसल्लोकरक्षार्थं
ब्रह्मणो वचनाच्छिवः ॥ ४३ ॥ दधार भगवान् कण्ठे मन्त्रमूर्त्ति-
र्महेश्वरः । तदाप्रभृति देवस्तु नीलकण्ठ इति श्रुतिः ॥ ४४ ॥

एतत्तदद्भुतं दृष्ट्वा निराशा दानवाः स्थिताः। अमृतार्थे च
लक्ष्म्यर्थे महान्तं वैरमाश्रिताः ॥ ४५ ॥ ततो नारायणो मायां
मोहिनीं समुपाश्रितः। स्त्रीरूपमद्भुतं कृत्वा दानवानभिसं-
श्रितः ॥ ४६ ॥ ततस्तदमृतं तस्यै ददुस्ते मूढचेतसः। स्त्रियै
दानवदैतेयाः सर्वे तद्गतमानसाः ॥ ४७ ॥

इत्यादिपर्वण्यमृतमन्थने अष्टादशोऽध्यायः ॥ १८ ॥

—०:०—

सौतिरुवाच। अथावरणमुख्यानि नानाप्रहरणानि च।
प्रगृह्याभ्यद्रवन्देवान् सहिता दैत्यदानवाः ॥ १ ॥ ततस्तदमृतं
देवो विष्णुरादाय वीर्य्यवान्। जहार दानवेन्द्रेभ्यो नरेण
सहितः प्रभुः ॥ २ ॥ ततो देवगणाः सर्वे पपुस्तदमृतं तदा।
विष्णोः सकाशात् संप्राप्य संभ्रमे तुमुले सति ॥ ३ ॥ ततः
पिबत्सु तत्कालं देवेष्वमृतमीप्सितम्। राहुर्विबुधरूपेण दानवः
प्रापिबत्तदा ॥ ४ ॥ तस्य कण्ठमनुप्राप्ते दानवस्यामृते तदा।
आख्यातं चन्द्रसूर्य्याभ्यां सुराणां हितकाम्यया ॥ ५ ॥ ततो
भगवता तस्य शिरश्छिन्नमलंकृतम्। चक्रायुधेन चक्रेण पिबतो-
ऽमृतमोजसा ॥ ६ ॥ तच्छैलशृङ्गप्रतिमं दानवस्य शिरो महत्।
चक्रच्छिन्नं खमुत्पत्य ननादातिभयङ्करम् ॥ ७ ॥ तत्कबन्धं पपा-
तास्य विस्फुरद्धरणीतले। सपर्वतवनद्वीपां दैत्यस्याकम्पयन्-
महीम् ॥ ८ ॥ ततो वैरविनिर्बन्धः कृतो राहुमुखेन वै। शाश्वत-
श्चन्द्रसूर्य्याभ्यां ग्रसत्यद्यापि चैव तौ ॥ ९ ॥ विहाय भगवांश्चापि
स्त्रीरूपमतुलं हरिः। नानाप्रहरणैर्भीमैर्दानवान् समकम्पयत्
॥ १० ॥ ततः प्रवृत्तः संग्रामः समीपे लवणाम्भसः। सुराणा-
मसुराणाञ्च सर्वघोरतरो महान् ॥ ११ ॥ प्रासाश्च विपुलास्तीक्ष्णा
न्यपतन्त सहस्रशः। तोमराश्च सुतीक्ष्णाग्राः शस्त्राणि विविधानि

च ॥ १२ ॥ ततोऽसुराश्चक्रभिन्ना वमन्तो रुधिरं बहु । असि-
शक्तिगदारुग्णा निपेतुर्धरणीतले ॥ १३ ॥ छिन्नानि पट्टिशैश्चैव
शिरांसि युधि दारुणैः । तप्तकाञ्चनचित्राणि निपेतुरनिशं
तदा ॥ १४ ॥ रुधिरेणानुलिप्ताङ्गा निहताश्च महासुराः । अद्रीणा-
मिव कूटानि धातुरक्तानि शेरते ॥ १५ ॥ हाहाकारः समभव-
त्तत्र तत्र सहस्रशः । अन्योन्यं छिन्दतां शस्त्रैरादित्ये लोहिता-
यति ॥ १६ ॥ परिघैरायसैस्तीक्ष्णैः सन्निकर्षे च मुष्टिभिः ।
निघ्नतां समरेऽन्योन्यं शब्दो दिवमिवास्पृशत् ॥ १७ ॥ छिन्धि
भिन्धि प्रधाव त्वं पातयाभिसरेति च । व्यश्रूयन्त महाघोराः
शब्दास्तत्र समन्ततः ॥ १८ ॥ एवं सुतुमुले युद्धे वर्त्तमाने महा-
भये । नरनारायणौ देवौ समाजग्मतुराहवम् ॥ १९ ॥ तत्र
दिव्यं धनुर्दृष्ट्वा नरस्य भगवानपि । चिन्तयामास तच्चक्रं विष्णु-
र्दानवसूदनम् ॥ २० ॥ ततोऽम्बराच्चिन्तितमात्रमागतं महाप्रभं
चक्रममित्रतापनम् । विभावसोस्तुल्यमकुण्ठमण्डलं सुदर्शनं संयति
भीमदर्शनम् ॥ २१ ॥ तदागतं ज्वलितहुताशनप्रभं भयङ्करं
करिकरबाहुरच्युतः । मुमोच वै प्रबलवदुग्रवेगवान्महाप्रभं पर-
नगरावदारणम् ॥ २२ ॥ तदन्तकज्वलनसमानवर्चसं पुनः पुन-
र्न्यपतत वेगवत्तदा । विदारयद्दितिदनुजान् सहस्रशः करेरितं
पुरुषवरेण संयुगे ॥ २३ ॥ दहत् क्वचिज्ज्वलन इवावलेलिहत्
प्रसह्य तानसुरगणान्न्यकृन्तत । प्रवेरितं वियति मुहुः क्षितौ
तथा पपौ रणे रुधिरमथो पिशाचवत् ॥ २४ ॥ तथासुरा गिरि-
भिरदीनचेतसो मुहुर्मुहुः सुरगणमर्दयंस्तदा । महाबला विग-
लितमेघवर्चसः सहस्रशो गगनमभिप्रपद्य ह ॥ २५ ॥ अथाम्बरा-
द्भयजननाः प्रपेदिरे सपादपा बहुविधमेघरूपिणः । महाद्रयः
परिगलिताग्रसानवः परस्परं द्रुतमभिहत्य सस्वनाः ॥ २६ ॥ ततो
मही प्रविचलिता सकानना महाद्रिपाताभिहता समन्ततः । पर-

सुरं भृशमभिगर्जतां मुहुरस्त्राजिरे भृशमभिसम्प्रवर्त्तिते ॥ २७ ॥ नरस्ततो वरकनकाग्रभूषणैर्महेषुभिर्गगनपथं समावृणोत् । विदारयन् गिरिशिखराणि पत्रिभिर्महाभयेऽसुरगणविग्रहे तदा ॥२८॥ ततो महीं लवणजलञ्च सागरं महासुराः प्रविविशुरर्दिताः सुरैः । वियद्गतं ज्वलितहुताशनप्रभं सुदर्शनं परिकुपितं निशम्य ते ॥ २९ ॥ ततः सुरैर्विजयमवाप्य मन्दरः स्वमेव देशं गमितः सुपूजितः । विनाद्य खं दिवमपि चैव सर्व्वशस्ततो गताः सलिलधरा यथागतम् ॥ ३० ॥ ततोऽमृतं सुनिहितमेव चक्रिरे सुराः परां मुदमभिगम्य पुष्कलाम् । ददौ च तं निधिममृतस्य रक्षितुं किरीटिने बलभिदथामरैः सह ॥ ३१ ॥

इत्यादिपर्व्वण्यमृतमन्थनं समाप्तं एकोनविंशोऽध्यायः ॥ १९ ॥

सौतिरुवाच । एतत्ते कथितं सर्व्वममृतं मथितं यथा । यत्र सोऽश्वः समुत्पन्नः श्रीमानतुलविक्रमः ॥ १ ॥ यं निशम्य तदा कद्रूर्विनतामिदमब्रवीत् । उच्चैःश्रवा हि किंवर्णो भद्रे प्रब्रूहि माचिरम् ॥ २ ॥

विनतोवाच । श्वेत एवाश्वराजोऽयं किं वा त्वं मन्यसे शुभे । ब्रूहि वर्णं त्वमप्यस्य ततोऽत्र विपणावहे ॥ ३ ॥

कद्रूरुवाच । कृष्णवालमहं मन्ये हयमेनं शुचिस्मिते । एहि सार्द्धं मया दीव्य दासीभावाय भामिनि ॥ ४ ॥

सौतिरुवाच । एवं ते समयं कृत्वा दासीभावाय वै मिथः । जग्मतुः स्वगृहानेव श्वो द्रक्ष्याव इति स्म ह ॥ ५ ॥ ततः पुत्रसहस्रन्तु कद्रूर्जिह्मं चिकीर्षती । आज्ञापयामास तदा वाला भूत्वाञ्जनप्रभाः ॥ ६ ॥ आविशध्वं हयं क्षिप्रन्दासी न स्यामहं यथा । नावपद्यन्त ये वाक्यं तान् शशाप भुजङ्गमान् ॥ ७ ॥

सर्पसत्र वर्त्तमाने पावको वः प्रधक्ष्यति । जनमेजयस्य राजर्षेः पाण्डवेयस्य धीमतः ॥ ८ ॥ शापमेनन्तु शुश्राव स्वयमेव पितामहः । अतिक्रूरं समुत्सृष्टं कद्र्वा दैवादतीव हि ॥ ९ ॥ सार्द्धं देवगणैः सर्व्वैर्वाचं तामन्वमोदत । बहुत्वं प्रेक्ष्य सर्पाणां प्रजानां हितकाम्यया ॥ १० ॥ तिग्मवीर्य्यविषा ह्येते दन्दशूका महाबलाः । तेषां तीक्ष्णविषत्वाद्धि प्रजानाञ्च हिताय च ॥ ११ ॥ युक्तं मात्रा कृतं तेषां परपीड़ोपसर्पिणाम् । अन्येषामपि सत्त्वानां नित्यं दोषपरास्तु ये ॥ १२ ॥ तेषां प्राणान्तिको दण्डो दैवेन विनिपात्यते । एवं सम्भाष्य देवस्तु पूज्य कद्रूञ्च तां तदा ॥ १३॥ आहूय कश्यपं देव इदं वचनमब्रवीत् । यदेते दन्दशूकाश्च सर्पा जातास्त्वयानघ ॥ १४ ॥ विषोल्वणा महाभोगा मात्रा शप्ताः परन्तप । तत्र मन्युस्त्वया तात न कर्त्तव्यः कथञ्चन ॥ १५ ॥ दृष्टं पुरातनं ह्येतद्यज्ञे सर्पविनाशनम् । इत्युक्त्वा सृष्टिकृद्देवस्तं प्रसाद्य प्रजापतिम् । प्रादाद्विषहरीं विद्यां कश्यपाय महात्मने ॥१६॥

इत्यादिपर्व्वणि सौपर्णे विंशोऽध्यायः ॥ २० ॥

—०*०—

सौतिरुवाच । ततो रजन्यां व्युष्टायां प्रभातेऽभ्युदिते रवौ । कद्रूश्च विनता चैव भगिन्यौ ते तपोधन ॥ १ ॥ अमर्षिते सुसंरब्धे दास्ये कृतपणे तदा । जग्मतुस्तुरगं द्रष्टुमुच्चैःश्रवसमन्तिकात् ॥ २ ॥ ददृशातेऽथ ते तत्र समुद्रं निधिमम्भसाम् । महान्तमुदकागाधं क्षोभ्यमाणं महास्वनम् ॥ ३ ॥ तिमिङ्गिलझषाकीर्णं मकरैरावृतं तथा । सत्त्वैश्च बहुसाहस्रैर्नानारूपैः समावृतम् ॥ ४ ॥ भीषणैर्विकृतैरन्यैर्घोरैर्जलचरैस्तथा । उग्रैर्नित्यमनाधृष्यं कूर्मग्राहसमाकुलम् ॥ ५ ॥ आकरं सर्वरत्नानामालयं वरुणस्य च । नागानामालयं रम्यमुत्तमं सरितां पतिम् ॥ ६ ॥

पातालज्वलनावासमसुराणाञ्च बान्धवम्। भयङ्करञ्च सत्त्वानां पयसां निधिमव्ययम् ॥ ७ ॥ शुभं दिव्यममर्त्यानाममृतस्याकरं परम्। अप्रमेयमचिन्त्यञ्च सुपुण्यजलमद्भुतम् ॥ ८ ॥ घोरं जलचरारावरौद्रं भैरवनिःस्वनम्। गम्भीरावर्त्तकलिलं सर्वभूतभयङ्करम् ॥ ९ ॥ वेलान्दोलानिलचलं क्षोभोद्वेगसमुच्छ्रितम्। वीचीहस्तैः प्रचलितैर्नृत्यन्तमिव सर्वतः ॥ १० ॥ चन्द्रवृद्धिक्षयवशादुद्वृत्तोर्म्मिसमाकुलम्। पाञ्चजन्यस्य जननं रत्नाकरमनुत्तमम् ॥ ११ ॥ गां विन्दता भगवता गोविन्देनामितौजसा। वराहरूपिणा चान्तर्विक्षोभितजलाविलम् ॥ १२ ॥ ब्रह्मर्षिणा व्रतवता वर्षाणां शतमत्रिणा। अनासादितगाधञ्च पातालतलमव्ययम् ॥१३॥ अध्यात्मयोगनिद्राञ्च पद्मनाभस्य सेवतः। युगादिकालशयनं विष्णोरमिततेजसः ॥ १४ ॥ वज्रपातनसन्त्रस्तमैनाकस्याभयप्रदम्। डिम्बाहवार्दितानाञ्च असुराणां परायणम् ॥ १५ ॥ वडवामुखदीप्ताग्नेस्तोयहव्यप्रदं शिवम्। अगाधपारं विस्तीर्णमप्रमेयं सरित्पतिम् ॥ १६ ॥ महानदीभिर्बह्वीभिः स्पर्द्धयेव सहस्रशः। अभिसार्य्यमाणमनिशं ददृशाते महार्णवम्। आपूर्य्यमाणमत्यर्थं नृत्यमानमिवोर्म्मिभिः ॥ १७ ॥ गम्भीरं तिमिमकरोग्रसंकुलं तं गर्जन्तं जलचररावरौद्रनादैः। विस्तीर्णं ददृशतुरम्बरप्रकाशं तेऽगाधं निधिमुरुमम्भसामनन्तम् ॥ १८ ॥

इत्यादिपर्वणि सौपर्णे एकविंशतितमोऽध्यायः ॥ २१ ॥

---

सौतिरुवाच। नागाश्च सम्विदं कृत्वा कर्त्तव्यमिति तद्वचः। निःस्नेहा वै दहेन्माता असम्प्राप्तमनोरथा ॥ १ ॥ प्रसन्ना मोचयेदस्मांस्तस्माच्छापाच्च भाविनी। कृष्णं पुच्छं करिष्यामस्तुरगस्य न संशयः ॥ २ ॥ तथा हि गत्वा ते तस्य पुच्छे बाला इति

वैशम्पायन उवाच । गुरवे प्राङ्नमस्कृत्य मनोबुद्धिसमाधिभिः । संपूज्य च द्विजान् सर्वांस्तथान्यान् विदुषो जनान् ॥१॥ महर्षेर्विश्रुतस्येह सर्वलोकेषु धीमतः । प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यास्य महात्मनः ॥ २ ॥ श्रोतुं पात्रञ्च राजंस्त्वं प्राप्येमां भारतीं कथाम् । गुरोर्वक्त्रपरिस्पन्दो मनः प्रोत्साहतीव मे ॥३॥ शृणु राजन्यथा भेदः कुरुपाण्डवयोरभूत् । राज्यार्थे द्यूतसम्भूतो वनवासस्तथैव च ॥ ४ ॥ यथाच युद्धमभवत् पृथिवीक्षयकारकम् । तत्तेऽहं कथयिष्यामि पृच्छते भरतर्षभ ॥ ५ ॥ मृते पितरि ते वीरा वनादेत्य स्वमन्दिरम् । न चिरादेवविद्वांसो वेदे धनुषि चाभवन् ॥ ६ ॥ तांस्तथा सत्त्ववीर्य्यौजःसम्पन्नान् पौरसंमतान् । नामृषन् कुरवो दृष्ट्वा पाण्डवान् श्रीयशोभृतः ॥ ७ ॥ ततो दुर्य्योधनः क्रूरः कर्णश्च सहसौवलः । तेषां निग्रहनिर्वासान् विविधांस्ते समारभन् ॥ ८ । ततो दुर्य्योधनः क्रूरः कुणिकस्य मते स्थितः । पाण्डवान् विविधोपायैराज्यहेतोरपीडयत् ॥ ९ ॥ ददावथ विषं पापो भीमाय धृतराष्ट्रजः । जरयामास तद्वीरः सहान्नेन वृकोदरः ॥ १० ॥ प्रमाणकोट्यां संसुप्तं पुनर्बद्ध्वा वृकोदरम् । तोयेषु भीमं गङ्गायाः प्रक्षिप्य पुरमाव्रजत् ॥ ११ ॥ यदा विबुद्धः कौन्तेयस्तदा संछिद्य बन्धनम् । उदतिष्ठन्महाबाहुर्भीमसेनो गतव्यथः ॥ १२ ॥ आशीविषैः कृष्णसर्पैः सुप्तं चैनमदंशयत् । सर्वेष्वेवाङ्गदेशेषु न ममार च शत्रुहा ॥ १३ ॥ तेषान्तु विप्रकारेषु तेषु तेषु महामतिः । मोक्षणे प्रतिकारे च विदुरोऽवहितोऽभवत् ॥ १४ ॥ स्वर्गस्थो जीवलोकस्य यथा शक्रः सुखावहः । पाण्डवानां तथा नित्यं विदुरोऽपि सुखावहः ॥ १५ ॥ यदा तु विविधोपायैः संवृतैर्विवृतैरपि । नाशक्नोद्विनिहन्तुं तान्दैवभाव्यर्थरक्षितान् ॥ १६ ॥ ततः सम्मन्त्र्य सचिवैर्वृषदुःशासनादिभिः । धृतराष्ट्रमनुज्ञाप्य जातुषं गृह-

मादिशत् ॥ १७ ॥ सुतप्रियैषी तान्राजा पाण्डवानम्बिका-
सुतः । ततो विवासयामास राज्यभोगबुभुक्षया ॥ १८ ॥
ते प्रातिष्ठन्त सहिता नगरान्नागसाह्वयात् । प्रस्थाने चाभवन्-
मन्त्रो क्षत्ता तेषां महात्मनाम् ॥ १९ ॥ तेन मुक्ता जतुगृहान्-
निशीथे प्राद्रवन्वनम् । ततः सम्प्राप्य कौन्तेया नगरं वारणा-
वतम् ॥ २० ॥ न्यवसन्त महात्मानो मात्रा सह परन्तपाः । धृत-
राष्ट्रेण चाज्ञप्ता उषिता जातुषे गृहे ॥ २१ ॥ पुरोचनात् रक्ष-
माणाः संवत्सरमतन्द्रिताः । सुरुङ्गाङ्कारयित्वा ते विदुरेण
प्रचोदिताः । आदीप्य जातुषं वेश्म दग्ध्वा चैव पुरोचनम् ॥२२॥
प्राद्रवन् भयसंविग्ना मात्रा सह परन्तपाः । ददृशुर्दारुणं रक्षो
हिडिम्बं वननिर्झरे ॥ २३ ॥ हत्वा च तं राक्षसेन्द्रं भीताः सम-
वबोधनात् । निशि सम्प्राद्रवन् पार्था धार्त्तराष्ट्रभयार्दिताः ॥२४॥
प्राप्ता हिडिम्बा भीमेन यत्र जातो घटोत्कचः । एकचक्रां ततो
गत्वा पाण्डवाः संशितव्रताः ॥ २५ ॥ वेदाध्ययनसम्पन्नास्तेऽभवन्
ब्रह्मचारिणः । ते तत्र नियताः कालं कञ्चिदूषुर्नरर्षभाः ॥ २६ ॥
मात्रा सहैकचक्रायां ब्राह्मणस्य निवेशने । तत्रासमार क्षुधितं
पुरुषादं वृकोदरः ॥ २७ ॥ भीमसेनो महाबाहुर्बकं नाम महा-
बलम् । तत्रापि पुरुषव्याघ्रो बाहुवीर्य्येण पाण्डवः ॥ २८ ॥
निहत्य तरसा वीरो नागरान् पर्य्यसान्त्वयत् । ततस्ते शुश्रुवुः
कृष्णां पाञ्चालेषु स्वयम्वराम ॥ २९ ॥ श्रुत्वा चैवाभ्यगच्छन्त गत्वा
चैवालभन्त ताम् । ते तत्र द्रौपदीं लब्ध्वा परिसंवत्सरोषिताः
॥ ३० ॥ विदिता हास्तिनपुरं प्रत्याजग्मुररिन्दमाः । त उक्ता
धृतराष्ट्रेण राज्ञा शान्तनवेन च ॥ ३१ ॥ भ्रातृभिर्विग्रहस्तात
कथं वो न भवेदिति । अस्माभिः खाण्डवप्रस्थे युष्मद्वासोऽनु-
चिन्ततः ॥ ३२ ॥ तस्माज्जनपदोपेतं सुविभक्तमहापथम् ।
वासाय खाण्डवप्रस्थं व्रजध्वं गतमत्सराः ॥ ३३ ॥ तयोस्ते वच-

नाऽगमन् सह सर्वैः सुहृज्जनैः। नगरं खाण्डवप्रस्थं रत्नान्या-
दाय सर्वशः ॥३४॥ तत्र ते न्यवसन् पार्थाः संवत्सरगणान् बहून्।
वशे शस्त्रप्रतापेन कुर्वन्तोऽन्यान्महीभृतः ॥ ३५ ॥ एवं धर्मप्रधा-
नास्ते सत्यव्रतपरायणाः। अप्रमत्तोत्थिताः क्षान्ताः प्रतपन्तो-
ऽहितान् बहून् ॥ ३६ ॥ अजयद्भीमसेनस्तु दिशं प्राचीं महा-
यशाः। उदीचीमर्ज्जुनो वीरः प्रतीचीं नकुलस्तथा ॥ ३७ ॥
दक्षिणां सहदेवस्तु विजिग्ये परवीरहा। एवं चक्रुरिमां सर्वे
वशे कृत्स्नां वसुन्धराम् ॥ ३८ ॥ पञ्चभिः सूर्य्यसङ्काशैः सूर्य्येण च
विराजता। षट्सूर्य्येवाभवत् पृथ्वी पाण्डवैः सत्यविक्रमैः ॥३९॥
ततो निमित्ते कस्मिंश्चिद्धर्मराजो युधिष्ठिरः। वनं प्रस्थापया-
मास तेजस्वी सत्यविक्रमः ॥ ४० ॥ प्राणेभ्योऽपि प्रियतरं भ्रातरं
सव्यसाचिनम्। अर्ज्जुनं पुरुषव्याघ्रं स्थिरात्मानं गुणैर्युतम् ॥४१॥
स वै संवत्सरं पूर्णं मासं चैकं वनेऽवसत्। ततोऽगच्छद्धृषीकेशं
द्वारवत्यां कदाचन ॥ ४२ ॥ लब्धवांस्तत्र बीभत्सुर्भार्य्यां राजीव-
लोचनाम्। अनुजां वासुदेवस्य सुभद्रां भद्रभाषिणीम् ॥ ४३ ॥
सा शचीव महेन्द्रेण श्रीः कृष्णेनेव सङ्गता। सुभद्रा युयुजे
प्रीत्या पाण्डवेनार्जुनेन ह ॥ ४४ ॥ अतर्पयच्च कौन्तेयः पावके
हव्यवाहनम्। बीभत्सुर्वासुदेवेन सहितो नृपसत्तम ॥ ४५ ॥
नातिभारो हि पार्थस्य केशवेन सहाभवत्। व्यवसायसहायस्य
विष्णोः शत्रुबधेष्विव ॥ ४६ ॥ पार्थायाग्निर्ददौ चापि गाण्डीवं
धनुरुत्तमम्। इषुधी चाक्षयैर्वाणैरथञ्च कपिलक्षणम् ॥ ४७ ॥
मोचयामास बीभत्सुर्मयं यत्र महासुरम्। स चकार सभां
दिव्यां सर्वरत्नसमन्विताम् ॥ ४८ ॥ तस्यां दुर्य्योधनो मन्दो लोभं
चक्रे सुदुर्मतिः। ततोऽक्षैर्वञ्चयित्वा च सौबलेन युधिष्ठिरम्।
वनं प्रस्थापयामास सप्तवर्षाणि पञ्च च ॥ ४९ ॥ अज्ञातमेकं
राष्ट्रे च ततो वर्षं त्रयोदशम्। ततश्चतुर्दशे वर्षे याचमानः स्वकं

वसु ॥ ५० ॥ नालभन्त महाराज ततो युद्धमवर्त्तत। ततस्ते
बलमुत्साद्य हत्वा दुर्य्योधनं नृपम् ॥ ५१ ॥ राज्यं विहतभूयिष्ठं
प्रत्यपद्यन्त पाण्डवाः। एवमेतत् पुरावृत्तं तेषामक्लिष्टकर्म्मणाम्।
भेदो राज्यविनाशाय जयश्च जयतांवर ॥ ५२ ॥

इत्यादिपर्व्वण्यादिवंशावतारणपर्व्वणि एकषष्टोऽध्यायः ॥ ६१ ॥

—०•०—

जनमेजय उवाच। कथितं वै समासेन त्वया सर्व्वं द्विजो-
त्तम। महाभारतमाख्यानं कुरूणां चरितं महत् ॥ १ ॥ कथां
त्वमद्य चित्रार्थां कथयस्व तपोधन। विस्तरश्रवणे जातं कौतू-
हलमतीव मे ॥ २ ॥ स भवान् विस्तरेणेमां पुनराख्यातुमर्हति।
न हि तृप्यामि पूर्व्वेषां शृण्वानश्चरितं महत् ॥ ३ ॥ न तत्
कारणमल्पं वै धर्म्मज्ञा यत्र पाण्डवाः। अवध्यान् सर्व्वशो जघ्नुः
प्रशस्यन्ते च मानवैः ॥ ४ ॥ किमर्थं ते नरव्याघ्राः शक्ताः सन्तो
ह्यनागसः। प्रयुज्यमानान् संक्लेशान् क्षान्तवन्तो दुरात्मनाम् ॥५॥
कथं नागायुतप्राणो बाहुशाली वृकोदरः। परिक्लिश्यन्नपि क्रोधं
धृतवान्वै द्विजोत्तम ॥ ६ ॥ कथं सा द्रौपदी कृष्णा क्लिश्यमाना
दुरात्मभिः। शक्ता सती धार्त्तराष्ट्रान्नादहत् क्रोधचक्षुषा ॥ ७ ॥
कथं व्यसनिनं द्यूते पार्थौ माद्रीसुतौ तदा। अन्वयुस्ते नरव्याघ्रा
बाध्यमाना दुरात्मभिः ॥ ८ ॥ कथं धर्म्मभृतां श्रेष्ठः सुतो धर्म्मस्य
धर्म्मवित्। अनर्हः परमं क्लेशं सोढवान् स युधिष्ठिरः। कथं
च बहुलाः सेनाः पाण्डवः कृष्णसारथिः। अस्यन्नेकोऽनयत् सर्व्वाः
पितृलोकं धनञ्जयः ॥ ९ ॥ एतदाचक्ष्व मे सर्व्वं यथावृत्तं तपो-
धन। यद्यच्च कृतवन्तस्ते तत्र तत्र महारथाः ॥ १० ॥

वैशम्पायन उवाच। क्षणं कुरु महाराज विपुलोऽयमनु-
क्रमः। पुण्याख्यानस्य वक्तव्यः कृष्णद्वैपायनेरितः ॥ ११ ॥ महर्षेः

सर्वलोकेषु पूजितस्य महात्मनः। प्रवक्ष्यामि मतं कृत्स्नं व्यास-
स्यामिततेजसः ॥१२॥ इदं शतसहस्रं हि श्लोकानां पुण्यकर्मणाम्।
सत्यवत्यात्मजेनेह व्याख्यातममितौजसा ॥ १३ ॥ य इदं श्रावये-
द्विद्वान् ये चेदं शृणुयुर्नराः। ते ब्रह्मणः स्थानमेत्य प्राप्नुयुर्देव-
तुल्यताम् ॥ १४ ॥ इदं हि वेदैः समितं पवित्रमपि चोत्तमम्।
श्रव्याणामुत्तमं चेदं पुराणमृषिसंस्तुतम् ॥ १५ ॥ अस्मिन्नर्थश्च
कामश्च निखिलेनोपदिश्यते। इतिहासे महापुण्ये बुद्धिश्च परि-
नैष्ठिकी ॥ १६ ॥ अक्षुद्रान् दानशीलांश्च सत्यशीलाननास्तिकान्।
कार्ष्णं वेदमिमं विद्वान् श्रावयित्वार्थमश्नुते ॥ १७ ॥ भ्रूणहत्या-
कृतं चापि पापं जह्यादसंशयम्। इतिहासमिमं श्रुत्वा पुरु-
षोऽपि सुदारुणः ॥ १८ ॥ मुच्यते सर्वपापेभ्यो राहुणा चन्द्रमा
यथा। जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा ॥ १९ ॥
महीं विजयते राजा शत्रूंश्चापि पराजयेत्। इदं पुंसवनं श्रेष्ठ-
मिदं स्वस्त्ययनं महत् ॥ २० ॥ महिषीयुवराजाभ्यां श्रोतव्यं
बहुशस्तथा। वीरं जनयते पुत्रं कन्यां वा राज्यभागिनीम् ॥२१॥
धर्मशास्त्रमिदं पुण्यमर्थशास्त्रमिदं परम्। मोक्षशास्त्रमिदं प्रोक्तं
व्यासेनामितबुद्धिना ॥ २२ ॥ सम्प्रत्याचक्षते चेदं तथा श्रोष्यन्ति
चापरे। पुत्राः शुश्रूषवः सन्ति प्रेष्याश्च प्रियकारिणः ॥ २३ ॥
शरीरेण कृतं पापं वाचा च मनसैव च। सर्वं स त्यजति क्षिप्रं
य इदं शृणुयान्नरः ॥ २४ ॥ भरतानां महज्जन्म शृण्वतामन-
सूयताम्। नास्ति व्याधिभयं तेषां परलोकभयं कुतः ॥ २५ ॥
धन्यं यशस्यमायुष्यं पुण्यं स्वर्ग्यं तथैव च। कृष्णद्वैपायनेनेदं
कृतं पुण्यं चिकीर्षुणा ॥ २६ ॥ कीर्त्तिं प्रथयता लोके पाण्ड-
वानां महात्मनाम्। अन्येषां क्षत्रियाणाञ्च भूरिद्रविणतेजसाम्
॥ २७ ॥ सर्वविद्यावदातानां लोके प्रथितकर्मणाम्। य इदं
मानवो लोके पुण्यार्थे ब्राह्मणान् शुचीन् ॥ २८ ॥ श्रावयेत महा-

पुण्यं तस्य धर्म्मः सनातनः । कुरूणां प्रथितं वंशं कीर्त्तयन् सततं शुचिः ॥ २९ ॥ वंशमाप्नोति विपुलं लोके पूज्यतमो भवेत् । योऽधीते भारतं पुण्यं ब्राह्मणो नियतव्रतः । चतुरो वार्षिकान् मासान् सर्व्वपापैः प्रमुच्यते ॥ ३० ॥ विज्ञेयः स च वेदानां पारगो भारतं पठन् । देवा राजर्षयो ह्यत्र पुण्या ब्रह्मर्षयस्तथा ॥ ३१ ॥ कीर्त्त्यन्ते धूतपाप्मानः कीर्त्त्यते केशवस्तथा । भगवांश्चापि देवेशो यत्र देवी च कीर्त्त्यते ॥ ३२ ॥ अनेकजननो यत्र कार्त्तिकेयस्य सम्भवः । ब्राह्मणानां गवाञ्चैव माहात्म्यं यत्र कीर्त्त्यते । सर्व्वश्रुतिसमूहोऽयं श्रोतव्यो धर्म्मबुद्धिभिः ॥ ३३ ॥ य इदं श्रावयेद्विद्वान् ब्राह्मणानिह पर्व्वसु । धूतपाप्मा जितस्वर्गो ब्रह्म गच्छति शाश्वतम् ॥ ३४ ॥ श्रावयेद्ब्राह्मणान् श्राद्धे यश्चेदं पादमन्ततः । अक्षय्यं तस्य तच्छ्राद्धमुपावर्त्तेत् पितॄनिह ॥ ३५ ॥ अह्ना यदेनः क्रियते इन्द्रियैर्म्मनसापि वा । ज्ञानादज्ञानतो वापि प्रकरोति नरश्च यत् तन्महाभारताख्यानं श्रुत्वैव प्रविलीयते ॥ ३६ ॥ भरतानां महज्जन्म महाभारतमुच्यते । निरुक्तमस्य यो वेद सर्व्वपापैः प्रमुच्यते ॥ ३७ ॥ भरतानां यतश्चायमितिहासो महाद्भुतः । महतो ह्येनसो मर्त्त्यान्मोचयेदनुकीर्त्तितः ॥ ३८ ॥ त्रिभिर्वर्षैर्लब्धकामः कृष्णद्वैपायनो मुनिः । नित्योत्थितः शुचिः शक्तो महाभारतमादितः ॥ ३९ ॥ तपो नियममास्थाय कृतमेतन्महर्षिणा । तस्मान्नियमसंयुक्तैः श्रोतव्यं ब्राह्मणैरिदम् ॥ ४० ॥ कृष्णप्रोक्तामिमां पुण्यां भारतीमुत्तमां कथाम् । श्रावयिष्यन्ति ये विप्रा ये च श्रोष्यन्ति मानवाः ॥ ४१ ॥ सर्व्वथा वर्त्तमाना वै न ते शोच्याः कृताकृतैः । नरेण धर्म्मकामेन सर्व्वः श्रोतव्य इत्यपि ॥ ४२ ॥ निखिलेनेतिहासोऽयं ततः सिद्धिमवाप्नुयात् । न तां स्वर्गगतिं प्राप्य तुष्टिं प्राप्नोति मानवः ॥ ४३ ॥ यां श्रुत्वैव महापुण्यमितिहासमुपाश्नुते । शृण्वञ्छ्राद्धः पुण्यशीलः श्रावयंश्चेद-

मद्भुतम्॥ ४४॥ नरः फलमवाप्नोति राजसूयाश्वमेधयोः। यथा समुद्रो भगवान्यथा मेरुर्महागिरिः॥ ४५॥ उभौ ख्यातौ रत्ननिधी तथा भारतमुच्यते। इदं हि वेदैः समितं पवित्रमपि चोत्तमम्॥ ४६॥ श्रव्यं श्रुतिसुखं चैव पावनं शीलवर्द्धनम्। य इदं भारतं राजन्वाचकाय प्रयच्छति॥ ४७॥ तेन सर्वा मही दत्ता भवेत्सागरमेखला। पारीक्षितकथां दिव्यां पुण्याय विजयाय च॥ ४८॥ कथ्यमानां मया कृत्स्नां शृणु हर्षकरीमिमाम्। त्रिभिर्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनिः॥ ४९॥ महाभारतमाख्यानं कृतवानिदमद्भुतम्। धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ। यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्॥ ५०॥

इत्यादिपर्वण्यःदिवंशावतरणे द्विषष्टोऽध्यायः॥ ६२॥

—०—

वैशम्पायन उवाच। राजोपरिचरो नाम धर्मनित्यो महीपतिः। बभूव मृगयां गन्तुं सदा किल धृतव्रतः॥ १॥ स चेदिविषयं रम्यं वसुः पौरवनन्दनः। इन्द्रोपदेशाज्जग्राह रमणीयं महीपतिः॥ २॥ तमाश्रमे न्यस्तशस्त्रं निवसन्तं तपोनिधिम्। देवाः शक्रपुरोगा वै राजानमुपतस्थिरे॥ ३॥ इन्द्रत्वमर्हो राजायं तपसेत्यनुचिन्त्य वै। तं सान्त्वेन नृपं साक्षात्तपसः संन्यवर्त्तयन्॥ ४॥

देवा ऊचुः। न संकीर्य्येत धर्मोयं पृथिव्यां पृथिवीपते। त्वया हि धर्मो विधृतः कृत्स्नं धारयते जगत्॥ ५।

इन्द्र उवाच। लोके धर्मं पालय त्वं नित्ययुक्तः समाहितः। धर्मयुक्तस्ततो लोकान् पुण्यान् पश्यसि शाश्वतान्॥ ६॥ दिविष्ठस्य भुविष्ठस्त्वं सखाभूतो मम प्रियः। रम्यः पृथिव्यां यो देश-

सम्भावय नराधिप ॥ ७ ॥ पशव्यश्चैव पुण्यश्च प्रभूतधनधान्यवान् । स्वारक्ष्यश्चैव सौम्यश्च भोग्यैर्भूमिगुणैर्युतः ॥ ८ ॥ अर्थवानेष देशो हि धनरत्नादिभिर्युतः । वसुपूर्णा च वसुधा वस चेदिषु चेदिप ॥ ९ ॥ धर्म्मशीला जनपदाः सुसन्तोषाश्च साधवः । न च मिथ्याप्रलापोऽत्र स्वैरेष्वपि कुतोऽन्यथा ॥ १० ॥ न च पित्रा विभज्यन्ते पुत्रा गुरुहिते रताः । युञ्जते धुरि नो गाश्च कृशान् सन्धुक्षयन्ति च ॥ ११ ॥ सर्वे वर्णाः स्वधर्म्मस्थाः सदा चेदिषु मानद । न तेऽस्त्यविदितं किञ्चित्त्रिषु लोकेषु यद्भवेत् ॥ १२ ॥ देवोपभोग्यं दिव्यं त्वामाकाशे स्फाटिकं महत् । आकाशगं त्वां मद्दत्तं विमानमुपपत्स्यते ॥ १३ ॥ त्वमेकः सर्वमर्त्त्येषु विमानवरमास्थितः । चरिष्यस्युपरिस्थो हि देवो विग्रहवानिव ॥ १४ ॥ ददामि ते वैजयन्तीं मालामम्लानपङ्कजाम् । धारयिष्यति संग्रामे या त्वां शस्त्रैरविक्षतम् ॥ १५ ॥ लक्षणं चैतदेवेह भविता ते नराधिप । इन्द्रमालेति विख्यातं धन्यमप्रतिमं महत् ॥ १६ ॥

वैशम्पायन उवाच । यष्टिञ्च वैणवीं तस्मै ददौ वृत्रनिसूदनः । इष्टप्रदानमुद्दिश्य शिष्टानां प्रतिपालनीम् ॥ १७ ॥ तस्याः शक्रस्य पूजार्थं भूमौ भूमिपतिस्तदा । प्रवेशं कारयामास गते सम्वत्सरे तदा ॥ १८ ॥ ततः प्रभृति चाद्यापि यष्टेः क्षितिपसत्तमैः । प्रवेशः क्रियते राजन्यथा तेन प्रवर्त्तितः ॥ १९ ॥ अपरेद्युस्ततस्तस्याः क्रियतेऽत्युच्छ्रयो नृपैः । अलङ्कृतायाः पिटकैर्गन्धैर्माल्यैश्च भूषणैः ॥ २० ॥ माल्यदामपरिक्षिप्ता विधिवत् क्रियतेऽपि च । भगवान् पूज्यते चात्र हंसरूपेण चेश्वरः । स्वयमेव गृहीतेन वसोः प्रीत्या महात्मनः ॥ २१ ॥ स तां पूजां महेन्द्रस्तु दृष्ट्वा देवः कृतां शुभाम् । वसुना राजमुख्येन प्रीतिमानब्रवीत् प्रभुः ॥ २२ ॥ ये पूजयिष्यन्ति नरा राजानश्च महं मम ।

कारयिष्यन्ति च मुदा यथा चेदिपतिर्नृपः॥ २३॥ तेषां श्रीर्विजयश्चैव सराष्ट्राणां भविष्यति। तथा स्फीतो जनपदो मुदितश्च भविष्यति॥ २४॥ एवं महात्मना तेन महेन्द्रेण नराधिप। वसुः प्रीत्या मघवता महाराजोऽभिसत्कृतः॥ २५॥ उत्सवं कारयिष्यन्ति सदा शक्रस्य ये नराः। भूमिरत्नादिभिर्दानैस्तथा पूज्या भवन्ति ते॥ २६॥ वरदानमहायज्ञैस्तथा शक्रोत्सवेन च। सम्पूजितो मघवता वसुश्चेदीश्वरो नृपः॥ २७॥ पालयामास धर्मेण चेदिस्थः पृथिवीमिमाम्। इन्द्रप्रीत्या चेदिपतिश्चकारेन्द्रमहं वसुः॥ २८॥ पुत्राश्चास्य महावीर्याः पञ्चासन्नमितौजसः। नानाराज्येषु च सुतान् स सम्राडभ्यषेचयत्॥ २९॥ महारथो मागधानां विश्रुतो यो बृहद्रथः। प्रत्यग्रहः कुशाम्बश्च यमाहुर्मणिवाहनम्॥ ३०॥ मावेल्लश्च यदुश्चैव राजन्यश्चापराजितः। एते तस्य सुता राजन् राजर्षेर्भूरितेजसः॥ ३१॥ न्यवेशयन्नामभिः स्वैस्ते देशांश्च पुराणि च। वासवाः पञ्च राजानः पृथग्वंशाश्च शाश्वताः॥ ३२॥ वसन्तमिन्द्रप्रासादे आकाशे स्फाटिके च तम्। उपतस्थुर्महात्मानं गन्धर्वाप्सरसो नृपम्॥ ३३॥ राजोपरिचरेत्येवं नाम तस्याथ विश्रुतम्। पुरोपवाहिनीं तस्य नदीं शुक्तिमतीं गिरिः। अरौत्सीच्चेतनायुक्तः कामात् कोलाहलः किल॥३४॥ गिरिं कोलाहलं तन्तु पदा वसुरताडयत्। निश्चक्राम ततस्तेन प्रहारविवरेण सा॥ ३५॥ तस्यां नद्यामजनयन्मिथुनं पर्वतः स्वयम्। तस्मात् विमोक्षणात् प्रीता नदी राज्ञे न्यवेदयत्॥३६॥ यः पुमानभवत्तत्र तं स राजर्षिसत्तमः। वसुर्वसुप्रदश्चक्रे सेनापतिमरिन्दमः॥ ३७॥ चकार पत्नीं कन्यान्तु तथा तां गिरिकां नृपः। वसोः पत्नी तु गिरिका कामकालं न्यवेदयत्। ऋतुकालमनुप्राप्ता स्नाता पुंसवने शुचिः॥ ३८॥ तदहः पितरश्चैनमूचुर्जहि मृगानिति। तं राजसत्तमं प्रीतास्तदा मतिमतांवर

॥ ३९ ॥ स पितॄणां नियोगन्तमनतिक्रम्य पार्थिवः । चचार
मृगयां कामी गिरिकामेव संस्मरन् । अतीवरूपसम्पन्नां साक्षा-
च्छ्रियमिवापराम् ॥ ४० ॥ अशोकैश्चम्पकैश्चूतैरनेकैरतिमुक्तकैः ।
पुन्नागैः कर्णिकारैश्च वकुलैर्दिव्यपाटलैः ॥ ४१ ॥ पाटलैर्नारि-
केलैश्च चन्दनैश्चार्जुनैस्तथा । एतैरम्यैर्महावृक्षैः पुण्यैः स्वादुफलै-
र्युतम् ॥ ४२ ॥ कोकिलाकुलसन्नादं मत्तभ्रमरनादितम् । वसन्त-
काले तत्तस्य वनञ्चैत्ररथोपमम् ॥ ४३ ॥ मन्मथाभिपरीतात्मा
नापश्यद्गिरिकां तदा । अपश्यन् कामसन्तप्तश्चरमाणो यदृच्छया
॥ ४४ ॥ पुष्पसंछन्नशाखाग्रं पल्लवैरुपशोभितम् । अशोकं स्तवकै-
श्छन्नं रमणीयमपश्यत ॥ ४५ ॥ अधस्तात्तस्य छायायां सुखा-
सीनो नराधिपः । मधुगन्धैश्च संयुक्तं पुष्पगन्धं मनोहरम् । वायुना
प्रेर्य्यमाणन्तमाघ्राय मुदमभ्यगात् ॥ ४६ ॥ तस्य रेतः प्रचस्कन्द
चरतो गहने वने । स्कन्नमात्रञ्च तद्रेतो वृक्षपत्रेण भूमिपः ।
प्रतिजग्राह मिथ्या मे न पतेदिति चिन्तयन् ॥ ४७ ॥ इदं मिथ्या-
परिस्कन्नं रेतो मे न भवेदिति । ऋतुश्च तस्याः पत्न्या मे न
मोघः स्यादिति प्रभुः ॥ ४८ ॥ सञ्चिन्त्यैवं तदा राजा विचार्य्य
च पुनः पुनः । अमोघत्वञ्च विज्ञाय रेतसो राजसत्तमः ॥ ४९ ॥
शुक्रप्रस्थापने कालं महिष्याः प्रसमीक्ष्य वै । अभिमन्त्र्याथ
तच्छुक्रमारात्तिष्ठन्तमाशुगम् । सूक्ष्मधर्म्मार्थतत्त्वज्ञो गत्वा श्येनं
ततोऽब्रवीत् ॥ ५० ॥ मत्प्रियार्थमिदं सौम्य शुक्रं मम गृहं नय ।
गिरिकायाः प्रयच्छाशु तस्या ह्यार्त्तवमद्य वै ॥ ५१ ॥ गृहीत्वा
तत्तदा श्येनस्तूर्णमुत्पत्य वेगवान् । जवं परममास्थाय प्रदुद्राव
विहङ्गमः ॥ ५२ ॥ तमपश्यदथायान्तं श्येनं श्येनस्तथापरः ।
अभ्यद्रवच्च तं सद्यो दृष्ट्वैवामिषशङ्कया ॥ ५३ ॥ तुण्डयुद्धमथा-
काशे तावुभौ सम्प्रचक्रतुः । युध्यतोरपतद्रेतस्तच्चापि यमुना-
म्भसि ॥ ५४ ॥ तत्राद्रिकेति विख्याता ब्रह्मशापाद्वराप्सराः ।

मीनभावमनुप्राप्ता बभूव यमुनाचरी ॥ ५५ ॥ श्येनपादपरिभ्रष्टं तद्वीर्यमथ वासवम् । जग्राह तरसोत्पत्य साद्रिका मत्स्यरूपिणी ॥ ५६ ॥ कदाचिदपि मत्सीं तां बबन्धुर्मत्स्यजीविनः । मासे च दशमे प्राप्ते तदा भरतसत्तम ॥ ५७ ॥ उज्जह्रुरुदरात्तस्याः स्त्रीं पुमांसञ्च मानुषम् । आश्चर्य्यभूतं तद्गत्वा राज्ञेऽथ प्रत्यवेदयन् ॥ ५८ ॥ काये मत्स्या इमौ राजन् सम्भूतौ मानुषाविति । तयोः पुमांसं जग्राह राजोपरिचरस्तदा ॥ ५९ ॥ स मत्स्यो नाम राजासीद्धार्म्मिकः सत्यसङ्गरः । साप्सरा मुक्तशापा च क्षणेन समपद्यत ॥ ६० ॥ या पुरोक्ता भगवता तिर्य्यग्योनिगता शुभा । मानुषौ जनयित्वा त्वं शापमोक्षमवाप्स्यसि ॥ ६१ ॥ ततः सा जनयित्वा तौ विशस्ता मत्स्यघातिना । सन्त्यज्य मत्स्यरूपं सा दिव्यं रूपमवाप्य च ॥ ६२ ॥ सिद्धर्षिचारणपथं जगामाथ वराप्सराः । सा कन्या दुहिता तस्या मत्स्या मत्स्यसगन्धिनी ॥ ६३ ॥ राज्ञा दत्ता च दाशाय कन्येयं ते भवत्विति । रूपसत्त्वसमायुक्ता सर्वैः समुदिता गुणैः ॥ ६४ ॥ सा तु सत्यवती नाम मत्स्यघात्यभिसंश्रयात् । आसीत्सा मत्स्यगन्धैव कञ्चित्कालं शुचिस्मिता ॥ ६५ ॥ शुश्रूषार्थं पितुर्नावं वाहयन्तीं जले च ताम् । तीर्थयात्रां परिक्रामन्नपश्यद्वै पराशरः ॥ ६६ ॥ अतीव रूपसम्पन्नां सिद्धानामपि काङ्क्षिताम् । दृष्ट्वैव च स तां धीमांश्चकमे चारुहासिनीम ॥ ६७ ॥ दिव्यां तां वासवीं कन्यां रम्भोरुं मुनिपुङ्गवः । सङ्गमं मम कल्याणि कुरुष्वेत्यभ्यभाषत ॥ ६८ ॥ साब्रवीत्पश्य भगवन् पारावारे स्थितानृषीन् । आवयोर्दृष्टयोरेभिः कथं तु स्यात्समागमः ॥ ६९ ॥ एवं तयोक्तो भगवान्नीहारमसृजत् प्रभुः । येन देशः स सर्व्वस्तु तमोभूत इवाभवत् ॥ ७० ॥ दृष्ट्वा सृष्टन्तु नीहारं ततस्तं परमर्षिणा । विस्मिता साभवत्कन्या व्रीडिता च तपस्विनी ॥ ७१ ॥

सत्यवत्युवाच । विद्धि मां भगवन् कन्यां सदा पितृवशानुगाम् । त्वत्संयोगाच्च दुष्येत कन्याभावो ममानघ ॥ ৭২ ॥ कन्यात्वे दूषिते वापि कथं शक्ष्ये द्विजोत्तम । गृहं गन्तुमृषे चाहं धीमन्न स्थातुमुत्सहे । एतत् संचिन्त्य भगवन्विधत्स्व यदनन्तरम् ॥ ৭৩ ॥

वैशम्पायन उवाच । एवमुक्तवतीं तान्तु प्रीतिमानृषिसत्तमः । उवाच मत्प्रियं कृत्वा कन्यैव त्वं भविष्यसि ॥ ৭৪ ॥ वृणीष्व च वरं भीरु यं त्वमिच्छसि भामिनि । वृथा हि न प्रसादो मे भूतपूर्व्वः शुचिस्मिते ॥ ৭৫ ॥ एवमुक्ता वरं वव्रे गात्रसौगन्ध्यमुत्तमम् । स चास्यै भगवान् प्रादान्मनसः काङ्क्षितं भुवि ॥ ৭৬ ॥ ततो लब्धवरा प्रीता स्त्रीभावगुणभूषिता । जगाम सह संसर्गमृषिणाद्भुतकर्म्मणा ॥ ৭৭ ॥ तेन गन्धवतीत्येवं नामास्याः प्रथितं भुवि । तस्यास्तु योजनाद्गन्धमाजिघ्रन्त नरा भुवि ॥ ৭৮ ॥ तस्या योजनगन्धेति ततो नामापरं स्मृतम् । पराशरोऽपि भगवान् जगाम स्वं निवेशनम् ॥ ৭৯ ॥ इति सत्यवती हृष्टा लब्ध्वा वरमनुत्तमम् । पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा ॥৮০॥ जज्ञे च यमुनाद्वीपे पाराशर्य्यः स वीर्य्यवान् । स मातरमनुज्ञाप्य तपस्येव मनो दधे ॥ ৮১ ॥ स्मृतोऽहं दर्शयिष्यामि कृत्येष्विति च सोऽब्रवीत् । एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरात् ॥ ৮২ ॥ न्यस्तो द्वीपे स यद्बालस्तस्माद्द्वैपायनः स्मृतः । पादापसारिणं धर्म्मं स तु विद्वान् युगे युगे । आयुः शक्तिञ्च मर्त्यानां युगानुगमवेक्ष्य च ॥ ৮৩ ॥ ब्रह्मणो ब्राह्मणानाञ्च तथानुग्रहकाङ्क्षया । विव्यास वेदान् यस्मात् स तस्माद् व्यास इति स्मृतः ॥ ৮৪ ॥ वेदानध्यापयामास महाभारतपञ्चमान् । सुमन्तुं जैमिनिं पैलं शुकञ्चैव स्वमात्मजम् ॥ ৮৫ ॥ प्रभुर्वरिष्ठो वरदो वैशम्पायनमेव च । संहितास्तैः पृथक्त्वेन भारतस्य प्रकाशिताः

॥ ८६ ॥ तथा भीष्मः शान्तनवो गङ्गायाममितद्युतिः। वसु-
वीर्य्यात्समभवन्महावीर्य्यो महायशाः ॥ ८७ ॥ वेदार्थविच्च भग-
वानृषिर्विप्रो महायशाः। शूले प्रोतः पुराणर्षिरचौरश्चौर-
शङ्कया ॥ ८८ ॥ अणीमाण्डव्य इत्येवं विख्यातः स महायशाः।
स धर्ममाहूय पुरा महर्षिरिदमुक्तवान् ॥ ८९ ॥ इषीकया मया
बाल्यादिद्धा ह्येका शकुन्तिका। तत्किल्बिषं स्मरे धर्म नान्यत्
पापमहं स्मरे ॥ ९० ॥ तन्मे सहस्रसमितं कस्मान्नेहाजयत्तपः।
गरीयान् ब्राह्मणबधः सर्वभूतबधाद्यतः ॥ ९१ ॥ तस्मात्त्वं किल्बिषी
धर्म शूद्रयोनौ जनिष्यसि। तेन शापेन धर्मोऽपि शूद्रयोनावजायत ॥ ९२ ॥
विद्वान् विदुररूपेण धार्मी तनुरकिल्बिषी।
सञ्जयो मुनिकल्पस्तु जज्ञे सूतो गवल्गणात् ॥ ९३ ॥ सूर्य्याच्च
कुन्तिकन्यायां जज्ञे कर्णो महाबलः। सहजं कवचं बिभ्रत्कुण्ड-
लोद्योतिताननः ॥ ९४ ॥ अनुग्रहार्थं लोकानां विष्णुर्लोकनम-
स्कृतः। वसुदेवात्तु देवक्यां प्रादुर्भूतो महायशाः ॥ ९५ ॥
अनादिनिधनो देवः स कर्त्ता जगतः प्रभुः। अव्यक्तमक्षरं ब्रह्म
प्रधानं त्रिगुणात्मकम् ॥ ९६ ॥ आत्मानमव्ययञ्चैव प्रकृतिं प्रभवं
प्रभुम्। पुरुषं विश्वकर्माणं सत्त्वयोगं ध्रुवाक्षरम् ॥ ९७ ॥
अनन्तमचलं देवं हंसं नारायणं प्रभुम्। धातारमजमव्यक्तं
यमाहुः परमव्ययम् ॥ ९८ ॥ कैवल्यं निर्गुणं विश्वमनादिमज-
मव्ययम्। पुरुषः स विभुः कर्त्ता सर्वभूतपितामहः। धर्म-
संवर्द्धनार्थाय प्रजज्ञेऽन्धकवृष्णिषु ॥ ९९ ॥ अस्त्रज्ञौ तु महा-
वीर्य्यौ सर्वशास्त्रविशारदौ। सात्यकिः कृतवर्म्मा च नारायण-
मनुव्रतौ ॥ १०० ॥ सत्यकाद्धृदिकाच्चैव जज्ञातेऽस्त्रविशारदौ।
भरद्वाजस्य च स्कन्नं द्रोण्यां शुक्रमवर्द्धत ॥ १०१ ॥ महर्षेरुग्र-
तपसस्तस्माद्द्रोणो व्यजायत। गौतमान्मिथुनं जज्ञे शरस्तम्बा-
च्छरद्वतः ॥ १०२ ॥ अश्वत्थाम्नश्च जननी कृपश्चैव महाबलः।

अश्वत्थामा ततो जज्ञे द्रोणादेव महाबलः ॥ १०३ ॥ तथैव धृष्टद्युम्नोऽपि साक्षादग्निसमद्युतिः। वैताने कर्म्मणि तते पावकात्समजायत ॥ १०४ ॥ वीरो द्रोणविनाशाय धनुरादाय वीर्य्यवान्। तत्रैव वेद्यां कृष्णापि जज्ञे तेजस्विनी शुभा ॥ १०५ ॥ विभ्राजमाना वपुषा बिभ्रती रूपमुत्तमम्। प्रह्लादशिष्यो नग्नजित् सुबलश्चाभवत्ततः ॥ १०६ ॥ तस्य प्रजा धर्म्महन्त्री जज्ञे देवप्रकोपनात्। गन्धारराजपुत्रोऽभूच्छकुनिः सौबलस्तथा ॥१०७॥ दुर्य्योधनस्य जननी जज्ञातेऽर्थविशारदौ। कृष्णद्वैपायनाज्जज्ञे धृतराष्ट्रो जनेश्वरः। क्षेत्रे विचित्रवीर्य्यस्य पाण्डुश्चैव महाबलः ॥ १०८ ॥ धर्म्मार्थकुशलो धीमान्मेधावी धूतकल्मषः। विदुरः शूद्रयोनौ तु जज्ञे द्वैपायनादपि ॥ १०९ ॥ पाण्डोस्तु जज्ञिरे पञ्च पुत्रा देवसमाः पृथक्। द्वयोः स्त्रियोर्गुणज्येष्ठस्तेषामासीद्युधिष्ठिरः ॥ ११० ॥ धर्म्माद्युधिष्ठिरो जज्ञे मारुतात्तु वृकोदरः। इन्द्राद्धनञ्जयः श्रीमान् सर्व्वशस्त्रभृतां वरः ॥ १११ ॥ जज्ञाते रूपसम्पन्नावश्विभ्यान्तु यमावपि। नकुलः सहदेवश्च गुरुशुश्रूषणे रतौ ॥ ११२ ॥ तथा पुत्रशतं जज्ञे धृतराष्ट्रस्य धीमतः। दुर्य्योधनप्रभृतयो युयुत्सुः करणस्तथा ॥ ११३ ॥ ततो दुःशासनश्चैव दुःसहश्चापि भारत। दुर्म्मर्षणो विकर्णश्च चित्रसेनो विविंशतिः ॥११४॥ जयः सत्यव्रतश्चैव पुरुमित्रश्च भारत। वैश्यापुत्रो युयुत्सुश्च एकादश महारथाः ॥ ११५ ॥ अभिमन्युः सुभद्रायामर्ज्जुनादभ्यजायत। स्वस्रीयो वासुदेवस्य पौत्रः पाण्डोर्महात्मनः ॥ ११६ ॥ पाण्डवेभ्यो हि पाञ्चाल्यां द्रौपद्यां पञ्च जज्ञिरे। कुमारा रूपसम्पन्नाः सर्व्वशास्त्रविशारदाः ॥ ११७ ॥ प्रतिविन्ध्यो युधिष्ठिरात् सुतसोमो वृकोदरात्। अर्ज्जुनाच्छ्रुतकीर्त्तिस्तु शतानीकस्तु नाकुलिः ॥ ११८ ॥ तथैव सहदेवाच्च श्रुतसेनः प्रतापवान्। हिडिम्बायाञ्च भीमेन वने जज्ञे घटो-

त्वः ॥ ११९ ॥ शिखण्डी द्रुपदात्मजः कन्या पुंस्त्वमागता। यां यक्षः पुरुषं चक्रे स्थूणः प्रियचिकीर्षया ॥ १२० ॥ कुरूणां विग्रहे तस्मिन् समागच्छन् बहून्यथ। राज्ञां शतसहस्राणि योत्स्यमानानि संयुगे ॥ १२१ ॥ तेषामपरिमेयानां नामधेयानि सर्वशः। न शक्यानि समाख्यातुं वर्षाणामयुतैरपि। एते तु कीर्त्तिता मुख्या यैराख्यानमिदं ततम् ॥ १२२ ॥

इत्यादिपर्वण्यादिवंशावतरणे त्रिषष्टोऽध्यायः ॥ ६३ ॥

---

जनमेजय उवाच। य एते कीर्त्तिता ब्रह्मन् ये चान्ये नानुकीर्त्तिताः। सम्यक् तां श्रोतुमिच्छामि राज्ञश्चान्यान् सहस्रशः ॥ १ ॥ यदर्थमिह संभूता देवकल्पा महारथाः। भुवि तन्मे महाभाग सम्यगाख्यातुमर्हति ॥ २ ॥

वैशम्पायन उवाच। रहस्यं खल्विदं राजन्देवानामिति नः श्रुतम्। तत्तु, ते कथयिष्यामि नमस्कृत्वा स्वयम्भुवे ॥ ३ ॥ त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां पुरा। जामदग्न्यस्तपस्तेपे महेन्द्रे पर्वतोत्तमे ॥ ४ ॥ तदा निःक्षत्रिये लोके भार्गवेण कृते सति। ब्राह्मणान् क्षत्रिया राजन् सुतार्थिन्योऽभिचक्रमुः ॥ ५ ॥ ताभिः सह समापेतुर्ब्राह्मणाः शंसितव्रताः। ऋतावृतौ नरव्याघ्र न कामान्नानृतौ तथा ॥ ६ ॥ तेभ्यश्च लेभिरे गर्भं क्षत्रियास्ताः सहस्रशः। ततः सुषुविरे राजन् क्षत्रियान् वीर्य्यवत्तरान् ॥ ७ ॥ कुमारांश्च कुमारीश्च पुनः क्षत्राभिवृद्धये। एवं तद्ब्राह्मणैः क्षत्रं क्षत्रियासु तपस्विभिः ॥ ८ ॥ जातं वृद्धञ्च धर्मेण सुदीर्घेणायुषान्वितम्। चत्वारोऽपि ततो वर्णा बभूवुर्ब्राह्मणोत्तराः ॥ ९ ॥ अभ्यगच्छन्नृतौ नारीं न कामान्नानृतौ तथा। तथैवान्यानि भूतानि तिर्य्यग्योनिगतान्यपि ॥ १० ॥

ऋतौ दारांश्च गच्छन्ति तत्तथा भरतर्षभ। ततोऽवर्द्धन्त धर्म्मेण
सहस्रशतजीविनः॥ ११॥ ताः प्रजाः पृथिवीपाल धर्म्मव्रत-
परायणाः। आधिभिर्व्याधिभिश्चैव विमुक्ताः सर्व्वशो नराः॥१२॥
अथेमां सागरापाङ्गीं गाङ्गजेन्द्रगताखिलाम्। अध्यतिष्ठत् पुनः
क्षत्रं सशैलवनपत्तनाम्। प्रशासति पुनः क्षत्रे धर्म्मेणेमां वसु-
न्धराम्। ब्राह्मणाद्यास्ततो वर्णा लेभिरे मुदमुत्तमाम्॥ १३॥
कामक्रोधोद्भवान्दोषान्निरस्य च नराधिपाः। धर्म्मेण दण्डं
दण्ड्येषु प्रणयन्तोऽन्वपालयन्॥ १४॥ तथा धर्म्मपरे क्षत्रे सह-
स्राक्षः शतक्रतुः। स्वादु देशे च काले च ववर्षापालयत् प्रजाः
॥ १५॥ न बाल एव म्रियते तदा कश्चिज्जनाधिप। न च
स्त्रियं प्रजानाति कश्चिदप्राप्तयौवनः॥ १६॥ एवमायुष्मतीभिस्तु
प्रजाभिर्भरतर्षभ। इयं सागरपर्य्यन्ता समापूर्य्यत मेदिनी
॥ १७॥ ईजिरे च महायज्ञैः क्षत्रिया बहुदक्षिणैः। साङ्गो-
पनिषदान्वेदान् विप्राश्चाधीयते तदा॥ १८॥ न च विक्रीणते
ब्रह्म ब्राह्मणाश्च तदा नृप। न च शूद्रसमाभ्याशे वेदानुच्चारय-
न्त्युत॥ १९॥ कारयन्तः कृषिं गोभिस्तथा वैश्याः क्षितावथ।
युञ्जते धुरि नो गाश्च कृशाङ्गांश्चाप्यजीवयन्॥ २०॥ फेनपांश्च
तथा वत्सान्न दुहन्ति स्म मानवाः। न कूटमानैर्वणिजः पण्यं
विक्रीणते तदा॥ २१॥ कर्म्माणि च नरव्याघ्र धर्म्मोपेतानि
मानवाः। धर्म्ममेवानुपश्यन्तश्चक्रुर्धर्म्मपरायणाः॥ २२॥ स्वकर्म्म-
निरताश्चासन् सर्व्वे वर्णा नराधिप। एवं तदा नरव्याघ्र धर्म्मो
न ह्रसते क्वचित्॥ २३॥ काले गावः प्रसूयन्ते नार्य्यश्च भरत-
र्षभ। भवन्त्यृतुषु वृक्षाणां पुष्पाणि च फलानि च॥ २४॥ एवं
कृतयुगे सम्यग्वर्त्तमाने तदा नृप। आपूर्य्यत मही कृत्स्ना
प्राणिभिर्बहुभिर्भृशम्॥ २५॥ एवं समुदिते लोके मानुषे भरत-
र्षभ। असुरा जज्ञिरे क्षेत्रे राज्ञान्तु मनुजेश्वर॥ २६॥ आदि-

त्वैर्हि तदा दैत्या बहुशो निर्जिता युधि। ऐश्वर्य्याद्भ्रंशिताः
स्वर्गात्संबभूवुः क्षिताविह ॥ २७ ॥ इह देवत्वमिच्छन्तो मानुषेषु
मनस्विनः। जज्ञिरे भुवि भूतेषु तेषु तेष्वसुरा विभो ॥ २८ ॥
गोष्वश्वेषु च राजेन्द्र खरोष्ट्रमहिषेषु च। क्रव्यात्सु चैव भूतेषु
गजेषु च मृगेषु च ॥ २९ ॥ जातैरिह महीपाल जायमानैश्च
तैर्मही। न शशाकात्मनात्मानमियं धारयितुं धरा ॥ ३० ॥ अथ
जाता महीपालाः केचिद्बहुमदान्विताः। दितेः पुत्रा दनोश्चैव
तदा लोक इहाच्युताः ॥ ३१ ॥ वीर्य्यवन्तोऽवलिप्तास्ते नाना-
रूपधरा महीम्। इमां सागरपर्य्यन्तां परीयुररिमर्द्दनाः ॥३२॥
ब्राह्मणान् क्षत्रियान्वैश्यान् शूद्रांश्चैवाप्यपीड़यन्। अन्यानि
चैव सत्त्वानि पीड़यामासुरोजसा ॥ ३३ ॥ त्रासयन्तोऽभिनि-
घ्नन्तः सर्वभूतगणांश्च ते। विचेरुः सर्वशो राजन्महीं शतसह-
स्रशः ॥ ३४ ॥ आश्रमस्थान्महर्षींश्च धर्षयन्तस्ततस्ततः। अब्र-
ह्मण्या वीर्य्यमदा मत्ता मदबलेन च ॥ ३५ ॥ एवं वीर्य्यबलो-
त्सिक्तैर्भूरियत्नैर्महासुरैः। पीड्यमाना मही राजन् ब्रह्माण-
मुपचक्रमे ॥ ३६ ॥ न ह्यमी भूतसत्त्वौघाः पन्नगाः सनगां महीम्।
तदा धारयितुं शेकुः संक्रान्तां दानवैर्बलात् ॥ ३७ ॥ ततो
मही महीपाल भारार्त्ता भयपीड़िता। जगाम शरणं देवं
सर्वभूतपितामहम् ॥ ३८ ॥ सा संवृतं महाभागैर्देवद्विजमह-
र्षिभिः। ददर्श देवं ब्रह्माणं लोककर्त्तारमव्ययम् ॥ ३९ ॥
गन्धर्वैरप्सरोभिश्च देवकर्मसु निष्ठितैः। वन्द्यमानं मुदोपेतै-
र्ववन्दे चैनमेत्य सा ॥ ४० ॥ अथ विज्ञापयामास भूमिस्तं शर-
णार्थिनी। सन्निधौ लोकपालानां सर्वेषामेव भारत ॥ ४१ ॥
तत् प्रधानात्मनस्तस्य भूमेः कृत्यं स्वयम्भुवः। पूर्वमेवाभवद्राजन्
विदितं परमेष्ठिनः ॥ ४२ ॥ स्रष्टा हि जगतः कस्मान्न संबु-
ध्येत भारत। ससुरासुरलोकानामशेषेण मनोगतम् ॥ ४३ ॥

तामुवाच महाराज भूमिं भूमिपतिः प्रभुः । प्रभवः सर्व्वभूताना-
मीशः शम्भुः प्रजापतिः ॥ ४४ ॥

ब्रह्मोवाच । यदर्थमसि संप्राप्ता मत्सकाशं वसुन्धरे । तदर्थं
सन्नियोक्ष्यामि सर्व्वानेव दिवौकसः ॥ ४५ ॥

वैशम्पायन उवाच । इत्युक्त्वा स महीं देवो ब्रह्मा राजन्
विसृज्य च । आदिदेश तदा सर्व्वान् विबुधान् भूतकृत् स्वयम्
॥ ४६ ॥ अस्या भूमेर्निरसितुं भारं भागैः पृथक् पृथक् । अस्या-
मेव प्रसूयध्वं विरोधायेति चाब्रवीत् ॥ ४७ ॥ तथैव च समा-
नीय गन्धर्व्वाप्सरसां गणान् । उवाच भगवान् सर्व्वानिदं वचन-
मर्थवत् ॥ ४८ ॥

ब्रह्मोवाच । स्वैः स्वैरंशैः प्रसूयध्वं यथेष्टं मानुषेषु च । अथ
शक्रादयः सर्व्वे श्रुत्वा सुरगुरोर्व्वचः । तथ्यमर्थ्यञ्च पथ्यञ्च तस्य ते
जगृहुस्तदा ॥ ४९ ॥ अथ ते सर्व्वशोंऽशैः स्वैर्गन्तुं भूमिं कृत-
क्षणाः । नारायणममित्रघ्नं वैकुण्ठमुपचक्रमुः ॥ ५० ॥ यः स
चक्रगदापाणिः पीतवासाः शितिप्रभः । पद्मनाभः सुरारिघ्नः
पृथुवक्षाश्चितेक्षणः ॥ ५१ ॥ प्रजापतिपतिर्द्देवः सुरनाथो महा-
बलः । श्रीवत्साङ्को हृषीकेशः सर्व्वदैवतपूजितः ॥ ५२ ॥ तं
भुवः शोधनायेन्द्र उवाच पुरुषोत्तमम् । अंशेनावतरस्वेति तथे-
त्याह च तं हरिः ॥ ५३ ॥

इत्यादिपर्व्वण्यादिवंशावतारणपर्व्वणि चतुःषष्टोऽध्यायः ॥ ६४ ॥

समाप्तञ्चेदमादिवंशावतारणपर्व्व

---

## अथ सम्भवपर्व ॥ ३

वैशम्पायन उवाच। अथ नारायणेनेन्द्रश्चकार सह संविदम्।
अवतर्त्तुं महीं स्वर्गादंशतः सहितः सुरैः ॥ १ ॥ आदिश्य च
स्वयं शक्रः सर्वानेव दिवौकसः। निर्जगाम पुनस्तस्मात् क्षया-
न्नारायणस्य ह ॥ २ ॥ तेऽमरारिविनाशाय सर्वलोकहिताय
च। अवतेरुः क्रमेणैव महीं स्वर्गाद्दिवौकसः ॥ ३ ॥ ततो
ब्रह्मर्षिवंशेषु पार्थिवर्षिकुलेषु च। जज्ञिरे राजशार्दूल यथा-
कामं दिवौकसः ॥ ४ ॥ दानवान् राक्षसांश्चैव गन्धर्वान् पन्नगां-
स्तथा। पुरुषादानि चान्यानि जघ्नुः सत्त्वान्यनेकशः ॥ ५ ॥
दानवा राक्षसाश्चैव गन्धर्वाः पन्नगास्तथा। न तान् बलस्थान्
बाल्येऽपि जघ्नुर्भरतसत्तम ॥ ६ ॥

जनमेजय उवाच। देवदानवसंघानां गन्धर्वाप्सरसां तथा।
मानवानाञ्च सर्वेषां तथा वै यक्षरक्षसाम् ॥ ७ ॥ श्रोतुमिच्छामि
तत्त्वेन सम्भवं कृत्स्नमादितः। प्राणिनाञ्चैव सर्वेषां सम्भवं वक्तु-
मर्हसि ॥ ८ ॥

वैशम्पायन उवाच। हन्त ते कथयिष्यामि नमस्कृत्य स्वय-
म्भुवे। सुरादीनामहं सम्यक् लोकानां प्रभवाप्ययम् ॥ ९ ॥
ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः। मरीचिरत्र्यङ्गि-
रसौ पुलस्त्यः पुलहः क्रतुः ॥ १० ॥ मरीचेः कश्यपः पुत्रः कश्य-
पात्तु इमाः प्रजाः। प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश
॥ ११ ॥ अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा।
क्रोधा प्राधा च विश्वा च विनता कपिला मुनिः ॥ १२ ॥ कद्रूश्च
मनुजव्याघ्र दक्षकन्यैव भारत। एतासां वीर्य्यसम्पन्नं पुत्रपौत्र-
मनन्तकम् ॥ १३ ॥ अदित्यां द्वादशादित्याः सम्भूता भुवनेश्वराः।
ये राजन्नामतस्तांस्ते कीर्त्तयिष्यामि भारत ॥ १४ ॥ धाता
मित्रोऽर्य्यमा शक्रो वरुणस्त्वंश एव च। भगो विवस्वान् पूषा च

सविता दशमस्तथा ॥ १५ ॥ एकादशस्तथा त्वष्टा द्वादशो विष्णु-रुच्यते । जघन्यजस्तु सर्व्वेषामादित्यानां गुणाधिकः ॥ १६ ॥ एक एव दितेः पुत्रो हिरण्यकशिपुः स्मृतः । नाम्ना ख्यातास्तु तस्येमे पञ्च पुत्रा महात्मनः ॥ १७ ॥ प्रह्लादः पूर्व्वजस्तेषां संह्लादस्तदनन्तरम् । अनुह्लादस्तृतीयोऽभूत्तस्माच्च शिविवाष्कलौ ॥ १८ ॥ प्रह्लादस्य त्रयः पुत्राः ख्याताः सर्व्वत्र भारत । विरोचनश्च कुम्भश्च निकुम्भश्चेति भारत ॥ १९ ॥ विरोचनस्य पुत्रोऽभूद्बलिरेकः प्रतापवान् । बलेश्च प्रथितः पुत्रो वाणो नाम महासुरः ॥ २० ॥ रुद्रस्यानुचरः श्रीमान्महाकालेति यं विदुः । चत्वारिंशद्दनोः पुत्राः ख्याताः सर्व्वत्र भारत ॥ २१ ॥ तेषां प्रथमजो राजा विप्रचित्तिर्महायशाः । शम्बरो नमुचिश्चैव पुलोमा चेति विश्रुतः ॥ २२ ॥ असिलोमा च केशी च दुर्ज्जयश्चैव दानवः । अयःशिरा अश्वशिरा अश्वशङ्कुश्च वीर्य्यवान् ॥ २३ ॥ तथा गगनमूर्द्धा च वेगवान् केतुमांश्च सः । स्वर्भानुरश्वोऽश्वपतिर्वृषपर्व्वाजकस्तथा ॥ २४ ॥ अश्वग्रीवश्च सूक्ष्मश्च तुहुण्डश्च महाबलः । एकपादेकचक्रश्च विरूपाक्षमहोदरौ ॥ २५ ॥ निचन्द्रश्च निकुम्भश्च कुपटः कपटस्तथा । शरभः शलभश्चैव सूर्य्याचन्द्रमसौ तथा । एते ख्याता दनोर्वंशे दानवाः परिकीर्त्तिताः ॥ २६ ॥ अन्यौ तु खलु देवानां सूर्य्याचन्द्रमसौ स्मृतौ । अन्यौ दानवमुख्यानां सूर्य्याचन्द्रमसौ तथा ॥ २७ ॥ इमे च वंशाः प्रथिताः सत्ववन्तो महाबलाः । दनुपुत्रा महाराज दश दानववंशजाः ॥ २८ ॥ एकाक्षोऽमृतपो वीरः प्रलम्बनरकावपि । वातापी शत्रुतपनः शठश्चैव महासुरः ॥ २९ ॥ गविष्ठश्च वनायुश्च दीर्घजिह्वश्च दानवः । असंख्येयाः स्मृतास्तेषां पुत्राः पौत्राश्च भारत ॥ ३० ॥ सिंहिका सुषुवे पुत्रं राहुं चन्द्रार्कमर्द्दनम् । सुचन्द्रं चन्द्रहन्तारं तथा चन्द्रप्रमर्द्दनम् ॥ ३१ ॥ क्रूरस्वभावं क्रूरायाः

पुत्रपौत्रमनन्तकम् । गणः क्रोधवशो नाम क्रूरकर्मारिमर्द्दनः
॥ ३२ ॥ दनायुषः पुनः पुत्राश्चत्वारोऽसुरपुङ्गवाः । विक्षरो
बलवीरौ च वृत्रश्चैव महासुरः ॥ ३३ ॥ कालायाः प्रथिताः
पुत्राः कालकल्पाः प्रहारिणः । प्रविख्याता महावीर्य्या दानवेषु
परन्तपाः ॥ ३४ ॥ विनाशनश्च क्रोधश्च क्रोधहन्ता तथैव च ।
क्रोधः शत्रुस्तथैवान्ये कालकेया इति श्रुताः ॥ ३५ ॥ असु-
राणामुपाध्यायः शुक्रस्त्वृषिसुतोऽभवत् । ख्याताश्चोशनसः पुत्रा-
श्चत्वारोऽसुरयाजकाः ॥ ३६ ॥ त्वष्टा धरस्तथात्रिश्च द्वावन्यौ रौद्र-
कर्म्मिणौ । तेजसा सूर्य्यसङ्काशा ब्रह्मलोकपरायणाः ॥ ३७ ॥
इत्येष वंशप्रभवः कथितस्ते तरस्विनाम् । असुराणां सुराणाञ्च
पुराणे संश्रुतो मया ॥ ३८ ॥ एतेषां यदपत्यन्तु न शक्यं तद-
शेषतः । प्रसंख्यातुं महीपाल गुणभूतमनन्तकम् ॥ ३९ ॥
तार्क्ष्यश्चारिष्टनेमिश्च तथैव गरुड़ारुणौ । आरुणिर्वारुणिश्चैव
वैनतेयाः प्रकीर्त्तिताः ॥ ४० ॥ शेषोऽनन्तो वासुकिश्च तक्षकश्च
भुजङ्गमः । कूर्म्मश्च कुलिकश्चैव काद्रवेयाः प्रकीर्त्तिताः ॥ ४१ ॥
भीमसेनोग्रसेनौ च सुपर्णो वरुणस्तथा । गोपतिर्धृतराष्ट्रश्च
सूर्य्यवर्च्चाश्च सप्तमः ॥४२॥ सत्यवागर्कपर्णश्च प्रयुतश्चापि विश्रुतः ।
भीमश्चित्ररथश्चैव विख्यातः सर्वविद्वशी ॥ ४३ ॥ तथा शालि-
शिरा राजन् पर्जन्यश्च चतुर्द्दशः । कलिः पञ्चदशस्तेषां नारद-
श्चैव षोड़शः । इत्येते देवगन्धर्वा मौनेयाः परिकीर्त्तिताः ॥४४॥
अथ प्रसूतान्यन्यानि कीर्त्तयिष्यामि भारत । अनवद्यां मनुं
वंशामसुरां मार्गणप्रियाम् ॥ ४५ ॥ अनूपां सुभगां भासीमिति
प्राधा व्यजायत । सिद्धः पूर्णश्च बर्हो च पूर्णायुश्च महायशाः
॥ ४६ ॥ ब्रह्मचारी रतिगुणः सुपर्णश्चैव सप्तमः । विश्वावसुश्च
भानुश्च सुचन्द्रो दशमस्तथा ॥ ४७ ॥ इत्येते देवगन्धर्वाः प्राधेयाः
परिकीर्त्तिताः । इमं त्वप्सरसां वंशं विदितं पुण्यलक्षणाम् ॥४८॥

प्राधान्त महाभागा देवी देवर्षितः पुरा । अलम्बुषा मिश्रकेशी विद्युत्पर्णा तिलोत्तमा ॥ ४८ ॥ अरुणा रक्षिता चैव रम्भा तद्वन्मनोरमा । केशिनी च सुबाहुश्च सुरता सुरजा तथा ॥५०॥ सुप्रिया चातिबाहुश्च विख्यातौ च हाहाहुहू । तुम्बुरुश्चेति चत्वारः स्मृता गन्धर्वसत्तमाः ॥ ५१ ॥ अमृतं ब्राह्मणा गावो गन्धर्वाप्सरसस्तथा । अपत्यं कपिलायास्तु पुराणे परिकीर्त्तितम् ॥ ५२ ॥ इति ते सर्वभूतानां सम्भवः कथितो मया । यथावत्संपरिख्यातो गन्धर्वाप्सरसां तथा ॥ ५३ ॥ भुजगानां सुपर्णानां रुद्राणां मरुतां तथा । गवाञ्च ब्राह्मणानाञ्च श्रीमतां पुण्यकर्मणाम् ॥ ५४ ॥ आयुष्यश्चैव पुण्यश्च धन्यः श्रुतिसुखावहः । श्रोतव्यश्चैव सततं श्राव्यश्चैवानसूयता ॥ ५५ ॥ इमन्तु वंशं नियमेन यः पठेन्महात्मनां ब्राह्मणदेवसन्निधौ । अपत्यलाभं लभते स पुष्कलं श्रियं यशः प्रेत्य च शोभनाङ्गतिम् ॥ ५६ ॥

इत्यादिपर्वणि सम्भवपर्वण्यंशावतरणे पञ्चषष्टोऽध्यायः ॥ ६५ ॥

—•—

वैशम्पायन उवाच । ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः । एकादश सुताः स्थाणोः ख्याताः परमतेजसः ॥१॥ मृगव्याधश्च सर्पश्च निरृतिश्च महायशाः । अजैकपादहिर्बुध्नः पिनाकी च परन्तपः ॥ २ ॥ दहनोऽथेश्वरश्चैव कपाली च महाद्युतिः । स्थाणुर्भगश्च भगवान् रुद्रा एकादश स्मृताः ॥ ३ ॥ मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । षडेते ब्रह्मणः पुत्रा वीर्य्यवन्तो महर्षयः ॥ ४ ॥ त्रयस्त्वङ्गिरसः पुत्रा लोके सर्वत्र विश्रुताः । बृहस्पतिरुतथ्यश्च सम्वर्त्तश्च धृतव्रतः ॥ ५ ॥ अत्रेस्तु बहवः पुत्राः श्रूयन्ते मनुजाधिप । सर्वे वेदविदः सिद्धाः शान्तात्मानो महर्षयः ॥ ६ ॥ राक्षसाश्च पुलस्त्यस्य वानराः किन्नरा-

तथा । यक्षाश्च मनुजव्याघ्र पुत्रास्तस्य च धीमतः ॥ ७ ॥ पुलहस्य सुता राजञ्छरभाः परिकीर्त्तिताः । सिंहाः किंपुरुषा व्याघ्रा यक्षा ईहामृगास्तथा ॥ ८ ॥ क्रतोः क्रतुसमाः पुत्राः पतङ्गसहचारिणः । विश्रुतास्त्रिषु लोकेषु सत्यव्रतपरायणाः ॥ ९ ॥ दक्षस्त्वजायताङ्गुष्ठाद्दक्षिणाद्भगवानृषिः । ब्रह्मणः पृथिवीपाल शान्तात्मा सुमहातपाः ॥ १० ॥ वामादजायताङ्गुष्ठाद्भार्य्या तस्य महात्मनः । तस्यां पञ्चाशतं कन्याः स एवाजनयन्मुनिः ॥ ११ ॥ ताः सर्वास्त्वनवद्याङ्ग्यः कन्याः कमललोचनाः । पुत्रिकाः स्थापयामास नष्टपुत्रः प्रजापतिः ॥ १२ ॥ ददौ स दश धर्माय सप्तविंशतिमिन्दवे । दिव्येन विधिना राजन् कश्यपाय त्रयोदश ॥ १३ ॥ नामतो धर्मपत्न्यस्ताः कीर्त्त्यमाना निबोध मे । कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया तथा ॥ १४ ॥ बुद्धिर्लज्जा मतिश्चैव पत्न्यो धर्मस्य ता दश । द्वाराण्येतानि धर्मस्य विहितानि स्वयम्भुवा ॥१५॥ सप्तविंशतिः सोमस्य पत्न्यो लोकेषु विश्रुताः । कालस्य नयने युक्ताः सोमपत्न्यः शुचिव्रताः ॥ १६ ॥ सर्वा नक्षत्रयोगिन्यो लोकयात्राविधानतः । पैतामहो मनुर्देवस्तस्य पुत्रः प्रजापतिः । तस्याष्टौ वसवः पुत्रास्तेषां वक्ष्यामि विस्तरम् ॥ १७ ॥ धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविति स्मृताः ॥ १८ ॥ धूम्रायास्तु धरः पुत्रो ब्रह्मविद्यो ध्रुवस्तथा । चन्द्रमास्तु मनस्विन्याः श्वसायाः श्वसनस्तथा ॥ १९ ॥ रतायाश्चाप्यहः पुत्रः शाण्डिल्याश्च हुताशनः । प्रत्यूषश्च प्रभासश्च प्रभातायाः सुतौ स्मृतौ ॥ २० ॥ धरस्य पुत्रो द्रविणो हुतहव्यवहस्तथा । ध्रुवस्य पुत्रो भगवान् कालो लोकप्रकालनः ॥ २१ ॥ सोमस्य तु सुतो वर्च्चा वर्च्चस्वी येन जायते । मनोहरायाः शिशिरः प्राणोऽथ रमणस्तथा ॥२२॥ अह्नः सुतस्तथा ज्योतिः शमः शान्तस्तथा मुनिः । अग्नेः पुत्रः

कुमारस्तु श्रीमाञ्छरवनालयः ॥ २३ ॥ तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजः । कृत्तिकाभ्युपपत्तेश्च कार्त्तिकेय इति स्मृतः ॥ २४ ॥ अनिलस्य शिवा भार्य्या तस्याः पुत्रो मनोजवः । अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य तु ॥ २५ ॥ प्रत्यूषस्य विदुः पुत्रमृषिं नाम्नाथ देवलम् । द्वौ पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ । बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मवादिनी ॥ २६ ॥ योगसक्ता जगत् कृत्स्नमसक्ता विचचार ह । प्रभासस्य तु भार्य्या सा वसूनामष्टमस्य ह ॥ २७ ॥ विश्वकर्म्मा महाभागो जज्ञे शिल्पप्रजापतिः । कर्त्ता शिल्पसहस्राणां त्रिदशानाञ्च वर्द्धकिः ॥ २८ ॥ भूषणानाञ्च सर्व्वेषां कर्त्ता शिल्पवतां वरः । यो दिव्यानि विमानानि त्रिदशानां चकार ह ॥ २९ ॥ मनुष्याश्चोपजीवन्ति यस्य शिल्पं महात्मनः । पूजयन्ति च यं नित्यं विश्वकर्म्माणमव्ययम् ॥ ३० ॥ स्तनन्तु दक्षिणं भित्त्वा ब्रह्मणो नरविग्रहः । निःसृतो भगवान्धर्म्मः सर्व्वलोकसुखावहः ॥ ३१ ॥ त्रयस्तस्य वराः पुत्राः सर्व्वभूतमनोहराः । शमः कामश्च हर्षश्च तेजसा लोकधारिणः ॥ ३२ ॥ कामस्य तु रतिर्भार्य्या शमस्य प्राप्तिरङ्गना । नन्दा तु भार्य्या हर्षस्य यासु लोकाः प्रतिष्ठिताः ॥ ३३ ॥ मरीचेः कश्यपः पुत्रः कश्यपस्य सुरासुराः । जज्ञिरे नृपशार्दूल लोकानां प्रभवस्तु सः ॥ ३४ ॥ त्वाष्ट्री तु सवितुर्भार्य्या वड़वारूपधारिणी । असूयत महाभागा सान्तरीक्षेऽश्विनावुभौ ॥ ३५ ॥ द्वादशैवादितेः पुत्राः शक्रमुख्या नराधिप । तेषामवरजो विष्णुर्यत्र लोकाः प्रतिष्ठिताः ॥ ३६ ॥ त्रयस्त्रिंशत इत्येते देवास्तेषामहं तव । अन्वयं सम्प्रवक्ष्यामि पक्षैश्च कुलतो गणान् ॥ ३७ ॥ रुद्राणामपरः पक्षः साध्यानां मरुतां तथा । वसूनां भार्गवं विद्याद्विश्वेदेवांस्तथैव च ॥ ३८ ॥ वैनतेयस्तु गरुड़ो बलवानरुणस्तथा । बृहस्पतिश्च भगवानादित्ये-

ष्येव गण्यते ॥ ३९ ॥ अश्विनौ गुह्यकान् विद्धि सर्वौषध्यस्तथा पशून्। एते देवगणा राजन् कीर्त्तितास्तेऽनुपूर्वशः ॥ ४० ॥ यान् कीर्त्तयित्वा मनुजः सर्वपापैः प्रमुच्यते। ब्रह्मणो हृदयं भित्त्वा निःसृतो भगवान् भृगुः ॥ ४१ ॥ भृगोः पुत्त्रः कविर्विद्वां-च्छुक्रः कविसुतो ग्रहः। त्रैलोक्यप्राणयात्रार्थं वर्षावर्षे भया-भये ॥ ४२ ॥ स्वयम्भुवा नियुक्तः सन् भुवनं परिधावति। योगा-चार्य्यो महाबुद्धिर्दैत्यानामभवद्गुरुः। सुराणां चापि मेधावी ब्रह्मचारी यतव्रतः ॥ ४३ ॥ तस्मिन्नियुक्ते विधिना योगक्षेमाय भार्गवे। अन्यमुत्पादयामास पुत्त्रं भृगुरनिन्दितम् ॥ ४४ ॥ च्यवनं दीप्ततपसं धर्म्मात्मानं यशस्विनम्। यः स रोषाच्च्युतो गर्भान्मातु-र्मोक्षाय भारत ॥ ४५ ॥ आरुषी तु मनोः कन्या तस्य पत्नी मनीषिणः। और्वस्तस्यां समभवदूरुं भित्त्वा महायशाः ॥ ४६ ॥ महातेजा महावीर्य्यो बाल एव गुणैर्युतः। ऋचीकस्तस्य पुत्त्रस्तु जमदग्निस्ततोऽभवत् ॥ ४७ ॥ जमदग्नेस्तु चत्वार आसन् पुत्त्रा महात्मनः। रामस्तेषां जघन्योऽभूदजघन्यैर्गुणैर्युतः ॥ ४८ ॥ सर्व्व-शस्त्रेषु कुशलः क्षत्त्रियान्तकरो वशी। और्वस्यासीत् पुत्त्रशतं जमदग्निपुरोगमम्। तेषां पुत्त्रसहस्राणि बभूवुर्भुवि विस्तरः ॥ ४९ ॥ द्वौ पुत्त्रौ ब्रह्मणस्त्वन्यौ ययोस्तिष्ठति लक्षणम्। लोके धाता विधाता च यौ स्थितौ मनुना सह ॥ ५० ॥ तयोरेव स्वसा देवी लक्ष्मीः पद्मगृहा शुभा। तस्यास्तु मानसाः पुत्त्रास्तुरगा व्योमचारिणः ॥ ५१ ॥ वरुणस्य भार्य्या या ज्येष्ठा शुक्राद्देवी व्यजायत। तस्याः पुत्त्रं बलं विद्धि सुरां च सुरनन्दिनीम् ॥ ५२ ॥ प्रजानामन्नकामानामन्योन्यपरिभक्षणात्। अधर्म्मस्तत्र सञ्जातः सर्व्वभूतविनाशकः ॥ ५३ ॥ तस्यापि निरृतिर्भार्य्या नैरृता येन राक्षसाः। घोरास्तस्यास्त्रयः पुत्त्राः पापकर्म्मरताः सदा ॥ ५४ ॥ भयो महाभयश्चैव मृत्युर्भूतान्तकस्तथा। न तस्य भार्य्या

पुत्रो वा कश्चिदत्यन्तको हि सः ॥ ५५ ॥ काकीं श्येनीं तथा
भासीं धृतराष्ट्रीं तथा शुकीम्। ताम्रा तु सुषुवे देवी पञ्चैता
लोकविश्रुताः ॥ ५६ ॥ उलूकान् सुषुवे काकी श्येनी श्येनान्
व्यजायत। भासी भासानजनयद्गृध्रांश्चैव जनाधिप ॥ ५७ ॥
धृतराष्ट्री तु हंसांश्च कलहंसांश्च सर्व्वशः। चक्रवाकांश्च भद्रा तु
जनयामास सैव तु ॥ ५८ ॥ शुकी च जनयामास शुकानेव
यशस्विनी। कल्याणगुणसम्पन्ना सर्व्वलक्षणपूजिता ॥ ५९ ॥
नव क्रोधवशा नारीः प्रजज्ञे क्रोधसम्भवाः। मृगी च मृगमन्दा
च हरी भद्रमना अपि ॥ ६० ॥ मातङ्गी त्वथ शार्दूली श्वेता
सुरभिरेव च। सर्व्वलक्षणसम्पन्ना सुरसा चैव भामिनी ॥ ६१ ॥
अपत्यं तु मृगाः सर्व्वे मृग्या नरवरोत्तम। ऋक्षाश्च मृगमन्दायाः
सृमराश्च परन्तप ॥ ६२ ॥ ततस्त्वैरावतं नागं जज्ञे भद्रमनाः
सुतम्। ऐरावतः सुतस्तस्या देवनागो महागजः ॥ ६३ ॥ हर्य्याश्च
हरयोऽपत्यं वानराश्च तरस्विनः। गोलाङ्गूलांश्च भद्रन्ते हर्य्याः
पुत्रान् प्रचक्षते ॥ ६४ ॥ प्रजज्ञे त्वथ शार्दूली सिंहान् व्याघ्रा-
नशेषतः। द्वीपिनश्च महासत्त्वान् सर्व्वानेव न संशयः ॥ ६५ ॥
मातङ्ग्यपि च मातङ्गानपत्यानि नराधिप। दिशां गजांस्तु
श्वेताख्यं श्वेताजनयदाशुगान् ॥ ६६ ॥ तथा दुहितरौ राजन्
सुरभिर्वै व्यजायत। रोहिणीं चैव भद्रा तु गन्धर्व्वीं तु यश-
स्विनी ॥ ६७ ॥ विमलामपि भद्रन्ते अनलामपि भारत।
रोहिण्यां जज्ञिरे गावो गन्धर्व्व्यां वाजिनः सुताः। सप्तपिण्ड-
फलान् वृक्षाननलापि व्यजायत ॥ ६८ ॥ अनलायाः शुकी
पुत्री कङ्कस्तु सुरसासुतः। अरुणस्य भार्य्या श्येनी तु वीर्य्यवन्तौ
महाबलौ ॥ ६९ ॥ सम्पातिं जनयामास वीर्य्यवन्तं जटायुषम्।
सुरसाजनयन्नागान् कद्रूः पुत्रांस्तु पन्नगान् ॥ ७० ॥ द्वौ पुत्रौ
विनतायास्तु विख्यातौ गरुडारुणौ। इत्येष सर्व्वभूतानां महतां

मनुजाधिप। प्रभवः कीर्त्तितः सम्यङ्मया मतिमतां वर॥७१॥ यं श्रुत्वा पुरुषः सम्यङ्मुक्तो भवति पाप्मनः। सर्वज्ञताञ्च लभते गतिमग्र्याञ्च विन्दति॥ ७२॥

इत्यादिपर्व्वणि सम्भवपर्व्वण्यंशावतरणे षट्षष्टोऽध्यायः॥ ६६॥

—•:•—

जनमेजय उवाच। देवानां दानवानाञ्च गन्धर्वोरगरक्षसाम्। सिंहव्याघ्रमृगाणाञ्च पन्नगानां पतत्त्रिणाम्॥१॥ सर्वेषाञ्चैव भूतानां सम्भवं भगवन्नहम्। श्रोतुमिच्छामि तत्त्वेन मानुषेषु महात्मनाम्। जन्म कर्म च भूतानामेतेषामनुपूर्वशः॥ २॥

वैशम्पायन उवाच। मानुषेषु मनुष्येन्द्र संभूता ये दिवौकसः। प्रथमं दानवांश्चैव तांस्ते वक्ष्यामि सर्वशः॥ ३॥ विप्रचित्तिरिति ख्यातो य आसीद्दानवर्षभः। जरासन्ध इति ख्यातः स आसीन्मनुजर्षभः॥ ४॥ दितेः पुत्रस्तु यो राजन् हिरण्यकशिपुः स्मृतः। स जज्ञे मानुषे लोके शिशुपालो नरर्षभ॥५॥ संह्लाद इति विख्यातः प्रह्लादस्यानुजस्तु यः। स शल्य इति विख्यातो जज्ञे वाह्लीकपुङ्गवः॥ ६॥ अनुह्लादस्तु तेजस्वी योऽभूत् ख्यातो जघन्यजः। धृष्टकेतुरिति ख्यातः स बभूव नरेश्वरः॥ ७॥ यस्तु राजञ्छिविर्नाम दैतेयः परिकीर्त्तितः। द्रुम इत्यभिविख्यातः स आसीद्भुवि पार्थिवः॥ ८॥ वाष्कलो नाम यस्तेषामासीदसुरसत्तमः। भगदत्त इति ख्यातः स जज्ञे पुरुषर्षभ॥ ९॥ अयःशिरा अश्वशिरा अयःशङ्कुश्च वीर्य्यवान्। तथा गगनमूर्द्धा च वेगवांश्चात्र पञ्चमः॥ १०॥ पञ्चैते जज्ञिरे राजन् वीर्य्यवन्तो महासुराः। केकयेषु महात्मानः पार्थिवर्षभसत्तमाः॥११॥ केतुमानिति विख्यातो यस्ततोऽन्यः प्रतापवान्। ...जा इति ख्यातः सोग्रकर्मा नराधिपः॥१२॥ स्वर्भानुरिति

विख्यातः श्रीमान्यस्तु महासुरः । उग्रसेन इति ख्यात उग्रकर्मा नराधिपः ॥ १३ ॥ यस्त्वश्व इति विख्यातः श्रीमानासीन्महासुरः । अशोको नाम राजाभून्महावीर्य्योऽपराजितः ॥ १४ ॥ तस्मादवरजो यस्तु राजन्नश्वपतिः स्मृतः । दैतेयः सोऽभवद्राजा हार्द्दिक्यो मनुजर्षभः ॥१५॥ वृषपर्व्वेति विख्यातः श्रीमान्यस्तु महासुरः । दीर्घप्रज्ञ इति ख्यातः पृथिव्यां सोऽभवन्नृपः ॥ १६ ॥ अजकस्त्ववरो राजन्य आसीद्वृषपर्व्वणः । स शाल्व इति विख्यातः पृथिव्यामभवन्नृपः। अश्वग्रीव इति ख्यातः सत्त्ववान्यो महासुरः ॥ १७ ॥ रोचमान इति ख्यातः पृथिव्यां सोऽभवन्नृपः । सूक्ष्मस्तु मतिमान् राजन् कीर्त्तिमान् यः प्रकीर्त्तितः ॥ १८ ॥ वृहद्रथ इति ख्यातः क्षितावासीत्स पार्थिवः । तुहुण्ड इति विख्यातो य आसीदसुरोत्तमः । १९ ॥ सेनाविन्दुरिति ख्यातः स बभूव नराधिपः । इषुपो नाम यस्तेषामसुराणां बलाधिकः ॥ २० ॥ नग्नजिन्नाम राजासीद्भुवि विख्यातविक्रमः । एकचक्र इति ख्यात आसीद्यस्तु महासुरः ॥ २१ ॥ प्रतिविन्ध्य इति ख्यातो बभूव प्रथितः क्षितौ । विरूपाक्षस्तु दैतेयश्चित्रयोधी महासुरः ॥ २२ ॥ चित्रधर्म्मेति विख्यातः क्षितावासीत्स पार्थिवः । हरस्त्वरिहरो वीर आसीद्यो दानवोत्तमः ॥ २३ ॥ सुबाहुरिति विख्यातः श्रीमानासीत्स पार्थिवः । अहरस्तु महातेजाः शत्रुपक्षक्षयङ्करः ॥ २४ ॥ वाह्लीको नाम राजा स बभूव प्रथितः क्षितौ । निचन्द्रश्चन्द्रवक्त्रस्तु य आसीदसुरोत्तमः ॥ २५ ॥ मुञ्जकेश इति ख्यातः श्रीमानासीत्स पार्थिवः । निकुम्भस्त्वजितः संख्ये महामतिरजायत ॥ २६ ॥ भूमौ भूमिपतिश्रेष्ठो देवाधिप इति स्मृतः । शरभो नाम यस्तेषां दैतेयानां महासुरः ॥ २७ ॥ पौरवो नाम राजर्षिः स बभूव नरोत्तमः। कुपथस्तु महावीर्य्यः श्रीमान् राजन्महासुरः ॥२८॥

सुपार्श्व इति विख्यातः क्षितौ जज्ञे महीपतिः । क्रथस्तु राजन्
राजर्षिः क्षितौ जज्ञे महासुरः ॥ २९ ॥ पार्वतेय इति ख्यातः
काञ्चनाचलसन्निभः । द्वितीयः शलभस्तेषामसुराणां बभूव ह
॥ ३० ॥ प्रह्लादो नाम बाह्लीकः स बभूव नराधिपः । चन्द्रस्तु
दितिजश्रेष्ठो लोके ताराधिपोपमः ॥ ३१ ॥ चन्द्रवर्मेति विख्यातः
काम्बोजानां नराधिपः । अर्क इत्यभिविख्यातो यस्तु दानव-
पुङ्गवः ॥ ३२ ॥ ऋषिको नाम राजर्षिर्बभूव नृपसत्तमः । मृतपा
इति विख्यातो य आसीदसुरोत्तमः ॥ ३३ ॥ पश्चिमानूपकं विद्धि
तं नृपं नृपसत्तम । गविष्ठस्तु महातेजा यः प्रख्यातो महासुरः
॥ ३४ ॥ द्रुमसेन इति ख्यातः पृथिव्यां सोऽभवन्नृपः । मयूर
इति विख्यातः श्रीमान्यस्तु महासुरः ॥ ३५ ॥ स विश्व इति
विख्यातो बभूव पृथिवीपतिः । सुपर्ण इति विख्यातस्तस्मादव-
रजस्तु यः ॥ ३६ ॥ कालकीर्त्तिरिति ख्यातः पृथिव्यां सोऽभव-
न्नृपः । चन्द्रहन्तेति यस्तेषां कीर्त्तितः प्रवरोऽसुरः ॥ ३७ ॥
शुनको नाम राजर्षिः स बभूव नराधिपः । विनाशनस्तु चन्द्रस्य
य आख्यातो महासुरः ॥ ३८ ॥ जानकिर्नाम विख्यातः सोऽभव-
न्मनुजाधिपः । दीर्घजिह्वस्तु कौरव्य य उक्तो दानवर्षभः ॥ ३९ ॥
काशिराजः स विख्यातः पृथिव्यां पृथिवीपते । ग्रहन्तु सुषुवे
यन्तु सिंहिकार्केन्दुमर्द्दनम् । स क्राथ इति विख्यातो बभूव
मनुजाधिपः ॥ ४० ॥ अनायुषस्तु पुत्राणां चतुर्णां प्रवरोऽसुरः ।
विक्षरो नाम तेजस्वी वसुमित्रो नृपः स्मृतः ॥ ४१ ॥ द्वितीयो
विक्षराद्यस्तु नराधिप महासुरः । पाण्ड्यराष्ट्राधिप इति विख्यातः
सोऽभवन्नृपः ॥ ४२ ॥ बलीन इति विख्यातो यस्त्वासीदसुरो-
त्तमः । पौण्ड्रमत्स्यक इत्येवं बभूव स नराधिप ॥ ४३ ॥ वृत्र
इत्यभिविख्यातो यस्तु राजन्महासुरः । मणिमान्नाम राजर्षिः
स बभूव नराधिपः ॥ ४४ ॥ क्रोधहन्तेति यस्तस्य बभूवावरजो-

ऽसुरः। दण्ड इत्यभिविख्यातः स आसीन्नृपतिः क्षितौ ॥ ४५ ॥
क्रोधवर्द्धन इत्येव यस्त्वन्यः परिकीर्त्तितः। दण्डधार इति ख्यातः
सोऽभवन्मनुजर्षभ. ॥ ४६ ॥ कालेयानान्तु ये पुत्रास्तेषामष्टौ
नराधिपाः। जज्ञिरे राजशार्दूल शार्दूलसमविक्रमाः ॥ ४७ ॥
मगधेषु जयत्सेनस्तेषामासीत्स पार्थिवः। अष्टानाम्प्रवरस्तेषां
कालेयानां महासुरः ॥ ४८ ॥ द्वितीयस्तु, ततस्तेषां श्रीमान्
हरिहयोपमः। अपराजित इत्येवं स बभूव नराधिपः ॥ ४९ ॥
तृतीयस्तु महातेजा महामायो महासुरः। निषादाधिपति-
र्जज्ञे भुवि भीमपराक्रमः ॥ ५० ॥ तेषामन्यतमो यस्तु चतुर्थः
परिकीर्त्तितः। श्रेणिमानिति विख्यातः क्षितौ राजर्षिसत्तमः
॥ ५१ ॥ पञ्चमस्त्वभवत्तेषां प्रवरो यो महासुरः। महौजा
इति विख्यातो बभूवेह परन्तपः ॥ ५२ ॥ षष्ठस्तु मतिमान्यो
वै तेषामासीन्महासुरः। अभीरुरिति विख्यातः क्षितौ राजर्षि-
सत्तमः ॥ ५३ ॥ समुद्रसेनस्तु नृपस्तेषामेवाभवद्गणात्। विश्रुतः
सागरान्तायां क्षितौ धर्मार्थतत्त्ववित् ॥ ५४ ॥ बृहन्नामाष्टम-
स्तेषां कालेयानां नराधिप। बभूव राजा धर्मात्मा सर्वभूतहिते
रतः ॥ ५५ ॥ कुक्षिस्तु राजन् विख्यातो दानवानां महाबलः।
पार्वतीय इति ख्यातः काञ्चनाचलसन्निभः ॥ ५६ ॥ क्रथनश्च
महावीर्य्यः श्रीमान्राजन्महासुरः। सूर्य्याक्ष इति विख्यातः
क्षितौ जज्ञे महीपतिः ॥ ५७ ॥ असुराणान्तु यः सूर्य्यः श्रीमां-
श्चैव महासुरः। दरदो नाम बाह्लीको वरः सर्वमहीक्षिताम्
॥ ५८ ॥ गणः क्रोधवशो नाम यस्ते राजन् प्रकीर्त्तितः।
ततः सञ्जज्ञिरे वीराः क्षिताविह नराधिपाः ॥ ५९ ॥ मद्रकः
कर्णवेष्टश्च सिद्धार्थः कीटकस्तथा। सुवीरश्च सुबाहुश्च महावीरोऽथ
बाह्लिकः ॥ ६० ॥ क्रथो विचित्रः सुरथः श्रीमान्नीलश्च भूमिपः।
चीरवासाश्च कौरव्य भूमिपालश्च नामतः ॥ ६१ ॥ दन्तवक्रश्च

नामासीद्दुर्जयश्चैव दानवः। रुक्मी च नृपशार्दूलो राजा च जनमेजय॥ ६२॥ आषाढो वायुवेगश्च भूरितेजास्तथैव च। एकलव्यः सुमित्रश्च वाटधानोऽथ गोमुखः॥ ६३॥ कारूषकाश्च राजानः क्षेमधूर्त्तिस्तथैव च। श्रुतायुरुद्वहश्चैव बृहत्सेनस्तथैव च॥ ६४॥ क्षेमोग्रतीर्थः कुहरः कलिङ्गेषु नराधिपः। मतिमांश्च मनुष्येन्द्र ईश्वरश्चेति विश्रुतः॥ ६५॥ गणात् क्रोधवशादेष राजपूगोऽभवत् क्षितौ। जातः पुरा महाभागो महाकीर्त्तिर्महाबलः॥ ६६॥ कालनेमिरिति ख्यातो दानवानां महाबलः। स कंस इति विख्यात उग्रसेनसुतो बली॥ ६७॥ यस्त्वासीद्देवको नाम देवराजसमद्युतिः। स गन्धर्व्वपतिर्मुख्यः क्षितौ जज्ञे नराधिपः॥ ६८॥ बृहस्पतेर्बृहत्कीर्त्तेर्देवर्षेर्विद्धि भारत। अंशाद्द्रोणं समुत्पन्नं भारद्वाजमयोनिजम्॥ ६९॥ धन्विनां नृपशार्दूल यः सर्व्वास्त्रविदुत्तमः। महाकीर्त्तिर्महातेजाः स जज्ञे मनुजेश्वरः॥ ७०॥ धनुर्वेदे च वेदे च यं तं वेदविदो विदुः। वरिष्ठं चित्रकर्म्माणं द्रोणं स्वकुलवर्द्धनम्॥ ७१॥ महादेवान्तकाभ्याञ्च कामात् क्रोधाच्च भारत। एकत्वमुपपन्नानां जज्ञे शूरः परन्तपः॥ ७२॥ अश्वत्थामा महावीर्य्यः शत्रुपक्षक्षयावहः। वीरः कमलपत्राक्षः क्षितावासीन्नराधिप॥ ७३॥ जज्ञिरे वसवस्त्वष्टौ गङ्गायां शान्तनोः सुताः। वशिष्ठस्य च शापेन नियोगाद्वासवस्य च॥ ७४॥ तेषामवरजो भीष्मः कुरूणामभयङ्करः। मतिमान्वेदविद्वाग्मी शत्रुपक्षक्षयङ्करः॥ ७५॥ जामदग्न्येन रामेण सर्व्वास्त्रविदुषां वरः। योऽयुध्यत महातेजा भार्गवेण महात्मना। यस्तु राजन् कृपो नाम ब्रह्मर्षिरभवत् क्षितौ। रुद्राणान्तु गणाद्विद्धि संभूतमतिपौरुषम्॥ ७६॥ शकुनिर्नाम यस्त्वासीद्राजा लोके महारथः। द्वापरं विद्धि तं राजन् संभूतमरिमर्द्दनम्॥ ७७॥ सात्यकिः सत्यसन्धश्च योऽसौ

इक्ष्वाकुकुलोद्वहः। पश्चात्स जज्ञे मरुतां देवानामरिमर्द्दनः ॥७८॥
द्रुपदश्चैव राजर्षिस्तत एवाभवद्गणात्। मानुषे नृप लोके-
ऽस्मिन् सर्व्वशस्त्रभृतांवरः ॥ ७९ ॥ ततश्च कृतवर्म्माणं विद्धि
राजन् जनाधिपम्। तमप्रतिमकर्म्माणं क्षत्रियर्षभसत्तमम् ॥८०॥
मरुतान्तु गणाद्विद्धि सञ्जातमरिमर्द्दनम्। विराटं नाम राजानं
परराष्ट्रप्रतापनम् ॥ ८१ ॥ अरिष्टायास्तु यः पुत्रो हंस इत्यभि-
विश्रुतः। स गन्धर्व्वपतिर्ज्जज्ञे कुरुवंशविवर्द्धनः ॥ ८२ ॥ धृत-
राष्ट्र इति ख्यातः कृष्णद्वैपायनात्मजः। दीर्घबाहुर्महातेजाः
प्रज्ञाचक्षुर्न्नराधिपः ॥ ८३ ॥ मातुर्द्दोषादृषेः कोपादन्ध एव
व्यजायत। तस्यैवावरजो भ्राता महासत्त्वो महाबलः। स पाण्डु-
रिति विख्यातः सत्यधर्म्मरतः शुचिः ॥ ८४ ॥ अत्रेस्तु सुमहा-
भागं पुत्रं पुत्रवतांवरम्। विदुरं विद्धि तं लोके जातं बुद्धि-
मतांवरम् ॥ ८५ ॥ कलेरंशस्तु सञ्जज्ञे भुवि दुर्य्योधनो नृपः।
दुर्बुद्धिर्दुर्म्मतिश्चैव कुरूणामयशस्करः ॥ ८६ ॥ जगतो यस्तु
सर्व्वस्य विद्विष्टः कलिपूरुषः। यः सर्व्वां घातयामास पृथिवीं
पृथिवीपते ॥ ८७ ॥ उद्दीपितं येन वैरं भूतान्तकरणं महत्।
पौलस्त्या भ्रातरश्चास्य जज्ञिरे मनुजेष्विह ॥ ८८ ॥ शतं दुःशा-
सनादीनां सर्व्वेषां क्रूरकर्म्मणाम्। दुर्म्मुखो दुःसहश्चैव ये चान्ये
नानुकीर्त्तिताः ॥ ८९ ॥ दुर्य्योधनसहायास्ते पौलस्त्या भरतर्षभ।
वैश्यापुत्रो युयुत्सुश्च धार्त्तराष्ट्रः शताधिकः ॥ ९० ॥

जनमेजय उवाच। ज्येष्ठानुज्येष्ठतामेषां नामधेयानि वा
विभो। धृतराष्ट्रस्य पुत्राणामानुपूर्व्व्येण कीर्त्तय ॥ ९१ ॥

वैशम्पायन उवाच। दुर्य्योधनो युयुत्सुश्च राजन्दुःशासनस्तथा।
दुःसहो दुःशलश्चैव दुर्म्मुखश्च तथा परः ॥ ९२ ॥ विविंशति-
र्व्विकर्णश्च जलसन्धः सुलोचनः। विन्दानुविन्दौ दुर्द्धर्षः सुबाहु-
र्दुष्प्रधर्षणः ॥ ९३ ॥ दुर्म्मर्षणो दुर्म्मुखश्च दुष्कर्णः कर्ण एव च।

चित्रोपचित्रौ चित्राक्षश्चारुचित्राङ्गदश्च ह ॥ ९४ ॥ दुर्मदो दुष्प्र-
धर्षश्च विवित्सुर्विकटः समः। ऊर्णनाभः पद्मनाभस्तथा नन्दो-
पनन्दकौ ॥ ९५ ॥ सेनापतिः सुषेणश्च कुण्डोदरमहोदरौ।
चित्रबाहुश्चित्रवर्मा सुवर्मा दुर्विरोचनः ॥ ९६ ॥ अयोबाहु-
र्महाबाहुश्चित्रचापसुकुण्डलौ। भीमवेगो भीमबलो बलाकी
भीमविक्रमः ॥ ९७ ॥ उग्रायुधो भीमशरः कनकायुर्दृढायुधः।
दृढवर्मा दृढक्षत्रः सोमकीर्त्तिरनूदरः ॥ ९८ ॥ जरासन्धो दृढ-
सन्धः सत्यसन्धः सहस्रवाक्। उग्रश्रवा उग्रसेनः क्षेममूर्त्ति-
स्तथैव च ॥ ९९ ॥ अपराजितः पण्डितको विशालाक्षो दुरा-
धरः। दृढहस्तः सुहस्तश्च वातवेगसुवर्च्चसौ ॥ १०० ॥ आदित्य-
केतुर्बह्वाशी नागदत्तानुयायिनौ। निषङ्गी कवची दण्डी
दण्डधारो धनुर्ग्रहः। उग्रो भीमरथो वीरो वीरबाहुरलोलुपः
॥ १०१ ॥ अभयो रौद्रकर्मा च तथा दृढरथश्च यः। अनाधृष्यः
कुण्डभेदी विरावी दीर्घलोचनः ॥ १०२ ॥ दीर्घबाहुर्महाबाहु-
र्व्यूढोरुः कनकाङ्गदः। कुण्डजश्चित्रकश्चैव दुःशला च शताधिका
॥ १०३ ॥ वैश्यापुत्रो युयुत्सुश्च धार्त्तराष्ट्रः शताधिकः। एत-
देकशतं राजन् कन्या चैका प्रकीर्त्तिता ॥ १०४ ॥ नामधेयानु-
पूर्व्या च ज्येष्ठानुज्येष्ठतां विदुः। सर्वे त्वतिरथाः शूराः सर्व
युद्धविशारदाः ॥ १०५ ॥ सर्वे वेदविदश्चैव राजशास्त्रे च पारगाः
सर्वे संग्रामविद्यासु विद्याभिजनशोभिनः ॥ १०६ ॥ सर्वेषामनु-
रूपाश्च कृता दारा महीपते। दुःशलां समये राजन् सिन्धु-
राजाय कौरवः ॥ १०७ ॥ जयद्रथाय प्रददौ सौबलानुमते तदा।
धर्मस्यांशन्तु राजानं विद्धि राजन्युधिष्ठिरम् ॥ १०८ ॥ भीम-
सेनन्तु वातस्य देवराजस्य चार्जुनम्। अश्विनोस्तु तथैवांशौ
रूपेणाप्रतिमौ भुवि ॥ १०९ ॥ नकुलः सहदेवश्च सर्वभूतमनो-
हरः। यस्तु वर्च्चा इतिख्यातः सोमपुत्रः प्रतापवान् ॥ ११० ॥

सोऽभिमन्युरिति ख्यातः त्वर्ज्जुनस्य सुतोऽभवत् । यस्यावतरणे राजन् सुरान् सोमोऽब्रवीदिदम् ॥ १११ ॥ नाहं दद्यामिमं पुत्रं मम प्राणैर्गरीयसम् । समयः क्रियतामेष न शक्यमतिवर्त्तितुम् ॥११२॥ सुरकार्य्यं हि नः कार्य्यमसुराणां क्षितौ वधः । तत्र यास्यत्ययं वर्च्चा न च स्थास्यति वै चिरम् ॥ ११३ ॥ ऐन्द्रिर्नरस्तु भविता यस्य नारायणः सखा । सोऽर्ज्जुनेत्यभिविख्यातो पाण्डोः पुत्रः प्रतापवान् ॥ ११४ ॥ तस्यायं भविता पुत्रो बालो भुवि महारथः । ततः षोड़श वर्षाणि स्थास्यत्यमरसत्तमाः ॥ ११५ ॥ अस्य षोड़शवर्षस्य स संग्रामो भविष्यति । यत्रांशा वः करिष्यन्ति कर्म्म वीरनिसूदनम् ॥ ११६ ॥ नरनारायणाभ्यां तु स संग्रामो विना कृतः । चक्रव्यूहं समास्थाय योधयिष्यन्ति वः सुराः ॥११७॥ विमुखाञ्छात्रवान् सर्व्वान् कारयिष्यति मे सुतः । बालः प्रविश्य च व्यूहमभेद्यं विचरिष्यति ॥ ११८ ॥ महारथानां वीराणां कदनञ्च करिष्यति । सर्व्वेषामेव शत्रूणां चतुर्थांशं नयिष्यति ॥ ११९ ॥ दिनार्द्धेन महाबाहुः प्रेतराजपुरं प्रति । ततो महारथैर्वीरैः समेत्य बहुशो रणे ॥ १२० ॥ दिनक्षये महाबाहुर्मया भूयः समेष्यति । एकं वंशकरं पुत्रं वीरं वै जनयिष्यति ॥ १२१ ॥ प्रनष्टं भारतं वंशं स भूयो धारयिष्यति । एतत् सोमवचः श्रुत्वा तथास्त्विति दिवौकसः ॥ १२२ ॥ प्रत्यूचुः सहिताः सर्व्वे ताराधिपमपूजयन् । एवं ते कथितं राजंस्तव जन्म पितुः पितुः ॥१२३॥ अग्नेर्भागन्तु विद्धि त्वं धृष्टद्युम्नं महारथम् । शिखण्डिनमथो राजन् स्त्रीपूर्व्वं विद्धि राक्षसम् ॥ १२४ ॥ द्रौपदेयाश्च ये पञ्च बभूवुर्भरतर्षभ । विश्वान्देवगणान् विद्धि सञ्जातान् भरतर्षभ ॥ १२५ ॥ प्रतिविन्ध्यः सुतसोमः श्रुतकीर्त्तिस्तथापरः । नाकुलिस्तु शतानीकः श्रुतसेनश्च वीर्य्यवान् ॥ १२६ ॥ शूरो नाम यदुश्रेष्ठो वसुदेवपिताभवत् । तस्य

कन्या पृथा नाम रूपेणासदृशी भुवि॥ १२७॥ पितुः स्वस्रीय-
पुत्राय सोऽनपत्याय वीर्य्यवान्। अग्रमग्रे प्रतिज्ञाय स्वस्यापत्यस्य
वै तदा॥ १२८॥ अग्रजातेति तां कन्यां गुरोऽनुग्रहकाङ्क्षया।
अददत्कुन्तिभोजाय स तां दुहितरं तदा॥ १२९॥ सा नियुक्ता
पितुर्गेहे ब्राह्मणातिथिपूजने। उग्रम्पर्य्यचरद्घोरं ब्राह्मणं शंसित-
व्रतम्॥ १३०॥ निगूढनिश्चयं धर्मे यन्तं दुर्वाससं विदुः।
तमुग्रं शंसितात्मानं सर्व्वयत्नैरतोषयत्॥ १३१॥ तुष्टोऽभिचार-
संयुक्तमाचचक्षे यथाविधि। उवाच चैनां भगवान् प्रीतोऽस्मि
सुभगे तव॥ १३२॥ यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि।
तस्य तस्य प्रसादात्त्वं देवि पुत्रान् जनिष्यसि॥ १३३॥ एवमुक्ता
च सा बाला तदा कौतूहलान्विता। कन्या सती देवमर्क्कमाजु-
हाव यशस्विनी॥ १३४॥ प्रकाशकर्त्ता भगवांस्तस्यां गर्भं दधौ
तदा। अजीजनत्सुतं चास्यां सर्व्वशस्त्रभृतां वरम्॥ १३५॥
सकुण्डलं सकवचं देवगर्भश्रियान्वितम्। दिवाकरसमं दीप्त्या
चारुसर्व्वाङ्गभूषितम्॥ १३६॥ निगूहमाना जातं वै बन्धुपक्ष-
भयात्तदा। उत्ससर्ज्ज जले कुन्ती तङ्कुमारं यशस्विनम्॥ १३७॥
तमुत्सृष्टं जले गर्भं राधाभर्त्ता महायशाः। राधायाः कल्पया-
मास पुत्रं सोऽधिरथस्तदा॥ १३८॥ चक्रतुर्न्नामधेयञ्च तस्य
बालस्य तावुभौ। दम्पती वसुषेणेति दिक्षु सर्व्वासु विश्रुतम्
॥ १३९॥ स वर्द्धमानो बलवान् सर्व्वास्त्रेषूत्तमोऽभवत्। वेदा-
ङ्गानि च सर्व्वाणि जजाप जयतां वरः॥ १४०॥ यस्मिन् काले
जपन्नास्ते धीमान् सत्यपराक्रमः। नादेयं ब्राह्मणेष्वासीत्तस्मिन्
काले महात्मनः॥ १४१॥ तमिन्द्रो ब्राह्मणो भूत्वा पुत्रार्थे भूत-
भावनः। ययाचे कुण्डले वीरं कवचञ्च सहाङ्गजम्॥ १४२॥
उत्कृत्य कर्णो ह्यददत्कवचं कुण्डले तथा। शक्तिं शक्रो ददौ
तस्मै विस्मितश्चेदमब्रवीत्॥ १४३॥ देवासुरमनुष्याणां गन्धर्व्वो-

रगरक्षसाम्। यस्मिन् चेच्छसि दुर्द्धर्षं स एको न भविष्यति ॥ १४३ ॥ पुरा नाम च तस्यासीद्वसुषेण इति क्षितौ। ततो वैकर्त्तनः कर्णः कर्म्मणा तेन सोऽभवत् ॥ १४४ ॥ आमुक्तकवचो वीरो यस्तु जज्ञे महायशाः। स कर्ण इति विख्यातः पृथायाः प्रथमः सुतः ॥ १४५ ॥ स तु सूतकुले वीरो ववृधे राजसत्तम। कर्णं नरवरश्रेष्ठं सर्व्वशस्त्रभृतां वरम् ॥ १४६ ॥ दुर्य्योधनस्य सचिवं मित्रं शत्रुविनाशनम्। दिवाकरस्य तं विद्धि राजन्नंशमनुत्तमम् ॥ १४७ ॥ यस्तु नारायणो नाम देवदेवः सनातनः। तस्यांशो मानुषेष्वासीद्वासुदेवः प्रतापवान् ॥ १४८ ॥ शेषस्यांशश्च नागस्य बलदेवो महाबलः। सनत्कुमारं प्रद्युम्नं विद्धि राजन्महौजसम् ॥ १४९ ॥ एवमन्ये मनुष्येन्द्रा बहवोंऽशा दिवौकसाम्। जज्ञिरे वसुदेवस्य कुले कुलविवर्द्धनाः ॥ १५० ॥ गणस्त्वप्सरसां यो वै मया राजन् प्रकीर्त्तितः। तस्य भागः क्षितौ जज्ञे नियोगाद्वासवस्य च ॥ १५१ ॥ तानि षोड़श देवीनां सहस्राणि नराधिप। बभूवुर्मानुषे लोके वासुदेवपरिग्रहाः ॥ १५२ ॥ श्रियस्तु भागः सञ्जज्ञे रत्यर्थं पृथिवीतले। भीष्मकस्य कुले साध्वी रुक्मिणी नाम नामतः ॥ १५३ ॥ द्रौपदी त्वथ सञ्जज्ञे शचीभागादनिन्दिता। द्रुपदस्य कुले कन्या वेदिमध्यादनिन्दिता ॥ १५४ ॥ नातिह्रस्वा न महती नीलोत्पलसुगन्धिनी। पद्मायताक्षी सुश्रोणी स्वसितायतमूर्द्धजा ॥ १५५ ॥ सर्व्वलक्षणसम्पन्ना वैदूर्य्यमणिसन्निभा। पञ्चानां पुरुषेन्द्राणां चित्तप्रमथनी रहः ॥ १५६ ॥ सिद्धिर्धृतिश्च ये देव्यौ पञ्चानाम्मातरौ तु ते। कुन्ती माद्री च जज्ञाते मतिस्तु सुबलात्मजा ॥ १५७ ॥ इति देवासुराणां ते गन्धर्व्वाप्सरसां तथा। अंशावतरणं राजन्राक्षसानाञ्च कीर्त्तितम् ॥ १५८ ॥ ये पृथिव्यां समुद्भूता राजानो युद्धदुर्म्मदाः। महात्मानो यदूनाञ्च ये जाता विपुले कुले

॥ १५९ ॥ ब्राह्मणाः क्षत्रिया वैश्या मया ते परिकीर्त्तिताः ।
धन्यं यशस्यं पुत्त्रीयमायुष्यं विजयावहम् । इदमंशावतरणं
श्रोतव्यमनसूयता ॥ १६० ॥ अंशावतरणं श्रुत्वा देवगन्धर्वरक्ष-
साम् । प्रभवाप्ययवित्प्राज्ञो न कृच्छ्रेष्ववसीदति ॥ १६१ ॥

इत्यादिपर्वणि सम्भवपर्वण्यंशावतरणं समाप्तं सप्तषष्टोऽध्यायः ॥ ६७॥

—०*०—

जनमेजय उवाच । त्वत्तः श्रुतमिदं ब्रह्मन्देवदानवरक्ष-
साम् । अंशावतरणं सम्यग्गन्धर्वाप्सरसां तथा ॥ १ ॥ इमं तु
भूय इच्छामि कुरूणां वंशमादितः । कथ्यमानं त्वया विप्र
विप्रर्षिगणसन्निधौ ॥ २ ॥

वैशम्पायन उवाच । पौरवाणां वंशकरो दुष्मन्तो नाम
वीर्य्यवान् । पृथिव्याश्चतुरन्ताया गोप्ता भरतसत्तम ॥ ३ ॥ चतु-
र्भागं भुवः कृत्स्नं यो भुङ्क्ते मनुजेश्वरः । समुद्रावरणांश्चापि
देशान् स समितिञ्जयः ॥ ४ ॥ आम्लेच्छावधिकान् सर्वान् स
भुङ्क्ते रिपुमर्द्दनः । रत्नाकरसमुद्रान्तांश्चातुर्वर्ण्यजनावृतान् ॥५॥
न वर्णसङ्करकरो न कृष्याकरकृज्जनः । न पापकृत्कश्चिदासी-
त्तस्मिन्राजनि शासति ॥ ६ ॥ धर्म्मे रतिं सेवमाना धर्मार्थावभि-
पेदिरे । तदा नरा नरव्याघ्र तस्मिन् जनपदेश्वरे ॥ ७ ॥
नासीच्चौरभयं तात न क्षुधाभयमण्वपि । नासीद्व्याधिभयं चापि
तस्मिन् जनपदेश्वरे ॥ ८ ॥ स्वधर्म्मे रेमिरे वर्णा दैवे कर्म्मणि
निस्पृहाः । तमाश्रित्य महीपालमासंश्चैवाकुतोभयाः ॥ ९ ॥
कालवर्षी च पर्ज्जन्यः शस्यानि रसवन्ति च । सर्वरत्नसमृद्धा च
मही पशुमती तथा ॥ १० ॥ स्वकर्मनिरता विप्रा नानृतस्तेषु
विद्यते । स चाद्भुतमहावीर्य्यो वज्रसंहननो युवा ॥ ११ ॥
उद्यम्य मन्दरं दोर्भ्यां वहेत्सवनकाननम् । चतुष्पथगदायुद्धे सर्वे-

प्रहरणेषु च ॥ १२ ॥ नागपृष्ठेऽश्वपृष्ठे च बभूव परिनिष्ठितः । बले विष्णुसमश्चासीत्तेजसा भास्करोपमः ॥ १३ ॥ अक्षोभ्यत्वेऽर्णवसमः सहिष्णुत्वे धरासमः । सम्मतः स महीपालः प्रसन्नपुरराष्ट्रवान् । भूयो धर्म्मपरैर्भावैर्मुदितं जनमादिशत ॥ १४ ॥

इत्यादिपर्व्वणि सम्भवपर्व्वणि शकुन्तलोपाख्याने अष्टषष्टोऽध्यायः ॥६८॥

जनमेजय उवाच । सम्भवं भरतस्याहं चरितञ्च महामतेः । शकुन्तलायाश्चोत्पत्तिं श्रोतुमिच्छामि तत्त्वतः ॥ १ ॥ दुष्मन्तेन च वीरेण यथा प्राप्ता शकुन्तला । तं वै पुरुषसिंहस्य भगवन् विस्तरं त्वहम् । श्रोतुमिच्छामि तत्त्वज्ञ सर्व्वं मतिमतांवर ॥ २ ॥

वैशम्पायन उवाच । स कदाचिन्महाबाहुः प्रभूतबलवाहनः । वनं जगाम गहनं हयनागशतैर्वृतः ॥ ३ ॥ बलेन चतुरङ्गेण वृतः परमवल्गुना । खड्गशक्तिधरैर्वीरैर्गदामुषलपाणिभिः ॥४॥ प्रासतोमरहस्तैश्च ययौ योधशतैर्वृतः । सिंहनादैश्च योधानां शङ्खदुन्दुभिनिःस्वनैः ॥ ५ ॥ रथनेमिस्वनैश्चैव सनागवरबृंहितैः । नानायुधधरैश्चापि नानावेशधरैस्तथा ॥ ६ ॥ हेषितस्वनमिश्रैश्च क्ष्वेडितास्फोटितस्वनैः । आसीत्किलकिलाशब्दस्तस्मिन् गच्छति पार्थिवे ॥ ७ ॥ प्रासादवरशृङ्गस्थाः परया नृपशोभया । ददृशुस्तं स्त्रियस्तत्र शूरमात्मयशस्करम् ॥ ८ ॥ शक्रोपममित्रघ्नं परवारणवारणम् । पश्यन्तः स्त्रीगणास्तत्र वज्रपाणिं स्म मेनिरे ॥ ९ ॥ अयं स पुरुषव्याघ्रो रणे वसुपराक्रमः । यस्य बाहुबलं प्राप्य न भवन्त्यसुहृद्गणाः ॥ १० ॥ इति वाचो ब्रुवन्त्यस्ताः स्त्रियः प्रेम्णा नराधिपम् । तुष्टुवुः पुष्पवृष्टीश्च ससृजुस्तस्य मूर्द्धनि ॥ ११ ॥ तत्र तत्र च विप्रेन्द्रैः स्तूयमानः समन्ततः । निर्ययौ परमप्रीत्या वनं मृगजिघांसया ॥ १२ ॥ तं देवराज-

प्रतिमं महागारणधूर्गतम् । द्विजक्षत्रियविट्शूद्रा निर्य्यान्तमनुजग्मिरे ॥ १३ ॥ ददृशुर्वर्द्धयानास्ते आशीर्भिश्च जयेन च । सुदूरमनुजग्मुस्तं पौरजानपदास्तथा ॥ १४ ॥ न्यवर्त्तन्त ततः पश्चादनुज्ञाता नृपेण ह । सुपर्णप्रतिमेनाथ रथेन वसुधाधिपः ॥ १५ ॥ महीमापूरयामास घोषेण त्रिदिवं तथा । स गच्छन् ददृशे धीमान् नन्दनप्रतिमं वनम् ॥ १६ ॥ बिल्वार्कखदिराकीर्णं कपित्थधवसङ्कुलम् । विषमं पर्वतप्रस्थैरश्मभिश्च समावृतम् ॥१७॥ निर्जलं निर्मनुष्यञ्च बहुयोजनमायतम् । मृगसिंहैर्वृतं घोरैरन्यैश्चापि वनेचरैः ॥ १८ ॥ तद्वनं मनुजव्याघ्रः सभृत्यबलवाहनः । लोड़यामास दुष्मन्तः सूदयन् विविधान्मृगान् ॥१९॥ बाणगोचरसम्प्राप्तांस्तत्र व्याघ्रगणान् बहून् । पातयामास दुष्मन्तो निर्बिभेद च सायकैः ॥ २० ॥ दूरस्थान् सायकैः कांश्चिदभिनत्स नराधिपः । अभ्यासमागतांश्चान्यान् खड्गेन निरकृन्तत ॥२१॥ कांश्चिदेणान् समाजघ्ने शक्त्या शक्तिमतांवरः । गदामण्डलतत्त्वज्ञश्चचारामितविक्रमः ॥ २२ ॥ तोमरैरसिभिश्चापि गदामुषलकम्पनैः । चचार स विनिघ्नन्वै वन्यांस्तत्र मृगद्विजान् ॥२३॥ राज्ञाचाद्भुतवीर्य्येण योधैश्च समरप्रियैः । लोड्यमानं महारण्यं तत्यजुः स्म मृगाधिपाः ॥ २४ ॥ तत्र विद्रुतयूथानि हतयूथपतीनि च । मृगयूथान्यथौत्सुक्याच्छब्दञ्चक्रुस्ततस्ततः ॥ २५ ॥ शुष्कांश्चापि नदीर्गत्वा जलनैराश्यकर्षिताः । व्यायामक्लान्तहृदयाः पतन्ति स्म विचेतसः ॥ २६ ॥ क्षुत्पिपासापरीताश्च श्रान्ताश्च पतिता भुवि । केचित्तत्र नरा व्याघ्रैरभक्ष्यन्त बुभुक्षितैः ॥ २७ ॥ केचिदग्निमथोत्पाद्य संसाध्य च वनेचराः । भक्षयन्ति स्म मांसानि प्रकुट्य विधिवत्तदा ॥ २८ ॥ तत्र केचिद्गजा मत्ता बलिनः शस्त्रविक्षताः । सङ्कोच्याग्रकरान् भीताः प्रद्रवन्ति स्म वेगिताः ॥ २९ ॥ शकृन्मूत्रं सृजन्तश्च क्षरन्तः शोणितं

बभु । वन्या गजवरास्तत्र समन्तुर्मनुजान् बहून् ॥ ३० ॥ तद्वनं
बलमेघेन शरधारेण सम्भृतम् । व्यरोचत मृगाकीर्णं राज्ञा
हतमृगाधिपम् ॥ ३१ ॥

इत्यादिपर्व्वणि सम्भवपर्व्वणि शकुन्तलोपाख्याने एकोन-
सप्ततितमोऽध्यायः ॥ ६९ ॥

वैशम्पायन उवाच । ततो मृगसहस्राणि हत्वा सबल-
वाहनः । राजा मृगप्रसङ्गेन वनमन्यद्विवेश ह ॥ १ ॥ एक
एवोत्तमबलः क्षुत्पिपासासमन्वितः । स वनस्यान्तमासाद्य मह-
च्छून्यं समासदत् ॥ २ ॥ तच्चाप्यतीत्य नृपतिरुत्तमाश्रमसंयुतम् ।
मनःप्रह्लादजननं दृष्टिकान्तमतीव च ॥ ३ ॥ शीतमारुतसंयुक्तं
जगामान्यन्महद्वनम् । पुष्पितैः पादपैः कीर्णमतीव सुखशाद्वलम्
॥ ४ ॥ विपुलं मधुरारावैर्नादितं विहगैस्तथा । पुंस्कोकिल-
निनादैश्च झिल्लीकगणनादितम् ॥ ५ ॥ प्रवृद्धविटपैर्वृक्षैः सुख-
च्छायैः समावृतम् । षट्पदाघूर्णिततलं लक्ष्म्या परमया युतम्
॥ ६ ॥ नापुष्पः पादपः कश्चिन्नाफलो नापि कण्टकी । षट्-
पदैर्नाप्यपाकीर्णस्तस्मिन्वै काननेऽभवत् ॥ ७ ॥ विहगैर्नादितं
पुष्पैरलङ्कृतमतीव च । सर्व्वर्त्तुकुसुमैर्वृक्षैः सुखच्छायैः समा-
वृतम् ॥ ८ ॥ मनोरमं महेष्वासो विवेश वनमुत्तमम् । मारुता-
कलितास्तत्र द्रुमाः कुसुमशालिनः ॥ ९ ॥ पुष्पवृष्टिं विचित्रान्तु
व्यसृजंस्ते पुनः पुनः । दिवस्पृशोऽथ संघुष्टाः पक्षिभिर्मधुर-
स्वनैः ॥ १० ॥ विरेजुः पादपास्तत्र विचित्रकुसुमाम्बराः । तेषां
तत्र प्रवालेषु पुष्पभारावनामिषु ॥ ११ ॥ रुवन्ति रावान्मधुरान्
षट्पदा मधुलिप्सवः । तत्र प्रदेशांश्च बहून् कुसुमोत्करमण्डि-
तान् ॥ १२ ॥ लतागृहपरिक्षिप्तान्मनसः प्रीतिवर्द्धनान् । सम्प-

स्मन् सुमहातेजा बभूव मुदितस्तदा ॥ १३ ॥ परस्पराश्लिष्टशाखैः पादपैः कुसुमान्वितैः । अशोभत वनं तत्तु महेन्द्रध्वजसन्निभैः ॥ १४ ॥ सिद्धचारणसङ्घैश्च गन्धर्वाप्सरसाङ्गणैः । सेवितं वनमत्यर्थं मत्तवानरकिन्नरम् ॥ १५ ॥ सुखः शीतः सुगन्धी च पुष्परेणुवहोऽनिलः । परिक्रामन्वने वृक्षानुपैतीव रिरंसया ॥ १६ ॥ एवं गुणसमायुक्तं ददर्श स वनं नृपः । नदीकच्छोद्भवं कान्तमुच्छ्रितध्वजसन्निभम् ॥ १७ ॥ प्रेक्षमाणो वनं तत्तु सुप्रहृष्टविहङ्गमम् । आश्रमप्रवरं रम्यं ददर्श च मनोरमम् ॥ १८ ॥ नानावृक्षसमाकीर्णं सम्प्रज्वलितपावकम् । तं तदाप्रतिमं श्रीमानाश्रमं प्रत्यपूजयत् ॥ १९ ॥ यतिभिर्वालिखिल्यैश्च वृतं मुनिगणान्वितम् । अग्न्यागारैश्च बहुभिः पुष्पसंस्तरसंस्तृतम् ॥ २० ॥ महाकच्छैर्बृहद्भिश्च विभ्राजितमतीव च । मालिनीमभितो राजन्नदीं पुण्यां सुखोदकाम् ॥ २१ ॥ नैकपक्षिगणाकीर्णां तपोधनमनोरमाम् । तत्र व्यालमृगान् सौम्यान् पश्यन् प्रीतिमवाप सः ॥ २२ ॥ तं चाप्रतिरथः श्रीमानाश्रमं प्रत्यपद्यत । देवलोकप्रतीकाशं सर्वतः सुमनोहरम् ॥ २३ ॥ नदीमाश्रमसंश्लिष्टां पुण्यतोयां ददर्श सः । सर्वप्राणभृतां तत्र जननीमिव धिष्ठिताम् ॥ २४ ॥ सचक्रवाकपुलिनां पुष्पफेनप्रवाहिनीम् । सकिन्नरगणावासां वानरर्क्षनिषेविताम् ॥ २५ ॥ पुण्यस्वाध्यायसंघुष्टां पुलिनैरुपशोभिताम् । मत्तवारणशार्दूलभुजगेन्द्रनिषेविताम् ॥ २६ ॥ तस्यास्तीरे भगवतः काश्यपस्य महात्मनः । आश्रमप्रवरं रम्यं महर्षिगणसेवितम् ॥ २७ ॥ नदीमाश्रमसम्बद्धां दृष्ट्वाश्रमपदं तथा । चकाराभिप्रवेशाय मतिं स नृपतिस्तदा ॥ २८ ॥ अलङ्कृतं द्वीपवत्या मालिन्या रम्यतीरया । नरनारायणस्थानं गङ्गयेवोपशोभितम् ॥ २९ ॥ मत्तबर्हिणसंघुष्टं प्रविवेश महद्वनम् । तत्स चैत्ररथप्रख्यं समुपेत्य नरर्षभः ॥ ३० ॥

अतीवगुणसम्पन्नमनिर्देश्यञ्च वर्चसा। महर्षिं काश्यपं द्रष्टु-
मथ कण्वं तपोधनम् ॥ ३१ ॥ ध्वजिनीमश्वसम्बाधां पदातिगज-
सङ्कुलाम्। अवस्थाप्य वनद्वारि सेनामिदमुवाच सः ॥ ३२ ॥
मुनिं विरजसं द्रष्टुं गमिष्यामि तपोधनम्। काश्यपं स्थीयता-
मत्र यावदागमनं मम ॥ ३३ ॥ तद्वनं नन्दनप्रख्यमासाद्य मनुजे-
श्वरः। क्षुत्पिपासे जहौ राजा मुदं चावाप पुष्कलाम् ॥ ३४ ॥
सामात्यो राजलिङ्गानि सोऽपनीय नराधिपः। पुरोहितसहा-
यश्च जगामाश्रममुत्तमम् ॥ ३५ ॥ दिदृक्षुस्तत्र तमृषिं तपो-
राशिमथाव्ययम्। ब्रह्मलोकप्रतीकाशमाश्रमं सोऽभिवीक्ष्य च
॥ ३६ ॥ षट्पदोद्गीतसंघुष्टं नानाद्विजगणायुतम्। ऋचो
बह्वृचमुख्यैश्च प्रेर्य्यमाणाः पदक्रमैः। शुश्राव मनुजव्याघ्रो
विततेष्विह कर्मसु ॥ ३७ ॥ यज्ञविद्याङ्गविद्भिश्च यजुर्विद्भिश्च
शोभितम्। मधुरैः सामगीतैश्च ऋषिभिर्नियतव्रतैः ॥ ३८ ॥
भारुण्डसामगीताभिरथर्वशिरसोद्गतैः। यतात्मभिः सुनियतैः
शुशुभे स तदाश्रमः ॥ ३९ ॥ अथर्ववेदप्रवराः पूगयज्ञीयसामगाः।
संहितामीरयन्ति स्म पदक्रमयुतां तु ते ॥ ४० ॥ शब्दसंस्कार-
संयुक्तैर्ब्रुवद्भिश्चापरैर्द्विजैः। नादितः स बभौ श्रीमान् ब्रह्मलोक
इवापरः ॥ ४१ ॥ यज्ञसंस्तरविद्भिश्च क्रमशिक्षाविशारदैः।
न्यायतत्त्वात्मविज्ञानसम्पन्नैर्वेदपारगैः ॥ ४२ ॥ नानावाक्यसमा-
हारसमवायविशारदैः। विशेषकार्य्यविद्भिश्च मोक्षधर्मपरायणैः
॥ ४३ ॥ स्थापनाक्षेपसिद्धान्तपरमार्थज्ञतां गतैः। शब्दच्छन्दो-
निरुक्तज्ञैः कालज्ञानविशारदैः ॥ ४४ ॥ द्रव्यकर्मगुणज्ञैश्च
कार्य्यकारणवेदिभिः। पक्षिवानररुतज्ञैश्च व्यासग्रन्थसमाश्रितैः
॥ ४५ ॥ नानाशास्त्रेषु मुख्यैश्च शुश्राव स्वनमीरितम्। लोकाय-
तिकमुख्यैश्च समन्तादनुनादितम् ॥ ४६ ॥ तत्र तत्र च विप्रेन्द्रा-
न्नियतान् संशितव्रतान्। जपहोमपरान् विप्रान् ददर्श पर-

वीरहा ॥ ४७ ॥ आसनानि विचित्राणि रुचिराणि महीपतिः। प्रयत्नोपहितानि स्म दृष्ट्वा विस्मयमागतः॥ ४८ ॥ दैवतायतनानाञ्च प्रेक्ष्य पूजा कृता द्विजैः। ब्रह्मलोकस्थमात्मानं मेने स नृपसत्तमः॥ ४९ ॥ स काश्यपतपोगुप्तमाश्रमप्रवरं शुभम्। नातृप्यत् प्रेक्षमाणो वै तपोवनगुणैर्युतम् ॥ ५० ॥ स काश्यपस्यायतनं महाव्रतैर्वृतं समन्तादृषिभिस्तपोधनैः। विवेश सामात्यपुरोहितोऽरिहा विविक्तमत्यर्थमनोहरं शुभम् ॥ ५१ ॥

इत्यादिपर्वणि सम्भवपर्वणि शकुन्तलोपाख्याने सप्ततितमोऽध्यायः ॥ ७० ॥

—०—

वैशम्पायन उवाच। ततो गच्छन्महाबाहुरेकोऽमात्यान् विसृज्य तान्। नापश्यच्चाश्रमे तस्मिंस्तमृषिं शंसितव्रतम् ॥१॥ सोऽपश्यमानस्तमृषिं शून्यं दृष्ट्वा तथाश्रमम्। उवाच क इहेत्युच्चैर्वनं सन्नादयन्निव ॥ २ ॥ श्रुत्वाथ तस्य तं शब्दं कन्या श्रीरिव रूपिणी। निश्चक्रामाश्रमात्तस्मात्तापसीवेशधारिणी ॥३॥ सा तन्दृष्ट्वैव राजानं दुष्यन्तमसितेक्षणा। स्वागतन्त इति क्षिप्रमुवाच प्रतिपूज्य च । ४ ॥ आसनेनार्च्चयित्वा च पाद्येनार्घ्येण चैव हि। पप्रच्छानामयं राजन् कुशलञ्च नराधिपम् ॥ ५ ॥ यथावदर्च्चयित्वाथ पृष्ट्वा चानामयं तदा। उवाच स्मयमानेव किङ्कार्य्यं क्रियतामिति ॥ ६ ॥ तामब्रवीत्ततो राजा कन्यां मधुरभाषिणीम्। दृष्ट्वा चैवानवद्याङ्गीं यथावत् प्रतिपूजितः ॥ ७ ॥ आगतोऽहं महाभागमृषिं कण्वमुपासितुम्। क गतो भगवान् भद्रे तन्ममाचक्ष्व शोभने ॥ ८ ॥

शकुन्तलोवाच। गतः पिता मे भगवान् फलान्याहर्त्तुमाश्रमात्। मुहूर्त्तं सम्प्रतीक्षस्व द्रष्टास्येनमुपागतम् ॥ ९ ॥

वैशम्पायन उवाच। अपश्यमानस्तमृषिं तथा चोक्तस्तया च
सः। तां दृष्ट्वा च वरारोहां श्रीमतीं चारुहासिनीम्॥१०॥
विभ्राजमानां वपुषा तपसा च दमेन च। रूपयौवनसम्पन्ना-
मित्युवाच महीपतिः॥११॥ का त्वं कस्यासि सुश्रोणि किमर्थं
चागता वनम्। एवंरूपगुणोपेता कुतस्त्वमसि शोभने॥१२॥
दर्शनादेव हि शुभे त्वया मेऽपहृतं मनः। इच्छामि त्वामहं
ज्ञातुं तन्ममाचक्ष्व शोभने॥१३॥ एवमुक्ता तु सा कन्या तेन
राज्ञा तदाश्रमे। उवाच हसती वाक्यमिदं सुमधुराक्षरम्॥१४॥
कण्वस्याहं भगवतो दुष्यन्त दुहिता मता। तपस्विनो धृतिमतो
धर्मज्ञस्य महात्मनः॥१५॥

दुष्यन्त उवाच। ऊर्द्ध्वरेता महाभागो भगवान् लोक-
पूजितः। चलेद्धि वृत्ताद्धर्मोऽपि न चलेत् संशितव्रतः॥१६॥
कथं त्वं तस्य दुहिता सम्भूता वरवर्णिनी। संशयो मे महानत्र
तन्मे छेत्तुमिहार्हसि॥१७॥

शकुन्तलोवाच। यथायमागमो मह्यं यथा चेदमभूत् पुरा।
शृणु राजन् यथातत्त्वं यथास्मि दुहिता मुनेः॥१८॥ ऋषिः
कश्चिदिहागम्य मम जन्माभ्यचोदयत्। तस्मै प्रोवाच भगवा-
न्यथा तच्छृणु पार्थिव॥१९॥

कण्व उवाच। तप्यमानः किल पुरा विश्वामित्रो महत्तपः।
सुभृशं तापयामास शक्रं सुरगणेश्वरम्॥२०॥ तपसा दीप्त-
वीर्य्योऽयं स्थानान्मां च्यावयेदिति भीतः पुरन्दरस्तस्मान्मेनका-
मिदमब्रवीत्॥२१॥ गुणैरप्सरसां दिव्यैर्मेनके त्वं विशिष्यसे।
श्रेयो मे कुरु कल्याणि यत्त्वां वक्ष्यामि तच्छृणु॥२२॥ असा-
वादित्यसङ्काशो विश्वामित्रो महातपाः। तप्यमानस्तपो घोरं
मम कम्पयते मनः॥२३॥ मेनके तव भारोऽयं विश्वामित्रः
सुमध्यमे। संशितात्मा सुदुर्द्धर्ष उग्रे तपसि वर्त्तते॥२४॥

स मां न च्यावयेत् स्थानात्तं वै गत्वा प्रलोभय। चर तस्य तपोविघ्नं कुरु मेऽविघ्नमुत्तमम् ॥ २५ ॥ रूपयौवनमाधुर्य्यचेष्टितस्मितभाषितैः। लोभयित्वा वरारोहे तपसस्तं निवर्त्तय ॥२६॥

मेनकोवाच। महातेजाः स भगवांस्तथैव च महातपाः। कोपनश्च तथा ह्येनं जानाति भगवानपि ॥ २७ ॥ तेजसस्तपसश्चैव कोपस्य च महात्मनः। त्वमप्युद्विजसे यस्य नोद्विजेयमहं कथम् ॥ २८ ॥ महाभागं वशिष्ठं यः पुत्रैरिष्टैर्व्ययोजयत्। क्षत्रजातश्च यः पूर्व्वमभवद्ब्राह्मणो बलात् ॥ २९ ॥ शौचार्थं यो नदीं चक्रे दुर्गमां बहुभिर्जलैः। यां तां पुण्यतमां लोके कौशिकीति विदुर्जनाः ॥ ३० ॥ बभार यत्रास्य पुरा काले दुर्गे महात्मनः। दारान्मतङ्गो धर्म्मात्मा राजर्षिर्व्याधतां गतः ॥ ३१ ॥ अतीतकाले दुर्भिक्षे अभ्येत्य पुनराश्रमम्। मुनिः पारेति नद्या वै नाम चक्रे तदा प्रभुः ॥ ३२ ॥ मतङ्गं याजयाञ्चक्रे यत्र प्रीतमनाः स्वयम्। त्वञ्च सोमं भयाद्यस्य गतः पातुं सुरेश्वर ॥३३॥ चकारान्यञ्च लोकं वै क्रुद्धो नक्षत्रसम्पदा। प्रतिश्रवणपूर्व्वाणि नक्षत्राणि चकार यः। गुरुशापहतस्यापि त्रिशङ्कोः शरणं ददौ ॥ ३४ ॥ एतानि यस्य कर्म्माणि तस्याहं भृशमुद्विजे। तथासौ न दहेत् क्रुद्धस्तथाज्ञापय मां विभो ॥ ३५ ॥ तेजसा निर्दहेल्लोकान् कम्पयेद्धरणीं पदा। संक्षिपेच्च महामेरुं तूर्णमावर्त्तयेद्दिशः ॥ ३६ ॥ तादृशं तपसा युक्तं प्रदीप्तमिव पावकम्। कथमस्मद्विधा नारी जितेन्द्रियमभिस्पृशेत् ॥ ३७ ॥ हुताशनमुखं दीप्तं सूर्य्यचन्द्राक्षितारकम्। कालजिह्वं सुरश्रेष्ठ कथमस्मद्विधा स्पृशेत् ॥ ३८ ॥ यमश्च सोमश्च महर्षयश्च साध्या विश्वे वालखिल्याश्च सर्व्वे। एतेऽपि यस्योद्विजन्ते प्रभावात्तस्मात्कस्मान्मादृशी नोद्विजेत ॥ ३९ ॥ त्वयैवमुक्ता च कथं समीपमृषेर्न गच्छेयमहं सुरेन्द्र। रक्षान्तु मे चिन्तय देवराज यथा त्वदर्थं

रक्षिताहं चरेयम् ॥ ४० ॥ कामन्तु मे मारुतस्तत्र वासः प्रक्रीडिताया विवृणोतु देव । भवेच्च मे मन्मथस्तत्र कार्य्ये सहायभूतस्तु तव प्रसादात् ॥ ४१ ॥ वनाच्च वायुः सुरभिः प्रवायात्तस्मिन् काले तमृषिं लोभयन्त्याः । तथेत्युक्त्वा विहिते चैव तस्मिंस्ततो ययौ साश्रमं कौशिकस्य ॥ ४२ ॥

इत्यादिपर्वणि सम्भवपर्वणि शकुन्तलोपाख्याने एकसप्ततोऽध्यायः ॥ ७१ ॥

कण्व उवाच । एवमुक्तस्तया शक्रः सन्दिदेश सदागतिम् । प्रातिष्ठत तदा काले मेनका वायुना सह ॥ १ ॥ अथापश्यद्वरारोहा तपसा दग्धकिल्बिषम् । विश्वामित्रं तप्यमानं मेनका भीरुराश्रमे ॥ २ ॥ अभिवाद्य ततः सा तं प्राक्रीडदृषिसन्निधौ । अपोवाह च वासोऽस्या मारुतः शशिसन्निभम् ॥ ३ ॥ सागच्छत्त्वरिता भूमिं वासस्तदभिलिप्सती । स्मयमानेव सव्रीडं मारुतं वरवर्णिनी ॥ ४ ॥ पश्यतस्तस्य तत्रर्षेरप्यग्निसमतेजसः । विश्वामित्रस्ततस्तां तु विषमस्थामनिन्दिताम् ॥ ५ ॥ गृद्धां वाससि संभ्रान्तां मेनकां मुनिसत्तमः । अनिर्देश्यवयोरूपामपश्यद्विवृतां तदा ॥ ६ ॥ तस्या रूपगुणान् दृष्ट्वा स तु विप्रर्षभस्तदा । चकार भावं संसर्गे तया कामवशं गतः ॥ ७ ॥ न्यमन्त्रयत चाप्येनां सा चाप्यैच्छदनिन्दिता । तौ तत्र सुचिरं कालमुभौ व्यहरतां तदा ॥ ८ ॥ रममाणौ यथाकामं यथैकदिवसं तथा । जनयामास स मुनिर्मेनकायां शकुन्तलाम् ॥ ९ ॥ प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम् । जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु ॥ १० ॥ कृतकार्य्या ततस्तूर्णमगच्छच्छक्रसंसदम् । तं वने विजने गर्भं सिंहव्याघ्रसमाकुले ॥ ११ ॥ दृष्ट्वा शयानं शकुनाः

समन्तात्पर्य्यवारयन् । नेमां हिंस्युर्वने बालां क्रव्यादा मांसगृद्धिनः ॥ १२ ॥ पर्य्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम् । उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमाम् ॥ १३ ॥ निर्जने विपिने रम्ये शकुन्तैः परिवारिताम् । आनयित्वा ततश्चैनां दुहितृत्वे न्यवेशयम् ॥ १४ ॥ शरीरकृत्प्राणदाता यस्य चान्नानि भुञ्जते । क्रमेणैते त्रयोऽप्युक्ताः पितरो धर्मशासने ॥ १५ ॥ निर्जने तु वने यस्मात् शकुन्तैः परिवारिता । शकुन्तलेति नामास्याः कृतं चापि ततो मया ॥ १६ ॥ एवं दुहितरं विद्धि मम विप्र शकुन्तलाम् । शकुन्तला च पितरं मन्यते मामनिन्दिता ॥ १७ ॥

शकुन्तलोवाच । एतदाचष्ट पृष्टः सन्मम जन्म महर्षये । सुतां कण्वस्य मामेवं विद्धि त्वं मनुजाधिप ॥ १८ ॥ कण्वं हि पितरं मन्ये पितरं स्वमजानती । इति ते कथितं राजन्यथा वृत्तं श्रुतं मया ॥ १९ ॥

इत्यादिपर्व्वणि सम्भवपर्व्वणि शकुन्तलोपाख्याने द्विसप्ततोऽध्यायः ॥ ७२ ॥

दुष्मन्त उवाच । सुव्यक्तं राजपुत्री त्वं यथा कल्याणि भाषसे । भार्य्या मे भव सुश्रोणि ब्रूहि किं करवाणि ते ॥ १ ॥ सुवर्णमालां वासांसि कुण्डले परिहाटके । नानापत्तनजे शुभ्रे मणिरत्ने च शोभने ॥ २ ॥ आहरामि तवाद्याहं निष्कादीन्यजिनानि च । सर्व्वराज्यं तवाद्यास्तु भार्य्या मे भव शोभने ॥ ३ ॥ गान्धर्व्वेण च मां भीरु विवाहेनैहि सुन्दरि । विवाहानां हि रम्भोरु गान्धर्व्वः श्रेष्ठ उच्यते ॥ ४ ॥

शकुन्तलोवाच । फलाहारो गतो राजन् पिता मे इत आश्रमात् । मुहूर्त्तं सम्प्रतीक्षस्व स मां तुभ्यं प्रदास्यति ॥ ५ ॥

दुष्मन्त उवाच । इच्छामि त्वां वरारोहे भजमानामनि-
न्दिते । त्वदर्थं मां स्थितं विद्धि तद्गतं हि मनो मम ॥ ६ ॥
आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः । आत्मनैवात्मनो दानं
कर्त्तुमर्हसि धर्म्मतः ॥ ७ ॥ अष्टावेव समासेन विवाहा धर्म्मतः
स्मृताः । ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ॥८॥ गान्धर्व्वो
राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः । तेषां धर्म्मान्यथापूर्व्वं मनुः
स्वायम्भुवोऽब्रवीत् ॥ ९ ॥ प्रशस्तांश्चतुरः पूर्व्वान् ब्राह्मणस्योप-
धारय । षडानुपूर्व्या क्षत्रस्य विद्धि धर्म्म्याननिन्दिते ॥ १० ॥
राज्ञान्तु राक्षसोऽप्युक्तो विट्शूद्रेष्वासुरः स्मृतः । पञ्चानान्तु त्रयो
धर्म्म्या अधर्म्म्यौ द्वौ स्मृताविह ॥११॥ पैशाचश्चासुरश्चैव न कर्त्तव्यौ
कदाचन । अनेन विधिना कार्य्यो धर्म्मस्यैषा गतिः स्मृता ॥ १२ ॥
गान्धर्व्वराक्षसौ क्षत्रे धर्म्म्यौ तौ मा विशङ्किथाः । पृथग्वा यदि वा
मिश्रौ कर्त्तव्यौ नात्र संशयः ॥१३॥ सा त्वं मम सकामस्य सकामा
वरवर्णिनी । गान्धर्व्वेण विवाहेन भार्य्या भवितुमर्हसि ॥ १४ ॥

शकुन्तलोवाच । यदि धर्म्मपथस्त्वेष यदि चात्मा प्रभुर्म्मम ।
प्रदाने पौरवश्रेष्ठ शृणु मे समयं प्रभो ॥ १५ ॥ सत्यं मे प्रति-
जानीहि यथा वक्ष्याम्यहं रहः । मयि जायेत यः पुत्रः स भवे-
त्त्वदनन्तरः ॥ १६ ॥ युवराजो महाराज सत्यमेतद्ब्रवीमि ते ।
यद्येतदेवं दुष्मन्त अस्तु मे सङ्गमस्त्वया ॥ १७ ॥

वैशम्पायन उवाच । एवमस्त्विति तां राजा प्रत्युवाचाविचा-
रयन् । अपि च त्वां हि नेष्यामि नगरं स्वं शुचिस्मिते ॥ १८ ॥
यथा त्वमर्हा सुश्रोणि सत्यमेतद्ब्रवीमि ते । एवमुक्त्वा स राजर्षि-
स्तामनिन्दितगामिनीम् ॥ १९ ॥ जग्राह विधिवत्पाणावुवास च
तया सह । विश्वास्य चैनां स प्रायादब्रवीच्च पुनः पुनः ॥ २० ॥
प्रेषयिष्ये तवार्थाय वाहिनीं चतुरङ्गिणीम् । तया त्वामानयि-
ष्यामि निवासं स्वं शुचिस्मिते ॥ २१ ॥

वैशम्पायन उवाच। इति तस्याः प्रतिश्रुत्य स नृपो जनमे-
जय। मनसा चिन्तयन् प्रायात्काश्यपं प्रति पार्थिवः॥ २२॥
भगवांस्तपसा युक्तः श्रुत्वा किन्नु करिष्यति। एवं स चिन्तयन्नेव
प्रविवेश स्वकं पुरम्॥ २३॥ मुहूर्त्ते याते तस्मिंस्तु कण्वोऽप्या-
श्रममागमत्। शकुन्तला च पितरं ह्रिया नोपजगाम तम्॥२४॥
विज्ञायाथ च तां कण्वो दिव्यज्ञानो महातपाः। उवाच भग-
वान् प्रीतः पश्यन् दिव्येन चक्षुषा॥ २५॥ त्वयाद्य भद्रे रहसि
मामनादृत्य यः कृतः। पुंसा सह समायोगो न स धर्मोपघा-
तकः॥ २६॥ क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ उच्यते।
सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः॥ २७॥ धर्मात्मा
च महात्मा च दुष्मन्तः पुरुषोत्तमः। अभ्यगच्छः पतिं यन्त्वं
भजमानं शकुन्तले॥ २८॥ महात्मा जनिता लोके पुत्रस्तव
महाबलः। य इमां सागरापाङ्गीं कृत्स्नां भोक्ष्यति मेदिनीम्
॥ २९॥ परञ्चाभिप्रयातस्य चक्रं तस्य महात्मनः। भविष्यत्य-
प्रतिहतं सततं चक्रवर्त्तिनः॥ ३०॥ ततः प्रक्षाल्य पादौ सा
विश्रान्तं मुनिमब्रवीत्। विनिधाय ततो भारं सन्निधाय फलानि
च॥ ३१॥

शकुन्तलोवाच। मया पतिर्वृतो राजा दुष्मन्तः पुरुषो-
त्तमः। तस्मै ससचिवाय त्वं प्रसादं कर्त्तुमर्हसि॥ ३२॥

कण्व उवाच। प्रसन्न एव तस्याहं त्वत्कृते वरवर्णिनि।
गृहाण च वरं मत्तस्त्वं शुभे यदभीप्सितम्॥ ३३॥

वैशम्पायन उवाच। ततो धर्मिष्ठतां वव्रे राज्याच्चास्खलनं
तथा। शकुन्तला पौरवाणां दुष्मन्तहितकाम्यया॥ ३४॥

इत्यादिपर्वणि सम्भवपर्वणि शकुन्तलोपाख्याने
त्रिसप्ततोऽध्यायः॥ ७३॥

---

वैशम्पायन उवाच। प्रतिज्ञाय तु दुष्मन्ते प्रतियाते शकुन्तला। गर्भं सुषाव वामोरुः कुमारममितौजसम् ॥ १ ॥ त्रिषु वर्षेषु पूर्णेषु दीप्तानलसमद्युतिम्। रूपौदार्य्यगुणोपेतं दौष्मन्तिं जनमेजय ॥ २ ॥ जातकर्मादिसंस्कारं कण्वः पुण्यकृतांवरः। विधिवत्कारयामास वर्द्धमानस्य धीमतः ॥ ३ ॥ दन्तैः शुक्लैः शिखरिभिः सिंहसंहननो महान्। चक्राङ्कितकरः श्रीमान्महामूर्द्धा महाबलः। कुमारो देवगर्भाभः स तत्राशु व्यवर्द्धत ॥ ४ ॥ षड्वर्ष एव बालः स कण्वाश्रमपदं प्रति। सिंहव्याघ्रान् वराहांश्च महिषांश्च गजांस्तथा। बबन्ध वृक्षे बलवानाश्रमस्य समीपतः ॥ ५ ॥ आरोहन्दमयंश्चैव क्रीडंश्च परिधावति। ततोऽस्य नाम चक्रुस्ते कण्वाश्रमनिवासिनः। अस्त्वयं सर्वदमनः सर्वं हि दमयत्यसौ ॥ ६ ॥ स सर्वदमनो नाम कुमारः समपद्यत। विक्रमेणौजसा चैव बलेन च समन्वितः ॥ ७ ॥ तं कुमारमृषिर्दृष्ट्वा कर्मचास्यातिमानुषम्। समयो यौवराज्यायेत्यब्रवीच्च शकुन्तलाम् ॥ ८ ॥ तस्य तद्बलमाज्ञाय कण्वः शिष्यानुवाच ह। शकुन्तलामिमां शीघ्रं सहपुत्रामितो गृहात्। भर्त्तुः प्रापयतागारं सर्वलक्षणपूजितम् ॥ ९ ॥ नारीणां चिरवासो हि बान्धवेषु न रोचते। कीर्त्तिचारित्रधर्मघ्नस्तस्मान्नयत मा चिरम् ॥ १० ॥ तथेत्युक्त्वा तु ते सर्वे प्रातिष्ठन्त महौजसः। शकुन्तलां पुरस्कृत्य सपुत्रां गजसाह्वयम् ॥ ११ ॥ गृहीत्वामरगर्भाभं पुत्रं कमललोचनम्। आजगाम ततः सुभ्रूर्दुष्मन्तं विदिताद्वनात् ॥ १२ ॥ अभिसृत्य च राजानं विदिता च प्रवेशिता। सह तेनैव पुत्रेण बालार्कसमतेजसा ॥ १३ ॥ निवेदयित्वा ते सर्वे आश्रमं पुनरागताः। पूजयित्वा यथान्यायमब्रवीच्च शकुन्तला ॥ १४ ॥ अयं पुत्रस्त्वया राजन्यौवराज्येऽभिषिच्यताम्। त्वया ह्ययं सुतो राजन्मय्युत्पन्नः सुरोपमः। यथा-

समयमेतस्मिन् वर्त्तस्व पुरुषोत्तम ॥ १५ ॥ यथा मत्सङ्गमे पूर्वं
यः कृतः समयस्तथा । तं स्मरस्व महाभाग कण्वाश्रमपदं प्रति
॥ १६ ॥ सोऽथ श्रुत्वैव तद्वाक्यं तस्या राजा स्मरन्नपि । अब्रवीन्न
स्मरामीति कस्य त्वं दुष्टतापसि ॥ १७ ॥ धर्मकामार्थसम्बन्धं
न स्मरामि त्वया सह । गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि
तत्कुरु ॥ १८ ॥ सैवमुक्ता वरारोहा व्रीडितेव तपस्विनी । निः-
संज्ञेव च दुःखेन तस्थौ स्थाणुरिव निश्चला ॥ १९ ॥ संरम्भामर्ष-
ताम्राक्षी स्फुरमाणोष्ठसंपुटा । कटाक्षैर्निर्दहन्तीव तिर्य्यग्राजान-
मैक्षत ॥ २० ॥ आकारं गूहमाना च मन्युना च समीरिता ।
तपसा सम्भृतं तेजो धारयामास वै तदा ॥ २१ ॥ सा मुहूर्त्त-
मिव ध्यात्वा दुःखामर्षसमन्विता । भर्त्तारमभिसम्प्रेक्ष्य क्रुद्धा
वचनमब्रवीत् ॥ २२ ॥ जानन्नपि महाराज कस्मादेवं प्रभाषसे ।
न जानामीति निःशङ्कं यथान्यः प्राकृतो जनः ॥ २३ ॥ अत्र ते
हृदयं वेद सत्यस्यैवानृतस्य च । कल्याणं वद साक्ष्येण मात्मान-
मवमन्यथाः ॥ २४ ॥ योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥ २५ ॥ एकोऽह-
मस्मीति च मन्यसे त्वं न हृच्छयं वेत्सि मुनिं पुराणम् । यो
वेदिता कर्म्मणः पापकस्य तस्यान्तिके त्वं वृजिनं करोषि ॥ २६ ॥
मन्यते पापकं कृत्वा न कश्चिद्वेत्ति मामिति । विदन्ति चैनं
देवाश्च यश्चैवान्तरपूरुषः ॥ २७ ॥ आदित्यचन्द्रावनिलानलौ च
द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये
धर्म्मश्च जानाति नरस्य वृत्तम् ॥ २८ ॥ यमो वैवस्वतस्तस्य
निर्य्यातयति दुष्कृतम् । हृदि स्थितः कर्म्मसाक्षी क्षेत्रज्ञो यस्य
तुष्यति । २९ ॥ न तु तुष्यति यस्यैष पुरुषस्य दुरात्मनः । तं
यमः पापकर्म्माणं वियातयति दुष्कृतम् ॥ ३० ॥ योऽवमन्या-
त्मनात्मानमन्यथा प्रतिपद्यते । न तस्य देवाः श्रेयांसो यस्यात्मापि

न कारणम् ॥ ३१ ॥ स्वयं प्राप्तेति मामेवं मावमंस्थाः पतिव्रताम् । अर्घार्हां नार्चयसि मां स्वयं भार्य्यामुपस्थिताम् ॥३२॥ किमर्थं मां प्राकृतवदुपप्रेक्षसि संसदि । न खल्वहमिदं शून्ये रौमि किं न शृणोषि मे ॥ ३३ ॥ यदि मे याचमानाया वचनं न करिष्यसि । दुष्यन्त शतधा मूर्द्धा ततस्तेऽद्य स्फुटिष्यति ॥३४॥ भार्य्यां पतिः सम्प्रविश्य स यस्माज्जायते पुनः । जायायास्तद्धि जायात्वं पौराणाः कवयो विदुः ॥ ३५ ॥ यदागमवतः पुंसस्तदपत्यं प्रजायते । तत्तारयति सन्तत्या पूर्वप्रेतान् पितामहान् ॥ ३६ ॥ पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ ३७ ॥ पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते । अथ पौत्रस्य पुत्रेण मोदन्ते प्रपितामहाः ॥ ३८ ॥ सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रजावती । सा भार्य्या या पतिप्राणा सा भार्य्या या पतिव्रता ॥ ३९ ॥ अर्द्धं भार्य्या मनुष्यस्य भार्य्या श्रेष्ठतमः सखा । भार्य्या मूलं त्रिवर्गस्य भार्य्या मूलं तरिष्यतः ॥ ४० ॥ भार्य्यावन्तः क्रियावन्तः सभार्य्या गृहमेधिनः । भार्य्यावन्तः प्रमोदन्ते भार्य्यावन्तः श्रियान्विताः ॥ ४१ ॥ सखायः प्रविविक्तेषु भवन्त्येताः प्रियम्वदाः । पितरो धर्मकार्य्येषु भवन्त्यार्त्तस्य मातरः ॥ ४२ ॥ कान्तारेष्वपि विश्रामो जनस्याध्वनिकस्य वै । यः सदारः स विश्वास्यस्तस्माद्दाराः परा गतिः ॥ ४३ ॥ संसरन्तमपि प्रेतं विषमेष्वेकपातिनम् । भार्य्यैवान्वेति भर्त्तारं सततं या पतिव्रता ॥ ४४ ॥ प्रथमं संस्थिता भार्य्या पतिं प्रेत्य प्रतीक्षते । पूर्वं मृतञ्च भर्त्तारं पश्चात्साध्व्यनुगच्छति ॥ ४५ ॥ एतस्मात्कारणाद्राजन् पाणिग्रहणमिष्यते । यदाप्नोति पतिर्भार्य्यामिह लोके परत्र च ॥ ४६ ॥ आत्मात्मनैव जनितः पुत्रः इत्युच्यते बुधैः । तस्माद्भार्य्यां नरः पश्येन्मातृवत्पुत्रमातरम् ॥ ४७ ॥

भार्य्यायां जनितं पुत्रमादर्शेष्विव चाननम्। ह्लादते जनिता प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत् ॥ ४८ ॥ दह्यमाना मनोदुःखै-र्व्याधिभिश्चातुरा नराः। ह्लादन्ते स्वेषु दारेषु घर्मार्त्ताः सलिलेष्विव ॥ ४९ ॥ सुसंरब्धोऽपि रामाणां न कुर्य्यादप्रियं नरः। रतिं प्रीतिञ्च धर्मञ्च तास्वायत्तमवेक्ष्य हि ॥ ५० ॥ आत्मनो जन्मनः क्षेत्रं पुण्यं रामाः सनातनम्। ऋषीणामपि का शक्तिः स्रष्टुं रामामृते प्रजाम् ॥ ५१ ॥ प्रतिपद्य यदा सूनु-र्धरणीरेणुगुण्ठितः। पितुराश्लिष्यतेऽङ्गानि किमस्त्यभ्यधिकं ततः ॥ ५२ ॥ स त्वं स्वयमभिप्राप्तं साभिलाषमिमं सुतम्। प्रेक्ष-माणं कटाक्षेण किमर्थमवमन्यसे ॥ ५३ ॥ अण्डानि बिभ्रति स्वानि न भिन्दन्ति पिपीलिकाः। न भरेथाः कथन्नु त्वं धर्मज्ञः सन् स्वमात्मजम् ॥ ५४ ॥ न वाससां न रामाणां नापां स्पर्श-स्तथाविधः। शिशोरालिङ्ग्यमानस्य स्पर्शः सुनोर्यथा सुखः ॥५५॥ ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठश्चतुष्पदाम्। गुरुर्गरीयसां श्रेष्ठः पुत्रः स्पर्शवतां वरः ॥ ५६ ॥ स्पृशतु त्वां समाश्लिष्य पुत्रोऽयं प्रियदर्शनः। पुत्रस्पर्शात् सुखतरः स्पर्शो लोके न विद्यते ॥५७॥ त्रिषु वर्षेषु पूर्णेषु प्रजाताहमरिन्दम। इमं कुमारं राजेन्द्र तव शोकविनाशनम् ॥ ५८ ॥ आहर्त्ता वाजिमेधस्य शतसङ्ख्यस्य पौरव। इति वागन्तरीक्षे मां सूतकेऽभ्यवदत् पुरा ॥ ५९ ॥ ननु नामाङ्कमारोप्य स्नेहाद्ग्रामान्तरं गताः। मूर्द्ध्नि पुत्रानुपा-घ्राय प्रतिनन्दन्ति मानवाः ॥ ६० ॥ वेदेष्वपि वदन्तीमं मन्त्र-ग्रामं द्विजातयः। जातकर्मणि पुत्राणां तवापि विदितं तथा ॥ ६१ ॥ अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे। आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥ ६२ ॥ जीवितं त्वदधीनं मे सन्तानमपि चाक्षयम्। तस्मात्त्वं जीव मे पुत्र सुसुखी शरदां शतम् ॥ ६३ ॥ त्वदङ्गेभ्यः प्रसूतायं पुरुषात् पुरुषोऽपरः।

सरसीवामलेखानं द्वितीयं पश्य वै सुतम् ॥ ६४ ॥ यथा ह्याहवनीयोऽग्निर्गार्हपत्यात् प्रणीयते । तथा त्वत्तः प्रसूतोऽयं त्वमेकः सन् द्विधाकृतः ॥ ६५ ॥ मृगावकृष्टेन पुरा मृगयां परिधावता । अहमासादिता राजन् कुमारी पितुराश्रमे ॥ ६६ ॥ उर्वशी पूर्वचित्तिश्च सहजन्या च मेनका । विश्वाची च घृताची च षड़ेवाप्सरसां वराः ॥ ६७ ॥ तासां सा मेनका नाम ब्रह्मयोनिर्वराप्सराः । दिवः सम्प्राप्य जगतीं विश्वामित्रादजीजनत् ॥ ६८ ॥ सा मां हिमवतः प्रस्थे सुषुवे मेनकाप्सराः । अवकीर्य्य च मां याता परात्मजमिवासती ॥ ६९ ॥ किन्नु कर्माशुभं पूर्वं कृतवत्यन्यजन्मनि । यदहं बान्धवैस्त्यक्ता बाल्ये सम्प्रति च त्वया ॥७०॥ कामं त्वयोपरित्यक्ता गमिष्यामि स्वमाश्रमम् । इमन्तु बालं सन्त्यक्तुं नार्हस्यात्मजमात्मनः ॥ ७१ ॥

दुष्मन्त उवाच । न पुत्रमभिजानामि त्वयि जातं शकुन्तले । असत्यवचना नार्य्यः कस्ते श्रद्धास्यते वचः ॥ ७२ ॥ मेनका निरनुक्रोशा बन्धकी जननी तव । यया हिमवतः पृष्ठे निर्माल्यमिव चोज्झिता ॥ ७३ ॥ स चापि निरनुक्रोशः क्षत्रयोनिः पिता तव । विश्वामित्रो ब्राह्मणत्वे लुब्धः कामवशं गतः ॥७४॥ मेनकाप्सरसां श्रेष्ठा महर्षीणां पिता च ते । तयोरपत्यं कस्मात्त्वं पुंश्चलीव प्रभाषसे ॥ ७५ ॥ अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे । विशेषतो मत्सकाशे दुष्टतापसि गम्यताम् ॥ ७६ ॥ क्व महर्षिः स चैवाग्र्यः साप्सराः क्व च मेनका । क्व च त्वमेवं कृपणा तापसीवेशधारिणी ॥ ७७ ॥ अतिकायश्च ते पुत्रो बालोऽतिबलवानयम् । कथमल्पेन कालेन शालस्तम्भ इवोद्गतः ॥ ७८ ॥ सुनिकृष्टा च ते योनिः पुंश्चलीव प्रभाषसे । यदृच्छया कामरागाज्जाता मेनकया ह्यसि ॥ ७९ ॥ सर्वमेतत् परोक्षं मे यत्त्वं वदसि तापसि । नाहं त्वामभिजानामि यथेष्टं गम्यतां त्वया ॥८०॥

शकुन्तलोवाच। राजन् सर्षपमात्राणि परच्छिद्राणि पश्यसि। आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यसि ॥ ८१ ॥ मेनका त्रिदशेष्वेव त्रिदशाश्चानुमेनकाम्। ममैवोद्रिच्यते जन्म दुष्मन्त तव जन्मनः ॥ ८२ ॥ क्षितावटसि राजेन्द्र अन्तरीक्षे चराम्यहम्। आवयोरन्तरं पश्य मेरुसर्षपयोरिव ॥ ८३ ॥ महेन्द्रस्य कुवेरस्य यमस्य वरुणस्य च। भवनान्यनुसंयामि प्रभावं पश्य मे नृप ॥८४॥ सत्यश्चापि प्रवादोऽयं यं प्रवक्ष्यामि तेऽनघ। निदर्शनार्थं न द्वेषाच्छ्रुत्वा तं क्षन्तुमर्हसि ॥ ८५ ॥ विरूपो यावदादर्शे नात्मनः पश्यते मुखम्। मन्यते तावदात्मानमन्येभ्यो रूपवत्तरम् ॥ ८६ ॥ यदा स्वमुखमादर्शे विकृतं सोऽभिवीक्षते। तदान्तरं विजानीते आत्मानं चेतरं जनम् ॥ ८७ ॥ अतीव रूपसम्पन्नो न कश्चिदवमन्यते। अतीव जल्पन् दुर्वाचो भवतीह विहेटकः ॥८८॥ मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः। अशुभं वाक्यमादत्ते पुरीषमिव शूकरः ॥ ८९ ॥ प्राज्ञस्तु जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः। गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥ ९० ॥ अन्यान् परिवदन् साधुर्यथा हि परितप्यते। तथा परिवदन्नन्यांस्तुष्टो भवति दुर्ज्जनः ॥ ९१ ॥ अभिवाद्य यथा वृद्धान् सन्तो गच्छन्ति निर्वृतिम्। एवं सज्जनमाक्रुश्य मूर्खो भवति निर्वृतः ॥ ९२ ॥ सुखं जीवन्त्यदोषज्ञा मूर्खा दोषानुदर्शिनः। यत्र वाच्याः परैः सन्तः परानाहुस्तथाविधान् ॥ ९३ ॥ अतो हास्यतरं लोके किञ्चिदन्यन्न विद्यते। यत्र दुर्ज्जनमित्याह दुर्ज्जनः सज्जनं स्वयम् ॥ ९४ ॥ सत्यधर्मच्युतात् पुंसः क्रुद्धादाशीविषादिव। अनास्तिकोऽप्युद्विजते जनः किम्पुनरास्तिकः ॥ ९५ ॥ स्वयमुत्पाद्य वै पुत्रं सदृशं यो न मन्यते। तस्य देवाः श्रियं घ्नन्ति न च लोकानुपाश्नुते ॥ ९६ ॥ कुलवंशप्रतिष्ठां हि पितरः पुत्रमब्रुवन्। उत्तमं सर्वधर्माणां तस्मात् पुत्रं न

संत्यजत् ॥ ९७ ॥ स्वपत्नीप्रभवान् पञ्च लब्धान् क्रीतान् विवर्द्धितान्। कृतानन्यासु चोत्पन्नान् पुत्रान्वै मनुरब्रवीत् ॥९८॥ धर्मकीर्त्यावहा नृणां मनसः प्रीतिवर्द्धनाः। त्रायन्ते नरकाज्जाताः पुत्रा धर्मप्लवाः पितॄन् ॥ ९९ ॥ स त्वं नृपतिशार्दूल पुत्रं न त्यक्तुमर्हसि। आत्मानं सत्यधर्मौ च पालयन् पृथिवीपते ॥ १०० ॥ नरेन्द्रसिंह कपटं न वोढुं त्वमिहार्हसि। वरं कूपशताद्वापी वरं वापीशतात् क्रतुः। वरं क्रतुशतात् पुत्रः सत्यं पुत्रशताद्वरम् ॥ १०१ ॥ अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम्। अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ १०२ ॥ सर्ववेदाधिगमनं सर्वतीर्थावगाहनम्। सत्यञ्च वचनं राजन् समं वास्यान्नवा समम् ॥१०३॥ नास्ति सत्यसमो धर्मो न सत्याद्विद्यते परम्। न हि तीव्रतरं किञ्चिदनृतादिह विद्यते ॥ १०४ ॥ राजन् सत्यं परं ब्रह्म सत्यञ्च समयः परः। मा त्याक्षीः समयं राजन् सत्यं सङ्गतमस्तु ते ॥ १०५ ॥ अनृते चेत्प्रसङ्गस्ते श्रद्दधासि न चेत् स्वयम्। आत्मना हन्त गच्छामि त्वादृशे नास्ति सङ्गतम् ॥ १०६ ॥ त्वामृतेऽपि च दुष्मन्त शैलराजावतंसिकाम्। चतुरन्तामिमामुर्व्वीं पुत्रो मे पालयिष्यति ॥ १०७ ॥

वैशम्पायन उवाच। एतावदुक्त्वा राजानं प्रातिष्ठत शकुन्तला। अथान्तरीक्षात् दुष्मन्तं वागुवाचाशरीरिणी। ऋत्विक्पुरोहिताचार्य्यैर्मन्त्रिभिश्च वृतं तदा ॥ १०८ ॥ भस्त्रा माता पितुः पुत्रो येन जातः स एव सः। भरस्व पुत्रं दुष्मन्त मावमंस्थाः शकुन्तलाम् ॥ १०९ ॥ रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात्। त्वञ्चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥११०॥ जाया जनयते पुत्रमात्मनोऽङ्गं द्विधाकृतम्। तस्माद्भरस्व दुष्मन्त पुत्रं शाकुन्तलं नृप ॥ १११ ॥ अभूतिरेषा यत्त्यक्त्वा जीवेज्जीवन्तमात्मजम्। शाकुन्तलं महात्मानं दौष्मन्तिं भर पौरव ॥ ११२ ॥

भर्त्तव्योऽयं त्वया यस्मादस्माकं वचनादपि। तस्माद्भवत्वयं नाम्ना
भरतो नाम ते सुतः ॥ ११३ ॥ तच्छ्रुत्वा पौरवो राजा व्याहृतं
त्रिदिवौकसाम्। पुरोहितममात्यांश्च सम्प्रहृष्टोऽब्रवीदिदम्
॥ ११४ ॥ शृण्वन्त्वेतद्भवन्तोऽस्य देवदूतस्य भाषितम्। अहं
चाप्येवमेवैनं जानामि स्वयमात्मजम् ॥ ११५ ॥ यद्यहं वचना-
देव गृह्णीयामि ममात्मजम्। भवेद्धि शङ्को लोकस्य नैवं शुद्धो
भवेदयम् ॥ ११६ ॥

वैशम्पायन उवाच। तं विशोध्य तदा राजा देवदूतेन
भारत। हृष्टः प्रमुदितश्चापि प्रतिजग्राह तं सुतम् ॥ ११७ ॥
ततस्तस्य तदा राजा पितृकर्माणि सर्वशः। कारयामास मुदितः
प्रीतिमानात्मजस्य ह ॥ ११८ ॥ मूर्द्ध्नि चैनमुपाघ्राय सस्नेहं
परिषस्वजे। सभाज्यमानो विप्रैश्च स्तूयमानश्च वन्दिभिः ॥ ११९ ॥
स मुदं परमां लेभे पुत्रसंस्पर्शजां नृपः। तां चैव भार्य्यां दुष्मन्तः
पूजयामास धर्मतः। अब्रवीच्चैव तां राजा सान्त्वपूर्वमिदं वचः
॥ १२० ॥ कृतो लोकपरोक्षोऽयं सम्बन्धोऽय त्वया सह। तस्मा-
देतन्मया देवि त्वच्छुद्ध्यर्थं विचारितम् ॥ १२१ ॥ मन्यते चैव
लोकस्ते स्त्रीभावान्मयि सङ्गतम्। पुत्रश्चायं वृतो राज्ये मया
तस्माद्विचारितम् ॥ १२२ ॥ यच्च कोपितयात्यर्थं त्वयोक्तोऽस्म्य-
प्रियं प्रिये। प्रणयिन्या विशालाक्षि तत्क्षान्तं ते मया शुभे
॥ १२३ ॥ तामेवमुक्त्वा राजर्षिर्दुष्मन्तो महिषीं प्रियाम्। वासो-
भिरन्नपानैश्च पूजयामास भारत ॥ १२४ ॥ दुष्मन्तस्तु ततो राजा
पुत्रं शाकुन्तलं तदा। भरतं नामतः कृत्वा यौवराज्येऽभ्यषे-
चयत् ॥ १२५ ॥ तस्य तत्प्रथितं चक्रं प्रावर्त्तत महात्मनः।
भास्वरं दिव्यमजितं लोकसन्नादनं महत् ॥ १२६ ॥ स विजित्य
महीपालांश्चकार वशवर्त्तिनः। चचार च सतां धर्मं प्राप चानु-
त्तमं यशः ॥ १२७ ॥ स राजा चक्रवर्त्त्यासीत्सार्वभौमः प्रताप-

मान् । ईजे च बहुभिर्यज्ञैर्यथा शक्रो मरुत्पतिः ॥ १२८ ॥ याजयामास तं कण्वो विधिवद्भूरिदक्षिणम् । श्रीमान् गोवितं नाम वाजिमेधमवाप सः ॥ १२९ ॥ यस्मिन् सहस्रं पद्मानां कण्वाय भरतो ददौ । भरताद्भारती कीर्त्तिर्येनेदं भारतं कुलम् ॥ १३० ॥ अपरे ये च पूर्वे वै भारता इति विश्रुताः । भरतस्यान्ववाये हि देवकल्पा महौजसः ॥ १३१ ॥ बभूवुर्ब्रह्मकल्पाश्च बहवो राजसत्तमाः । येषामपरिमेयानि नामधेयानि सर्वशः ॥ १३२ ॥ तेषान्तु ते यथा मुख्यं कीर्त्तयिष्यामि भारत । महाभागान्देवकल्पान् सत्यार्ज्जवपरायणान् ॥ १३३ ॥

इत्यादिपर्व्वणि सम्भवपर्व्वणि शाकुन्तलं समाप्तमिति

चतुःसप्ततोऽध्यायः ॥ ७४ ॥

—०—

वैशम्पायन उवाच । प्रजापतेस्तु दक्षस्य मनोर्वैवस्वतस्य च । भरतस्य कुरोः पूरोराजमीढस्य चानघ ॥ १ ॥ यादवानामिमं वंशं कौरवाणाञ्च सर्वशः । तथैव भरतानाञ्च पुण्यं स्वस्त्ययनं महत् ॥ २ ॥ धन्यं यशस्यमायुष्यं कीर्त्तयिष्यामि तेऽनघ । तेजोभिरुदिताः सर्वे महर्षिसमतेजसः ॥ ३ ॥ दश प्राचेतसः पुत्राः सन्तः पुण्यजनाः स्मृताः । मुखजेनाग्निना यैस्ते पूर्वं दग्धा महौजसः ॥ ४ ॥ तेभ्यः प्राचेतसो जज्ञे दक्षो दक्षादिमाः प्रजाः । सम्भूताः पुरुषव्याघ्र स हि लोकपितामहः ॥ ५ ॥ वीरिण्या सह सङ्गम्य दक्षः प्राचेतसो मुनिः । आत्मतुल्यानजनयत् सहस्रं संशितव्रतान् ॥ ६ ॥ सहस्रसङ्ख्यान् सम्भूतान् दक्षपुत्रांश्च नारदः । मोक्षमध्यापयामास सांख्यज्ञानमनुत्तमम् ॥ ७ ॥

ततः पञ्चाशतं कन्याः पुत्रिका अभिसन्दधे । प्रजापतिः प्रजा दक्षः सिद्धन्दुर्जनमेजय ॥ ८ ॥ ददौ दश स धर्माय कश्यपाय त्रयोदश । कालस्य नयने युक्ताः सप्तविंशतिमिन्दवे ॥ ९ ॥ त्रयोदशानां पत्नीनां या तु दाक्षायणी वरा । मारीचः कश्यपस्तस्यामादित्यान् समजीजनत् ॥ १० ॥ इन्द्रादीन्वीर्य्यसम्पन्नान् विवस्वन्तमथापि च । विवस्वतः सुतो जज्ञे यमो वैवस्वतः प्रभुः ॥ ११ ॥ मार्त्तण्डस्य मनुर्धीमानजायत सुतः प्रभुः । यमस्यापि सुतो जज्ञे ख्यातस्तस्यानुजः प्रभुः । १२ ॥ धर्मात्मा स मनुर्धीमान्यत्र वंशः प्रतिष्ठितः । मनोर्वंशो मानवानां ततोऽयं प्रथितोऽभवत् ॥१३॥ ब्रह्मक्षत्रादयस्तस्मान्मनोर्जातास्तु मानवाः । ततोऽभवन्महाराज ब्रह्म क्षत्रेण सङ्गतम् ॥ १४ ॥ ब्राह्मणा मानवास्तेषां साङ्गं वेदमधारयन् । वेणं धृष्णुं नरिष्यन्तं नाभागेक्ष्वाकुमेव च ॥ १५ ॥ कारूषमथ शर्य्यातिं तथा चैवाष्टमीमिलाम् । पृषध्रं नवमं प्राहुः क्षत्रधर्मपरायणम् ॥ १६ ॥ नाभागारिष्टदशमान्मनोः पुत्रान् प्रचक्षते । पञ्चाशत्तु मनोः पुत्रास्तथैवान्येऽभवन् क्षितौ ॥ १७ ॥ अन्योन्यभेदात्ते सर्वे विनेशुरिति नः श्रुतम् । पुरूरवास्ततो विद्वानिलायां समपद्यत ॥ १८ ॥ सा वै तस्याभवन्माता पिता चैवेति नः श्रुतम् । त्रयोदश समुद्रस्य द्वीपानश्नन् पुरूरवाः । अमानुषैर्वृतः सर्वैर्मानुषः सन्महायशाः ॥ १९ ॥ विप्रैः स विग्रहं चक्रे वीर्य्योन्मत्तः पुरूरवाः । जहार च स विप्राणां रत्नान्युत्क्रोशतामपि ॥ २० ॥ सनत्कुमारस्तं राजन् ब्रह्मलोकादुपेत्य ह । अनुदर्शं ततश्चक्रे प्रत्यगृह्णान्नचाप्यसौ ॥ २१ ॥ ततो महर्षिभिः क्रुद्धैः सद्यः शप्तो व्यनश्यत । लोभान्वितो बलमदान्नष्टसंज्ञो नराधिपः ॥ २२ ॥ स हि गन्धर्वलोकस्थानुर्वश्या सहितो विराट् । आनिनाय क्रियार्थेऽग्नीन्यथावद्विहितांस्त्रिधा ॥ २३ ॥ षट् सुता जज्ञिरे

चैलाद्दायुर्धीमानमावसुः। दृढायुश्च वनायुश्च शतायुश्चोर्वशीसुताः ॥ २४ ॥ नहुषं वृद्धशर्माणं राजिं रम्भमनेनसम्। स्वर्भानवीसुतानेतानायोः पुत्रान् प्रचक्षते ॥ २५ ॥ आयुषो नहुषः पुत्रो धीमान् सत्यपराक्रमः। राज्यं शशास सुमहद्धर्मेण पृथिवीपते ॥ २६ ॥ पितॄन्देवानृषीन्विप्रान् गन्धर्वोरगराक्षसान्। नहुषः पालयामास ब्रह्मक्षत्रमथो विशः ॥ २७ ॥ स हत्वा दस्युसङ्घातानृषीन् करमदापयत्। पशुवच्चैव तान् पृष्ठे वाहयामास वीर्य्यवान् ॥ २८ ॥ कारयामास चेन्द्रत्वमभिभूय दिवौकसः। तेजसा तपसा चैव विक्रमेणौजसा तथा ॥ २९ ॥ यतिं ययातिं संयातिमायातिमयतिं ध्रुवम्। नहुषो जनयामास षट् सुतान् प्रियवादिनः ॥ ३० ॥ यतिस्तु योगमास्थाय ब्रह्मभूतोऽभवन्मुनिः। ययातिर्नाहुषः सम्राड़ासीत्सत्यपराक्रमः ॥ ३१ ॥ स पालयामास महीमीजे च बहुभिर्मखैः। अतिभक्त्या पितॄनर्च्चन्देवांश्च प्रयतः सदा ॥ ३२ ॥ अन्वग्टह्नात् प्रजां सर्वां ययातिरपराजितः। तस्य पुत्रा महेष्वासाः सर्वैः समुदिता गुणैः ॥ ३३ ॥ देवयान्यां महाराज शर्मिष्ठायाञ्च जज्ञिरे। देवयान्यामजायेतां यदुस्तुर्वसुरेव च ॥ ३४ ॥ द्रुह्युश्चानुश्च पूरुश्च शर्मिष्ठायां प्रजज्ञिरे। स शाश्वतीः समा राजन् प्रजा धर्मेण पालयन् ॥३५॥ जरामार्च्छन्महाघोरां नाहुषो रूपनाशिनीम्। जराभिभूतः पुत्रान् स राजा वचनमब्रवीत् ॥ ३६ ॥ यदुं पूरुं तुर्वसुञ्च द्रुह्युं चानुञ्च भारत। यौवनेन चरन् कामान्युवा युवतिभिः सह ॥३७॥ विहर्त्तुमहमिच्छामि साह्यं कुरुत पुत्रकाः। तं पुत्रो देवयानेयः पूर्वजो वाक्यमब्रवीत् ॥ ३८ ॥ किं कार्य्यं भवतः कार्य्यमस्माकं यौवनेन ते। ययातिरब्रवीत्तं वै जरा मे प्रतिगृह्यताम् ॥३९॥ यौवनेन त्वदीयेन चरेयं विषयानहम्। यजतो दीर्घसत्रैर्मे शापाच्चोशनसो मुनेः। कामार्थः परिहीणोऽयं तप्येयं तेन

पुत्रकाः ॥ ४० ॥ मामकेन शरीरेण राज्यमेकः प्रशास्तु वः ।
अहं तन्वाभिनवया युवा काममवाप्नुयाम् ॥ ४१ ॥ ते न तस्य
प्रत्यगृह्णन्यदुप्रभृतयो जराम् । तमब्रवीत्ततः पूरुः कनीयान्
सत्यविक्रमः ॥ ४२ ॥ राजंश्चराभिनवया तन्वा यौवनगोचरः ।
अहं जरां समादाय राज्ये स्थास्यामि तेऽज्ञया ॥ ४३ ॥ एव-
मुक्तः स राजर्षिस्तपोवीर्य्यसमाश्रयात् । सञ्चारयामास जरां तदा
पुत्रे महात्मनि ॥ ४४ ॥ पौरवेणाथ वयसा राजा यौवनमास्थितः ।
यायातेनापि वयसा राज्यं पूरुरकारयत् ॥ ४५ ॥ ततो वर्षसह-
स्रान्ते ययातिरपराजितः । स्थितः स नृपशार्दूलः शार्दूलसम-
विक्रमः ॥ ४६ ॥ ययातिरपि पत्नीभ्यां दीर्घकालं विहृत्य च ।
विश्वाच्या सहितो रेमे पुनश्चैत्ररथे वने ॥ ४७ ॥ नाध्यगच्छ-
त्तदा तृप्तिं कामानां स महायशाः । अवेत्य मनसा राजन्निमां
गाथां तदा जगौ ॥ ४८ ॥ न जातु कामः कामानामुपभोगेन
शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥ ४९ ॥
पृथिवी रत्नसंपूर्णा हिरण्यं पशवः स्त्रियः । नालमेकस्य तत् सर्व-
मिति मत्वा शमं व्रजेत् ॥ ५० ॥ यदा न कुरुते पापं सर्वभूतेषु
कर्हिचित् । कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥ ५१ ॥
यदा चायं न बिभेति यदा चास्मान्न बिभ्यति । यदा नेच्छति
न द्वेष्टि ब्रह्म सम्पद्यते तदा ॥५२॥ इत्यवेक्ष्य महाप्राज्ञः कामानां
फल्गुतां नृप । समाधाय मनो बुद्ध्या प्रत्यगृह्णाज्जरां सुतात् ॥५३॥
दत्त्वा च यौवनं राजा पूरुं राज्येऽभिषिच्य च । अतृप्त एव
कामानां पूरुं पुत्रमुवाच ह ॥ ५४ ॥ त्वया दायादवानस्मि त्वं मे
वंशकरः सुतः । पौरवो वंश इति ते ख्यातिं लोके गमिष्यति
॥ ५५ ॥

वैशम्पायन उवाच । ततः स नृपशार्दूल पूरुं राज्ये-
ऽभिषिच्य च । तपः सुचरितं कृत्वा भृगुतुङ्गे महातपाः ॥ ५६ ॥

कालेन महता पश्चात्कालधर्ममुपेयिवान् । कारयित्वा त्वनशनं सदारः स्वर्गमाप्तवान् ॥ ५७ ॥

इत्यादिपर्व्वणि सम्भवपर्व्वणि ययात्युपाख्याने
पञ्चसप्ततोऽध्यायः ॥ ७५ ॥

—०—

जनमेजय उवाच । ययातिः पूर्व्वजोऽस्माकं दशमो यः प्रजापतेः । कथं स शुक्रतनयां लेभे परमदुर्लभाम् ॥ १ ॥ एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन । आनुपूर्व्व्या च मे शंस राज्ञो वंशकरान् पृथक् ॥ २ ॥

वैशम्पायन उवाच । ययातिरासीन्नृपतिर्देवराजसमद्युतिः । तं शुक्रवृषपर्व्वाणौ वव्राते वै यथा पुरा ॥ ३ ॥ तत्तेऽहं सम्प्रवक्ष्यामि पृच्छते जनमेजय । देवयान्याश्च संयोगं ययातेर्नाहुषस्य च ॥ ४ ॥ सुराणामसुराणाञ्च समजायत वै मिथः । ऐश्वर्य्यं प्रतिसंघर्षस्त्रैलोक्ये सचराचरे ॥ ५ ॥ जिगीषया ततो देवा वव्रिरेऽङ्गिरसं मुनिम् । पौरोहित्येन याज्यार्थे काव्यं तूशनसं परे ॥ ६ ॥ ब्राह्मणौ तावुभौ नित्यमन्योन्यस्पर्द्धिनौ भृशम् । तत्र देवा निजघ्नुर्यान्दानवान् युधि सङ्गतान् ॥ ७ ॥ तान् पुनर्जीवयामास काव्यो विद्याबलाश्रयात् । ततस्ते पुनरुत्थाय योधयाञ्चक्रिरे सुरान् ॥ ८ ॥ असुरास्तु निजघ्नुर्यान् सुरान् समरमूर्द्धनि । न तान् सञ्जीवयामास वृहस्पतिरुदारधीः ॥ ९ ॥ न हि वेद स तां विद्यां यां काव्यो वेत्ति वीर्य्यवान् । सञ्जीविनीं ततो देवा विषादमगमन् परम् ॥ १० ॥ ते तु देवा भयोद्विग्नाः काव्यादुशनसस्तदा । ऊचुः कचमुपागम्य ज्येष्ठं पुत्रं वृहस्पतेः ॥ ११ ॥ भजमानान् भजस्वास्मान् कुरु नः साह्यमुत्तमम् । या सा विद्या निवसति ब्राह्मणेऽमिततेजसि ॥ १२ ॥ शुक्रे तामा-

ष्य क्षिप्रं भागभाक्को भविष्यसि। वृषपर्व्वसमीपे हि शक्यो द्रष्टुं त्वया द्विजः॥ १३ ॥ रचते दानवांस्तत्र न स रचत्यदानवान्। तमाराधयितुं शक्तो भवान्पूर्व्वयया कविम्॥ १४॥ देवयानी च दयितां सुतां तस्य महात्मनः। त्वामाराधयितुं शक्तो नान्यः कश्चन विद्यते॥ १५॥ शीलदाक्षिण्यमाधुर्य्यैराचारेण दमेन च। देवयान्यां हि तुष्टायां विद्यां तां प्राप्स्यसि ध्रुवम्॥ १६॥ तथेत्युक्त्वा ततः प्रायाद्बृहस्पतिसुतः कचः। तदाभिपूजितो देवैः समीपे वृषपर्व्वणः॥ १७॥ स गत्वा त्वरितो राजन्देवैः सम्प्रेषितः कचः। असुरेन्द्रपुरे शुक्रं दृष्ट्वा वाक्यमुवाच ह॥१८॥ ऋषेरङ्गिरसः पौत्रं पुत्रं साक्षाद्बृहस्पतेः। नाम्ना कचमिति ख्यातं शिष्यं गृह्णातु मां भवान्॥ १९॥ ब्रह्मचर्य्यं चरिष्यामि त्वय्यहं परमं गुरौ। अनुमन्यस्व मां ब्रह्मन् सहस्रं परिवत्सरान्॥ २०॥

शुक्र उवाच। कच सुस्वागतं तेऽस्तु प्रतिगृह्णामि ते वचः। अर्च्चयिष्येऽहमर्च्यं त्वामर्चितोऽस्तु बृहस्पतिः॥ २१॥

वैशम्पायन उवाच। कचस्तु तं तथेत्युक्त्वा प्रतिजग्राह तद्व्रतम्। आदिष्टं कविपुत्रेण शुक्रेणोशनसा स्वयम्॥ २२॥ व्रतस्य प्राप्तकालं स यथोक्तं प्रत्यगृह्णत। आराधयन्नुपाध्यायं देवयानीञ्च भारत॥ २३॥ नित्यमाराधयिष्यंस्तौ युवा यौवनगोचरे। गायन्नृत्यन् वादयंश्च देवयानीमतोषयत्॥ २४॥ स शीलयन्देवयानीं कन्यां सम्प्राप्तयौवनाम्। पुष्पैः फलैः प्रेषणैश्च तोषयामास भारत॥ २५॥ देवयान्यपि तं विप्रं नियमव्रतधारिणम्। गायन्ती च ललन्ती च रहः पर्य्यचरत्तथा॥ २६॥ पञ्चवर्षशतान्येवं कचस्य चरतो व्रतम्। तत्रातीयुरथो बुद्धा दानवास्तं ततः कचम्॥ २७॥ गा रक्षन्तं वने दृष्ट्वा रहस्येकममर्षिताः। जघ्नुर्बृहस्पतेर्द्वेषाद्विद्यारक्षार्थमेव च॥ २८॥ हत्वा

शालावृकेभ्यश्च प्रायच्छंल्लवशः कृतम् । ततो गावो निवृत्तास्ता
अगोपाः स्वं निवेशनम् ॥ २९ ॥ ता दृष्ट्वा रहिता गाश्च कचे-
नाभ्यागता वनात् । उवाच वचनं काले देवयान्यथ भारत ॥ ३० ॥

देवयान्युवाच । आहुतं चाग्निहोत्रं ते सूर्य्यश्चास्तं गतः
प्रभो । अगोपाश्चागता गावः कचस्तात न दृश्यते ॥ ३१ ॥
व्यक्तं हतो मृतो वापि कचस्तात भविष्यति । तं विना न च
जीवेयमिति सत्यं ब्रवीमि ते ॥ ३२ ॥

शुक्र उवाच । अयमेहीति संशब्द्य मृतं सञ्जीवयाम्यहम् ।
ततः सञ्जीवनीं विद्यां प्रयुज्य कचमाह्वयत् ॥ ३३ ॥ भित्त्वा भित्त्वा
शरीराणि वृकाणां स विनिर्गतः । आहूतः प्रादुरभवत्कचो
हृष्टोऽथ विद्यया ॥ ३४ ॥ कस्माच्चिरायितोऽसीति पृष्टस्तामाह
भार्गवीम् । समिधश्च कुशादीनि काष्ठभारञ्च भाविनि ॥ ३५ ॥
गृहीत्वाश्रमभारार्त्तो वटवृक्षं समाश्रितः । गावश्च सहिताः सर्व्वा
वृक्षच्छायामुपाश्रिताः ॥ ३६ ॥ असुरास्तत्र मां दृष्ट्वा कस्त्वमित्य-
भ्यचोदयन् । बृहस्पतिसुतश्चाहं कच इत्यभिविश्रुतः ॥ ३७ ॥
इत्युक्तमात्रे मां हत्वा पेषीकृत्वा तु दानवाः । दत्त्वा शाला-
वृकेभ्यस्तु सुखं जग्मुः स्वमालयम् ॥ ३८ ॥ आहूतो विद्यया
भद्रे भार्गवेण महात्मना । त्वत्समीपमिहायातः कथञ्चित्सम-
जीवितः ॥ ३९ ॥ स पुनर्देवयान्योक्तः पुष्पाहारो यदृच्छया ।
वनं ययौ कचो विप्रो ददृशुर्दानवाश्च ते । पुनस्तं पेषयित्वा तु
समुद्राम्भस्यमिश्रयन् ॥ ४० ॥ चिरङ्गतं पुनः कन्या पित्रे तं
संन्यवेदयत् । विप्रेण पुनराहूतो विद्यया गुरुदेहजः । पुन-
रावृत्य तद्वृत्तं न्यवेदयत तद्यथा ॥ ४१ ॥ ततस्तृतीयं हत्वा तं
दग्ध्वा कृत्वा च चूर्णशः । प्रायच्छन् ब्राह्मणायैव सुरायामसुरा-
स्तथा ॥ ४२ ॥ देवयान्यथ भूयोऽपि पितरं वाक्यमब्रवीत् । पुष्पा-
हारः प्रेषणकृत् कचस्तात न दृश्यते ॥ ४३ ॥ व्यक्तं हतो मृतो

वापि कचघात भविष्यति। तं विना न च जीवेयं कचं सत्यं ब्रवीमि ते॥ ४४॥

शुक्र उवाच। बृहस्पतेः सुतः पुत्रि कचः प्रेतगतिं गतः। विद्यया जीवितोऽप्येवं हन्यते करवाम किम्॥ ४५॥ मैवं शुचो माऽरुद देवयानि न त्वादृशी मर्त्यमनुप्रशोचते। यस्यास्तव ब्रह्म च ब्राह्मणाश्च सेन्द्रा देवा वसवोऽथाश्विनौ च॥ ४६॥ सुरद्विषश्चैव जगच्च सर्वमुपस्थाने सन्नमन्ति प्रभावात्। अशक्योऽसौ जीवयितुं द्विजातिः सञ्जीवितो बध्यते चैव भूयः॥ ४७॥

देवयान्युवाच। यस्याङ्गिरा वृद्धतमः पितामहो बृहस्पतिश्चापि पिता तपोनिधिः। ऋषेः पुत्रं तमथोवापि पौत्रं कथं न शोचेयमहं न रुद्याम्॥ ४८॥ स ब्रह्मचारी च तपोधनश्च सदोत्थितः कर्मसु चैव दक्षः। कचस्य मार्गं प्रतिपत्स्ये न भोक्ष्ये प्रियो हि मे तात कचोऽभिरूपः॥ ४९॥

वैशम्पायन उवाच। स पीड़ितो देवयान्या महर्षिः समाह्वयत् संरम्भाच्चैव काव्यः। असंशयं मामसुरा द्विषन्ति ये मे शिष्यानागतान् सूदयन्ति॥ ५०॥ अब्राह्मणं कर्त्तुमिच्छन्ति रौद्रास्ते मां यथा व्यभिचरन्ति नित्यम्। अप्यस्य पापस्य भवेदिहान्तः कं ब्रह्महत्या न दहेदपीन्द्रम्। गुरोर्हि भीतो विद्यया चोपहूतः शनैर्वाक्यं जठरे व्याजहार॥ ५१॥

वैशम्पायन उवाच। तमब्रवीत्केन पथोपनीतस्त्वं चोदरे तिष्ठसि ब्रूहि विप्र।

कच उवाच। तव प्रसादान्न जहाति मां स्मृतिः स्मरामि सर्वं यच्च यथा च वृत्तम्। नत्वेवं स्यात्तपसः संक्षयो मे ततः क्लेशं घोरमिमं सहामि॥ ५२॥ असुरैः सुरायां भवतोऽस्मि दत्तो हत्वा दग्ध्वा चूर्णयित्वा च काव्य। ब्राह्मीं मायां चासुरीं विप्र मायां त्वयि स्थिते कथमेवातिवर्त्तेत॥ ५३॥

शुक्र उवाच। किन्ते प्रियं करवाण्यद्य वत्से वधेन मे जीवितं स्यात्कचस्य। नान्यत्र कुक्षेर्मम भेदनेन दृश्येत्कचो मद्गतो देवयानि ॥ ५४ ॥

देवयान्युवाच। द्वौ मां शोकावग्निकल्पौ दहेतां कचस्य नाशस्तव चैवोपघातः। कचस्य नाशे मम शर्म नास्ति तवोपघाते जीवितुं नास्मि शक्ता ॥ ५५ ॥

शुक्र उवाच। संसिद्धरूपोऽसि बृहस्पतेः सुत यत्त्वां भक्तां भजते देवयानी। विद्यामिमां प्राप्नुहि जीवनीं त्वं न चेदिन्द्रः कचरूपी त्वमद्य ॥ ५६ ॥ न निवर्त्तेत् पुनर्जीवन् कश्चिदन्यो ममोदरात्। ब्राह्मणं वर्जयित्वैकं तस्माद्विद्यामवाप्नुहि ॥ ५७ ॥ पुत्रो भूत्वा भावय भावितो मामस्माद्देहादुपनिष्क्रम्य तात। समीक्षेथा धर्मवतीमवेक्षां गुरोः सकाशात्प्राप्य विद्यां सविद्यः ॥५८॥

वैशम्पायन उवाच। गुरोः सकाशात्समवाप्य विद्यां भित्त्वा कुक्षिं निर्विचक्राम विप्रः। कचोऽभिरूपस्तत्क्षणाद्ब्राह्मणस्य शुक्लात्यये पौर्णमास्यामिवेन्दुः ॥ ५९ ॥ दृष्ट्वा च तं पतितं ब्रह्मराशिमुत्थापयामास मृतं कचोऽपि। विद्यां सिद्धां तामवाप्याभिवाद्य ततः कचस्तं गुरुमित्युवाच ॥ ६० ॥ यः श्रोत्रयोरमृतं सन्निषिञ्चेद्विद्यामविद्यस्य यथा ममायम्। तं मन्येऽहं पितरं मातरञ्च तस्मै न द्रुह्येत् कृतमस्य जानन् ॥ ६१ ॥ ऋतस्य दातारमनुत्तमस्य निधिं निधीनामपि लब्धविद्याः। ये नाद्रियन्ते गुरुमर्चनीयं पापाल्लोकांस्ते व्रजन्त्यप्रतिष्ठाः ॥ ६२ ॥

वैशम्पायन उवाच। सुरापानाद्वञ्चनां प्राप्य विद्वान् संज्ञानाशञ्चैव महातिघोरम्। दृष्ट्वा कचं चापि तथाभिरूपं पीतं तदा सुरया मोहितेन ॥ ६३ ॥ समन्युरुत्थाय महानुभावस्तदोशना विप्रहितं चिकीर्षुः। सुरापानं प्रति सञ्जातमन्युः काव्यः स्वयं वाक्यमिदं जगाद ॥ ६४ ॥ यो ब्राह्मणोऽद्यप्रभृतीह कश्चि-

न्मोहात् सुरां पास्यति मन्दबुद्धिः । अपेतधर्मा ब्रह्महा चैव स स्यादस्मिन् लोके गर्हितः स्यात्परे च ॥ ६५ ॥ मया चैतां विप्रधर्मोक्तिसीमां मर्य्यादां वै स्थापितां सर्वलोके । सन्तो विप्राः शुश्रुवांसो गुरूणां देवा लोकाश्चोपशृण्वन्तु सर्वे ॥ ६६ ॥ इतीदमुक्त्वा स महानुभावस्तपोनिधीनां निधिरप्रमेयः । तान्दानवान्दैवविमूढबुद्धीनिदं समाहूय वचोऽभ्युवाच ॥ ६७ ॥ आचक्षे वो दानवा बालिशाः स्थ सिद्धः कचो वत्स्यति मत्सकाशे । सञ्जीवनीं प्राप्य विद्यां महात्मा तुल्यप्रभावो ब्राह्मणो ब्रह्मभूतः ॥ ६८ ॥ एतावदुक्त्वा वचनं विरराम स भार्गवः । दानवा विस्मयाविष्टाः प्रययुः स्वं निवेशनम् ॥ ६९ ॥ गुरोरस्य सकाशे तु दशवर्षशतानि सः । अनुज्ञातः कचो गन्तुमियेष त्रिदशालयम् ॥ ७० ॥

इत्यादिपर्वणि सम्भवपर्वणि ययात्युपाख्याने षट्सप्ततोऽध्यायः ॥ ७६ ॥

—•:•—

वैशम्पायन उवाच । समाप्तव्रतं तन्तु विसृष्टं गुरुणा तदा । प्रस्थितं त्रिदशावासं देवयान्यब्रवीदिदम् ॥ १ ॥ ऋषेरङ्गिरसः पौत्र वृत्तेनाभिजनेन च । भ्राजसे विद्यया चैव तपसा च दमेन च ॥ २ ॥ ऋषिर्यथाङ्गिरा मान्यः पितुर्मम महायशाः । तथा मान्यश्च पूज्यश्च मम भूयो बृहस्पतिः ॥ ३ ॥ एवं ज्ञात्वा विजानीहि यद्ब्रवीमि तपोधन । व्रतस्थे नियमोपेते यथा वर्त्ताम्यहं त्वयि ॥ ४ ॥ स समाप्तविद्यो मां भक्तां भजितुमर्हसि । गृहाण पाणिं विधिवन्मम मन्त्रपुरस्कृतम् ॥ ५ ॥

कच उवाच । पूज्यो मान्यश्च भगवान्यथा तव पिता मम । तथा त्वमनवद्याङ्गि पूजनीयतरा मम ॥ ६ ॥ प्राणेभ्योऽपि प्रियतरा भार्गवस्य महात्मनः । त्वं भद्रे धर्मतः पूज्या गुरुपुत्री सदा

पुत्रमश्मकं नाम भामिनी । भार्य्या कल्माषपादस्य भर्त्तुः प्रिय-
चिकीर्षया ॥ २२ ॥ अस्माकमपि ते जन्म विदितं कमलेक्षणे ।
कृष्णद्वैपायनाद्भीरु कुरूणां वंशवृद्धये ॥२३॥ अत एतानि सर्व्वाणि
कारणानि समीक्ष्य वै । ममैतद्वचनं धर्म्म्यं कर्त्तुमर्हस्यनिन्दिते
॥ २४ ॥ ऋतावृतौ राजपुत्रि स्त्रिया भर्त्ता पतिव्रते । नाति-
वर्त्तव्य इत्येवं धर्म्मं धर्म्मविदो विदुः ॥ २५ ॥ शेषेष्वन्येषु कालेषु
स्वातन्त्र्यं स्त्री किलार्हति । धर्म्ममेवं जनाः सन्तः पुराणं परि-
चक्षते ॥ २६ ॥ भर्त्ता भार्य्यां राजपुत्रि धर्म्म्यं वाधर्म्म्यमेव वा ।
यद्ब्रूयात्तत्तथा कार्य्यमिति वेदविदो विदुः ॥ २७ ॥ विशेषतः
पुत्रगृद्धी हीनः प्रजननात् स्वयम् । यथाहमनवद्याङ्गि पुत्रदर्शन-
लालसः ॥ २८ ॥ तथा रक्ताङ्गुलिनिभः पद्मपत्रनिभः शुभे ।
प्रसादार्थं मया तेऽयं शिरस्यभ्युद्यतोऽञ्जलिः ॥ २९ ॥ मन्नियो-
गात् सुकेशान्ते द्विजातेस्तपसाधिकात् । पुत्रान् गुणसमायुक्ता-
नुत्पादयितुमर्हसि । त्वत्कृतेऽहं पृथुश्रोणि गच्छेयं पुत्रिणां
गतिम् ॥ ३० ॥

वैशम्पायन उवाच । एवमुक्ता ततः कुन्ती पाण्डुं परपुर-
ञ्जयम् । प्रत्युवाच वरारोहा भर्त्तुः प्रियहिते रता ॥ ३१ ॥ पितृ-
वेश्मन्यहं बाला नियुक्तातिथिपूजने । उग्रं पर्य्यचरं तत्र ब्राह्मणं
संशितव्रतम् ॥ ३२ ॥ निगूढनिश्चयं धर्म्मे यन्तं दुर्व्वाससं विदुः ।
तमहं संशितात्मानं सर्व्वयत्नैरतोषयम् ॥ ३३ ॥ स मेऽभिचार-
संयुक्तमाचष्ट भगवान्वरम् । मन्त्रं त्विमञ्च मे प्रादादब्रवीच्चैव
मामिदम् ॥ ३४ ॥ यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
अकामो वा सकामो वा वशं ते समुपैष्यति ॥ ३५ ॥ तस्य तस्य
प्रसादात्ते राज्ञि पुत्रो भविष्यति । इत्युक्ताहं तदा तेन पितृ-
वेश्मनि भारत ॥ ३६ ॥ ब्राह्मणस्य वचस्तथ्यं तस्य कालोऽय-
मागतः । अनुज्ञाता त्वया देवमाह्वयेयमहं नृप ॥ ३७ ॥ तेन

मन्त्रेण राजर्षे यथास्यान्नौ प्रजा हिता। आवाहयामि कं देवं ब्रूहि सत्यवतां वर। त्वत्तोऽनुज्ञाप्रतीक्षां मां विद्ध्यस्मिन् कर्मणि स्थिताम्॥ ३८॥

पाण्डुरुवाच। अद्यैव त्वं वरारोहे प्रयतस्व यथाविधि। धर्ममावाहय शुभे स हि लोकेषु पुण्यभाक्॥ ३९॥ अधर्मेण न नो धर्मः संयुज्येत कथञ्चन। लोकश्चायं वरारोहे धर्मोऽयमिति मन्यते॥ ४०॥ धार्मिकश्च कुरूणां स भविष्यति न संशयः। धर्मेण चापि दत्तस्य नाधर्मे रंस्यते मनः॥ ४१॥ तस्माद्धर्मं पुरस्कृत्य नियता त्वं शुचिस्मिते। उपचाराभिचाराभ्यां धर्ममावाहयस्व वै॥ ४२

वैशम्पायन उवाच। सा तथोक्ता तथेत्युक्त्वा तेन भर्त्रा वराङ्गना। अभिवाद्याभ्यनुज्ञाता प्रदक्षिणमवर्त्तत॥ ४३॥

इत्यादिपर्वणि सम्भवपर्वणि कुन्तीपुत्रोत्पत्त्यनुज्ञाने
द्वाविंशत्यधिकशततोऽध्यायः॥ १२२॥

—०:०—

वैशम्पायन उवाच। संवत्सरधृते गर्भे गान्धार्या जनमेजय। आह्वयामास वै कुन्ती गर्भार्थं धर्ममच्युतम्॥१॥ सा बलिं त्वरिता देवी धर्मायोपजहार ह। जजाप विधिवज्जप्यं दत्तं दुर्वाससा पुरा॥ २॥ आजगाम ततो देवो धर्मो मन्त्रबलात्ततः। विमाने सूर्यसङ्काशे कुन्ती यत्र जपस्थिता॥ ३॥ विहस्य तां ततो ब्रूयाः कुन्ति किन्ते ददाम्यहम्। सा तं विहस्यमानापि पुत्रं देह्यब्रवीदिदम्॥ ४॥ संयुक्ता सा हि धर्मेण योगमूर्त्तिधरेण ह। लेभे पुत्रं वरारोहा सर्वप्राणभृतां हितम्॥ ५॥ ऐन्द्रे चन्द्रसमायुक्ते मुहूर्त्तेऽभिजितेऽष्टमे। दिवामध्यगते सूर्ये तिथौ पूर्णेऽतिपूजिते॥ ६॥ समृद्धयशसं कुन्ती सुषाव प्रवरं सुतम्।

जातमात्रे सुते तस्मिन्वागुवाचाशरीरिणी ॥ ७ ॥ एष धर्मभृतां
श्रेष्ठो भविष्यति नरोत्तमः । विक्रान्तः सत्यवाक् चैव राजा
पृथ्व्यां भविष्यति ॥ ८ ॥ युधिष्ठिर इति ख्यातः पाण्डोः प्रथमजः
सुतः । भविता प्रथितो राजा त्रिषु लोकेषु विश्रुतः ॥ ९ ॥
यशसा तेजसा चैव व्रतेन च समन्वितः । धार्मिकं तं सुतं लब्ध्वा
पाण्डुस्तां पुनरब्रवीत् ॥ १० ॥ प्राहुः क्षत्रं बलज्येष्ठं बलज्येष्ठं
सुतं वृणु । ततस्तथोक्ता भर्त्रा तु वायुमेवाजुहाव सा ॥ ११ ॥
ततस्तामागतो वायुर्मृगारूढो महाबलः । किन्ते कुन्ति ददा-
म्यद्य ब्रूहि यत्ते हृदि स्थितम् ॥ १२ ॥ सा सलज्जा विहस्याह
पुत्रं देहि सुरोत्तम । बलवन्तं महाकायं सर्वदर्पप्रभञ्जनम् ॥१३॥
तस्माज्जज्ञे महाबाहुर्भीमो भीमपराक्रमः । तमप्यतिबलं जातं
वागुवाचाशरीरिणी ॥ १४ ॥ सर्वेषां बलिनां श्रेष्ठो जातोऽय-
मिति भारत । इदमत्यद्भुतं चासीज्जातमात्रे वृकोदरे ॥१५॥
यदङ्कात्पतितो मातुः शिलां गात्रैर्व्यचूर्णयत् । कुन्ती व्याघ्र-
भयोद्विग्ना सहसोत्पतिता किल ॥ १६ ॥ नान्वबुध्यत संसुप्त-
मुत्सङ्गे स्वे वृकोदरम् । ततः स वज्रसंघातः कुमारो न्यपत-
द्गिरौ ॥ १७ ॥ पपात तेन शतधा शिला गात्रैर्विचूर्णिता । तां
शिलां चूर्णितां दृष्ट्वा पाण्डुर्विस्मयमागतः ॥ १८ ॥ यस्मिन्नहनि
भीमस्तु जज्ञे भरतसत्तम । दुर्य्योधनोऽपि तत्रैव प्रजज्ञे वसुधा-
धिपः ॥ १९ ॥ जाते वृकोदरे पाण्डुरिदं भूयोऽन्वचिन्तयत् ।
कथं नु मे वरः पुत्रो लोकश्रेष्ठो भवेदिति ॥ २० ॥ दैवे पुरुष-
कारे च लोकोऽयं संप्रतिष्ठितः । तत्र दैवन्तु विधिना काल-
युक्तेन लभ्यते ॥ २१ ॥ इन्द्रो हि राजा देवानां प्रधान इति
नः श्रुतम् । अप्रमेयबलोत्साहो वीर्य्यवानमितद्युतिः ॥ २२ ॥
तं तोषयित्वा तपसा पुत्रं लप्स्ये महाबलम् । यं दास्यति स मे
पुत्रं स वरीयान् भविष्यति ॥ २३ ॥ अमानुषान्मानुषांश्च संग्रामे

स हनिष्यति। कर्मणा मनसा वाचा तस्मात्तप्स्ये महत्तपः॥२४॥ ततः पाण्डुर्महाराजो मन्त्रयित्वा महर्षिभिः। दिदेश कुन्त्याः कौरव्यो व्रतं सम्वत्सरं शुभम्॥२५॥ आत्मना च महाबाहुरेकपादस्थितोऽभवत्। उग्रं स तप आस्थाय परमेण समाधिना॥२६॥ आरिराधयिषुर्देवं त्रिदशानां तमीश्वरम्। सूर्य्येण सह धर्मात्मा पर्य्यतप्यत भारत। तं तु कालेन महता वासवः प्रत्यपद्यत॥२७॥

शक्र उवाच। पुत्रं तव प्रदास्यामि त्रिषु लोकेषु विश्रुतम्। ब्राह्मणानां गवाञ्चैव सुहृदां चार्थसाधकम्॥२८॥ दुर्हृदां शोकजननं सर्वबान्धवनन्दनम्। सुतं तेऽग्र्यं प्रदास्यामि सर्वामित्रविनाशनम्॥२९॥ इत्युक्तः कौरवो राजा वासवेन महात्मना। उवाच कुन्तीं धर्मात्मा देवराजवचः स्मरन्॥३०॥ उदर्कस्तव कल्याणि तुष्टो देवगणेश्वरः। दातुमिच्छति ते पुत्रं यथासङ्कल्पितं त्वया॥३१॥ अतिमानुषकर्माणं यशस्विनमरिन्दमम्। नीतिमन्तं महात्मानमादित्यसमतेजसम्॥३२॥ दुराधर्षं क्रियावन्तमतीवाद्भुतदर्शनम्। पुत्रं जनय सुश्रोणि धाम क्षत्रियतेजसाम्। लब्धः प्रसादो देवेन्द्रात्तमाह्वय शुचिस्मिते॥३३॥

वैशम्पायन उवाच। एवमुक्ता ततः शक्रमाजुहाव यशस्विनी। अथाजगाम देवेन्द्रो जनयामास चार्जुनम्॥३४॥ जातमात्रे कुमारे तु वागुवाचाशरीरिणी। महागम्भीरनिर्घोषा नभो नादयती तदा॥३५॥ शृण्वतां सर्वभूतानां तेषां चाश्रमवासिनाम्। कुन्तीमाभाष्य विस्पष्टमुवाचेदं शुचिस्मिताम्॥३६॥ कार्त्तवीर्य्यसमः कुन्ति शिवतुल्यपराक्रमः। एष शक्र इवाजय्यो यशस्ते प्रथयिष्यति॥३७॥ अदित्या विष्णुना प्रीतिर्य्यथाभूदभिवर्द्धिता। तथा विष्णुसमः प्रीतिं

वर्धयिष्यति तेऽर्जुनः ॥ ३८ ॥ एष मद्राधिपं जित्वा कुरूंश्च सह सोमकैः। चेदिकाशिकरूषांश्च कुरुलक्ष्मीं वहिष्यति ॥ ३९ ॥ एतस्य भुजवीर्येण खाण्डवे हव्यवाहनः। मेदसा सर्वभूतानां तृप्तिं यास्यति वै पराम् ॥ ४० ॥ ग्रामणीश्च महीपालानेष जित्वा महाबलः। भ्रातृभिः सहितो वीरस्त्रीन्मेधानाहरिष्यति ॥४१॥ जामदग्न्यसमः कुन्ति विष्णुतुल्यपराक्रमः। एष वीर्य्यवतां श्रेष्ठो भविष्यति महायशाः ॥ ४२ ॥ एष युद्धे महादेवं तोषयिष्यति शङ्करम्। अस्त्रं पाशुपतं नाम तस्मात्तुष्टादवाप्स्यति ॥ ४३ ॥ निवातकवचा नाम दैत्या विबुधविद्विषः। शक्राज्ञया महाबाहुस्तान् वधिष्यति ते सुतः ॥ ४४ ॥ तथा दिव्यानि चास्त्राणि निखिलेनाहरिष्यति। विप्रनष्टां श्रियं चायमाहर्त्ता पुरुषर्षभः ॥ ४५ ॥ एतामत्यद्भुतां वाचं कुन्ती शुश्राव सूतके। वाचमुच्चरितामुच्चैर्तां निशम्य तपस्विनाम् ॥ ४६ ॥ बभूव परमो हर्षः शतशृङ्गनिवासिनाम्। तथा देवनिकायानां सेन्द्राणाञ्च दिवौकसाम् ॥ ४७ ॥ आकाशे दुन्दुभीनाञ्च बभूव तुमुलस्वनः। उदतिष्ठन्महाघोषः पुष्पवृष्टिभिरावृतः ॥ ४८॥ समवेत्य च देवानां गणाः पार्थमपूजयन्। काद्रवेया वैनतेया गन्धर्वाप्सरसस्तथा ॥ ४९ ॥ प्रजानां पतयः सर्वे सप्त चैव महर्षयः। भरद्वाजः कश्यपो गौतमश्च विश्वामित्रो जमदग्निर्वशिष्ठः। यश्चोदितो भास्करेऽभूत् प्रनष्टे सोऽप्यत्रात्रिर्भगवानाजगाम ॥ ५० ॥ मरीचिरङ्गिराश्चैव पुलस्त्यः पुलहः क्रतुः। दक्षः प्रजापतिश्चैव गन्धर्वाप्सरसस्तथा ॥ ५१ ॥ दिव्यमाल्याम्बरधराः सर्वालङ्कारभूषिताः। उपगायन्ति बीभत्सुं नृत्यन्त्यप्सरसाङ्गणाः ॥ ५२ ॥ तथा महर्षयश्चापि जेपुस्तत्र समन्ततः। गन्धर्वैः सहितः श्रीमान् प्रागायत च तुम्बुरुः ॥ ५३ ॥ भीमसेनोग्रसेनौ च ऊर्णायुरनघस्तथा। गोपतिर्धृतराष्ट्रश्च सूर्य्यवर्चास्तथाष्टमः ॥ ५४ ॥ युग-

तृणपः कार्ष्णिर्नन्दिश्चित्ररथस्तथा । त्रयोदशः शालिशिराः
पर्ज्जन्यश्च चतुर्दशः ॥ ५५ ॥ कलिः पञ्चदशश्चैव नारदश्चात्र
षोड़शः । सद्वा बृहद्वा बृहकः करालश्च महामनाः ॥ ५६ ॥
ब्रह्मचारी बहुगुणः सुवर्णश्चेति विश्रुतः । विश्वावसुः सुमन्युश्च
सुचन्द्रश्च शरुस्तथा ॥ ५७ ॥ गीतमाधुर्य्यसम्पन्नौ विख्यातौ च
हाहाहूहू । इत्येते देवगन्धर्वा जगुस्तत्र नराधिप ॥ ५८ ॥ तथै-
वाप्सरसो हृष्टाः सर्वालङ्कारभूषिताः । ननृतुर्वै महाभागा जगु-
श्चायतलोचनाः ॥ ५९ ॥ अनूचानानवद्या च गुणमुख्या गुणा-
वरा । अद्रिका च तथा सोमा मिश्रकेशी त्वलम्बुषा ॥ ६० ॥
मरीचिः शुचिका चैव विद्युत्पर्णा तिलोत्तमा । अम्बिका लक्षणा
क्षेमा देवी रम्भा मनोरमा ॥ ६१ ॥ असिता च सुबाहुश्च सुप्रिया
च वपुस्तथा । पुण्डरीका सुगन्धा च सुरसा च प्रमाथिनी ॥ ६२ ॥
काम्या शारद्वती चैव ननृतुस्तत्र संघशः । मेनका सहजन्या च
कर्णिका पुञ्जिकस्थला ॥ ६३ ॥ ऋतुस्थला घृताची च विश्वाची
पूर्वचित्त्यपि । उम्लोचेति च विख्याता प्रम्लोचेति च तादृशी
॥ ६४ ॥ उर्वश्येकादशी तासां जगुश्चायतलोचनाः । धाताऽर्य्यमा
च मित्रश्च वरुणोंऽशो भगस्तथा ॥ ६५ ॥ इन्द्रो विवस्वान् पूषा
च त्वष्टा च सविता तथा । पर्ज्जन्यश्चैव विष्णुश्च आदित्या
द्वादश स्मृताः ॥ ६६ ॥ महिमानं पाण्डवस्य वर्धयन्तोऽम्बरे
स्थिताः । मृगव्याधश्च सर्पश्च निर्ऋतिश्च महायशाः ॥ ६७ ॥
अजैकपादहिर्बुध्नः पिनाकी च परन्तप । दहनोऽथेश्वरश्चैव
कपाली च विशांपते । स्थाणुर्भगश्च भगवान् रुद्रास्तत्रावतस्थिरे
॥ ६८ ॥ अश्विनौ वसवश्चाष्टौ मरुतश्च महाबलाः । विश्वेदेवा-
स्तथा साध्यास्तत्रासन् परिसंस्थिताः ॥ ६९ ॥ कर्कोटकोऽथ सर्पश्च
वासुकिश्च भुजङ्गमः । कच्छपश्चाथ कुण्डश्च तक्षकश्च महोरगः
॥ ७० ॥ आययुस्तपसा युक्ता महाक्रोधा महाबलाः । एते चान्ये

च महत्त्वात्र नागा व्यवस्थिताः ॥ ७१ ॥ तार्क्ष्यश्चारिष्टनेमिश्च गरुड़श्चासितध्वजः । अरुणश्चारुणिश्चैव वैनतेया व्यवस्थिताः ॥ ७२ ॥ तांश्च देवगणान् सर्व्वांस्तपःसिद्धा महर्षयः । विमानगिर्य्यग्रगतान्ददृशुर्नेतरे जनाः ॥ ७३ ॥ तद्दृष्ट्वा महदाश्चर्य्यं विस्मिता मुनिसत्तमाः । अधिकां स्म ततो हृत्तिमवर्त्तन् पाण्डवान् प्रति ॥ ७४ ॥ पाण्डुस्तु पुनरेवैनां पुत्रलोभान्महायशाः । वक्तुमैच्छद्धर्मपत्नीं कुन्ती त्वेनमथाब्रवीत् ॥ ७५ ॥ नातश्चतुर्थं प्रसवमापत्स्वपि वदन्त्युत । अतःपरं स्वैरिणी स्याद्बन्धकी पञ्चमे भवेत् ॥ ७६ ॥ स त्वं विद्वन्धर्म्ममिममधिगम्य कथं नु माम् । अपत्यार्थं समुत्क्रम्य प्रमादादिव भाषसे ॥ ७७ ॥

इत्यादिपर्व्वणि सम्भवपर्व्वणि पाण्डवोत्पत्तौ त्रयोविंशत्यधिकशततोऽध्यायः ॥ १२३ ॥

---

वैशम्पायन उवाच । कुन्तीपुत्रेषु जातेषु धृतराष्ट्रात्मजेषु च । मद्रराजसुता पाण्डुं रहो वचनमब्रवीत् ॥ १ ॥ न मेऽस्ति त्वयि सन्तापो विगुणेऽपि परन्तप । नावरत्वे वरार्हायाः स्थित्वा चानघ नित्यदा ॥ २ ॥ गान्धार्य्याश्चैव नृपते जातं पुत्रशतं तथा । श्रुत्वा न मे तथा दुःखमभवत् कुरुनन्दन ॥ ३ ॥ इदन्तु मे महद्दुःखं तुल्यतायामपुत्रता । दिष्ट्या त्विदानीं भर्त्तुर्मे कुन्त्यामप्यस्ति सन्ततिः ॥ ४ ॥ यदि त्वपत्यसन्तानं कुन्तिराजसुता मयि । कुर्य्यादनुग्रहो मे स्यात्तव चापि हितं भवेत् ॥ ५ ॥ संरम्भो हि सपत्नीत्वाद्वक्तुं कुन्तिसुतां प्रति । यदि तु त्वं प्रसन्नो मे स्वयमेनां प्रचोदय ॥ ६ ॥

पाण्डुरुवाच । ममाप्येष सदा माद्रि हृद्यर्थः परिवर्त्तते । न तु त्वां प्रसहे वक्तुमिष्टानिष्टविवक्षया ॥ ७ ॥ तव त्विदं मतं

मत्वा प्रयतिष्याम्यतःपरम्। मन्ये ध्रुवं मयोक्ता सा वचनं प्रतिपत्स्यते ॥ ८॥

वैशम्पायन उवाच। ततः कुन्तीं पुनः पाण्डुर्विविक्ते इदमब्रवीत्। कुलस्य मम सन्तानं लोकस्य च कुरु प्रियम् ॥ ९॥ मम चापिण्डनाशाय पूर्वेषामपि चात्मनः। मत्प्रियार्थञ्च कल्याणि कुरु कल्याणमुत्तमम्। १०॥ यशसोऽर्थाय चैव त्वं कुरु कर्म सुदुष्करम्। प्राप्याधिपत्यमिन्द्रेण यज्ञैरिष्टं यशोऽर्थिना ॥ ११॥ तथा मन्त्रविदो विप्रास्तपस्तप्त्वा सुदुष्करम्। गुरूनभ्युपगच्छन्ति यशसोऽर्थाय भाविनि ॥ १२॥ तथा राजर्षयः सर्वे ब्राह्मणाश्च तपोधनाः। चक्रुरुच्चावचं कर्म यशसोऽर्थाय दुष्करम् ॥ १३॥ सा त्वं माद्रीं प्लवेनेव तारयैनामनिन्दिते। अपत्यसंविभागेन पराङ्कीर्तिमवाप्नुहि ॥ १४॥ एवमुक्ताब्रवीन्माद्रीं सकृच्चिन्तय दैवतम्। तस्मात्ते भविताऽपत्यमनुरूपमसंशयम्। १५॥ ततो माद्री विचार्य्यैव जगाम मनसाश्विनौ। तावागम्य सुतौ तस्यां जनयामासतुर्यमौ ॥ १६॥ नकुलं सहदेवञ्च रूपेणाप्रतिमौ भुवि। तथैव तावपि यमौ वागुवाचाशरीरिणी ॥ १७॥ सत्त्वरूपगुणोपेतौ भवतोऽत्यश्विनाविति। भासतस्तेजसात्यर्थं रूपद्रविणसम्पदा ॥ १८॥ नामानि चक्रिरे तेषां शतशृङ्गनिवासिनः। भक्त्या च कर्मणा चैव तथाशीर्भिर्विशाम्पते ॥ १९॥ ज्येष्ठं युधिष्ठिरेत्येवं भीमसेनेति मध्यमम्। अर्जुनेति तृतीयञ्च कुन्तीपुत्रानकल्पयन् ॥२०॥ पूर्वजं नकुलेत्येवं सहदेवेति चापरम्। माद्रीपुत्रावकथयंस्ते विप्राः प्रीतमानसाः ॥ २१॥ अनुसंवत्सरं जाता अपि ते कुरुसत्तमाः। पाण्डुपुत्रा व्यराजन्त पञ्च संवत्सरा इव ॥ २२॥ महासत्त्वा महावीर्य्या महाबलपराक्रमाः। पाण्डुर्दृष्ट्वा सुतांस्तांस्तु देवरूपान्महौजसः ॥ २४॥ मुदं परमिकां लेभे ननन्द

च नराधिपः। ऋषीणामपि सर्व्वेषां शतशृङ्गनिवासिनाम् ॥२५॥
प्रिया बभूवुस्तासाञ्च तथैव मुनियोषिताम्। कुन्तीमथ पुनः
पाण्डुर्माद्र्यर्थे समचोदयत् ॥ २६ ॥ तमुवाच पृथा राजन्रहस्युक्ता
तदा सती। उक्ता सकृद्द्वन्द्वमेषा लेभे तेनास्मि वञ्चिता ॥२७॥
बिभेम्यस्याः परिभवात् कुस्त्रीणां गतिरीदृशी। नाज्ञासिषमहं
मूढा द्वन्द्वाह्वाने फलद्वयम् ॥ २८ ॥ तस्मान्नाहं नियोक्तव्या त्वयै-
षोऽस्तु वरो मम। एवं पाण्डोः सुताः पञ्च देवदत्ता महाबलाः
॥ २९ ॥ सम्भूताः कीर्त्तिमन्तश्च कुरुवंशविवर्द्धनाः। शुभ-
लक्षणसम्पन्नाः सोमवत् प्रियदर्शनाः ॥ ३० ॥ सिंहदर्पा महे-
ष्वासाः सिंहविक्रान्तगामिनः। सिंहग्रीवा मनुष्येन्द्रा ववृधु-
र्देवविक्रमाः ॥ ३१ ॥ विवर्द्धमानास्ते तत्र पुण्ये हैमवते गिरौ।
विस्मयं जनयामासुर्महर्षीणां समेयुषाम् ॥ ३२ ॥ ते च पञ्च
शतञ्चैव कुरुवंशविवर्द्धनाः। सर्व्वे ववृधुरल्पेन कालेनाप्स्विव
नीरजाः ॥ ३३ ॥

इत्यादिपर्व्वणि सम्भवपर्व्वणि पाण्डवोत्पत्तौ चतुर्विंश-
त्यधिकशततोऽध्यायः ॥ १२४ ॥

---

वैशम्पायन उवाच। दर्शनीयांस्ततः पुत्रान् पाण्डुः पञ्च महा-
वने। तान् पश्यन् पर्व्वते रम्ये स्वबाहुबलमाश्रितः ॥१॥ सुपुष्पित-
वने काले कदाचिन्मधुमाधवे। भूतसंमोहने राजा सभार्य्यो व्यच-
रद्वनम् ॥२॥ पलाशैस्तिलकैश्चूतैश्चम्पकैः पारिभद्रकैः। कर्णिकारै-
रशोकैश्च केशरैरतिमुक्तकैः ॥ ३ ॥ तथा कुरुबकैश्चैव मत्तभ्रमर-
नादितैः। द्रुतैर्मञ्जरितैश्चैव पारिजातवनैः शुभैः ॥४॥ कलकण्ठ-
कलोद्घुष्टं षट्पदैः प्रतिकूजितम्। अन्यैश्च बहुभिर्वृक्षैः फल-

पुष्पसमृद्धिभिः ॥ ५ ॥ जलस्थानैश्च विविधैः पद्मिनीभिश्च शोभितम्। पाण्डोर्वनं तत् सम्प्रेक्ष्य प्रजज्ञे हृदि मन्मथः ॥ ६ ॥ प्रहृष्टमनसं तत्र विचरन्तं यथामरम्। तं माद्र्यनुजगामैका वसनं बिभ्रती शुभम् ॥ ७ ॥ समीक्षमाणः स तु तां वयस्थां तनुवाससम्। तस्य कामः प्रववृते गहनेऽग्निरिवोद्गतः ॥ ८ ॥ रहस्येकान्तु तां दृष्ट्वा राजा राजीवलोचनाम्। शशाक न नियन्तुं तं कामं कामवशीकृतः ॥ ९ ॥ तत एनां बलाद्राजा निजग्राह रहोगताम्। वार्य्यमाणस्तया देव्या विस्फुरन्त्या यथाबलम् ॥ १० ॥ स तु कामपरीतात्मा तं शापं नान्वबुध्यत। माद्रीं मैथुनधर्म्मेण सोऽन्वगच्छद्बलादिव ॥ ११ ॥ जीवितान्ताय कौरव्य मन्मथस्य वशङ्गतः। शापजं भयमुत्सृज्य विधिना संप्रचोदितः ॥ १२ ॥ तस्य कामात्मनो बुद्धिः साक्षात्कालेन मोहितः। संप्रमथ्येन्द्रियग्रामं प्रनष्टा सह चेतसा ॥ १३ ॥ स तया सह सङ्गम्य भार्य्यया कुरुनन्दनः। पाण्डुः परमधर्मात्मा युयुजे कालधर्म्मणा ॥ १४ ॥ ततो माद्री समालिङ्ग्य राजानं गतचेतसम्। मुमोच दुःखजं शब्दं पुनः पुनरतीव हि ॥ १५ ॥ सह पुत्रैस्ततः कुन्ती माद्रीपुत्रौ च पाण्डवौ। आजग्मुः सहितास्तत्र यत्र राजा तथागतः ॥ १६ ॥ ततो माद्र्यब्रवीद्राजन्नार्त्ता कुन्तीमिदं वचः। एकैव त्वमिहागच्छ तिष्ठन्त्वत्रैव दारकाः ॥ १७ ॥ तच्छ्रुत्वा वचनं तस्यास्तत्रैवाधाय दारकान्। हताहमिति विक्रुश्य सहसैवाजगाम सा ॥ १८ ॥ दृष्ट्वा पाण्डुञ्च माद्रीञ्च शयानौ धरणीतले। कुन्ती शोकपरीताङ्गी विललाप सुदुःखिता ॥ १९ ॥ रक्ष्यमाणो मया नित्यं वीरः सततमात्मवान्। कथं त्वामत्यतिक्रान्तः शापं जानन्वनौकसः ॥ २० ॥ ननु नाम त्वया माद्रि रक्षितव्यो नराधिपः। सा कथं लोभितवती विजने त्वं नराधिपम् ॥ २१ ॥ कथं दीनस्य सततं त्वामासाद्य रहोगताम्। तं विचिन्तयतः शापं

भरतर्षभः समजायत ॥ २२ ॥ धन्या त्वमसि वाह्लीकि मत्तो भाग्यतरा तथा। दृष्टवत्यसि यद्वक्त्रं प्रहृष्टस्य महीपतेः ॥ २३ ॥

माद्र्युवाच। विलपन्त्या मया देवि वार्य्यमाणेन चासकृत्। आत्मा न वारितोऽनेन सत्यं दिष्टं चिकीर्षुणा ॥ २४ ॥

कुन्त्युवाच। अहं ज्येष्ठा धर्मपत्नी ज्येष्ठं धर्मफलं मम। अवश्यंभाविनो भावान्मा मां माद्रि निवर्त्तय ॥ २५ ॥ अन्विष्यामीह भर्त्तारमहं प्रेतवशं गतम्। उत्तिष्ठ त्वं विसृज्यैनमिमान् पालय दारकान् ॥ २६ ॥

माद्र्युवाच। अहमेवानुयास्यामि भर्त्तारमपलायिनम्। न हि तृप्तास्मि कामानां ज्येष्ठा मामनुमन्यताम् ॥ २७ ॥ मां चाभिगम्य क्षीणोऽयं कामाद्भरतसत्तमः। तमुच्छिन्द्यामस्य कामं कथं नु यमसादने ॥ २८ ॥ न चाप्यहं वर्त्तयन्ती निर्विशेषं सुतेषु ते। वृत्तिमार्य्ये चरिष्यामि स्पृशेदेनस्तथा च माम् ॥ २९ ॥ तस्मान्मे सुतयोः कुन्ति वर्त्तितव्यं स्वपुत्रवत्। माञ्च कामयमानोऽयं राजा प्रेतवशं गतः ॥ ३० ॥ राज्ञः शरीरेण सह ममापीदं कलेवरम्। दग्धव्यं सुप्रतिच्छन्नमेतदार्य्ये प्रियं कुरु ॥ ३१ ॥ दारकेष्वप्रमत्ता च भवेथाश्च हिता मम। अतोऽन्यन्न प्रपश्यामि संदेष्टव्यं हि किञ्चन ॥ ३२ ॥

वैशम्पायन उवाच। इत्युक्त्वा तं चिताग्निस्थं धर्मपत्नी नरर्षभम्। मद्रराजसुता तूर्णमन्वारोहद्यशस्विनी ॥ ३३ ॥

इत्यादिपर्वणि सम्भवपर्वणि पाण्डुपरमे पञ्चविंशत्यधिकशतोऽध्यायः ॥ १२५ ॥

वैशम्पायन उवाच। पाण्डोरुपरमं दृष्ट्वा देवकल्पा महर्षयः। ततो मन्त्रविदः सर्वे मन्त्रयाञ्चक्रिरे मिथः॥ १॥

तापसा ऊचुः। हित्वा राज्यञ्च राष्ट्रञ्च स महात्मा महायशाः। अस्मिन् स्थाने तपस्तप्तुं तापसान् शरणं गतः॥ २॥ स जातमात्रान् पुत्रांश्च दारांश्च भवतामिह। प्रदायोपनिधिं राजा पाण्डुः स्वर्गमितो गतः॥३॥ तस्येमानात्मजान्देहं भार्य्याञ्च सुमहात्मनः। स्वराष्ट्रं गृह्य गच्छामो धर्म एष हि नः स्मृतः॥४॥

वैशम्पायन उवाच। ते परस्परमामन्त्र्य देवकल्पा महर्षयः। पाण्डोः पुत्रान् पुरस्कृत्य नगरं नागसाह्वयम्॥ ५॥ उदारमनसः सिद्धा गमने चक्रिरे मनः। भीष्माय पाण्डवान् दातुं धृतराष्ट्राय चैव हि॥ ६॥ तस्मिन्नेव क्षणे सर्वे तानादाय प्रतस्थिरे। पाण्डोर्दारांश्च पुत्रांश्च शरीरे ते च तापसाः॥ ७॥ सुखिनी सा पुरा भूत्वा सततं पुत्रवत्सला। प्रपन्ना दीर्घमध्वानं संक्षिप्तं तदमन्यत॥ ८॥ सा त्वदीर्घेण कालेन सम्प्राप्ता कुरुजाङ्गलम्। वर्द्धमानपुरद्वारमाससाद यशस्विनी॥ ९॥ द्वारिणं तापसा ऊचू राजानञ्च प्रकाशय। ते तु गत्वा क्षणेनैव सभायां विनिवेदिताः॥ १०॥ तं चारणसहस्राणां मुनीनामागमं तदा। श्रुत्वा नागपुरे नॄणां विस्मयः समपद्यत॥ ११॥ मुहूर्त्तोदित आदित्ये सर्वे बालपुरस्कृताः। सदारास्तापसान्द्रष्टुं निर्ययुः पुरवासिनः॥ १२॥ स्त्रीसङ्घाः क्षत्रसङ्घाश्च यानसङ्घसमास्थिताः। ब्राह्मणैः सह निर्जग्मुर्ब्राह्मणानाञ्च योषितः॥ १३॥ तथा विट्शूद्रसङ्घानां महान् व्यतिकरोऽभवत्। न कश्चिदकरोदीर्ष्यामभवन् धर्मबुद्धयः॥ १४॥ तथा भीष्मः शान्तनवः सोमदत्तोऽथ वाह्लिकः। प्रज्ञाचक्षुश्च राजर्षिः क्षत्ता च विदुरः स्वयम्॥१५॥ सा च सत्यवती देवी कौशल्या च यशस्विनी। राजदारैः परिवृता गान्धारी चापि निर्ययौ॥ १६॥ धृतराष्ट्रस्य दायादा

दुर्य्योधनपुरोगमाः । भूषिता भूषणैश्चित्रैः शतसङ्ख्या विनिर्ययुः ॥ १७ ॥ तान्महर्षिगणान् दृष्ट्वा शिरोभिरभिवाद्य च । उपोपविविशुः सर्वे कौरव्याः सपुरोहिताः ॥ १८ ॥ तथैव शिरसा भूमावभिवाद्य प्रणम्य च । उपोपविविशुः सर्वे पौरजानपदा अपि ॥ १९ ॥ तमकूजमभिज्ञाय जनौघं सर्वशस्तदा । पूजयित्वा यथान्यायं पाद्येनार्घ्येण च प्रभो ॥ २० ॥ भीष्मो राज्यञ्च राष्ट्रञ्च महर्षिभ्यो न्यवेदयत् । तेषामथो वृद्धतमः प्रत्युत्थाय जटाजिनी ॥ २१ ॥ ऋषीणां मतमाज्ञाय महर्षिरिदमब्रवीत् । यः स कौरव्यदायादः पाण्डुर्नाम नराधिपः । कामभोगान् परित्यज्य शतशृङ्गमितो गतः ॥ २२ ॥ ब्रह्मचर्य्यव्रतस्थस्य तस्य दिव्येन हेतुना । साक्षाद्धर्म्मादयं पुत्रस्तत्र जातो युधिष्ठिरः ॥ २३ ॥ तथैनं बलिनां श्रेष्ठं तस्य राज्ञो महात्मनः । मातरिश्वा ददौ पुत्रं भीमं नाम महाबलम् ॥ २४ ॥ पुरुहूतादयं जज्ञे कुन्त्या-मेव धनञ्जयः । यस्य कीर्त्तिर्महेष्वासान् सर्व्वानभिभविष्यति ॥ २५ ॥ यौ तु माद्री महेष्वासावसूत पुरुषोत्तमौ । अश्विभ्यां पुरुष-व्याघ्राविमौ तावपि पश्यत ॥ २६ ॥ चरता धर्म्मनित्येन वनवासं यशस्विना । नष्टः पैतामहो वंशः पाण्डुना पुनरुद्धृतः ॥ २७ ॥ पुत्राणां जन्म वृद्धिञ्च वैदिकाध्ययनानि च । पश्यन्तः सततं पाण्डोः परां प्रीतिमवाप्स्यथ ॥ २८ ॥ वर्त्तमानः सतां वृत्ते पुत्र-लाभमवाप्य च । पितृलोकं गतः पाण्डुरितः सप्तदशेऽहनि ॥ २९ ॥ तं चितागतमाज्ञाय वैश्वानरमुखे हुतम् । प्रविष्टा पावकं माद्री हित्वा जीवितमात्मनः ॥ ४० ॥ सा गता सह तेनैव पतिलोक-मनुव्रता । तस्यास्तस्य च यत्कार्य्यं क्रियतां तदनन्तरम् ॥ ४१ ॥ इमे तयोः शरीरे द्वे पुत्राश्चेमे तयोर्वराः । क्रियाभिरनुगृह्यन्तां सह मात्रा परन्तपाः ॥ ४२ ॥ प्रेतकार्य्ये निवृत्ते तु पितृमेधं महायशाः । लभतां सर्व्वधर्म्मज्ञः पाण्डुः कुरुकुलोद्वहः ॥ ४३ ॥

वैशम्पायन उवाच। एवमुक्त्वा कुरून् सर्वान् कुरूणामेव पश्यताम्। क्षणेनान्तर्हिताः सर्वे तापसा गुह्यकैः सह ॥ ४४ ॥ गन्धर्वनगराकारं तथैवान्तर्हितं पुनः। ऋषिसिद्धगणान् दृष्ट्वा विस्मयं ते परं ययुः ॥ ४५ ॥

इत्यादिपर्वणि सम्भवपर्वणि ऋषिसंवादे षड्‌विंश-
त्यधिकशततोऽध्यायः ॥ १२६ ॥

—•:०—

धृतराष्ट्र उवाच। पाण्डोर्विदुर सर्वाणि प्रेतकार्य्याणि कारय। राजवद्राजसिंहस्य माद्र्याश्चैव विशेषतः ॥ १ ॥ पशून् वासांसि रत्नानि धनानि विविधानि च। पाण्डोः प्रयच्छ माद्र्याश्च येभ्यो यावच्च वाञ्छितम् ॥ २ ॥ यथा च कुन्ती सत्कारं कुर्य्यान्माद्र्यास्तथा कुरु। यथा न वायुर्नादित्यः पश्येतां तां सुसंवृताम् ॥ ३ ॥ न शोच्यः पाण्डुरनघः प्रशस्यः स नराधिपः। यस्य पञ्च सुता वीरा जाताः सुरसुतोपमाः ॥ ४ ॥

वैशम्पायन उवाच। विदुरस्तं तथेत्युक्त्वा भीष्मेण सह भारत। पाण्डुं संस्कारयामास देशे परमपूजिते ॥ ५ ॥ ततस्तु नगरात्तूर्णमाज्यगन्धपुरस्कृताः। निर्हृताः पावका दीप्ताः पाण्डोराजन् पुरोहितैः ॥ ६ ॥ अथैनमार्त्तवैः पुष्पैर्गन्धैश्च विविधैर्वरैः। शिविकां तामलङ्कृत्य वाससाच्छाद्य सर्वशः ॥ ७ ॥ तां तथा शोभितां माल्यैर्वासोभिश्च महाधनैः। अमात्या ज्ञातयश्चैनं सुहृदश्चोपतस्थिरे ॥ ८ ॥ नृसिंहं नरयुक्तेन परमालङ्कृतेन तम्। अवहन् यानमुख्येन सह माद्र्या सुसंवृतम् ॥ ९ ॥ पाण्डुरेणातपत्रेण चामरव्यजनेन च। सर्ववादित्रनादैश्च समलञ्चक्रिरे ततः ॥ १० ॥ रत्नानि चाप्युपादाय बहूनि शतशो नराः। प्रददुः काङ्क्षमाणेभ्यः पाण्डोस्तस्यौर्द्ध्वदेहिके ॥ ११॥ अथच्छत्राणि

शुभ्राणि चामराणि व्रजन्ति च। आजह्रुः कौरवस्यार्थे वासांसि
रुचिराणि च ॥ १२ ॥ याजकैः शुक्लवासोभिर्हूयमाना हुता-
शनाः। अगच्छन्नग्रतस्तस्य दीप्यमानाः स्वलङ्कृताः ॥ १३ ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव सहस्रशः। रुदन्तः शोक-
सन्तप्ता अनुजग्मुर्नराधिपम् ॥ १४ ॥ अयमस्मानपास्याद्य दुःखे
चाधाय शाश्वते। कृत्वा चास्माननाथांश्च क्व यास्यसि नराधिप
॥ १५ ॥ क्रोशन्तः पाण्डवाः सर्वे भीष्मो विदुर एव च। रम-
णीये वनोद्देशे गङ्गातीरे समे शुभे ॥ १६ ॥ न्यासयामासुरथ
तां शिबिकां सत्यवादिनः। सभार्य्यस्य नृसिंहस्य पाण्डोरक्लिष्ट-
कर्म्मणः ॥ १७ ॥ ततस्तस्य शरीरन्तु सर्वगन्धाधिवासितम्।
शुचिकालीयकादिग्धं दिव्यचन्दनरूषितम् ॥ १८ ॥ पर्य्यषिञ्चन्
जलेनाशु शातकुम्भमयैर्घटैः। चन्दनेन च शुक्लेन सर्वतः सम-
लेपयन् ॥ १९ ॥ कालागुरुविमिश्रेण तथा तुङ्गरसेन च। अथैनं
देशजैः शुक्लैर्वासोभिः समयोजयन् ॥ २० ॥ संच्छन्नः स तु
वासोभिर्जीवन्निव नराधिपः। शुशुभे स नरव्याघ्रो महार्ह-
शयनोचितः ॥ २१ ॥ याजकैरभ्यनुज्ञाते प्रेतकर्म्मण्यनुष्ठिते। घृता-
वसिक्तं राजानं सह माद्र्या स्वलङ्कृतम् ॥ २२ ॥ तुङ्गपद्मविमि-
श्रेण चन्दनेन सुगन्धिना। अन्यैश्च विविधैर्गन्धैर्विधिना सम-
दाहयन् ॥ २३ ॥ ततस्तयोः शरीरे द्वे दृष्ट्वा मोहवशं गता।
हाहा पुत्रेति कौशल्या पपात सहसा भुवि ॥ २४ ॥ तां प्रेक्ष्य
पतितामार्त्तां पौरजानपदो जनः। रुरोद दुःखसन्तप्तो राज-
भक्त्या कृपान्वितः ॥ २५ ॥ कुन्त्याश्चैवार्त्तनादेन सर्वाणि च
विचुक्रुशुः। मानुषैः सह भूतानि तिर्य्यग्योनिगतान्यपि ॥२६॥
तथा भीष्मः शान्तनवो विदुरश्च महामतिः। सर्वशः कौरवाश्चैव
प्राणदन् भृशदुःखिताः ॥ २७ ॥ ततो भीष्मोऽथ विदुरो राजा
च सह पाण्डवैः। उदकं चक्रिरे तस्य सर्वाश्च कुरुयोषितः ॥२८॥

चुक्रुशुः पाण्डवाः सर्वे भीष्मः शान्तनवस्तथा। विदुरो ज्ञातयश्चैव चक्रुश्चाप्युदकक्रियाः ॥ २९ ॥ कृतोदकांस्तानादाय पाण्डवाञ्छोककर्षितान्। सर्वाः प्रकृतयो राजञ्छोचमाना न्यवारयन् ॥ ३० ॥ यथैव पाण्डवा भूमौ सुषुपुः सह बान्धवैः। तथैव नागरा राजन् शिश्यिरे ब्राह्मणादयः ॥ ३१ ॥ तदनानन्दमस्वस्थमाकुमारमहृष्टवत्। बभूव पाण्डवैः सार्द्धं नगरं द्वादश क्षपाः ॥ ३२ ॥

इत्यादिपर्वणि सम्भवपर्वणि पाण्डुदाहे सप्तविंशत्यधिकशततोऽध्यायः ॥ १२७ ॥

---

वैशम्पायन उवाच। ततः कुन्ती च राजा च भीष्मश्च सह बन्धुभिः। ददुः श्राद्धन्तदा पाण्डोः स्वधाममृतमयं तदा ॥ १ ॥ कुरूंश्च विप्रमुख्यांश्च भोजयित्वा सहस्रशः। रत्नौघान्द्विजमुख्येभ्यो दत्त्वा ग्रामवरांस्तथा ॥ २ ॥ कृतशौचांस्ततस्तांस्तु पाण्डवान् भरतर्षभान्। आदाय विविशुः सर्वे पुरं वारणसाह्वयम् ॥ ३ ॥ सततं चानुशोचन्तस्तमेव भरतर्षभम्। पौरजानपदाः सर्वे मृतं स्वमिव बान्धवम् ॥ ४ ॥ श्राद्धावसाने तु तदा दृष्ट्वा तं दुःखितं जनम्। संमूढां दुःखशोकार्त्तां व्यासो मातरमब्रवीत् ॥ ५ ॥ अतिक्रान्तसुखाः कालाः पर्य्युपस्थितदारुणाः। श्वः श्वः पापिष्ठदिवसाः पृथिवी गतयौवना ॥ ६ ॥ बहुमायासमाकीर्णो नानादोषसमाकुलः। लुप्तधर्मक्रियाचारो घोरः कालो भविष्यति ॥ ७ ॥ कुरूणामनयाच्चापि पृथिवी न भविष्यति। गच्छ त्वं योगमास्थाय युक्ता वस तपोवने ॥ ८ ॥ मा द्राक्षीस्त्वं कुलस्यास्य घोरं सङ्क्षयमात्मनः। तथेति समनुज्ञाय सा प्रविश्याब्रवीत् स्नुषाम् ॥ ९ ॥ अम्बिके तव पौत्रस्य दुर्नयात्किल भारताः। सानुबन्धा

विनश्यन्ति पौराश्चेति नः श्रुतम् ॥ १० ॥ तत्कौरव्याभिमाम्-
म्बिकां पुत्रशोकाभिपीड़िताम्। वनमादाय भद्रं ते गच्छामि
यदि मन्यसे ॥ ११ ॥ तथेत्युक्त्वा त्वम्बिकया भीष्ममामन्त्र्य
सुव्रता। वनं ययौ सत्यवती स्नुषाभ्यां सह भारत ॥ १२ ॥
ताः सुघोरं तपस्तप्त्वा देव्यो भरतसत्तम। देहं त्यक्त्वा महाराज
गतिमिष्टां ययुस्तदा ॥ १३ ॥

वैशम्पायन उवाच। अथाप्नुवन्तो वेदोक्तान् संस्कारान्
पाण्डवास्तदा। संव्यवर्द्धन्त भोगांस्ते भुञ्जानाः पितृवेश्मनि ॥१४॥
धार्त्तराष्ट्रैश्च सहिताः क्रीड़न्तो मुदिताः सुखम्। बालक्रीड़ासु
सर्वासु विशिष्टास्तेजसाभवन् ॥ १५ ॥ जवे लक्ष्याभिहरणे भोज्ये
पांशुविकर्षणे। धार्त्तराष्ट्रान् भीमसेनः सर्वान् स परिमर्द्दति
॥ १६ ॥ हर्षात् प्रक्रीड़मानांस्तान् गृह्य राजन्निलीयते। शिरःसु
विनिगृह्यैतान् योधयामास पाण्डवः ॥ १७ ॥ शतमेकोत्तरं
तेषां कुमाराणां महौजसाम्। एक एव निगृह्णाति नाति-
कृच्छ्राद्वृकोदरः ॥ १८ ॥ कचेषु च निगृह्यैनान्विनिहत्य बला-
द्बली। चकर्ष क्रोशतो भूमौ घृष्टजानुशिरोंऽसकान् ॥ १९ ॥
दशबालान् जले क्रीड़न् भुजाभ्यां परिगृह्य सः। आस्ते स्म सलिले
मग्नो मृतकल्पान्विमुञ्चति ॥ २० ॥ फलानि वृक्षमारुह्य विचि-
न्वन्ति च ते यदा। तदा पादप्रहारेण भीमः कम्पयते द्रुमान्
॥ २१ ॥ प्रहारवेगाभिहता द्रुमा व्याघूर्णितास्ततः। सफलाः
प्रपतन्ति स्म द्रुतं त्रस्ताः कुमारकाः ॥ २२ ॥ न ते नियुद्धे न
जवे न योग्यासु कदाचन। कुमारा उत्तरं चक्रुः स्पर्द्धमाना
वृकोदरम् ॥ २३ ॥ एवं स धार्त्तराष्ट्रांश्च स्पर्द्धमानो वृकोदरः।
अप्रियेऽतिष्ठदत्यन्तं बाल्यान्न द्रोहचेतसा ॥ २४ ॥ ततो बल-
मतिख्यातं धार्त्तराष्ट्रः प्रतापवान्। भीमसेनस्य तज्ज्ञात्वा दुष्ट-
भावमदर्शयत् ॥ २५ ॥ तस्य धर्मादपेतस्य पापानि परिपश्यतः।

मोहादैश्वर्य्यलोभाच्च पापा मतिरजायत ॥ २६ ॥ अयं बलवतां श्रेष्ठः कुन्तीपुत्रो वृकोदरः। मध्यमः पाण्डुपुत्राणां निकृत्या संनिगृह्यताम् ॥ २७ ॥ प्राणवान्विक्रमी चैव शौर्य्येण महतान्वितः। स्पर्द्धते चापि सहितानस्मानेको वृकोदरः ॥ २८ ॥ तन्तु सुप्तं पुरोद्याने गङ्गायां प्रक्षिपामहे। अथ तस्मादवरजं श्रेष्ठं चैव युधिष्ठिरम् ॥ २९ ॥ प्रसह्य बन्धने बद्ध्वा प्रशासिष्ये वसुन्धराम्। एवं स निश्चयं पापः कृत्वा दुर्य्योधनस्तदा। नित्यमेवान्तरप्रेक्षी भीमस्यासीन्महात्मनः ॥ ३० ॥ ततो जलविहारार्थं कारयामास भारत। चैलकम्बलवेश्मानि विचित्राणि महान्ति च ॥ ३१ ॥ सर्वकामैः सुपूर्णानि पताकोच्छ्रायवन्ति च। तत्र सञ्जनयामास नानागाराण्यनेकशः ॥ ३२ ॥ उदकक्रीड़नं नाम कारयामास भारत। प्रमाणकोट्यां तं देशं स्थलं किञ्चिदुपेत्य ह ॥ ३३ ॥ भक्ष्यं भोज्यञ्च पेयञ्च चोष्यं लेह्यमथापि च। उपाहृतं नरैस्तत्र कुशलैः सूदकर्मणि ॥ ३४ ॥ न्यवेदयंस्तत् पुरुषा धार्त्तराष्ट्राय वै तदा। ततो दुर्य्योधनस्तत्र पाण्डवानाह दुर्मतिः ॥ ३५ ॥ गङ्गां चैवानुयास्याम उद्यानवनशोभिताम्। सहिता भ्रातरः सर्वे जलक्रीड़ामवाप्नुमः ॥ ३६ ॥ एवमस्त्विति तं चापि प्रत्युवाच युधिष्ठिरः। ते रथैर्नगराकारैर्देशजैश्च गजोत्तमैः ॥ ३७ ॥ निर्ययुर्नगराच्छूराः कौरवाः पाण्डवैः सह। उद्यानवनमासाद्य विसृज्य च महाजनम् ॥ ३८ ॥ विशन्ति स्म तदा वीराः सिंहा इव गिरेर्गुहाम्। उद्यानमभिपश्यन्तो भ्रातरः सर्व एव ते ॥ ३९ ॥ उपस्थानगृहैः शुभ्रैर्वलभीभिश्च शोभितम्। गवाक्षकैस्तथा जालैर्यन्त्रैः साञ्चारिकैरपि ॥ ४० ॥ संमार्जितं सौधकारैश्चित्रकारैश्च चित्रितम्। दीर्घिकाभिश्च पूर्णाभिस्तथा पुष्करिणीभिर्हि ॥ ४१ ॥ जलं तच्छुशुभे छन्नं फुल्लैर्जलरुहैस्तथा। उपच्छन्ना वसुमती तथा पुष्पैर्यथर्त्तुकैः ॥ ४२ ॥ ततो

प्रविष्टास्ते सर्व्वे पाण्डवाः कौरवाश्च ह । उपच्छन्नान् बहून् कामांस्ते भुञ्जन्ति ततस्ततः ॥ ४३ ॥ अथोद्यानवरे तस्मिंस्तथा क्रीड़ागताश्च ते । परस्परस्य वक्त्रेभ्यो ददुर्भक्ष्यांस्ततस्ततः ॥ ४४ ॥ ततो दुर्य्योधनः पापस्तद्भक्ष्ये कालकूटकम् । विषं प्रक्षेपयामास भीमसेनजिघांसया ॥ ४५ ॥ स्वयमुत्थाय चैवाथ हृदयेन क्षुरोपमः । स वाचामृतकल्पश्च भ्रातृवच्च सुहृद्यथा ॥ ४६ ॥ स्वयं प्रक्षिपते भक्ष्यं बहु भीमस्य पापकृत् । प्रतीच्छितं स्म भीमेन तं वै दोषमजानता ॥ ४७ ॥ ततो दुर्य्योधनस्तत्र हृदयेन हसन्निव । कृतकृत्यमिवात्मानं मन्यते पुरुषाधमः ॥ ४८ ॥ ततस्ते सहिताः सर्व्वे जलक्रीड़ामकुर्व्वत । पाण्डवा धार्त्तराष्ट्राश्च तदा मुदितमानसाः ॥ ४९ ॥ क्रीड़ावसाने ते सर्व्वे शुचिवस्त्राः स्वलङ्कृताः । दिवसान्ते परिश्रान्ता विहृत्य च कुरूद्वहाः ॥ ५० ॥ विहारावसथेष्वेव वीरा वासमरोचयन् । खिन्नस्तु बलवान् भीमो व्यायामाभ्यधिकं तदा ॥ ५१ ॥ वाहयित्वा कुमारांस्तान् जलक्रीड़ागतांस्तदा । प्रमाणकोट्यां वासार्थी सुष्वापावाप्य तत् स्थलम् ॥ ५२ ॥ शीतं वातं समासाद्य श्रान्तो मदविमोहितः । विषेण च परीताङ्गो निश्चेष्टः पाण्डुनन्दनः ॥ ५३ ॥ ततो बद्ध्वा लतापाशैर्भीमं दुर्य्योधनः स्वयम् । मृतकल्पं तदा वीरं स्थलाज्जलमपातयत् ॥ ५४ ॥ स निःसंज्ञो जलस्यान्तमथ वै पाण्डवोऽविशत् । आक्रामन्नागभवने तदा नागकुमारकान् ॥ ५५ ॥ ततः समेत्य बहुभिस्तदा नागैर्महाविषैः । अदश्यत भृशं भीमो महादंष्ट्रैर्विषोल्बणैः ॥ ५६ ॥ ततोऽस्य दश्यमानस्य तद्विषं कालकूटकम् । हतं सर्पविषेणैव स्थावरं जङ्गमेन तु ॥ ५७ ॥ दंष्ट्राश्च दंष्ट्रिणां तेषां मर्म्मस्वपि निपातिताः । त्वचं नैवास्य बिभिदुः सारत्वात् पृथुवक्षसः ॥ ५८ ॥ ततः प्रबुद्धः कौन्तेयः सर्व्वं संछिद्य बन्धनम् । पोथयामास तान् सर्व्वान् केचिद्भीताः प्रदुद्रुवुः ॥ ५९ ॥

कृतावशेषा भीमेन सर्वे वासुकिमभ्ययुः। अब्रुवन् सर्पराजानं
वासुकिं वासवोपमम्॥ ६०॥ अयं नरो वै नागेन्द्र ह्यप्सु बद्धः
प्रवेशितः। यथा च नो मतिर्वीर विषपीतो भविष्यति॥ ६१॥
निश्चेष्टोऽस्मानसुप्राप्तः स च दष्टोऽप्यबुध्यत। ससंज्ञश्चापि संवृत्त-
श्छित्वा बन्धनमाशु नः॥ ६२॥ पोथयन्तं महाबाहुं त्वं चैनं
ज्ञातुमर्हसि। ततो वासुकिरभ्येत्य नागैरनुगतस्तदा। पश्यति
स्म महाबाहुं भीमं भीमपराक्रमम्॥ ६३॥ आर्य्यकेण च दृष्टः
स पृथाया आर्य्यकेण च। तदा दौहित्रदौहित्रः परिष्वक्तः
सुपीडितम्। ६४॥ सुप्रीतश्चाभवत्तस्य वासुकिः सुमहायशाः।
अब्रवीत्तञ्च नागेन्द्रः किमस्य क्रियतां प्रियम्॥ ६५॥ धनौघो
रत्ननिचयो वसु चास्य प्रदीयताम्। एवमुक्तस्तदा नागो वासुकिं
प्रत्यभाषत॥ ६६॥ यदि नागेन्द्र तुष्टोऽसि किमस्य धनसञ्चयैः।
रसम्पिबेत् कुमारोऽयं त्वयि प्रीते महाबलः। ६७॥ बलं नाग-
सहस्रस्य यस्मिन् कुण्डे प्रतिष्ठितम्। यावत्पिबति बालोऽयं
तावदस्मै प्रदीयताम्॥ ६८॥ एवमस्त्विति तं नागं वासुकिः
प्रत्यभाषत। ततो भीमस्तदा नागैः कृतस्वस्त्ययनः शुचिः। ६९॥
प्राङ्मुखश्चोपविष्टः स रसं पिबति पाण्डवः। एकोच्छ्वासात्ततः
कुण्डं पिबति स्म महाबलः॥ ७०॥ एवमष्टौ स कुण्डानि ह्यपि-
बत्पाण्डुनन्दनः। ततस्तु शयने दिव्ये नागदत्ते महाभुजः।
अशेत भीमसेनस्तु यथासुखमरिन्दमः॥ ७१॥

इत्यादिपर्वणि सम्भवपर्वणि भीमसेनरसपाने अष्टविंश-
त्यधिकशततोऽध्यायः॥ १२८॥

---

वैशम्पायन उवाच । ततस्ते कौरवाः सर्व्वे विना भीमञ्च पाण्डवाः ।
कृतक्रीडाविहारास्तु प्रतस्थुर्गजसाह्वयम् ॥ १ ॥ रथैर्गजैस्तथा
चाश्वैर्यानैश्चान्यैरनेकशः । ब्रुवन्तो भीमसेनस्तु यातो ह्यग्रत एव
नः ॥ २ ॥ ततो दुर्य्योधनः पापस्तत्रापश्यन्वृकोदरम् । भ्रातृभिः
सहितो हृष्टो नगरं प्रविवेश ह ॥ ३ ॥ युधिष्ठिरस्तु धर्म्मात्मा
ह्यविदन् पापमात्मनि । स्वेनानुमानेन परं साधुं समनुपश्यति
॥ ४ ॥ सोऽभ्युपेत्य तदा पार्थो मातरं भ्रातृवत्सलः । अभि-
वाद्याब्रवीत् कुन्तीमम्ब भीम इहागतः ॥ ५ ॥ क्व गतो भविता
मातर्नेह पश्यामि तं शुभे । उद्यानानि वनञ्चैव विचितानि सम-
न्ततः ॥ ६ ॥ तदर्थं न च तं वीरं दृष्टवन्तो वृकोदरम् । मन्य-
मानास्ततः सर्व्वे यातो नः पूर्व्वमेव सः ॥ ७ ॥ आगताः स्म महा-
भागे व्याकुलेनान्तरात्मना । इहागम्य क्व नु गतस्त्वया वा प्रेषितः
क्व नु ॥ ८ ॥ कथयस्व महाबाहुं भीमसेनं यशस्विनि । न
हि मे शुध्यते भावस्तं वीरं प्रति शोभने ॥ ९ ॥ यतः प्रसुप्तं
मन्येऽहं भीमं नेति हतस्तु सः । इत्युक्ता च ततः कुन्ती धर्म्म-
राजेन धीमता । हाहेति कृत्वा सम्भ्रान्ता प्रत्युवाच युधिष्ठिरम्
॥ १० ॥ न पुत्र भीमं पश्यामि न मामभ्येत्यमाविति । शीघ्र-
मन्वेषणे यत्नं कुरु तस्यानुजैः सह ॥ ११ ॥ इत्युक्त्वा तनयं
ज्येष्ठं हृदयेन विदूयता । क्षत्तारमानाय्य तदा कुन्ती वचन-
मब्रवीत् ॥ १२ ॥ क्व गतो भगवन् क्षत्तर्भीमसेनो न दृश्यते ।
उद्यानान्निर्गताः सर्व्वे भ्रातरो भ्रातृभिः सह ॥ १३ ॥ तत्रैकस्तु
महाबाहुर्भीमो नाभ्येति मामिह । न च प्रीणयते चक्षुः सदा
दुर्य्योधनस्य सः ॥ १४ ॥ क्रूरोऽसौ दुर्म्मतिः क्षुद्रो राज्यलुब्धोऽन-
पत्रपः । निहन्यादपि तं वीरं जातमन्युः सुयोधनः । तेन मे
व्याकुलं चित्तं हृदयं दह्यतीव च ॥ १५ ॥

विदुर उवाच । मैवं वदस्व कल्याणि शेषसंरक्षणं कुरु ।

प्रत्यादिष्टो हि दुष्टात्मा घोषेऽपि प्रहरेच्च वः ॥ १६ ॥ दीर्घायुषस्तव सुता यथोवाच महामुनिः। आगमिष्यति ते पुत्रः प्रीतिं चोत्पादयिष्यति ॥ १७ ॥

वैशम्पायन उवाच। एवमुक्त्वा ययौ विद्वान्विदुरः स्वं निवेशनम्। कुन्ती चिन्तापरा भूत्वा सहासीना सुतैर्गृहे ॥ १८ ॥ ततोऽष्टमे तु दिवसे प्रत्यबुध्यत पाण्डवः। तस्मिंस्तदा रसे जीर्णे सोऽप्रमेयबलो बली ॥ १९ ॥ तं दृष्ट्वा प्रतिबुध्यन्तं पाण्डवं ते भुजङ्गमाः। सान्त्वयामासुरव्यग्रा वचनं चेदमब्रुवन् ॥ २० ॥ यत्ते पीतो महाबाहो रसोऽयं वीर्यसम्भृतः। तस्मान्नागायुतबलो रणेऽधृष्यो भविष्यसि ॥ २१ ॥ गच्छाद्य त्वमिदं स्नातो दिव्यैरेभिः शुभैर्जलैः। भ्रातरस्तेऽनुतप्यन्ति त्वां विना कुरुपुङ्गव ॥२२॥ ततः स्नातो महाबाहुः शुचिः शुक्लाम्बरस्रजः। ततो नागस्य भवने कृतकौतुकमङ्गलः ॥ २३ ॥ ओषधीभिर्विषघ्नीभिः सुरभीभिर्विशेषतः। भुक्तवान् परमान्नञ्च नागैर्दत्तं महाबलः ॥ २४ ॥ पूजितो भुजगैर्वीर आशीर्भिश्चाभिनन्दितः। दिव्याभरणसंछन्नो नागानामन्त्र्य पाण्डवः ॥ २५ ॥ उदतिष्ठत् प्रहृष्टात्मा नागलोकादरिन्दमः। उत्क्षिप्तः स तु नागेन जलाज्जलरुहेक्षणः ॥ २६ ॥ तस्मिन्नेव वनोद्देशे स्थापितः कुरुनन्दनः। ते चान्तर्दधिरे नागाः पाण्डवस्यैव पश्यतः ॥ २७ ॥ तत उत्थाय कौन्तेयो भीमसेनो महाबलः। आजगाम महाबाहुर्मातुरन्तिकमञ्जसा ॥ २८ ॥ ततोऽभिवाद्य जननीं ज्येष्ठं भ्रातरमेव च। कनीयसः समाघ्राय शिरःस्वरिविमर्दनः ॥ २९ ॥ तैश्चापि सम्परिष्वक्तः सह मात्रा नरर्षभैः। अन्योन्यगतसौहार्दाद्दिष्ट्या दिष्ट्येति चाब्रुवन् ॥३०॥ ततस्तत्सर्वमाचष्ट दुर्योधनविचेष्टितम्। भ्रातृणां भीमसेनश्च महाबलपराक्रमः ॥ ३१ ॥ नागलोके च यद्वृत्तं गुणदोषमशेषतः। तच्च सर्वमशेषेण कथयामास पाण्डवः

॥ ३२ ॥ ततो युधिष्ठिरो राजा भीममाह वचोऽर्थवत् । तूष्णीं भव न ते जल्प्यमिदं कार्य्यं कथञ्चन ॥ ३३ ॥ इतःप्रभृति कौन्तेयाः सहितान्योन्यमाहताः । एवमुक्त्वा महाबाहुर्धर्म्मराजो युधिष्ठिरः ॥ ३४ ॥ भ्रातृभिः सहितः सर्व्वैरप्रमत्तोऽभवत्तदा । धर्म्मात्मा विदुरस्तेषां पार्थानां प्रददौ रतिम् ॥ ३५ ॥ ततो दुर्य्योधनस्तस्य पुनः प्राक्षेपयद्विषम् । कालकूटं नवं तीक्ष्णं संभृतं लोमहर्षणम् ॥ ३६ ॥ वैश्यापुत्रस्तदाचष्ट पार्थानां हितकाम्यया । तच्चापि भुक्त्वाजरयदविकारं वृकोदरः ॥ ३७ ॥ विकारं नह्यजनयत् सुतीक्ष्णमपि तद्विषम् । भीमसंहननं भीमं तदप्यजरयत्ततः ॥ ३८ ॥ एवं दुर्य्योधनः कर्णः शकुनिश्चापि सौबलः । अनेकैरभ्युपायैस्तान् जिघांसन्ति स्म पाण्डवान् ॥ ३९ ॥ पाण्डवा अपि तत् सर्व्वं प्रत्यजानन्नमर्षिताः । उद्भावनमकुर्व्वन्तो विदुरस्य मते स्थिताः ॥ ४० ॥

इत्यादिपर्व्वणि सम्भवपर्व्वणि भीमप्रत्यागमने अन-
त्रिंशत्यधिकशततोऽध्यायः ॥ १२९ ॥

जनमेजय उवाच । कृपस्यापि मम ब्रह्मन् सम्भवं वक्तुमर्हसि । शरस्तम्बात्कथं जज्ञे कथं चास्त्राण्यवाप्तवान् ॥ १ ॥

वैशम्पायन उवाच । महर्षेर्गौतमस्यासीच्छरद्वान्नाम गौतमः । पुत्रः किल महाराज जातः सह शरैर्विभो ॥ २ ॥ न तस्य वेदाध्ययने तथा बुद्धिरजायत । यथास्य बुद्धिरभवद्धनुर्वेदे परन्तप ॥ ३ ॥ अधिजग्मुर्यथा वेदांस्तपसा ब्रह्मचारिणः । तथा स तपसोपेतः सर्व्वाण्यस्त्राण्यवाप ह ॥ ४ ॥ धनुर्वेदपरत्वाच्च तपसा विपुलेन च । भृशं सन्तापयामास देवराजं स गौतमः ॥ ५ ॥

ततो जानपदीं नाम देवकन्यां सुरेश्वरः। प्राहिणोत्तपसो विघ्नं कुरु तस्येति कौरव ॥ ६ ॥ सा हि गत्वाश्रमं तस्य रमणीयं शरद्वतः। धनुर्बाणधरं बाला लोभयामास गौतमम् ॥ ७ ॥ तामेकवसनां दृष्ट्वा गौतमोऽप्सरसं वने। लोकेऽप्रतिमसंस्थानां प्रोत्फुल्लनयनोऽभवत् ॥ ८ ॥ धनुश्च हि शरास्तस्य कराभ्यामपतन् भुवि। वेपथुश्चापि तां दृष्ट्वा शरीरे समजायत ॥ ९ ॥ स तु ज्ञानगरीयस्त्वात्तपसश्च समर्थनात्। अवतस्थे महाप्राज्ञो धैर्येण परमेण च ॥ १० ॥ यस्त्वस्य सहसा राजन्विकारः समदृश्यत। तेन सुस्राव रेतोऽस्य स च तं नावबुध्यत ॥ ११ ॥ धनुश्च सशरं त्यक्त्वा तथा कृष्णाजिनानि च। स विहायाश्रमं तच्च ताञ्चैवाप्सरसं मुनिः। जगाम रेतस्तत्तस्य शरस्तम्बे पपात च ॥ १२ ॥ शरस्तम्बे च पतितं द्विधा तदभवन्नृप। तस्याथ मिथुनं जज्ञे गौतमस्य शरद्वतः ॥ १३ ॥ मृगयाञ्चरतो राज्ञः शान्तनोस्तु यदृच्छया। कश्चित्सेनाचरोऽरण्ये मिथुनं तदपश्यत ॥ १४ ॥ धनुश्च सशरं दृष्ट्वा तथा कृष्णाजिनानि च। ज्ञात्वा द्विजस्य चापत्ये धनुर्वेदान्तगस्य च ॥ १५ ॥ स राज्ञे दर्शयामास मिथुनं सशरं धनुः। स तदादाय मिथुनं राजा च कृपयान्वितः ॥ १६ ॥ आजगाम गृहानेव मम पुत्राविति ब्रुवन्। ततः संवर्द्धयामास संस्कारैश्चाप्ययोजयत् ॥ १७ ॥ प्रातीपेयो नरश्रेष्ठो मिथुनं गौतमस्य तत्। गौतमोऽपि ततोऽभ्येत्य धनुर्वेदपरोऽभवत् ॥ १८ ॥ कृपया यन्मया बालाविमौ संवर्द्धिताविति। तस्मात्तयोर्नाम चक्रे तदेव स महीपतिः ॥ १९ ॥ गोपितौ गौतमस्तत्र तपसा समविन्दत। आगत्य तस्मै गोत्रादि सर्वमाख्यातवांस्तदा ॥ २० ॥ चतुर्विधं धनुर्वेदं शास्त्राणि विविधानि च। निखिलेनास्य तत्सर्वं गुह्यमाख्यातवांस्तदा ॥ २१ ॥ सोऽचिरेणैव कालेन परमाचार्य्यतां गतः। ततोऽधिजग्मुः

सर्वे ते धनुर्वेदं महारथाः ॥ २२ ॥ धृतराष्ट्रात्मजाश्चैव पाण्डवाः सह यादवैः । वृष्णयश्च नृपाश्चान्ये नानादेशसमागताः ॥ २३ ॥

इत्यादिपर्वणि सम्भवपर्वणि कृपोत्पत्तौ त्रिंश-
दधिकशततोऽध्यायः ॥ १३० ॥

---

वैशम्पायन उवाच । विशेषार्थी ततो भीष्मः पौत्राणां विनयेप्सया । इष्वस्त्रज्ञान् पर्य्यपृच्छदाचार्य्यान्वीर्य्यसंमतान् ॥१॥ नाल्पधीर्नी महाभागस्तथानानास्त्रकोविदः । नादेवसत्त्वो विनयेत् कुरूनस्त्रे महाबलान् ॥ २ ॥ इति सञ्चिन्त्य गाङ्गेयस्तदा भरतसत्तमः । द्रोणाय वेदविदुषे भारद्वाजाय धीमते ॥ ३ ॥ पाण्डवान् कौरवांश्चैव ददौ शिष्यान्नरर्षभ । शास्त्रतः पूजितश्चैव सम्यक्तेन महात्मना ॥ ४ ॥ स भीष्मेण महाभागस्तुष्टोऽस्त्रविदुषां वरः । प्रतिजग्राह तान् सर्वाञ्छिष्यत्वेन महायशाः ॥ ५ ॥ शिक्षयामास च द्रोणो धनुर्वेदमशेषतः । तेऽचिरेणैव कालेन सर्वशस्त्रविशारदाः । बभूवुः कौरवा राजन् पाण्डवाश्चामितौजसः ॥ ६ ॥

जनमेजय उवाच । कथं समभवद्द्रोणः कथं चास्त्राण्यवाप्तवान् । कथञ्चागात् कुरून् ब्रह्मन् कस्य पुत्रः स वीर्य्यवान् ॥७॥ कथं चास्य सुतो जातः सोऽश्वत्थामास्त्रवित्तमः । एतदिच्छाम्यहं श्रोतुं विस्तरेण प्रकीर्त्तय ॥ ८ ॥

वैशम्पायन उवाच । गङ्गाद्वारं प्रति महान् बभूव भगवानृषिः । भरद्वाज इति ख्यातः सततं शंसितव्रतः ॥ ९ ॥ सोऽभिषेक्तुं ततो गङ्गां पूर्वमेवागमन्नदीम् । महर्षिभिर्भरद्वाजो हविर्धाने चरन् पुरा ॥ १० ॥ ददर्शाप्सरसं साक्षाद्घृताचीमाप्लुतामृषिः । रूपयौवनसम्पन्नां मदद्दप्तां मदालसाम् ॥ ११ ॥ तस्याः

पुनर्नदीतीरे वसन्तं पर्य्यवर्त्तत । व्यपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे ततः ॥ १२ ॥ तत्र संसक्तमनसो भरद्वाजस्य धीमतः । ततोऽस्य रेतश्चस्कन्द तदृषिर्द्रोण आदधे ॥ १३ ॥ ततः समभवद्द्रोणः कलशे तस्य धीमतः । अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्वशः ॥ १४ ॥ अग्निवेश्यं महाभागं भरद्वाजः प्रतापवान् । प्रत्यपादयदाग्नेयमस्त्रमस्त्रविदां वरः ॥ १५ ॥ अग्नेस्तु जातः स मुनिस्ततो भरतसत्तम । भारद्वाजं तदाग्नेयं महास्त्रं प्रत्यपादयत् ॥ १६ ॥ भरद्वाजसखा चासीत् पृषतो नाम पार्थिवः । तस्यापि द्रुपदो नाम तदा समभवत् सुतः ॥ १७ ॥ स नित्यमाश्रमं गत्वा द्रोणेन सह पार्थिवः । चिक्रीड़ाध्ययनञ्चैव चकार क्षत्रियर्षभः ॥ १८ ॥ ततो व्यतीते पृषते स राजा द्रुपदोऽभवत् । पाञ्चालेषु महाबाहुरुत्तरेषु नरेश्वर ॥ १९ ॥ भरद्वाजोऽपि भगवानारुरोह दिवं तदा । तत्रैव च वसन् द्रोणस्तपस्तेपे महातपाः ॥ २० ॥ वेदवेदाङ्गविद्वान् स तपसा दग्धकिल्बिषः । ततः पितृनियुक्तात्मा पुत्रलोभान्महायशाः ॥ २१ ॥ शारद्वतीं ततो भार्य्यां कृपीं द्रोणोऽन्वविन्दत । अग्निहोत्रे च धर्मे च दमे च सततं रताम् ॥ २२ ॥ अलभद्गौतमी पुत्रमश्वत्थामानमेव च । स जातमात्रो व्यनदद्यथैवोच्चैःश्रवा हयः ॥ २३ ॥ तच्छ्रुत्वान्तर्हितं भूतमन्तरीक्षस्थमब्रवीत् । अश्वस्येवास्य यत् स्थाम नदतः प्रदिशो गतम् । अश्वत्थामैव बालोऽयं तस्मान्नाम्ना भविष्यति ॥ २४ ॥ सुतेन तेन सुप्रीतो भारद्वाजस्ततोऽभवत् । तत्रैव च वसन् धीमान्धनुर्वेदपरोऽभवत् ॥ २५ ॥ स शुश्राव महात्मानं जामदग्न्यं परन्तपम् । सर्वज्ञानविदं विप्रं सर्वशस्त्रभृतां वरम् ॥ २६ ॥ ब्राह्मणेभ्यस्तदा राजन्दित्सन्तं वसु सर्वशः । स रामस्य धनुर्वेदं दिव्यान्यस्त्राणि चैव ह ॥ २७ ॥ श्रुत्वा तेषु मनश्चक्रे नीतिशास्त्रे तथैव च । ततः स व्रतिभिः शिष्यैस्तपोयुक्तैर्महा-

तमा: ॥ २८ ॥ ततः प्रायात्स शावाक्रमेहेन्द्रं पर्वतोत्तमम्। ततो महेन्द्रमासाद्य भारद्वाजो महातपाः ॥ २९ ॥ चान्तं दान्तममित्रघ्नमपश्यद्भृगुनन्दनम्। ततो द्रोणो वृतः शिष्यैरुपगम्य भृगूद्वहम् ॥ ३० ॥ आचख्याचात्मनो नाम जन्म चाङ्गिरसः कुले। निवेद्य शिरसा भूमौ पादौ चैवाभ्यवादयत् ॥ ३१ ॥ ततस्तं सर्वमुत्सृज्य वनं जिगमिषुं तदा। जामदग्न्यं महात्मानं भारद्वाजोऽब्रवीदिदम् ॥ ३२ ॥ भरद्वाजात्समुत्पन्नं तथा त्वं मामयोनिजम्। आगतं वित्तकामं मां विद्धि द्रोणं द्विजोत्तमम् ॥३३॥ तमब्रवीन्महात्मा स सर्वक्षत्रियमर्दनः। स्वागतं ते द्विजश्रेष्ठ यदिच्छसि वदस्व मे ॥ ३४ ॥ एवमुक्तस्तु रामेण भारद्वाजोऽब्रवीद्वचः। रामं प्रहरतां श्रेष्ठं दित्सन्तं विविधं वसु। अहं धनमनन्तं हि प्रार्थये विपुलव्रत ॥ ३५ ॥

राम उवाच। हिरण्यं मम यच्चान्यद्वसु किञ्चिदिह स्थितम्। ब्राह्मणेभ्यो मया दत्तं सर्वमेतत्तपोधन ॥ ३६ ॥ तथैवेयं धरा देवी सागरान्ता सपत्तना। कश्यपाय मया दत्ता कृत्स्ना नगरमालिनी ॥३७॥ शरीरमात्रमेवाद्य ममेदमवशेषितम्। अस्त्राणि च महार्हाणि शस्त्राणि विविधानि च ॥ ३८ ॥ अस्त्राणि वा शरीरं वा वरयैतन्मयोद्यतम्। वृणीष्व किं प्रयच्छामि तुभ्यं द्रोण वदाशु तत् ॥ ३९ ॥

द्रोण उवाच। अस्त्राणि मे समग्राणि ससंहाराणि भार्गव। सप्रयोगरहस्यानि दातुमर्हस्यशेषतः ॥ ४० ॥ तथेत्युक्त्वा ततस्तस्मै प्रादादस्त्राणि भार्गवः। सरहस्यव्रतञ्चैव धनुर्वेदमशेषतः ॥ ४१ ॥ प्रतिगृह्य तु तत्सर्वं कृतास्त्रो द्विजसत्तमः। प्रियं सखायं सुप्रीतो जगाम द्रुपदं प्रति ॥ ४२ ॥

इत्यादिपर्वणि सम्भवपर्वणि द्रोणभार्गवसंवादे एकत्रिंशदधिकशततोऽध्यायः ॥ १३१ ॥

वैशम्पायन उवाच। ततो द्रुपदमासाद्य भारद्वाजः प्रतापवान्। अब्रवीत् पार्थिवं राजन् सखायं विद्धि मामिह ॥ १ ॥ इत्येवमुक्तः सख्या स प्रीतिपूर्वं जनेश्वरः। भारद्वाजेन पाञ्चाल्यो नामृष्यत वचोऽस्य तत् ॥ २ ॥ स क्रोधामर्षजिह्मभ्रूः कषायीकृतलोचनः। ऐश्वर्यमदसम्पन्नो द्रोणं राजाब्रवीदिदम् ॥ ३ ॥

द्रुपद उवाच। अकृतेयं तव प्रज्ञा ब्रह्मन्नातिसमञ्जसी। यन्मां ब्रवीषि प्रसभं सखा तेऽहमिति द्विज ॥ ४ ॥ न हि राज्ञामुदीर्णानामेवं भूतैर्नरैः क्वचित्। सख्यं भवति मन्दात्मन् श्रिया हीनैर्धनच्युतैः ॥ ५ ॥ सौहृदान्यपि जीर्यन्ते कालेन परिजीर्यता। सौहृदं मे त्वया ह्यासीत् पूर्वं सामर्थ्यबन्धनम् ॥ ६ ॥ न सख्यमजरं लोके हृदि तिष्ठति कस्यचित्। कालो ह्येनं विहरति क्रोधो वैनं हरत्युत ॥ ७ ॥ मैवं जीर्णमुपास्स्व त्वं सख्यं भवदुपाकृधि। आसीत्सख्यं द्विजश्रेष्ठ त्वया मेऽर्थनिबन्धनम् ॥ ८ ॥ न दरिद्रो वसुमतो नाविद्वान् विदुषः सखा। न शूरस्य सखा क्लीवः सखिपूर्वं किमिष्यते ॥ ९ ॥ ययोरेव समं वित्तं ययोरेव समं श्रुतम्। तयोर्विवाहः सख्यञ्च न तु पुष्टविपुष्टयोः ॥ १० ॥ नाश्रोत्रियः श्रोत्रियस्य नारथो रथिनः सखा। नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते ॥ ११ ॥

वैशम्पायन उवाच। द्रुपदेनैवमुक्तस्तु भारद्वाजः प्रतापवान्। मुहूर्तं चिन्तयित्वा तु मन्युनाभिपरिप्लुतः ॥ १२ ॥ स विनिश्चित्य मनसा पाञ्चाल्यं प्रतिबुद्धिमान्। जगाम कुरुमुख्यानां नगरं नागसाह्वयम् ॥ १३ ॥

इत्यादिपर्वणि सम्भवपर्वणि द्रोणद्रुपदसंवादे द्वात्रिंशदधिकशततोऽध्यायः ॥ १३२ ॥

—:०:—

वैशम्पायन उवाच। स नागपुरमागम्य गौतमस्य निवेशने। भारद्वाजोऽवसत्तत्र प्रच्छन्नं द्विजसत्तमः ॥ १ ॥ ततोऽस्य तनुजः पार्थान् कृपस्यानन्तरं प्रभुः। अस्त्राणि शिक्षयामास नाबुध्यन्त च तं जनाः ॥ २ ॥ एवं स तत्र गूढात्मा कञ्चित् कालमुवास ह। कुमारास्त्वथ निष्क्रम्य समेता गजसाह्वयात् ॥ ३ ॥ क्रीड़न्तो वीटया तत्र वीराः पर्य्यचरन्मुदा। पपात कूपे सा वीटा तेषां वै क्रीड़तां तदा ॥ ४ ॥ ततस्ते यत्नमातिष्ठन्वीटामुद्धर्त्तुमादृताः। न च ते प्रत्यपद्यन्त कर्म वीटोपलब्धये ॥ ५ ॥ ततोऽन्योन्यमवैक्षन्त व्रीड़यावनताननाः। तस्या योगमविन्दन्तो भृशं चोत्कण्ठिताभवन् ॥ ६ ॥ तेऽपश्यन् ब्राह्मणं श्याममापन्नं पलितं कृशम्। कृत्यवन्तमदूरस्थमग्निहोत्रपुरस्कृतम् ॥ ७ ॥ ते तं दृष्ट्वा महात्मानमुपगम्य कुमारकाः। भग्नोत्साहक्रियात्मानो ब्राह्मणं पर्य्यवारयन् ॥ ८ ॥ अथ द्रोणः कुमारांस्तान् दृष्ट्वा कृत्यवतस्तदा। प्रहस्य मन्दं पैशल्यादभ्यभाषत वीर्य्यवान् ॥ ९ ॥ अहो वो धिग्बलं क्षात्रं धिगेतां वः कृतास्त्रताम्। भरतस्यान्वये जाता ये वीटां नाधिगच्छत ॥ १० ॥ वीटाञ्च मुद्रिकाञ्चैव ह्यहमेतदपि द्वयम्। उद्धरेयमिषीकाभिर्भोजनं मे प्रदीयताम् ॥ ११ ॥ एवमुक्त्वा कुमारांस्तान्द्रोणः स्वाङ्गुलिवेष्टनम्। कूपे निरुदके तस्मिन्नपातयदरिन्दमः। ततोऽब्रवीत्तदा द्रोणं कुन्तीपुत्रो युधिष्ठिरः ॥ १२ ॥

युधिष्ठिर उवाच। कृपस्यानुमते ब्रह्मन् भिक्षामाप्नुहि शाश्वतीम्। एवमुक्तः प्रत्युवाच प्रहस्य भरतानिदम् ॥ १३ ॥

द्रोण उवाच। एषा मुष्टिरिषीकाणां मयास्त्रेणाभिमन्त्रिता। अस्या वीर्य्यं निरीक्षध्वं यदन्यस्य न विद्यते ॥ १४ ॥ भेत्स्यामीषीकया वीटां तामिषीकां तथान्यया। तामन्यया समायोगे वीटाया ग्रहणं मम ॥ १५ ॥

वैशम्पायन उवाच। ततो यथोक्तं द्रोणेन तत्सर्वं कृत-
मञ्जसा। तदवेक्ष्य कुमारास्ते विस्मयोत्फुल्ललोचनाः ॥ १६ ॥
आश्चर्यमिदमत्यन्तमिति मत्वा वचोऽब्रुवन्।

कुमारा ऊचुः। मुद्रिकामपि विप्रर्षे शीघ्रमेतां समुद्धर ॥१७॥

वैशम्पायन उवाच। ततः शरं समादाय धनुर्द्रोणो महा-
यशाः। शरेण विद्ध्वा मुद्रां तामूर्द्ध्वमावाहयत् प्रभुः ॥ १८ ॥
सशरं समुपादाय कूपादङ्गुलिवेष्टनम्। ददौ ततः कुमाराणां
विस्मितानामविस्मितः ॥ १९ ॥ मुद्रिकामुद्धृतां दृष्ट्वा तमाहुस्ते
कुमारकाः।

कुमारा ऊचुः। अभिवादामहे ब्रह्मन्नैतदन्येषु विद्यते।
कोऽसि कस्यासि जानीमो वयं किं करवामहे ॥ २० ॥

वैशम्पायन उवाच। एवमुक्तस्ततो द्रोणः प्रत्युवाच कुमार-
कान् ॥ २१ ॥

द्रोण उवाच। आचक्षध्वञ्च भीष्माय रूपेण च गुणैश्च माम्।
स एव सुमहातेजाः साम्प्रतं प्रतिपत्स्यते ॥ २२ ॥

वैशम्पायन उवाच। तथेत्युक्त्वा च गत्वा च भीष्ममूचुः कुमा-
रकाः। ब्राह्मणस्य वचस्तथ्यं तच्च कर्म तथाविधम् ॥ २३ ॥
भीष्मः श्रुत्वा कुमाराणां द्रोणञ्च प्रत्यजानत। युक्तरूपः स हि
गुरुरित्येवमनुचिन्त्य च ॥ २४ ॥ अथैनमानीय तदा स्वयमेव
सुसत्कृतम्। परिपप्रच्छ निपुणं भीष्मः शस्त्रभृतां वरः। हेतु-
मागमने तच्च द्रोणः सर्वं न्यवेदयत् ॥ २५ ॥

द्रोण उवाच। महर्षेरग्निवेशस्य सकाशमहमच्युत। अस्त्रार्थ-
मगमं पूर्वं धनुर्वेदचिकीर्षया ॥ २६ ॥ ब्रह्मचारी विनीतात्मा
जटिलो बहुलाः समाः। अवसं सुचिरं तत्र गुरुशुश्रूषणे रतः
॥ २७ ॥ पाञ्चाल्यो राजपुत्रश्च यज्ञसेनो महाबलः। इष्वस्त्र-
हेतोर्न्यवसत्तस्मिन्नेव गुरौ प्रभुः ॥ २८ ॥ स मे तत्र सखा

आसीदुपकारी प्रियश्च मे । तेनाहं सह सङ्गम्य वर्त्तयन् सुचिरं प्रभो ॥ २९ ॥ बाल्यात् प्रभृति कौरव्य सहाध्ययनमेव च । स मे सखा तदा तत्र प्रियवादी प्रियङ्करः ॥ ३० ॥ अब्रवीदिति मां भीष्म वचनं प्रीतिवर्द्धनम् । अहं प्रियतमः पुत्रः पितुर्द्रोण महात्मनः ॥ ३१ ॥ अभिषेक्ष्यति मां राज्ये स पाञ्चाल्यो यदा तदा । त्वद्भोग्यं भविता तात सखे सत्येन ते शपे ॥ ३२ ॥ मम भोगाश्च वित्तञ्च त्वदधीनं सुखानि च । एवमुक्तोऽथ वव्राज कृतास्त्रः पूजितो मया ॥ ३३ ॥ तच्च वाक्यमहं नित्यं मनसा धारयंस्तदा । सोऽहं पितुर्नियोगेन पुत्रलोभाद्यशस्विनीम् ॥ ३४ ॥ नातिकेशीं महाप्रज्ञामुपयेमे महाव्रताम् । अग्निहोत्रे च सत्रे च दमे च सततं रताम् ॥ ३५ ॥ अलभद्गौतमी पुत्रमश्वत्थामानमौरसम् । भीमविक्रमकर्म्माणमादित्यसमतेजसम् ॥३६॥ पुत्रेण तेन प्रीतोऽहं भरद्वाजो मया यथा । गोक्षीरं पिबतो दृष्ट्वा धनिनस्तत्र पुत्रकान् । अश्वत्थामारुदद्बालस्तन्मे सन्देहयद्दिशः ॥ ३७ ॥ न स्नातकोऽवसीदेत वर्त्तमानः स्वकर्म्मसु । इति सञ्चिन्त्य मनसा तं देशं बहुशो भ्रमन् ॥३८॥ विशुद्धमिच्छन् गाङ्गेय धर्म्मोपेतं प्रतिग्रहम् । अन्तादन्तं परिक्रम्य नाध्यगच्छं पयस्विनीम् ॥३९॥ अथ पिष्टोदकेनैनं लोभयन्ति कुमारकाः । पीत्वा पिष्टरसं बालः क्षीरं पीतं मयापि च ॥४०॥ ननर्त्तोत्थाय कौरव्य हृष्टो बाल्याद्विमोहितः । तं दृष्ट्वा नृत्यमानन्तु बालैः परिवृतं सुतम् ॥४१॥ हास्यतामुपसम्प्राप्तं कश्मलं तत्र मेऽभवत् । द्रोणं धिगस्त्वधनिनं यो धनं नाधिगच्छति ॥४२॥ पिष्टोदकं सुतो यस्य पीत्वा क्षीरस्य तृष्णया । नृत्यति स्म मुदाविष्टः क्षीरं पीतं मयाप्युत ॥ ४३ ॥ इति सम्भाषतां वाचं श्रुत्वा मे बुद्धिरच्यवत् । आत्मानं चात्मना गर्हन्मनसेदं व्यचिन्तयम् ॥ ४४ ॥ अपि चाहं पुरा विप्रैर्वर्जितो गर्हितो वसे । परोपसेवां पापिष्ठां न च कुर्य्यां धनेप्सया ॥ ४५ ॥ इति मत्वा प्रियं

पुत्रं भीष्मादाय ततो ऽहम् । पूर्वस्नेहानुरागित्वात् सदारः सौमकिं गतः ॥ ४६ ॥ अभिषिक्तन्तु श्रुत्वैव कृतार्थोऽस्मीति चिन्तयन् । प्रियं सखायं सुप्रीतो राज्यस्थं समुपागमम् । संस्मरन् सङ्गमं चैव वचनं चैव तस्य तत् ॥ ४७ ॥ ततो द्रुपदमागम्य सखिपूर्वमहं प्रभो । अब्रवं पुरुषव्याघ्र सखायं विद्धि मामिति ॥ ४८ ॥ उपस्थितस्तु द्रुपदं सखिवच्चास्मि सङ्गतः । स मां निराकारमिव प्रहसन्निदमब्रवीत् ॥ ४९ ॥ अकृतेयं तव प्रज्ञा ब्रह्मन्नातिसमञ्जसी । यदात्थ मां त्वं प्रसभं सखा तेऽहमिति द्विज ॥ ५० ॥ सङ्गतानीह जीर्य्यन्ति कालेन परिजीर्य्यता । सौहृदं मे त्वया ह्यासीत् पूर्वं सामर्थ्यबन्धनम् ॥ ५१ ॥ नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा । साम्याद्धि सख्यं भवति वैषम्यान्नोपपद्यते ॥ ५२ ॥ न सख्यमजरं लोके विद्यते जातु कस्यचित् । कालो वैनं विहरति क्रोधो वैनं हरत्युत ॥ ५३ ॥ मैवं जीर्णमुपास्स्व त्वं सख्यं भवदुपाकृधि । आसीत्सख्यं द्विजश्रेष्ठ त्वया मेऽर्थनिबन्धनम् ॥ ५४ ॥ न ह्यनाढ्यः सखाढ्यस्य नाविद्वान्विदुषः सखा । न शूरस्य सखा क्लीवः सखिपूर्वं किमिष्यते ॥ ५५ ॥ न हि राज्ञामुदीर्णानामेवं भूतैर्नरैः क्वचित् । सख्यं भवति मन्दात्मन् श्रिया हीनैर्धनच्युतैः ॥ ५६ ॥ नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा । नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते ॥ ५७ ॥ अहं त्वया न जानामि राज्यार्थे संविदं कृताम् । एकरात्रन्तु ते ब्रह्मन् कामं दास्यामि भोजनम् ॥५८॥ एवमुक्तस्त्वहं तेन सदारः प्रस्थितस्तदा । तां प्रतिज्ञां प्रतिज्ञाय यां कर्त्तास्म्यचिरादिव ॥ ५९ ॥ द्रुपदेनैवमुक्तोऽहं मन्युनाभिपरिप्लुतः । अभ्यागच्छं कुरून् भीष्म शिष्यैरर्थी गुणान्वितैः ॥ ६० ॥ ततोऽहं भवतः कामं संवर्द्धयितुमागतः । इदं नागपुरं रम्यं ब्रूहि किं करवाणि ते ॥ ६१ ॥

वैशम्पायन उवाच । एवमुक्तस्तदा भीष्मो भारद्वाजमभाषत ॥ ६२ ॥

भीष्म उवाच । अपज्यं क्रियतां चापं साध्वस्त्रं प्रतिपादय । भुङ्क्ष्व भोगान् भृशं प्रीतः पूज्यमानः कुरुक्षये ॥ ६३ ॥ कुरूणामस्ति यद्वित्तं राज्यं चेदं सराष्ट्रकम् । त्वमेव परमो राजा सर्व्वे च कुरवस्तव ॥ ६४ ॥ यच्च ते प्रार्थितं ब्रह्मन् कृतं तदिति चिन्त्यताम् । दिष्ट्या प्राप्तोऽसि विप्रर्षे महान्मेऽनुग्रहः कृतः ॥ ६५ ॥

इत्यादिपर्व्वणि सम्भवपर्व्वणि भीष्मद्रोणसंवादे त्रयस्त्रिंशदधिकशततोऽध्यायः ॥ १३३ ॥

---

वैशम्पायन उवाच । ततः सम्पूजितो द्रोणो भीष्मेण द्विपदां वरः । विशश्राम महातेजाः पूजितः कुरुवेश्मनि ॥ १ ॥ विश्रान्तेऽथ गुरौ तस्मिन् पौत्रानादाय कौरवान् । शिष्यत्वेन ददौ भीष्मो वसूनि विविधानि च ॥ २ ॥ गृहञ्च सुपरिच्छन्नं धनधान्यसमाकुलम् । भारद्वाजाय सुप्रीतः प्रत्यपादयत प्रभुः ॥ ३ ॥ स तान् शिष्यान्महेष्वासः प्रतिजग्राह कौरवान् । पाण्डवान्धार्तराष्ट्रांश्च द्रोणो मुदितमानसः ॥ ४ ॥ प्रतिगृह्य च तान् सर्व्वान्द्रोणो वचनमब्रवीत् । रहस्येकः प्रतीतात्मा कृतोपसदनांस्तथा ॥ ५ ॥

द्रोण उवाच । कार्य्यं मे काङ्क्षितं किञ्चिद्धृदि सम्परिवर्त्तते । कृतास्त्रैस्तत् प्रदेयं मे तदेतद्वदतानघाः ॥ ६ ॥

वैशम्पायन उवाच । तच्छ्रुत्वा कौरवेयास्ते तूष्णीमासन्विशाम्पते । अर्जुनस्तु ततः सर्व्वं प्रतिजज्ञे परन्तप ॥ ७ ॥ ततोऽर्जुनं तदा मूर्द्ध्नि समाघ्राय पुनः पुनः । प्रीतिपूर्व्वं परिष्वज्य प्ररुरोद मुदा तदा ॥ ८ ॥ ततो द्रोणः पाण्डुपुत्रानस्त्राणि

विविधानि च। ग्राहयामास दिव्यानि मानुषाणि च वीर्य-
वान्॥ ९॥ राजपुत्रास्तथा चान्ये समेत्य भरतर्षभ। अभि-
जग्मुस्ततो द्रोणमस्त्रार्थे द्विजसत्तमम्॥ १०॥ वृष्णयश्चान्धका-
श्चैव नानादेश्याश्च पार्थिवाः। सूतपुत्रश्च राधेयो गुरुं द्रोण-
मियात्तदा॥ ११॥ स्पर्धमानस्तु पार्थेन सूतपुत्रोऽत्यमर्षणः।
दुर्योधनं समाश्रित्य सोऽवमन्यत पाण्डवान्॥ १२॥ अभ्ययात्स
ततो द्रोणं धनुर्वेदचिकीर्षया। शिक्षाभुजबलोद्योगैस्तेषु सर्वेषु
पाण्डवः॥ १३॥ अस्त्रविद्यानुरागाच्च विशिष्टोऽभवदर्जुनः।
तुल्येष्वस्त्रप्रयोगेषु लाघवे सौष्ठवेषु च॥ १४॥ सर्वेषामेव शिष्याणां
बभूवाभ्यधिकोऽर्जुनः। ऐन्द्रिमप्रतिमं द्रोण उपदेशेष्वमन्यत
॥ १५॥ एवं सर्वकुमाराणामिष्वस्त्रं प्रत्यपादयत्। कमण्डलुञ्च
सर्वेषां प्रायच्छच्चिरकारणात्॥ १६॥ पुत्राय च ददौ कुम्भ-
मविलम्बनकारणात्। यावत्ते नोपगच्छन्ति तावदस्मै परां
क्रियाम्॥ १७॥ द्रोण आचष्ट पुत्राय तत्कर्म जिष्णुरौहत।
ततः स वारुणास्त्रेण पूरयित्वा कमण्डलुम्। सममाचार्य-
पुत्रेण गुरुमभ्येति फाल्गुनः॥ १८॥ आचार्यपुत्रात्तस्मात्तु
विशेषोपचये पृथक्। न व्यहीयत मेधावी पार्थोऽप्यस्त्रविदां वरः
॥ १९॥ अर्जुनः परमं यत्नमातिष्ठद्गुरुपूजने। अस्त्रे च परमं
योगं प्रियो द्रोणस्य चाभवत्॥ २०॥ तं दृष्ट्वा नित्यमुद्युक्तमिष्वस्त्रं
प्रति फाल्गुनम्। आहूय वचनं द्रोणो रहः सूदमभाषत॥ २१॥
अन्धकारेऽर्जुनायान्नं न देयं ते कदाचन। न चाख्येयमिदं चापि
मद्वाक्यं विजये त्वया॥ २२॥ ततः कदाचिद्भुञ्जाने प्रववौ
वायुरर्जुने। तेन तत्र प्रदीपः स दीप्यमानो विलोपितः॥ २३॥
भुङ्क्त एव तु कौन्तेयो नास्यादन्यत्र वर्त्तते। हस्तस्तेजस्विन-
स्तस्य अन्नग्रहणकारणात्॥ २४॥ तदभ्यासकृतं मत्वा रात्रावपि
स पाण्डवः। योग्यां चक्रे महाबाहुर्धनुषा पाण्डुनन्दनः॥ २५॥

तस्य ज्यातलनिर्घोषं द्रोणः शुश्राव भारत । उपेत्य चैनमुत्थाय परिष्वज्येदमब्रवीत् ॥ २६ ॥

द्रोण उवाच । प्रयतिष्ये तथा कर्त्तुं यथा नान्यो धनुर्धरः । त्वत्समो भविता लोके सत्यमेतद्ब्रवीमि ते ॥ २७ ॥

वैशम्पायन उवाच । ततो द्रोणोऽर्जुनं भूयो हयेषु च गजेषु च । रथेषु भूमावपि च रणशिक्षामशिक्षयत् ॥ २८ ॥ गदायुद्धेऽसिचर्य्यायां तोमरप्रासशक्तिषु । द्रोणः सङ्कीर्णयुद्धे च शिक्षयामास कौरवान् ॥ २९ ॥ तस्य तत्कौशलं श्रुत्वा धनुर्वेदजिघृक्षवः । राजानो राजपुत्राश्च समाजग्मुः सहस्रशः ॥ ३० ॥ ततो निषादराजस्य हिरण्यधनुषः सुतः । एकलव्यो महाराज द्रोणमभ्याजगाम ह ॥ ३१ ॥ न स तं प्रतिजग्राह नैषादिरिति चिन्तयन् । शिष्यं धनुषि धर्मज्ञस्तेषामेवान्ववेक्षया ॥ ३२ ॥ स तु द्रोणस्य शिरसा पादौ गृह्य परन्तपः । अरण्यमनुसम्प्राप्य कृत्वा द्रोणं महीमयम् ॥ ३३ ॥ तस्मिन्नाचार्य्यवृत्तिञ्च परमामास्थितस्तदा । इष्वस्त्रे योगमातस्थे परं नियममास्थितः ॥३४॥ परया श्रद्धयोपेतो योगेन परमेण च । विमोक्षादानसन्धाने लघुत्वं परमाप सः ॥ ३५ ॥ अथ द्रोणाभ्यनुज्ञाताः कदाचित् कुरुपाण्डवाः । रथैर्विनिर्ययुः सर्वे मृगयामरिमर्दन ॥ ३६ ॥ तत्रोपकरणं गृह्य नरः कश्चिद्यदृच्छया । राजन्ननुजगामैकः श्वानमादाय पाण्डवान् ॥ ३७ ॥ तेषां विचरतां तत्र तत्तत्कर्म्मचिकीर्षया । श्वा चरन् स वने मूढो नैषादिं प्रति जग्मिवान् ॥ ३८ ॥ स कृष्णमलदिग्धाङ्गं कृष्णाजिनजटाधरम् । नैषादिं श्वा समालक्ष्य भषंस्तस्थौ तदन्तिके ॥ ३९ ॥ तदा तस्याथ भषतः शुनः सप्त शरान्मुखे । लाघवं दर्शयन्नस्त्रे मुमोच युगपद्यथा ॥ ४० ॥ स तु श्वा शरपूर्णास्यः पाण्डवानाजगाम ह । तं दृष्ट्वा पाण्डवा वीराः परं विस्मयमागताः ॥ ४१ ॥ लाघवं शब्दवेधित्वं

दृष्ट्वा तत्परमं तदा। प्रेक्ष्य तं ब्रीडिताश्चासन् प्रशशंसुश्च सर्वशः
॥ ४२ ॥ तं ततोऽन्वेषमाणास्ते वने वननिवासिनम्। ददृशुः
पाण्डवा राजन्नस्यन्तमनिशं शरान् ॥ ४३ ॥ न चैनमभिजानंस्ते
तदा विकृतदर्शनम्। तथैनं परिपप्रच्छुः को भवान् कस्य
वेत्युत ॥ ४४ ॥

एकलव्य उवाच। निषादाधिपतेर्वीरा हिरण्यधनुषः सुतम्।
द्रोणशिष्यञ्च मां वित्त धनुर्वेदकृतश्रमम् ॥ ४५ ॥

वैशम्पायन उवाच। तं तमाज्ञाय तत्त्वेन पुनरागम्य पाण्डवाः।
यथावृत्तं वने सर्वं द्रोणायाचख्युरद्भुतम् ॥ ४६ ॥ कौन्तेय-
स्त्वर्जुनो राजन्नेकलव्यमनुस्मरन्। रहो द्रोणं समासाद्य प्रणया-
दिदमब्रवीत् ॥ ४७ ॥

अर्जुन उवाच। तदाहं परिरभ्यैकः प्रीतिपूर्वमिदं वचः।
भवतोक्तो न मे शिष्यस्त्वद्विशिष्टो भविष्यति ॥ ४८ ॥ अथ कस्मा-
न्मद्विशिष्टो लोकादपि च वीर्य्यवान्। अन्योऽस्ति भवतः शिष्यो
निषादाधिपतेः सुतः ॥ ४९ ॥

वैशम्पायन उवाच। मुहूर्त्तमिव तं द्रोणश्चिन्तयित्वा विनि-
श्चयम्। सव्यसाचिनमादाय नैषादिं प्रति जग्मिवान् ॥ ५० ॥
ददर्श मलदिग्धाङ्गं जटिलं चीरवाससम्। एकलव्यं धनुष्पाणि-
मस्यन्तमनिशं शरान् ॥ ५१ ॥ एकलव्यस्तु तं दृष्ट्वा द्रोणमायान्त-
मन्तिकात्। अभिगम्योपसंगृह्य जगाम शिरसा महीम् ॥ ५२ ॥
पूजयित्वा ततो द्रोणं विधिवत् स निषादजः। निवेद्य शिष्य-
मात्मानं तस्थौ प्राञ्जलिरग्रतः ॥ ५३ ॥ ततो द्रोणोऽब्रवीद्राज-
न्नेकलव्यमिदं वचः। यदि शिष्योऽसि मे वीर वेतनं दीयतां
मम। एकलव्यस्तु तच्छ्रुत्वा प्रीयमाणोऽब्रवीदिदम् ॥ ५४ ॥

एकलव्य उवाच। किं प्रयच्छामि भगवन्नाज्ञापयतु मां
गुरुः। न हि किञ्चिददेयं मे गुरवे ब्रह्मवित्तम ॥ ५५ ॥

वैशम्पायन उवाच। तमब्रवीत्त्वयाङ्गुष्ठो दक्षिणो दीयतामिति। एकलव्यस्तु तच्छ्रुत्वा वचो द्रोणस्य दारुणम् ॥ ५६ ॥ प्रतिज्ञामात्मनो रक्षन् सत्ये च नियतः सदा। तथैव हृष्टवदनस्तथैवादीनमानसः ॥ ५७ ॥ छित्वा विचार्य्य तं प्रादाद्द्रोणायाङ्गुष्ठमात्मनः। ततः शरन्तु नैषादिरङ्गुलीभिर्व्यकर्षत। न तथा च स शीघ्रोऽभूद्यथा पूर्वं नराधिप ॥ ५८ ॥ ततोऽर्जुनः प्रीतमना बभूव विगतज्वरः। द्रोणश्च सत्यवागासीन्नान्योऽभिभवितार्जुनम् ॥ ५९ ॥ द्रोणस्य तु तदा शिष्यौ गदायोग्यौ बभूवतुः। दुर्य्योधनश्च भीमश्च सदा संरब्धमानसौ ॥ ६० ॥ अश्वत्थामा रहस्येषु सर्वेष्वभ्यधिकोऽभवत्। तथाति पुरुषानन्यान् त्सारुकौ यमजावुभौ ॥ ६१ ॥ युधिष्ठिरो रथिश्रेष्ठः सर्वत्र तु धनञ्जयः। प्रथितः सागरान्तायां रथयूथपयूथपः ॥ ६२ ॥ बुद्धियोगबलोत्साहैः सर्वास्त्रेषु च निष्ठितः। अस्त्रे गुर्वनुरागे च विशिष्टोऽभवदर्जुनः ॥ ६३ ॥ तुल्येष्वस्त्रोपदेशेषु सौष्ठवेन च वीर्य्यवान्। एकः सर्वकुमाराणां बभूवातिरथोऽर्जुनः ॥ ६४ ॥ प्राणाधिकं भीमसेनं कृतविद्यं धनञ्जयम्। धार्त्तराष्ट्रा दुरात्मानो नामृष्यन्त परस्परम् ॥ ६५ ॥ तांस्तु सर्वान् समानीय सर्वविद्यास्त्रशिक्षितान्। द्रोणः प्रहरणज्ञाने जिज्ञासुः पुरुषर्षभः ॥ ६६ ॥ कृत्रिमं भासमारोप्य वृक्षाग्रे शिल्पिभिः कृतम्। अविज्ञातं कुमाराणां लक्ष्यभूतमुपादिशत् ॥ ६७ ॥

द्रोण उवाच। शीघ्रं भवन्तः सर्वेऽपि धनूंष्यादाय सर्वशः। भासमेतं समुद्दिश्य तिष्ठध्वं सन्धितेषवः ॥ ६८ ॥ मद्वाक्यसमकालन्तु शिरोऽस्य विनिपात्यताम्। एकैकशो नियोक्ष्यामि तथा कुरुत पुत्रकाः ॥ ६९ ॥

वैशम्पायन उवाच। ततो युधिष्ठिरं पूर्वमुवाचाङ्गिरसां वरः। सन्धत्स्व बाणं दुर्द्धर्ष मद्वाक्यान्ते विमुञ्च तम् ॥ ७० ॥

ततो युधिष्ठिरः पूर्वं धनुर्गृह्य परन्तपः। तस्थौ भासं समुद्दिश्य गुरुवाक्यप्रचोदितः॥ ७१॥ ततो विततधन्वानं द्रोणस्तं कुरुनन्दनम्। स मुहूर्त्तादुवाचेदं वचनं भरतर्षभ॥ ७२॥ पश्यैनं त्वं द्रुमाग्रस्थं भासं नरवरात्मज। पश्यामीत्येवमाचार्य्यं प्रत्युवाच युधिष्ठिरः॥ ७३॥ स मुहूर्त्तादिव पुनर्द्रोणस्तं प्रत्यभाषत।

द्रोण उवाच। अथ वृक्षमिमं मां वा भ्रातॄन्वापि प्रपश्यसि॥ ७४॥ तमुवाच स कौन्तेयः पश्याम्येनं वनस्पतिम्। भवन्तञ्च तथा भ्रातॄन् भासञ्चेति पुनः पुनः॥ ७५॥ तमुवाचापसर्पेति द्रोणोऽप्रीतमना इव। नैतच्छक्यं त्वया वेद्धुं लक्ष्यमित्येव कुत्सयन्॥ ७६॥ ततो दुर्य्योधनादींस्तान्धार्त्तराष्ट्रान्महायशाः। तेनैव क्रमयोगेन जिज्ञासुः पर्य्यपृच्छत॥ ७७॥ अन्यांश्च शिष्यान् भीमादीन् राज्ञश्चैवान्यदेशजान्। तथा च सर्वे तत्सर्वं पश्याम इति कुत्सिताः॥ ७८॥

इत्यादिपर्वणि सम्भवपर्वणि द्रोणशिष्यपरीक्षायां चतुस्त्रिंशदधिकशततोऽध्यायः॥ १३४॥

---

वैशम्पायन उवाच। ततो धनञ्जयं द्रोणः स्मयमानोऽभ्यभाषत। त्वयेदानीं प्रहर्त्तव्यमेतल्लक्ष्यं विलोक्यताम्॥ १॥ मद्वाक्यसमकालं ते मोक्तव्योऽत्र भवेच्छरः। वितत्य कार्मुकं पुत्र तिष्ठ तावन्मुहूर्त्तकम्॥ २॥ एवमुक्तः सव्यसाची मण्डलीकृतकार्मुकः। तस्थौ भासं समुद्दिश्य गुरुवाक्यप्रचोदितः॥ ३॥ मुहूर्त्तादिव तं द्रोणस्तथैव समभाषत। पश्यस्येनं स्थितं भासं द्रुमं मामपि वार्जुन॥ ४॥ पश्याम्येकं भासमिति द्रोणं पार्थोऽभ्यभाषत। न तु वृक्षं भवन्तं वा पश्यामीति च भारत॥ ५॥

ततः प्रीतमना द्रोणो मुहूर्त्तादिव तं पुनः । प्रत्यभाषत दुर्द्धर्षः
पाण्डवानां महारथम् ॥ ६ ॥ आसं पश्यसि यद्येनं तथा ब्रूहि
पुनर्वचः । शिरः पश्यामि भासस्य न गात्रमिति सोऽब्रवीत् ॥७॥
अर्ज्जुनेनैवमुक्तस्तु द्रोणो हृष्टतनूरुहः । मुञ्चस्वेत्यब्रवीत् पार्थं स
मुमोचाविचारयन् ॥ ८ ॥ ततस्तस्य नगस्थस्य क्षुरेण निशितेन
च । शिर उत्कृत्य तरसा पातयामास पाण्डवः ॥ ९ ॥ तस्मिन्
कर्म्मणि संसिद्धे पर्य्यष्वजत पाण्डवम् । मेने च द्रुपदं संख्ये
सानुबन्धं पराजितम् । १० ॥ कस्यचित्त्वथ कालस्य सशिष्यो-
ऽङ्गिरसां वरः । जगाम गङ्गामभितो मज्जितुं भरतर्षभ ॥११॥
अवगाढमथो द्रोणं सलिले सलिलेचरः । ग्राहो जग्राह बल-
वाञ्जङ्घान्ते कालचोदितः ॥ १२ ॥ स समर्थोऽपि मोक्षाय
शिष्यान् सर्व्वानचोदयत् । ग्राहं हत्वा मोक्षयध्वं मामिति त्वरय-
न्निव ॥१३॥ तद्वाक्यसमकालन्तु बीभत्सुर्निशितैः शरैः । अवार्य्यैः
पञ्चभिर्ग्राहं मग्नमम्भस्यताडयत् ॥ १४ ॥ इतरे त्वथ संमूढास्तत्र
तत्र प्रपेदिरे । तन्तु दृष्ट्वा क्रियोपेतं द्रोणोऽमन्यत पाण्डवम्
॥ १५ ॥ विशिष्टं सर्व्वशिष्येभ्यः प्रीतिमांश्चाभवत्तदा । स पार्थ-
बाणैर्बहुधा खण्डशः परिकल्पितः ॥ १६ ॥ ग्राहः पञ्चत्वमापेदे
जङ्घां त्यक्त्वा महात्मनः । अथाब्रवीन्महात्मानं भारद्वाजो महा-
रथम् ॥ १७ ॥ गृहाणेमं महाबाहो विशिष्टमतिदुर्द्धरम् । अस्त्रं
ब्रह्मशिरो नाम सप्रयोगनिवर्त्तनम् ॥ १८ ॥ न च ते मानुषे-
ष्वेतत् प्रयोक्तव्यं कथञ्चन । जगद्विनिर्द्दहेदेतदल्पतेजसि पाति-
तम् ॥ २० ॥ असामान्यमिदं तात लोकेष्वस्त्रं निगद्यते ।
तद्धारयेथाः प्रयतः शृणु चेदं वचो मम ॥ २१ ॥ बाधेतामानुषः
शत्रुर्यदि त्वां वीर कश्चन । तद्बधाय प्रयुञ्जीथास्तदस्त्रमिदमाहवे
॥ २२ ॥ तथेति स प्रतिश्रुत्य बीभत्सुः प्रकृताञ्जलिः । जग्राह
परमास्त्रं तदाह चैनं पुनर्गुरुः ॥ २३ ॥ भविता त्वत्समो

नान्यः पुमांल्लोके धनुर्द्धरः। अजेयः सर्व्वशत्रूणां कीर्त्तिमांश्च भविष्यसि ॥ २४ ॥

इत्यादिपर्व्वणि सम्भवपर्व्वणि द्रोणग्राहमोक्षणे पञ्चत्रिंश-दधिकशततोऽध्यायः ॥ १३५ ॥

वैशम्पायन उवाच। कृतास्त्रान्धार्त्तराष्ट्रांश्च पाण्डुपुत्रांश्च भारत। दृष्ट्वा द्रोणोऽब्रवीद्राजन् धृतराष्ट्रं जनेश्वरम् ॥ १ ॥ कृपस्य सोमदत्तस्य बाह्लीकस्य च धीमतः। गाङ्गेयस्य च सान्निध्ये व्यासस्य विदुरस्य च ॥ २ ॥ राजन् संप्राप्तविद्यास्ते कुमाराः कुरुसत्तम। ते दर्शयेयुः स्वां शिक्षां राजन्ननुमते तव ॥ ३ ॥ ततोऽब्रवीन्महाराजः प्रहृष्टेनान्तरात्मना।

धृतराष्ट्र उवाच। भारद्वाज महत्कर्म कृतं ते द्विजसत्तम। यदानुमन्यसे कालं यस्मिन्देशे यथा यथा। तथा तथा विधानाय स्वयमाज्ञापयस्व माम् ॥ ४ ॥ स्पृहयाम्यद्य निर्वेदात् पुरुषाणां सचक्षुषाम्। अस्त्रहेतोः पराक्रान्तान्ये मे द्रक्ष्यन्ति पुत्रकान् ॥ ५ ॥ क्षत्तर्यद्गुरुराचार्य्यो ब्रवीति कुरु तत्तथा। न हीदृशं प्रियं मन्ये भविता धर्म्मवत्सल ॥ ६ ॥ ततो राजानमामन्त्र्य निर्गतो विदुरो बहिः। भारद्वाजो महाप्राज्ञो मापयामास मेदिनीम् ॥ ७ ॥ समामवृक्षां निर्गुल्मामुदक्प्रस्रवणान्विताम्। तस्यां भूमौ बलिं चक्रे तिथौ नक्षत्रपूजिते ॥ ८ ॥ अवघुष्टे समाजे च तदर्थं वदतां वरः। रङ्गभूमौ सुविपुलं शास्त्रदृष्टं यथाविधि ॥ ९ ॥ प्रेक्षागारं सुविहितं चक्रुस्ते तस्य शिल्पिनः। राज्ञः सर्व्वायुधोपेतं स्त्रीणाञ्चैव नरर्षभ ॥ १० ॥ मञ्चांश्च कारयामासुस्तत्र जानपदा जनाः। विपुलानुच्छ्रयोपेताञ्छिविकाश्च महाधनाः ॥ ११ ॥ तस्मिंस्ततोऽहनि प्राप्ते राजा ससचिवस्तदा। भीष्मं प्रमुखतः

ज्ञात्वा रूपं चाचार्य्यसत्तमम् ॥ १२ ॥ मुक्ताजालपरिक्षिप्तं वैदूर्य्य-
मणिशोभितम् । शातकुम्भमयं दिव्यं प्रेक्षागारमुपागमत् ॥ १३॥
गान्धारी च महाभागा कुन्ती च जयतांवर । स्त्रियश्च राज्ञः
सर्व्वास्ताः सप्रेष्याः सपरिच्छदाः ॥ १४ ॥ हर्षादारुरुहुर्म्मञ्चा-
न्मेरुं देवस्त्रियो यथा । ब्राह्मणक्षत्रियाद्यञ्च चातुर्व्वर्ण्यं पुराद्-
द्रुतम् ॥ १५ ॥ दर्शनेप्सु समभ्यागात् कुमाराणां कृतास्त्रताम् ।
क्षणेनैकस्थतां तत्र दर्शनेप्सु जगाम ह ॥ १६ ॥ प्रवादितैश्च
वादित्रैर्जनकौतूहलेन च । महार्णव इव क्षुब्धः समाजः सोऽभव-
त्तदा ॥ १७ ॥ ततः शुक्लाम्बरधरः शुक्लयज्ञोपवीतवान् । शुक्ल-
केशः सितश्मश्रुः शुक्लमाल्यानुलेपनः ॥ १८ ॥ रङ्गमध्यं तदा-
चार्य्यः सपुत्रः प्रविवेश ह । नभो जलधरैर्हीनं साङ्गारक इवांशु-
मान् ॥ १९ ॥ स यथासमयं चक्रे बलिं बलवतांवरः । ब्राह्म-
णांस्तु सुमन्त्रज्ञान् कारयामास मङ्गलम् ॥ २० ॥ सुखपुण्याह-
घोषस्य पुण्यस्य समनन्तरम् । विविशुर्व्विविधं गृह्य शस्त्रोपकरणं
नराः ॥ २१ ॥ ततो बद्धाङ्गुलित्राणा बद्धकक्षा महारथाः । बद्ध-
तूणाः सधनुषो विविशुर्भरतर्षभाः ॥ २२ ॥ अनुज्येष्ठन्तु ते तत्र
युधिष्ठिरपुरोगमाः । चक्रुरस्त्रं महावीर्य्याः कुमाराः परमा-
द्भुतम् ॥ २३ ॥ केचिच्छराक्षेपभयाच्छिरांस्यवननामिरे । मनुजा
धृष्टमपरे वीक्षाञ्चक्रुः सुविस्मिताः ॥ २४ ॥ ते स्म लक्ष्याणि
विभिदुर्व्बाणैर्नामाङ्कशोभितैः । विविधैर्लाघवोत्सृष्टैरुह्यन्तो
वाजिभिर्द्रुतम् ॥ २५ ॥ तत् कुमारबलं तत्र गृहीतशरकार्मु-
कम् । गन्धर्व्वनगराकारं प्रेक्ष्य ते विस्मिताभवन् ॥ २६ ॥ सहसा
चुक्रुशुश्चान्ये नराः शतसहस्रशः । विस्मयोत्फुल्लनयनाः साधु-
साध्विति भारत ॥ २७ ॥ कृत्वा धनुषि ते मार्गान् रथचर्य्यासु
चासकृत् । गजपृष्ठेऽश्वपृष्ठे च नियुद्धे च महाबलाः ॥ २८ ॥
गृहीतखड्गचर्म्माणस्ततो भूयः प्रहारिणः । त्सरुमार्गान् यथो-

हितांश्चैव सर्वासु भूमिषु ॥ २९ ॥ लाघवं सौष्ठवं शोभां स्थिरत्वं दृढमुष्टिताम् । ददृशुस्तत्र सर्वेषां प्रयोगं खड्गचर्मणोः ॥ ३० ॥ अथ तौ नित्यसंहृष्टौ सुयोधनवृकोदरौ । अवतीर्णौ गदाहस्तावेकशृङ्गाविवाचलौ ॥ ३१ ॥ बद्धकक्षौ महाबाहू पौरुषे पर्य्यवस्थितौ । बृंहन्तौ वाशिताहेतोः समदाविव कुञ्जरौ ॥ ३२ ॥ तौ प्रदक्षिणसव्यानि मण्डलानि महाबलौ । चेरतुर्निर्मलगदौ समदाविव कुञ्जरौ ॥ ३३ ॥ विदुरो धृतराष्ट्राय गान्धार्य्याः पाण्डवारणिः । न्यवेदयेतां तत्सर्वं कुमाराणां विचेष्टितम् ॥ ३४ ॥

इत्यादिपर्वणि सम्भवपर्व्वण्यस्त्रदर्शने षट्त्रिंशदधिकशततोऽध्यायः ॥ १३६ ॥

---:o---

वैशम्पायन उवाच । कुरुराजे हि रङ्गस्थे भीमे च बलिनांवरे । पक्षपातकृतस्नेहः स द्विधेवाभवज्जनः ॥ १ ॥ हा वीर कुरुराजेति हा भीम इति जल्पताम् । पुरुषाणां सुविपुलाः प्रणादाः सहसोत्थिताः ॥ २ ॥ ततः क्षुब्धार्णवनिभं रङ्गमालोक्य बुद्धिमान् । भारद्वाजः प्रियं पुत्रमश्वत्थामानमब्रवीत् ॥ ३ ॥

द्रोण उवाच । वारयैतौ महावीर्य्यौ कृतयोग्यावुभावपि । माभूद्रङ्गप्रकोपोऽयं भीमदुर्य्योधनोद्भवः ॥ ४ ॥

वैशम्पायन उवाच । ततस्तावुद्यतगदौ गुरुपुत्रेण वारितौ । युगान्तानिलसंक्षुब्धौ महावेलाविवार्णवौ ॥ ५ ॥ ततो रङ्गाङ्गणगतो द्रोणो वचनमब्रवीत् । निवार्य्य वादित्रगणं महामेघनिभस्वनम् ॥ ६ ॥ यो मे पुत्रात् प्रियतरः सर्वशस्त्रविशारदः । ऐन्द्रिरिन्द्रानुजसमः स पार्थो दृश्यतामिति ॥ ७ ॥ आचार्य्यवचनेनाथ कृतस्वस्त्ययनो युवा । बद्धगोधाङ्गुलित्राणः पूर्णतूणः सकार्मुकः ॥ ८ ॥ काञ्चनं कवचं बिभ्रत् प्रत्यदृश्यत फाल्गुनः । सार्कः

सेन्द्रायुधतडित् ससन्ध्य इव तोयदः ॥ ९ ॥ ततः सर्वस्य रङ्गस्य समुत्पिञ्जलकोऽभवत्। प्राध्मायन्त च वाद्यानि सशङ्खानि समन्ततः ॥ १० ॥ एष कुन्तीसुतः श्रीमानेष मध्यमपाण्डवः। एष पुत्रो महेन्द्रस्य कुरूणामेष रक्षिता ॥ ११ ॥ एषोऽस्त्रविदुषां श्रेष्ठ एष धर्मभृतां वरः। एष शीलवताञ्चापि शीलज्ञाननिधिः परः ॥ १२ ॥ इत्येवं तुमुला वाचः शुश्रुवुः प्रेक्षकेरिताः। कुन्त्याः प्रस्रवसंयुक्तैरस्रैः क्लिन्नमुरोऽभवत् ॥ १३ ॥ तेन शब्देन महता पूर्णश्रुतिरथाब्रवीत्। धृतराष्ट्रो नरश्रेष्ठो विदुरं हृष्टमानसः ॥ १४ ॥ क्षत्तः क्षुब्धार्णवनिभः किमेष सुमहास्वनः। सहसैवोत्थितो रङ्गे भिन्दन्निव नभस्तलम् ॥ १५ ॥

विदुर उवाच। एष पार्थो महाराज फाल्गुनः पाण्डुनन्दनः। अवतीर्णः सकवचस्तत्रैष सुमहास्वनः ॥ १६ ॥

धृतराष्ट्र उवाच। धन्योऽस्म्यनुगृहीतोऽस्मि रक्षितोऽस्मि महामते। पृथारणिसमुद्भूतैस्त्रिभिः पाण्डववह्निभिः ॥ १७ ॥

वैशम्पायन उवाच। तस्मिन् प्रमुदिते रङ्गे कथञ्चित् प्रत्युपस्थिते। दर्शयामास बीभत्सुराचार्य्यायास्त्रलाघवम् ॥ १८ ॥ आग्नेयेनासृजद्वह्निं वारुणेनासृजत्पयः। वायव्येनासृजद्वायुं पार्ज्जन्येनासृजद्घनान् ॥ १९ ॥ भौमेन प्राविशद्भूमिं पार्वतेनाभवद्गिरिः। अन्तर्धानेन चास्त्रेण पुनरन्तर्हितोऽभवत् ॥ २० ॥ क्षणात्प्रांशुः क्षणाद्ध्रस्वः क्षणाच्च रथधूर्गतः। क्षणेन रथमध्यस्थः क्षणेनावतरन्महीम् ॥ २१ ॥ सुकुमारञ्च सूक्ष्मञ्च गुरुञ्चापि गुरुप्रियः। सौष्ठवेनाभिसंयुक्तः सोऽविध्यद्विविधैः शरैः ॥ २२ ॥ भ्रमतश्च वराहस्य लौहस्य प्रमुखे समम्। पञ्च बाणानसंसक्तान् संमुमोचैकवाणवत् ॥ २३ ॥ गव्ये विषाणकोषे च चले रज्ज्ववलम्बिनि। निचखान महावीर्य्यः सायकानेकविंशतिम् ॥ २४ ॥ इत्येवमादि सुमहत् खड्गे धनुषि चानघ। गदायां शस्त्रकुशलो

मण्डलानि प्रदर्शयन्॥ २५॥ ततः समाप्तभूयिष्ठे तस्मिन् कर्मणि भारत। मन्दीभूते समाजे च वादित्रस्य च निःस्वने॥ २६॥ द्वारदेशात्समुद्भूतो माहात्म्यबलसूचकः। वज्रनिष्पेषसदृशः शुश्रुवे भुजनिःस्वनः॥ २७॥ दीर्य्यन्ते किं नु गिरयः किंस्विद्भूमिर्विदीर्य्यते। किंस्विदापूर्य्यते व्योम जलधाराघनैर्घनैः॥ २८॥ रङ्गस्यैवं मतिरभूत् क्षणेन वसुधाधिप। द्वारञ्चाभिमुखाः सर्व्वे बभूवुः प्रेक्षकास्तदा॥ २९॥ पञ्चभिर्भ्रातृभिः पार्थैर्द्रोणः परिवृतो बभौ। पञ्चतारेण संयुक्तः सावित्रेणेव चन्द्रमाः॥ ३०॥ अश्वत्थाम्ना च सहितं भ्रातॄणां शतमूर्जितम्। दुर्य्योधनममित्रघ्नमुत्थितं पर्य्यवारयत्॥ ३१॥ स तैस्तदा भ्रातृभिरुद्यतायुधैर्गदाग्रपाणिः समवस्थितैर्वृतः। बभौ यथा दानवसंक्षये पुरा पुरन्दरो देवगणैः समावृतः॥ ३२॥

इत्यादिपर्व्वणि सम्भवपर्व्वण्यस्त्रदर्शने सप्तत्रिंशदधिकशततोऽध्यायः॥ १३७॥

—०:०—

वैशम्पायन उवाच। दत्तेऽवकाशे पुरुषैर्विस्मयोत्फुल्ललोचनः। विवेश रङ्गं विस्तीर्णं कर्णः परपुरञ्जयः॥ १॥ सहजं कवचं बिभ्रत् कुण्डलोद्योतिताननः। सधनुर्बद्धनिस्त्रिंशः पादचारीव पर्व्वतः॥ २॥ कन्यागर्भः पृथुयशाः पृथायाः पृथुलोचनः। तीक्ष्णांशोर्भास्करस्यांशः कर्णोऽरिगणसूदनः॥ ३॥ सिंहर्षभगजेन्द्राणां तुल्यवीर्य्यपराक्रमः। दीप्तिकान्तिद्युतिगुणैः सूर्य्येन्दुज्वलनोपमः॥ ४॥ प्रांशुः कनकतालाभः सिंहसंहननो युवा। असंख्येयगुणः श्रीमान् भास्करस्यात्मसम्भवः॥ ५॥ स निरीक्ष्य महाबाहुः सर्व्वतो रङ्गमण्डलम्। प्रणामं द्रोणकृपयोर्नात्या-

हृतमिवाकरोत् ॥ ६ ॥ स समाजजनः सर्वो निश्चलः स्थिर-
लोचनः । कोऽयमित्यागतक्षोभः कौतूहलपरोऽभवत् ॥ ७ ॥
सोऽब्रवीन्मेघगम्भीरस्वरेण वदतां वरः । भ्राता भ्रातरमज्ञातं
सावित्रः पाकशासनिम् ॥ ८ ॥ पार्थ यत्ते कृतं कर्म्म विशेषवदहं
ततः । करिष्ये पश्यतां नृणामात्मानं विस्मयंगमः ॥ ९ ॥
असमाप्ते ततस्तस्य वचने वदतांवर । यन्त्रोत्क्षिप्त इवोत्तस्थौ
क्षिप्रं वै सर्वतो जनः ॥ १० ॥ प्रीतिश्च मनुजव्याघ्र दुर्य्योधन-
मुपाविशत् । ह्रीश्च क्रोधश्च बीभत्सुं क्षणेनान्वाविवेश ह ॥ ११ ॥
ततो द्रोणाभ्यनुज्ञातः कर्णः प्रियरणः सदा । यत् कृतं तत्र पार्थेन
तच्चकार महाबलः ॥ १२ ॥ अथ दुर्य्योधनस्तत्र भ्रातृभिः सह
भारत । कर्णं परिष्वज्य मुदा ततो वचनमब्रवीत् ॥ १३ ॥

दुर्य्योधन उवाच । स्वागतं ते महाबाहो दिष्ट्या प्राप्तोऽसि
मानद । अहञ्च कुरुराज्यञ्च यथेष्टमुपभुज्यताम् ॥ १४ ॥

कर्ण उवाच । कृतं सर्व्वमहं मन्ये सखित्वञ्च त्वया वृणे ।
द्वन्द्वयुद्धञ्च पार्थेन कर्त्तुमिच्छाम्यहं प्रभो ॥ १५ ॥

दुर्य्योधन उवाच । भुङ्क्ष्व भोगान्मया सार्द्धं बन्धूनां प्रिय-
कृद्भव । दुर्हृदां कुरु सर्व्वेषां मूर्द्ध्नि पादमरिन्दम ॥ १६ ॥

वैशम्पायन उवाच । ततः क्षिप्तमिवात्मानं मत्वा पार्थोऽभ्य-
भाषत । कर्णं भ्रातृसमूहस्य मध्येऽचलमिव स्थितम् ॥ १७ ॥

अर्जुन उवाच । अनाहूतोपदिष्टानामनाहूतोपजल्पिनाम् ।
ये लोकास्तान्हतः कर्ण मया त्वं प्रतिपत्स्यसे ॥ १८ ॥

कर्ण उवाच । रङ्गोऽयं सर्व्वसामान्यः किमत्र तव फाल्गुन ।
वीर्य्यश्रेष्ठाश्च राजानो बलं धर्म्मोऽनुवर्त्तते ॥ १९ ॥ किं क्षेपैर्दुर्ब्ब-
लाश्वासैः शरैः कथय भारत । गुरोः समक्षं यावत्ते हराम्यद्य
शिरः शरैः ॥ २० ॥

वैशम्पायन उवाच । ततो द्रोणाभ्यनुज्ञातः पार्थः परपुर-

जय: । भ्रातृभिस्त्वरयाश्लिष्टो रथायोपजगाम तम् ॥ २१ ॥
ततो दुर्य्योधनेनापि सभ्रात्रा समरोद्यतः । परिरक्षितः स्थितः
कर्णः प्रगृह्य सशरन्धनुः ॥ २२ ॥ ततः सविद्युत्स्तनितैः सेन्द्रा-
युधपुरोगमैः । आवृतं गगनं मेघैर्बलाकापङ्क्तिहासिभिः ॥२३॥
ततः स्नेहाद्धरिहयं दृष्ट्वा रङ्गावलोकिनम् । भास्करोऽप्यनय-
न्नाशं समीपोपगतान् घनान् ॥ २४ ॥ मेघच्छायोपगूढस्तु ततो-
ऽदृश्यत फाल्गुनः । सूर्य्यातपपरिक्षिप्तः कर्णोऽपि समदृश्यत ॥२५॥
धार्तराष्ट्रा यतः कर्णस्तस्मिन्देशे व्यवस्थिताः । भारद्वाजः कृपो
भीष्मो यतः पार्थस्ततोऽभवन् ॥२६॥ द्विधा रङ्गः समभवत् स्त्रीणां
द्वैधमजायत । कुन्तिभोजसुता मोहं विज्ञातार्था जगाम ह
॥ २७ ॥ तां तथा मोहमापन्नां विदुरः सर्वधर्मवित् । कुन्ती-
माश्वासयामास प्रेष्याभिश्चन्दनोदकैः ॥ २८ ॥ ततः प्रत्यागत-
प्राणा तावुभौ परिदंशितौ । पुत्रौ दृष्ट्वा सुसंभ्रान्ता नान्वपद्यत
किञ्चन ॥ २९ ॥ तावुद्यतमहाचापौ कृपः शारद्वतोऽब्रवीत् ।
द्वन्द्वयुद्धसमाचारे कुशलः सर्वधर्मवित् ॥ ३० ॥ अयं पृथाया-
स्तनयः कनीयान् पाण्डुनन्दनः । कौरवो भवता सार्द्धं द्वन्द्वयुद्धं
करिष्यति ॥ ३१ ॥ त्वमप्येवं महाबाहो मातरं पितरं कुलम् ।
कथयस्व नरेन्द्राणां येषां त्वं कुलभूषणः ॥ ३२ ॥ ततो विदित्वा
पार्थस्त्वां प्रतियोत्स्यति वा नवा । वृथाकुलसमाचारैर्न युध्यन्ते
नृपात्मजाः ॥ ३३ ॥

वैशम्पायन उवाच । एवमुक्तस्य कर्णस्य व्रीडावनतमाननम् ।
बभौ वर्षाम्बुविक्लिन्नं पद्ममागलितं यथा ॥ ३४ ॥

दुर्य्योधन उवाच । आचार्य्य त्रिविधा योनी राज्ञां शास्त्र-
विनिश्चये । सत्कुलीनश्च शूरश्च यश्च सेनां प्रकर्षति ॥ ३५ ॥
यद्ययं फाल्गुनो युद्धे नाराज्ञा योद्धुमिच्छति । तस्मादेषोऽङ्ग-
विषये मया राज्येऽभिषिच्यते ॥ ३६ ॥

वैशम्पायन उवाच। ततस्तस्मिन् क्षणे कर्णः सलाजकुसुमै-
र्घटैः। काञ्चनैः काञ्चने पीठे मन्त्रविद्भिर्महारथः ॥३७॥ अभि-
षिक्तोऽङ्गराज्ये स श्रिया युक्तो महाबलः। सच्छत्रवालव्यजनो
जयशब्दोत्तरेण च ॥ ३८ ॥ उवाच कौरवं राजा वचनं स वृष-
स्तदा। अस्य राज्यप्रदानस्य सदृशं किं ददानि ते ॥ ३९ ॥
प्रब्रूहि राजशार्दूल कर्त्ता ह्यस्मि तथा नृप। अत्यन्तं सख्य-
मिच्छामीत्याह तं स सुयोधनः ॥ ४० ॥ एवमुक्तस्ततः कर्ण-
स्तथेति प्रत्युवाच तम्। हर्षाच्चोभौ समाश्लिष्य परां मुदमवा-
पतुः ॥ ४१ ॥

इत्यादिपर्व्वणि सम्भवपर्व्वण्यस्त्रदर्शने अष्टत्रिंश-
दधिकशततमोऽध्यायः ॥ १३८ ॥

वैशम्पायन उवाच। ततः स्रस्तोत्तरपटः सप्रस्वेदः सवेपथुः।
विवेशाधिरथो रङ्गं यष्टिप्राणो ह्वयन्निव ॥ १ ॥ तमालोक्य धनु-
स्त्यक्त्वा पितृगौरवयन्त्रितः। कर्णोऽभिषेकार्द्रशिराः शिरसा
समवन्दत ॥ २ ॥ ततः पादाववच्छाद्य पटान्तेन ससम्भ्रमः।
पुत्रेति परिपूर्णार्थमब्रवीद्रथसारथिः ॥३॥ परिष्वज्य च तस्याथ
मूर्द्धानं स्नेहविक्लवः। अङ्गराज्याभिषेकार्द्रमश्रुभिः सिषिचे पुनः
॥ ४ ॥ तं दृष्ट्वा सूतपुत्रोऽयमिति सञ्चिन्त्य पाण्डवः। भीम-
सेनस्तदा वाक्यमब्रवीत् प्रहसन्निव ॥ ५ ॥ न त्वमर्हसि पार्थेन
सूतपुत्र रणे वधम्। कुलस्य सदृशस्तूर्णं प्रतोदो गृह्यतां त्वया
॥ ६ ॥ अङ्गराज्यञ्च नार्हस्त्वमुपभोक्तुं नराधम। श्वा हुताश-
समीपस्थं पुरोडाशमिवाध्वरे ॥ ७ ॥ एवमुक्तस्ततः कर्णः किञ्चित्
प्रस्फुरिताधरः। गगनस्थं विनिःश्वस्य दिवाकरमुदैक्षत ॥ ८ ॥

ततो दुर्योधनः कोपादुत्पपात महाबलः। आत्तपद्मवनात्तस्मा-
न्मदोत्कट इव द्विपः ॥ ९ ॥ सोऽब्रवीद्भीमकर्माणं भीमसेनमव-
स्थितम्। वृकोदर न युक्तं ते वचनं वक्तुमीदृशम् ॥ १० ॥ क्षत्रि-
याणां बलं ज्येष्ठं योद्धव्यं क्षत्रबन्धुना। शूराणाञ्च नदीनाञ्च
दुर्विदाः प्रभवाः किल ॥ ११ ॥ सलिलादुत्थितो वह्निर्येन व्याप्तं
चराचरम्। दधीचस्यास्थितो वज्रं कृतं दानवसूदनम् ॥ १२ ॥
आग्नेयः कृत्तिकापुत्रो रौद्रो गाङ्गेय इत्यपि। श्रूयते भगवा-
न्देवः सर्वगुह्यमयो गुहः ॥ १३ ॥ क्षत्रियेभ्यश्च ये जाता ब्राह्म-
णास्ते च ते श्रुताः। विश्वामित्रप्रभृतयः प्राप्ता ब्रह्मत्वमव्ययम्
॥ १४ ॥ आचार्यः कलशाज्जातो द्रोणः शस्त्रभृतांवरः। गौत-
मस्यान्ववाये च शरस्तम्बाच्च गौतमः ॥ १५ ॥ भवताञ्च यथा जन्म
तदप्यागमितं मया। सकुण्डलं सकवचं सर्वलक्षणलक्षितम्।
कथमादित्यसदृशं मृगी व्याघ्रं जनिष्यति ॥ १६ ॥ पृथिवी-
राज्यमर्होऽयं नाङ्गराज्यं नरेश्वरः। अनेन बाहुवीर्येण मया
चाज्ञानुवर्त्तिना ॥ १७ ॥ यस्य वा मनुजस्येदं न क्षान्तं मद्विचे-
ष्टितम्। रथमारुह्य पद्भ्यां स विनामयतु कार्मुकम् ॥ १८ ॥
ततः सर्वस्य रङ्गस्य हाहाकारो महानभूत्। साधुवादानुसंबद्धः
सूर्य्यश्चास्तमुपागमत् ॥ १९ ॥ ततो दुर्योधनः कर्णमालम्ब्याग्र-
करे नृपः। दीपिकाग्निकृतालोकस्तस्माद्रङ्गाद्विनिर्ययौ ॥ २० ॥
पाण्डवाश्च सद्रोणाः सकृपाश्च विशाम्पते। भीष्मेण सहिताः
सर्वे ययुः स्वं स्वं निवेशनम् ॥ २१ ॥ अर्जुनेति जनः कश्चित्
कश्चित् कर्णेति भारत। कश्चिद्दुर्योधनेत्येवं ब्रुवन्तः प्रस्थिता-
स्तदा ॥ २२ ॥ कुन्त्याश्च प्रत्यभिज्ञाय दिव्यलक्षणसूचितम्।
पुत्रमङ्गेश्वरं स्नेहाच्छन्ना प्रीतिरजायत ॥ २३ ॥ दुर्योधनस्यापि
तदा कर्णमासाद्य पार्थिव। भयमर्जुनसञ्जातं क्षिप्रमन्तरधीयत
॥ २४ ॥ स चापि वीरः कृतशस्त्रनिःश्रमः परेण साम्नाभ्यवदत्

सुयोधनम् । युधिष्ठिरस्तथायमवन्तदा मतिर्न्न कथन्तुल्योऽस्ति धनुर्धरः क्षितौ ॥ २५ ॥

इत्यादिपर्व्वणि सम्भवपर्व्वण्यस्त्रदर्शने अष्टचत्वारिंशदधिकशततोऽध्यायः ॥ १२८ ॥

---

वैशम्पायन उवाच । पाण्डवान्धार्त्तराष्ट्रांश्च कृतास्त्रान् प्रसमीक्ष्य सः । गुर्व्वर्थदक्षिणाकाले प्राप्तेऽमन्यत वै गुरुः ॥ १ ॥ ततः शिष्यान् समानीय आचार्य्योऽर्थमचोदयत् । द्रोणः सर्व्वानशेषेण दक्षिणार्थं महीपते ॥ २ ॥ पाञ्चालराजं द्रुपदं गृहीत्वा रणमूर्द्धनि । पर्य्यानयत भद्रं वः सा स्यात्परमदक्षिणा ॥ ३ ॥ तथेत्युक्त्वा तु ते सर्व्वे रथैस्तूर्णं प्रहारिणः । आचार्य्यधनदानार्थं द्रोणेन सहिता ययुः ॥ ४ ॥ ततोऽभिजग्मुः पाञ्चालान्निघ्नन्तस्ते नरर्षभाः । ममृदुस्तस्य नगरं द्रुपदस्य महौजसः ॥ ५ ॥ दुर्य्योधनश्च कर्णश्च युयुत्सुश्च महाबलः । दुःशासनो विकर्णश्च जलसन्धः सुलोचनः ॥ ६ ॥ एते चान्ये च बहवः कुमारा बहुविक्रमाः । अहं पूर्व्वमहं पूर्व्वमित्येवं क्षत्रियर्षभाः ॥ ७ ॥ ततो वररथारूढाः कुमाराः सादिभिः सह । प्रविश्य नगरं सर्व्वे राजमार्गमुपाययुः ॥ ८ ॥ तस्मिन् काले तु पाञ्चाल्यः श्रुत्वा दृष्ट्वा महद्बलम् । भ्रातृभिः सहितो राजंस्त्वरया निर्ययौ गृहात् ॥ ९ ॥ ततस्तु कृतसन्नाहो यज्ञसेनो महीधरः । शरवर्षाणि मुञ्चन्तः प्रणेदुः सर्व्व एव ते ॥ १० ॥ ततो रथेन शुभ्रेण समासाद्य तु कौरवान् । यज्ञसेनः शरान् घोरान्ववर्ष युधि दुर्जयः ॥ ११ ॥

वैशम्पायन उवाच । पूर्व्वमेव तु सम्मन्त्र्य पार्थो द्रोणमभाषत् । दर्पोद्रेकात् कुमाराणामाचार्य्यं द्विजसत्तमम् ॥ १२ ॥ एषां पराक्रमस्यान्ते वयं कुर्य्याम साहसम् । एतैरशक्यः पाञ्चाल्यो

यातु रथमूर्द्धनि ॥ १३ ॥ एवमुक्त्वा तु कौन्तेयो भ्रातृभिः
सहितोऽनघः । अर्द्धक्रोशे तु नगरादतिष्ठद्बहिरेव सः ॥ १४ ॥
द्रुपदः कौरवान्दृष्ट्वा प्राधावत समन्ततः । शरजालेन महता
मोहयन् कौरवीं चमूम् ॥ १५ ॥ तमुद्यतं रथेनैकमाशुकारिण-
माहवे । अनेकमिव सन्त्रासान्मेनिरे तत्र कौरवाः ॥ १६ ॥ द्रुप-
दस्य शरा घोरा विचेरुः सर्वतो दिशम् । ततः शङ्खाश्च भेर्यश्च
मृदङ्गाश्च सहस्रशः ॥ १७ ॥ प्रावाद्यन्त महाराज पाञ्चालानां
निवेशने । सिंहनादश्च सञ्जज्ञे पाञ्चालानां महात्मनाम् ॥ १८ ॥
धनुर्ज्यातलशब्दश्च संस्पृश्य गगनं महान् । दुर्योधनो विकर्णश्च
सुबाहुर्दीर्घलोचनः ॥ १९ ॥ दुःशासनश्च संक्रुद्धाः शरवर्षैरवा-
किरन् । सोऽतिविद्धो महेष्वासः पार्षतो युधि दुर्जयः ॥ २० ॥
व्यधमत्तान्यनीकानि तत्क्षणादेव भारत । दुर्योधनं विकर्णञ्च
कर्णञ्चापि महाबलम् ॥ २१ ॥ नानानृपसुतान्वीरान् सैन्यानि
विविधानि च । अलातचक्रवत्सर्वं चरन्बाणैरतर्पयत् ॥ २२ ॥
ततस्तु नागराः सर्वे मुसलैर्यष्टिभिस्तदा । अभ्यवर्षन्त कौरव्यान्
वर्षमाणा घना इव ॥ २३ ॥ सबालवृद्धास्ते पौराः कौरवान-
भ्ययुस्तदा । श्रुत्वा तु तुमुलं युद्धं कौरवानेव भारत ॥ २४ ॥
द्रवन्ति स्म नदन्ति स्म क्रोशन्तः पाण्डवान् प्रति । पाण्डवास्तु
स्वनं श्रुत्वा आर्त्तानां लोमहर्षणम् ॥ २५ ॥ अभिवाद्य ततो
द्रोणं रथानारुरुहुस्तदा । युधिष्ठिरं निवार्याशु मा युध्यस्वेति
पाण्डवम् ॥ २६ ॥ माद्रेयौ चक्ररक्षौ तु फाल्गुनश्च तदाकरोत् ।
सेनाग्रगो भीमसेनः सदाभूद्गदया सह ॥ २७ ॥ तदा शत्रुस्वनं
श्रुत्वा भ्रातृभिः सहितोऽनघः । आयात्स्वनेन कौन्तेयो रथेन-
नादयन्दिशः ॥ २८ ॥ पाञ्चालानां ततः सेनामुद्धतार्णवनिस्व-
नाम् । भीमसेनो महाबाहुर्दण्डपाणिरिवान्तकः ॥ २९ ॥ प्रवि-
वेश महासेनां मकरः सागरं यथा । स्वयमभ्यद्रवद्भीमो नागा-

नीकं गदाधरः ॥३०॥ स युद्धकुशलः पार्थो बाहुवीर्य्येण चाक्षमः ।
अहनत् कुञ्जरानीकं गदया कालरूपधृक् ॥ ३१ ॥ ते गजा गिरि-
सङ्काशाः क्षरन्तो रुधिरं बहु । भीमसेनस्य गदया भिन्नमस्तक-
पिण्डकाः । पतन्ति द्विरदा भूमौ वज्रघाताद्विवाचलाः ॥ ३२ ॥
गजानश्वान् रथांश्चैव पातयामास पाण्डवः । पदातींश्च रथांश्चैव
न्यवधीदर्ज्जुनाग्रजः ॥ ३३ ॥ गोपाल इव दण्डेन यथा पशु-
गणान्वने । चालयन् रथनागांश्च सञ्चचाल वृकोदरः ॥ ३४ ॥

वैशम्पायन उवाच । भारद्वाजप्रियं कर्त्तुमुद्यतः फाल्गुन-
स्तदा । पार्षतं शरजालेन क्षिपन् नागात् स पाण्डवः ॥ ३५ ॥
हयौघांश्च रथौघांश्च गजौघांश्च समन्ततः । पातयन् समरे राज-
न्युगान्ताग्निरिव ज्वलन् ॥ ३६ ॥ ततस्ते हन्यमाना वै पाञ्चालाः
सृञ्जयास्तथा । शरैर्नानाविधैस्तूर्णं पार्थं संच्छाद्य सर्व्वशः ॥३७॥
सिंहनादं मुखैः कृत्वा समयुध्यन्त पाण्डवम् । तद्युद्धमभवद्घोरं
सुमहाद्भुतदर्शनम् । सिंहनादस्वनं श्रुत्वा नामृष्यत्पाकशासनिः
॥ ३८ ॥ ततः किरीटी सहसा पाञ्चालान् समरेऽद्रवत् । छाद-
यन्निषुजालेन महता मोहयन्निव ॥३९॥ शीघ्रमभ्यस्यतो बाणान्
सन्दधानस्य चानिशम् । नान्तरं ददृशे किञ्चित्कौन्तेयस्य यश-
स्विनः ॥ ४० ॥ सिंहनादश्च सञ्जज्ञे साधुशब्देन मिश्रितः । ततः
पाञ्चालराजस्तु तथा सत्यजिता सह ॥ ४१ ॥ त्वरमाणोऽभि-
दुद्राव महेन्द्रं शम्बरो यथा । महता शरवर्षेण पार्थः पाञ्चाल-
मावृणोत् ॥ ४२ ॥ ततो हलहलाशब्द आसीत्पाञ्चालके बले ।
जिघृक्षति महासिंहो गजानामिव यूथपम् ॥ ४३ ॥ दृष्ट्वा पार्थं
तदायान्तं सत्यजित्सत्यविक्रमः । पाञ्चालं वै परिप्रेप्सुर्धनञ्जय-
मदुद्रवत् ॥ ४४ ॥ ततस्त्वर्ज्जुनपाञ्चालौ युद्धाय समुपागतौ ।
व्यक्षोभयेतां तौ सैन्यमिन्द्रवैरोचनाविव ॥ ४५ ॥ ततः सत्यजितं
पार्थो दशभिर्मर्म्मभेदिभिः । विव्याध बलवद्गाढं तदद्भुतमिवा-

भवत् ॥ ४६ ॥ ततः शरशतैः पार्थं पाञ्चालः शीघ्रमाहयत् ।
पार्थस्तु शरवर्षेण छाद्यमानो महारथः ॥ ४७ ॥ वेगं चक्रे महा-
वेगो धनुर्ज्यामवमृज्य च । ततः सत्यजितश्चापं छित्वा राजा-
नमभ्ययात् ॥ ४८ ॥ अथान्यद्धनुरादाय सत्यजिद्वेगवत्तरम् ।
साश्वं ससूतं सरथं पार्थं विव्याध सत्वरः ॥ ४९ ॥ स तं न ममृषे
पार्थः पाञ्चालेनार्द्दितो युधि । ततस्तस्य विनाशार्थं सत्वरं व्यसृ-
जच्छरान् ॥ ५० ॥ हयान् ध्वजं धनुर्मुष्टिमुभौ तौ पार्ष्णि-
सारथी । स तथा भिद्यमानेषु कार्मुकेषु पुनः पुनः ॥ ५१ ॥ हयेषु
विनियुक्तेषु विमुखोऽभवदाहवे । स सत्यजितमालोक्य तथा
विमुखमाहवे ॥ ५२ ॥ वेगेन महता राजन्नभ्यवर्षत पाण्डवम् ।
तदा चक्रे महद्युद्धमर्जुनो जयतां वरः ॥ ५३ ॥ तस्य पार्थो धनु-
श्छित्वा ध्वजञ्चोर्व्यामपातयत् । पञ्चभिस्तस्य विव्याध हयान्
सूतञ्च सायकैः ॥ ५४ ॥ तत उत्सृज्य तच्चापमाददानं शरा-
वरम् । खड्गमुद्धृत्य कौन्तेयः सिंहनादमथाकरोत् ॥ ५५ ॥
पाञ्चालस्य रथस्येषामाप्लुत्य सहसापतत् । पाञ्चालरथमास्थाय
अवित्रस्तो धनञ्जयः ॥ ५६ ॥ विक्षोभ्याम्भोनिधिं पार्थस्तं नाग-
मिव सोऽग्रहीत् । ततस्तु सर्वपाञ्चाला विद्रवन्ति दिशो दश ॥ ५७ ॥
दर्शयन् सर्वसैन्यानां स बाह्वोर्बलमात्मनः । सिंहनादस्वनं कृत्वा
निर्जगाम धनञ्जयः ॥ ५८ ॥ आयान्तमर्जुनं दृष्ट्वा कुमाराः
सहितास्तदा । ममृदुस्तस्य नगरं द्रुपदस्य महात्मनः ॥ ५९ ॥

अर्जुन उवाच । सम्बन्धी कुरुवीराणां द्रुपदो राजसत्तमः ।
मा वधीस्तद्बलं भीम गुरुदानं प्रदीयताम् ॥ ६० ॥

वैशम्पायन उवाच । भीमसेनस्तदा राजन्नर्जुनेन निवारितः ।
अतृप्तो युद्धधर्मेषु न्यवर्त्तत महाबलः ॥ ६१ ॥ ते यज्ञसेनं द्रुपदं
गृहीत्वा रणमूर्द्धनि । उपाजह्रुः सहामात्यं द्रोणाय भरतर्षभ
॥ ६२ ॥ भग्नदर्पं हृतधनं तं तथा वशमागतम् । स वैरं

मनसा ध्यात्वा द्रोणो द्रुपदमब्रवीत् ॥ ६३ ॥ विमृद्य तरसा राष्ट्रं पुरं ते मर्द्दितं मया। प्राप्य जीवं रिपुवशं सखिपूर्वं किमिष्यते ॥ ६४ ॥ एवमुक्त्वा प्रहस्यैवं किञ्चित् स पुनरब्रवीत् । मा भैः प्राणभयाद्वीर चमिणो ब्राह्मणा वयम् ॥ ६५ ॥ आश्रमे क्रीडितं यत्तु त्वया बाल्ये मया सह । तेन संवर्द्धितः स्नेहः प्रीतिश्च क्षत्रियर्षभ ॥ ६६ ॥ प्रार्थयेयं त्वया सख्यं पुनरेव जनाधिप। वरं ददामि ते राजन् राज्यस्यार्द्धमवाप्नुहि ॥ ६७ ॥ अराजा किल नो राज्ञः सखा भवितुमर्हति । अतः प्रयतितं राज्ये यज्ञसेन मया तव ॥ ६८ ॥ राजासि दक्षिणे कूले भागीरथ्याहमुत्तरे ।· सखायं मां विजानीहि पाञ्चाल यदि मन्यसे ॥ ६९ ॥

द्रुपद उवाच । अनाश्चर्य्यमिदं ब्रह्मन् विक्रान्तेषु महात्मसु। प्रीये त्वयाहं त्वत्तश्च प्रीतिमिच्छामि शाश्वतीम् ॥ ७० ॥

वैशम्पायन उवाच। एवमुक्तः स तं द्रोणो मोक्षयामास भारत। सत्कृत्य चैनं प्रीतात्मा राज्यार्द्धं प्रत्यपादयत् ॥ ७१ ॥ माकन्दीमथ गङ्गायास्तीरे जनपदायुताम् । सोऽध्यावसद्दीनमनाः काम्पिल्यञ्च पुरोत्तमम् ॥ ७२ ॥ दक्षिणांश्चापि पाञ्चालान्यावच्चर्म्मण्वती नदी । द्रोणेन चैवं द्रुपदः परिभूयाथ पालितः ॥ ७३ ॥ क्षात्रेण च बलेनास्य नापश्यत्स पराजयम्। हीनं विदित्वा चात्मानं ब्राह्मेण स बलेन तु ॥ ७४ ॥ पुत्रजन्म परीप्सन्वै पृथिवीमन्वसञ्चरत्। अहिच्छत्रञ्च विषयं द्रोणः समभिपद्यत ॥ ७५ ॥ एवं राजन्नहिच्छत्रा पुरी जनपदायुता। युधि निर्जित्य पार्थेन द्रोणाय प्रतिपादिता ॥ ७६ ॥

इत्यादिपर्व्वणि सम्भवपर्व्वणि द्रुपदशासने चत्वारिंशदधिकशततोऽध्यायः ॥ १४० ॥

———

वैशम्पायन उवाच। ततः संवत्सरस्यान्ते यौवराज्याय
पार्थिव। स्थापितो धृतराष्ट्रेण पाण्डुपुत्रो युधिष्ठिरः ॥ १ ॥
धृतिस्थैर्य्यसहिष्णुत्वादानृशंस्यात्तथार्ज्जवात्। भृत्यानामनुकम्पार्थं
तथैव स्थिरसौहृदात् ॥ २ ॥ ततो दीर्घेण कालेन कुन्तीपुत्रो
युधिष्ठिरः। पितुरन्तर्दधे कीर्त्तिं शीलवृत्तसमाधिभिः ॥ ३ ॥
असियुद्धे गदायुद्धे रथयुद्धे च पाण्डवः। सङ्कर्षणादशिक्षद्वै
शश्वच्छिक्षां वृकोदरः ॥ ४ ॥ समाप्तशिक्षो भीमस्तु द्युमत्सेनसमो
बले। पराक्रमेण सम्पन्नो भ्रातृणामचरद्वशे ॥ ५ ॥ प्रगाढ-
दृढमुष्टित्वे लाघवे वेधने तथा। क्षुरनाराचभल्लानां विपाठानाञ्च
तत्ववित् ॥ ६ ॥ ऋजुवक्रविशालानां प्रयोक्ता फाल्गुनोऽभवत्।
लाघवे सौष्ठवे चैव नान्यः कश्चन विद्यते। बीभत्सुसदृशो
लोके इति द्रोणो व्यवस्थितः ॥ ७ ॥ ततोऽब्रवीद्गुडाकेशं द्रोणः
कौरवसंसदि। अगस्त्यस्य धनुर्वेदे शिष्यो मम गुरुः पुरा
॥ ८ ॥ अग्निवेश इति ख्यातस्तस्य शिष्योऽस्मि भारत।
तीर्थात्तीर्थं गमयितुमहमेतत्समुद्यतः ॥ ९ ॥ तपसा यन्मया
प्राप्तममोघमशनिप्रभम्। अस्त्रं ब्रह्मशिरो नाम यद्दहेत् पृथिवी-
मपि ॥ १० ॥ ददता गुरुणा चोक्तं न मनुष्येष्विदं त्वया।
भारद्वाज विमोक्तव्यमल्पवीर्य्येष्वपि प्रभो ॥ ११ ॥ त्वया प्राप्त-
मिदं वीर दिव्यं नान्योऽर्हति त्विदम्। समयस्तु त्वया रक्ष्यो
मुनिसृष्टो विशाम्पते ॥ १२ ॥ आचार्य्यदक्षिणां देहि ज्ञाति-
ग्रामस्य पश्यतः। ददानीति प्रतिज्ञाते फाल्गुनेनाब्रवीद्गुरुः
॥ १३ ॥ युद्धेऽहं प्रतियोद्धव्यो युध्यमानस्त्वयानघ। तथेति च
प्रतिज्ञाय द्रोणाय कुरुपुङ्गवः। उपसंगृह्य चरणौ स प्राया-
दुत्तरां दिशम् ॥ १४ ॥ स्वभावादगमच्छब्दो महीं सागरमेख-
लाम्। अर्जुनस्य समो लोके नास्ति कश्चिद्धनुर्धरः ॥ १५ ॥
गदायुद्धेऽसियुद्धे च रथयुद्धे च पाण्डवः। पारगश्च धनुर्युद्धे

बभूवाथ धनञ्जयः ॥ १६ ॥ नीतिमान् सकलां नीतिं विबुधाधिपतेस्तदा । अवाप्य सहदेवोऽपि भ्रातृणां वर्त्तते वशे ॥ १७ ॥ द्रोणेनैव विनीतश्च भ्रातृणां नकुलः प्रियः । चित्रयोधी समाख्यातो बभूवातिरथोदितः ॥ १८ ॥ त्रिवर्षकृतयज्ञस्तु गन्धर्व्वाणामुपप्लवे । अर्ज्जुनप्रमुखैः पार्थैः सौवीरः समरे हतः ॥ १९ ॥ न शशाक वशे कर्त्तुं यं पाण्डुरपि वीर्य्यवान् । सोऽर्ज्जुनेन वशं नीतो राजासीद्यवनाधिपः ॥ २० ॥ अतीव बलसम्पन्नः सदा मानी कुरून् प्रति । विपुलो नाम सौवीरः शस्तः पार्थेन धीमता ॥ २१ ॥ दत्तामित्र इति ख्यातं संग्रामे कृतनिश्चयम् । सुमित्रं नाम सौवीरमर्ज्जुनोऽदमयच्छरैः ॥ २२ ॥ भीमसेनसहायश्च रथानामयुतञ्च सः । अर्ज्जुनः समरे प्राच्यान् सर्वानेकरथोऽजयत् ॥ २३ ॥ तथैवैकरथो गत्वा दक्षिणामजयद्दिशम् । धनौघं प्रापयामास कुरुराष्ट्रं धनञ्जयः ॥ २४ ॥ एवं सर्वे महात्मानः पाण्डवा मनुजोत्तमाः । परराष्ट्राणि निर्जित्य स्वराष्ट्रं ववृधुः पुरा ॥ २५ ॥ ततो बलमतिख्यातं विज्ञाय दृढधन्विनाम् । दूषितः सहसा भावो धृतराष्ट्रस्य पाण्डुषु । स चिन्तापरमो राजा न निद्रामलभन्निशि ॥ २६ ॥

इत्यादिपर्व्वणि सम्भवपर्व्वणि धृतराष्ट्रचिन्तायामेकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

—•:•—

वैशम्पायन उवाच । श्रुत्वा पाण्डुसुतान्वीरान् बलोद्रिक्तान्महौजसः । धृतराष्ट्रो महीपालश्चिन्तामगमदातुरः ॥ १ ॥ तत आहूय मन्त्रज्ञं राजशास्त्रार्थवित्तमम् । कणिकं मन्त्रिणां श्रेष्ठं धृतराष्ट्रोऽब्रवीद्वचः । २ ॥

धृतराष्ट्र उवाच। उत्सिक्ताः पाण्डवा नित्यं तेभ्योऽसूये द्विजोत्तम। तत्र मे निश्चिततमं सन्धिविग्रहकारणम्। कणिक त्वं ममाचक्ष्व करिष्ये वचनं तव॥ ३॥

वैशम्पायन उवाच। स प्रसन्नमनास्तेन परिपृष्टो द्विजोत्तमः। उवाच वचनं तीक्ष्णं राजशास्त्रार्थदर्शनः॥ ४॥

कणिक उवाच। शृणु राजन्निदं तत्र प्रोच्यमानं मयानघ। न मेऽभ्यसूया कर्त्तव्या श्रुत्वैतत् कुरुसत्तम॥ ५॥ नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः। अच्छिद्रश्छिद्रदर्शी स्यात्परेषां विवरानुगः॥ ६॥ नित्यमुद्यतदण्डाद्धि भृशमुद्विजते जनः। तस्मात्सर्वाणि कार्य्याणि दण्डेनैव विधारयेत्॥ ७॥ नास्य च्छिद्रं परः पश्येच्छिद्रेण परमन्वियात्। गूहेत् कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः॥ ८॥ नासम्यक्कृतकारी स्यादुपक्रम्य कदाचन। कण्टको ह्यपि दुश्छिन्न आस्रावं जनयेच्चिरम्॥ ९॥ वधमेव प्रशंसन्ति शत्रूणामपकारिणाम्। सुविदीर्णं सुविक्रान्तं सुयुद्धं सुपलायितम्॥ १०॥ आपद्यापदि काले च कुर्वीत न विचारयेत्। नावज्ञेयो रिपुस्तात दुर्बलोऽपि कथञ्चन। अल्पोऽप्यग्निर्वनं कृत्स्नं दहत्याश्रयसंश्रयात्॥ ११॥ अन्धः स्यादन्धवेलायां बाधिर्य्यमपि चाश्रयेत्। कुर्य्यात्तृणमयं चापं शयीत मृगशायिकाम्॥ १२॥ सान्त्वादिभिरुपायैस्तु हन्याच्छत्रुं वशे स्थितम्। दया न तस्मिन् कर्त्तव्या शरणागत इत्युत॥ १३॥ निरुद्विग्नो हि भवति न हताज्जायते भयम्। हन्यादमित्रं दानेन तथा पूर्वापकारिणम्॥ १४॥ हन्यात् त्रीन् पञ्च सप्तेति परपक्षस्य सर्वशः। मूलमेवादितश्छिन्द्यात्परपक्षस्य नित्यशः॥ १५॥ ततः सहायांस्तत्पक्षान् सर्वांश्च तदनन्तरम्। छिन्नमूले ह्यधिष्ठाने सर्वे तज्जीविनो हताः॥ १६॥ कथं नु शाखास्तिष्ठेरंश्छिन्नमूले वनस्पतौ। एकाग्रः स्यादविवृतो

मित्रं विवरदर्शकः ॥ १७ ॥ राजकार्य्यं सपत्ने तु नित्योद्विग्नः
समाचरेत् । श्मश्रुधारणेन यज्ञेन काषायेण जटाजिनैः ॥ १८ ॥
लोकान्विश्वासयित्वैव ततो लुम्पेद्यथा वृकः । अङ्कुशं शौच-
मित्याहुरर्थानामुपधारणे ॥ १९ ॥ आनाम्य फलितां शाखां
पक्वं पक्वं प्रशातयेत् । फलार्थोऽयं समारम्भो लोके पुंसां विप-
श्चिताम् ॥ २० ॥ वहेदमित्रं स्कन्धेन यावत्कालस्य पर्य्ययः ।
ततः प्रत्यागते काले भिन्द्याद्घटमिवाश्मनि ॥ २१ ॥ अमित्रो न
विमोक्तव्यः कृपणं बह्वपि ब्रुवन् । कृपा न तस्मिन् कर्त्तव्या
हन्यादेवापकारिणम् ॥ २२ ॥ हन्यादमित्रं सान्त्वेन तथा दानेन
वा पुनः । तथैव भेददण्डाभ्यां सर्व्वोपायैः प्रशातयेत् ॥ २३ ॥

धृतराष्ट्र उवाच । कथं सान्त्वेन दानेन भेदैर्दण्डेन वा पुनः ।
अमित्रः शक्यते हन्तुं तन्मे ब्रूहि यथातथम् ॥ २४ ॥

कणिक उवाच । शृणु राजन्यथावृत्तं वने निवसतः पुरा ।
जम्बुकस्य महाराज नीतिशास्त्रार्थदर्शिनः ॥ २५ ॥ अथ कश्चित्
कृतप्रज्ञः शृगालः स्वार्थपण्डितः । सखिभिर्न्यवसत्सार्द्धं व्याघ्राखु-
वृकबभ्रुभिः ॥ २६ ॥ तेऽपश्यन्विपिने तस्मिन्बलिनं मृगयूथपम् ।
अशक्ता ग्रहणे तस्य ततो मन्त्रममन्त्रयन् ॥ २७ ॥

जम्बुक उवाच । असकृद्यतितो ह्येष हन्तुं व्याघ्र वने त्वया ।
युवा वै जवसम्पन्नो बुद्धिशाली न शक्यते ॥ २८ ॥ मूषिकोऽस्य
शयानस्य चरणौ भक्षयत्वयम् । अथैनं भक्षितैः पादैर्व्याघ्रो
गृह्णातु वै ततः ॥ २९ ॥ ततो वै भक्षयिष्यामः सर्व्वे मुदित-
मानसाः । जम्बुकस्य तु तद्वाक्यं तथा चक्रुः समाहिताः ॥ ३० ॥
मूषिकाभक्षितैः पादैर्मृगं व्याघ्रोऽवधीत्तदा । दृष्ट्वैवाचेष्टमानन्तु
भूमौ मृगकलेवरम् । स्नात्वागच्छत भद्रं वो रक्षामीत्याह
जम्बुकः ॥ ३१ ॥ शृगालवचनात्तेऽपि गताः सर्व्वे नदीं ततः ।
स चिन्तापरमो भूत्वा तस्थौ तत्रैव जम्बुकः ॥ ३२ ॥ अथाजगाम

प्रवृत्तन्तु ज्ञात्वा व्याघ्रो महाबलः। ददर्श जम्बुकञ्चैव चिन्ताकुलितमानसम् ॥ ३३ ॥

व्याघ्र उवाच। किं शोचसि महाप्राज्ञ त्वम्भो बुद्धिमतां वरः। अशित्वा पिशितान्यद्य विहरिष्यामहे वनम् ॥ ३४ ॥

जम्बुक उवाच। शृणु मे त्वं महाबाहो यद्वाक्यं मूषिकोऽब्रवीत्। धिग्बलं मृगराजस्य मयाद्यायं मृगो हतः ॥ ३५ ॥ मद्बाहुबलमाश्रित्य तृप्तिमद्य गमिष्यति। गर्जमानस्य तस्यैवमतो भक्ष्यं न रोचये ॥ ३६ ॥

व्याघ्र उवाच। ब्रवीति यदि स ह्येवं काले ह्यस्मिन् प्रबोधितः। स्वबाहुबलमाश्रित्य हनिष्येऽहं वनेचरान्। खादिष्ये तत्र मांसानि इत्युक्त्वा प्रस्थितो वनम् ॥ ३७ ॥ एतस्मिन्नेव काले तु मूषिकोऽप्याजगाम ह। तमागतमभिप्रेक्ष्य शृगालोऽप्यब्रवीद्वचः ॥ ३८ ॥

जम्बुक उवाच। शृणु मूषिक भद्रं ते नकुलो यदिहाब्रवीत्। मृगमांसं न खादेयं गरमेतन्न रोचते ॥ ३९ ॥ मूषिकं भक्षयिष्यामि तद्भवाननुमन्यताम्। तच्छ्रुत्वा मूषिको वाक्यं सन्त्रस्तः प्रगतो बिलम् ॥ ४० ॥ ततः स्नात्वा स वै तत्र आजगाम वृको नृप। तमागतमिदं वाक्यमब्रवीज्जम्बुकस्तदा ॥ ४१ ॥ मृगराजो हि संक्रुद्धो न ते साधु भविष्यति। सकलत्रस्त्विहायाति कुरुष्व यदनन्तरम् ॥ ४२ ॥ एवं सम्बोदितस्तेन जम्बुकेन तदा वृकः। ततोऽवलुम्पनं कृत्वा प्रयातः पिशिताशनः ॥ ४३ ॥ एतस्मिन्नेव काले तु नकुलोऽप्याजगाम ह। तमुवाच महाराज नकुलं जम्बुको वने ॥ ४४ ॥ स्वबाहुबलमाश्रित्य निर्जितास्तेऽन्यतो गताः। मम दत्त्वा नियुद्धं त्वं भुङ्क्ष्व मांसं यथेप्सितम् ॥ ४५ ॥

नकुल उवाच। मृगराजो वृकश्चैव बुद्धिमानपि मूषिकः।

निर्ज्जिता यस्त्वया वीरास्तस्माद्वीरतरो भवान् ॥ ४६ ॥ न त्वयाप्युत्सहे योद्धुमित्युक्त्वा सोऽप्यपागमत् ।

कणिक उवाच । एवं तेषु प्रयातेषु जम्बुको हृष्टमानसः । खादति स्म तदा मांसमेकः सम्मन्त्रनिश्चयात् ॥ ४७ ॥ एवं समाचरन्नित्यं सुखमेधेत भूपतिः । भयेन भेदयेद्भीरुं शूरमञ्जलिकर्म्मणा ॥ ४८ ॥ लुब्धमर्थप्रदानेन समं न्यूनं तथौजसा । एवं ते कथितं राजन् शृणु चाप्यपरं तथा ॥ ४९ ॥ पुत्रः सखा वा भ्राता वा पिता वा यदि वा गुरुः । रिपुस्थानेषु वर्त्तन्तः कर्त्तव्या भूतिमिच्छता ॥ ५० ॥ शपथेनाप्यरिं हन्यादर्थदानेन वा पुनः । विषेण मायया वापि नोपेक्षेत कथञ्चन । उभौ चेत्संशयोपेतौ श्रद्धावांस्तत्र वर्द्धते ॥ ५१ ॥ गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः । उत्पथप्रतिपन्नस्य न्याय्यं भवति शासनम् ॥ ५२ ॥ क्रुद्धोऽप्यक्रुद्धरूपः स्यात् स्मितपूर्व्वाभिभाषिता । न चाप्यन्यमपध्वंसेत्कदाचित्कोपसंयुतः ॥ ५३ ॥ प्रहरिष्यन् प्रियं ब्रूयात् प्रहरन्नपि भारत । प्रहृत्य च कृपायीत शोचेत च रुदेत च ॥ ५४ ॥ आश्वासयेच्चापि परं सान्त्वधर्म्मार्थवृत्तिभिः । अथास्य प्रहरेत्काले यदा विचलिते पथि ॥ ५५ ॥ अपि घोरापराधस्य धर्म्ममाश्रित्य तिष्ठतः । स हि प्रच्छाद्यते दोषः शैलो मेघैरिवासितैः ॥ ५६ ॥ यः स्यादनुप्राप्तवधस्तस्यागारं प्रदीपयेत् । अधनान्नास्तिकांश्चौरान्विषये स्वे न वासयेत् ॥ ५७ ॥ प्रत्युत्थानासनाद्येन सम्प्रदानेन केनचित् । प्रतिविश्रब्धघाती स्यात्तीक्ष्णदंष्ट्रो निमग्नकः ॥ ५८ ॥ अशङ्कितेभ्यः शङ्केत शङ्कितेभ्यश्च सर्व्वशः । अशङ्क्याद्भयमुत्पन्नमपि मूलं निकृन्तति ॥ ५९ ॥ न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् । विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ६० ॥ चारः सुविहितः कार्य्य आत्मनश्च परस्य वा । पाषण्डांस्तापसादींश्च परराष्ट्रेषु योजयेत् ॥ ६१ ॥

उद्यानेषु विहारेषु देवतायतनेषु च । पानागारेषु रथ्यासु सर्व-
तीर्थेषु चाप्यथ ॥ ६२ ॥ चत्वरेषु च कूपेषु पर्वतेषु वनेषु च ।
समवायेषु सर्वेषु सरित्सु च विचारयेत् ॥ ६३ ॥ वाचा भृशं
विनीतः स्याद्धृदयेन तथा क्षुरः । स्मितपूर्वाभिभाषी स्यात् सृष्टो
रौद्रेण कर्मणा ॥ ६४ ॥ अञ्जलिः शपथः सान्त्वं शिरसा पाद-
वन्दनम् । आशाकरणमित्येवं कर्त्तव्यं भूतिमिच्छता ॥ ६५ ॥
सुपुष्पितः स्यादफलः फलवान् स्याद्दुरारुहः । आमः स्यात्पक्व-
संकाशो न च जीर्य्येत कर्हिचित् ॥ ६६ ॥ त्रिवर्गे त्रिविधा
पीडा ह्यनुबन्धास्तथैव च । अनुबन्धाः शुभा ज्ञेयाः पीडास्तु
परिवर्जयेत् ॥ ६७ ॥ धर्मं विचरतः पीडा सापि द्वाभ्यां निय-
च्छति । अर्थस्याप्यर्थलुब्धस्य कामस्यातिप्रवर्त्तिनः ॥ ६८ ॥ अग-
र्वितात्मा युक्तश्च सान्त्वयुक्तोऽनसूयिता । अवेक्षितार्थः शुद्धात्मा
मन्त्रयीत द्विजैः सह ॥ ६९ ॥ कर्मणा येन तेनैव मृदुना दारु-
णेन च । उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ ७० ॥ न
संशयमनारुह्य नरो भद्राणि पश्यति । संशयं पुनरारुह्य यदि
जीवति पश्यति ॥ ७१ ॥ यस्य बुद्धिः परिभवेत्तमतीतेन सान्त्व-
येत् । अनागतेन दुर्बुद्धिं प्रत्युत्पन्नेन पण्डितम् ॥ ७२ ॥ यो-
ऽरिणा सह सन्धाय शयीत कृतकृत्यवत् । स वृक्षाग्रे यथा सुप्तः
पतितः प्रतिबुध्यते ॥ ७३ ॥ मन्त्रसंवरणे यत्नः सदा कार्य्योऽन-
सूयता । आकारमभिरक्षेत चारेणाप्यनुपालितः ॥ ७४ ॥ ना-
च्छित्त्वा परमर्माणि नाकृत्वा कर्म दारुणम् । नाहत्वा मत्स्य-
घातीव प्राप्नोति महतीं श्रियम् ॥ ७५ ॥ कर्षितं व्याधितं क्लिन्न-
मपानीयमघासकम् । परिविश्वस्तमन्दञ्च प्रहर्त्तव्यमरेर्बलम् ॥ ७६ ॥
नार्थिकोऽर्थिनमभ्येति कृतार्थे नास्ति सङ्गतम् । तस्मात्सर्वाणि
साध्यानि सावशेषाणि कारयेत् ॥ ७७ ॥ संग्रहे विग्रहे चैव यत्नः
कार्य्योऽनसूयता । उत्साहश्चापि यत्नेन कर्त्तव्यो भूतिमिच्छता

॥ ७८ ॥ नास्य कृत्यानि बुध्येरन्मित्राणि रिपवस्तथा । आरब्धा-
न्येव पश्येरन् सुपर्य्यवसितान्यपि ॥ ७९ ॥ भीतवत् संविधातव्यं
यावद्भयमनागतम् । आगतन्तु भयं दृष्ट्वा प्रहर्त्तव्यमभीतवत्
॥ ८० ॥ दण्डेनोपनतं शत्रुमनुगृह्णाति यो नरः । स मृत्यु-
मुपगृह्णीयाद्गर्भमश्वतरी यथा ॥ ८१ ॥ अनागतं हि बुध्येत यच्च
कार्य्यं पुरःस्थितम् । न तु बुद्धिक्षयात् किञ्चिदतिक्रामेत् प्रयो-
जनम् ॥ ८२ ॥ उत्साहश्चापि यत्नेन कर्त्तव्यो भूतिमिच्छता ।
विभज्य देशकालौ च दैवं धर्मादयस्त्रयः । नैःश्रेयसौ तु तौ
ज्ञेयौ देशकालाविति स्थितिः ॥ ८३ ॥ तालवत् कुरुते मूलं
बालः शत्रुरुपेक्षितः । गहनेऽग्निरिवोत्सृष्टः क्षिप्रं सञ्जायते
महान् ॥ ८४ ॥ अग्निस्तोकमिवात्मानं सन्धुक्षयति यो नरः ।
स वर्द्धमानो ग्रसते महान्तमपि सञ्चयम् ॥ ८५ ॥ आशां काल-
वतीं कुर्य्यात् कालं विघ्नेन योजयेत् । विघ्नं निमित्ततो ब्रूया-
न्निमित्तं वापि हेतुतः ॥ ८६ ॥ क्षुरो भूत्वा हरेत् प्राणान्निशितः
कालसाधनः । प्रतिच्छन्नो लोमहारी द्विषतां परिकर्त्तनः ॥८७॥
पाण्डवेषु यथान्यायमन्येषु च कुरूद्वह । वर्त्तमानो न मज्जेस्त्वं
तथा कृत्यं समाचर ॥ ८८ ॥ सर्व्वकल्याणसम्पन्नो विशिष्ट इति
निश्चयः । तस्मात्त्वं पाण्डुपुत्रेभ्यो रक्षात्मानं नराधिप ॥ ८९ ॥
भ्रातृभ्यो बलिनो यस्मात् पाण्डुपुत्रा नराधिप । ब्रवीमि तस्मा-
द्विस्पष्टं यत् कर्त्तव्यमरिन्दम ॥ ९० ॥ सपुत्त्रः शृणु तद्राजन्
श्रुत्वा च भव यत्नवान् । यथा भयं न पाण्डुभ्यस्तथा कुरु नराधिप ।
पश्चात्तापो यथा न स्यात्तथा नीतिर्विधीयताम् ॥ ९ ॥

वैशम्पायन उवाच । एवमुक्त्वा सम्प्रतस्थे कणिकः स्वगृहं
ततः । धृतराष्ट्रोऽपि कौरव्यः शोकार्त्तः समपद्यत ॥ ९१ ॥

इत्यादिपर्व्वणि सम्भवपर्व्वणि कणिकवाक्ये द्विचत्वारिंश-
दधिकशततोऽध्यायः समाप्तञ्च सम्भवपर्व्व ॥ १४२ ॥

# अथ जतुगृहपर्व ॥ ८ ॥

वैशम्पायन उवाच । ततः सुबलपुत्रस्तु राजा दुर्योधनश्च । दुःशासनश्च कर्णश्च दुष्टं मन्त्रममन्त्रयन् ॥ १ ॥ ते कौरव्यमनुज्ञाप्य धृतराष्ट्रं नराधिपम् । दहने तु सपुत्रायाः कुन्त्या बुद्धिमकारयन् ॥ २ ॥ तेषामिङ्गितभावज्ञो विदुरस्तत्त्वदर्शिवान् । आकारेण च तं मन्त्रं बुबुधे दुष्टचेतसाम् ॥ ३ ॥ ततो विदितवेद्यात्मा पाण्डवानां हिते रतः । पलायने मतिं चक्रे कुन्त्याः पुत्रैः सहानघः ॥ ४ ॥ ततो वातसहां नावं यन्त्रयुक्तां पताकिनीम् । ऊर्मिक्षमां दृढां कृत्वा कुन्तीमिदमुवाच ह ॥ ५ ॥

विदुर उवाच । एष जातः कुलस्यास्य कीर्तिवंशप्रणाशनः । धृतराष्ट्रः परीतात्मा धर्मं त्यजति शाश्वतम् ॥ ६ ॥ इयं वारिपथे युक्ता तरङ्गपवनक्षमा । नौर्यया मृत्युपाशात्त्वं सपुत्रा मोक्ष्यसे शुभे ॥ ७ ॥

वैशम्पायन उवाच । तच्छ्रुत्वा व्यथिता कुन्ती पुत्रैः सह यशस्विनी । नावमारुह्य गङ्गायां प्रययौ भरतर्षभ ॥ ८ ॥ ततो विदुरवाक्येन नावं विक्षिप्य पाण्डवाः । धनं चादाय तैर्दत्तमरिष्टं प्राविशन्वनम् ॥ ९ ॥ निषादी पञ्चपुत्रा तु जातुषे तत्र वेश्मनि । कारणाभ्यागता दग्धा सह पुत्रैरनागसा ॥ १० ॥ स च म्लेच्छाधमः पापो दग्धस्तत्र पुरोचनः । वञ्चिताश्च दुरात्मानो धार्तराष्ट्राः सहानुगाः ॥ ११ ॥ अविज्ञाता महात्मानो जनानामक्षतास्तथा । जनन्या सह कौन्तेया मुक्ता विदुरमन्त्रिताः ॥१२॥ ततस्तस्मिन् पुरे लोका नगरे वारणावते । दृष्ट्वा जतुगृहं दग्धमन्वशोचन्त दुःखिताः ॥ १३ ॥ राज्ञे च प्रेषयामासुर्वृत्तान्तं निवेदितुम् । संवृत्तस्ते महान् कामः पाण्डवान्दग्धवानसि ॥१४॥ सकामो भव कौरव्य भुङ्क्ष्व राज्यं सपुत्रकः । तच्छ्रुत्वा धृत-

राष्ट्रस्तु सह पुत्रेण शोचयन् ॥ १५ ॥ प्रेतकार्य्याणि च तथा चकार सह बान्धवैः। पाण्डवानां तथा जाता भीष्मश्च कुरु-सत्तमः ॥ १६ ॥

जनमेजय उवाच। पुनर्विस्तरशः श्रोतुमिच्छामि द्विज-सत्तम। दाहं जतुगृहस्यैव पाण्डवानाञ्च मोचणम् ॥ १७ ॥ सुनृशंसमिदं कर्म तेषां क्रूरोपसंहितम्। कीर्त्तयस्व यथाहत्तं परं कौतूहलं मम ॥ १८ ॥

वैशम्पायन उवाच। शृणु विस्तरशो राजन्वदतो मे पर-न्तप। दाहं जतुगृहस्यैतत्पाण्डवानाञ्च मोचणम् ॥ १९ ॥ प्राणाधिकं भीमसेनं क्रतविद्यं धनञ्जयम्। दुर्य्योधनो लक्षयित्वा पर्य्यतप्यत दुर्मनाः ॥ २० ॥ ततो वैकर्त्तनः कर्णः शकुनिश्चापि सौबलः। अनेकैरभ्युपायैस्ते जिघांसन्ति स्म पाण्डवान् ॥ २१ ॥ पाण्डवा अपि तत्सर्वं प्रतिचक्रुर्य्यथागतम्। उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः ॥ २२ ॥ गुणैः समुदितान्दृष्ट्वा पौराः पाण्डुसुतांस्तदा। कथयाञ्चक्रिरे तेषां गुणान् संसत्सु भारत ॥ २३ ॥ राज्यप्राप्तिञ्च सम्प्राप्तं ज्येष्ठं पाण्डुसुतं तदा। कथ-यन्ति स्म सम्भूय चत्वरेषु सभासु च ॥ २४ ॥ प्रज्ञाचक्षुरचक्षुष्ट्वा-द्धृतराष्ट्रो जनेश्वरः। राज्यं न प्राप्तवान् पूर्वं स कथं नृपति-र्भवेत् ॥ २५ ॥ तथा शान्तनवो भीष्मः सत्यसन्धो महाव्रतः। प्रत्याख्याय पुरा राज्यं न स जातु ग्रहीष्यति ॥ २६ ॥ ते वयं पाण्डवज्येष्ठं तरुणं वृद्धशीलिनम्। अभिषिञ्चाम साध्वद्य सत्य-कारुण्यवेदिनम् ॥ २७ ॥ स हि भीष्मं शान्तनवं धृतराष्ट्रञ्च धर्म-वित्। सपुत्रं विविधैर्भोगैर्योजयिष्यति पूजयन् ॥ २८ ॥ तेषां दुर्य्योधनः श्रुत्वा तानि वाक्यानि जल्पताम्। युधिष्ठिरानुरक्तानां पर्य्यतप्यत दुर्मतिः ॥ २९ ॥ स तप्यमानो दुष्टात्मा तेषां वाचो न चक्षमे। ईर्ष्यया चापि सन्तप्तो धृतराष्ट्रमुपागमत् ॥ ३०

ततो विरथितं दृष्ट्वा पितरं प्रतिपूज्य सः। पौरानुरागसन्तप्तः पश्चादिदमभाषत ॥ ३१ ॥

दुर्योधन उवाच। श्रुता मे जल्पतां तात पौराणामशिवा गिरः। त्वामनादृत्य भीष्मञ्च पतिमिच्छन्ति पाण्डवम् ॥ ३२ ॥ मतमेतच्च भीष्मस्य न स राज्यं बुभूषति। अस्माकन्तु परां पीडां चिकीर्षन्ति पुरे जनाः ॥ ३३ ॥ पितृतः प्राप्तवान् राज्यं पाण्डुरात्मगुणैः पुरा। त्वमन्धगुणसंयोगात् प्राप्तं राज्यं न लब्धवान् ॥ ३४॥ स एष पाण्डोर्दायाद्यं यदि प्राप्नोति पाण्डवः। तस्य पुत्रो ध्रुवं प्राप्तस्तस्य तस्यापि चापरः ॥ ३५ ॥ ते वयं राजवंशेन हीनाः सह सुतैरपि। अवज्ञाता भविष्यामो लोकस्य जगतीपते ॥ ३६ ॥ सततं निरयं प्राप्ता परपिण्डोपजीविनः। न भवेम यथा राजंस्तथा नीतिर्विधीयताम् ॥ ३७ ॥ यदि त्वं हि पुरा राजन्निदं राज्यमवाप्तवान्। ध्रुवं प्राप्स्याम च वयं राज्यमप्यवशे जने ॥ ३८ ॥

इत्यादिपर्वणि जतुगृहपर्वणि दुर्योधनेर्ष्यायां त्रिचत्वारिंश-दधिकशततोऽध्यायः ॥ १४३ ॥

—•:•—

वैशम्पायन उवाच। एवं श्रुत्वा तु पुत्रस्य प्रज्ञाचक्षुर्नराधिपः। कणिकस्य च वाक्यानि तानि श्रुत्वा स सर्वशः ॥ १ ॥ धृतराष्ट्रो द्विधाचित्तः शोकार्त्तः समपद्यत। दुर्योधनश्च कर्णश्च शकुनिः सौबलस्तथा ॥ २ ॥ दुःशासनचतुर्थास्ते मन्त्रयामासुरेकतः। ततो दुर्योधनो राजा धृतराष्ट्रमभाषत ॥ ३ ॥ पाण्डवेभ्यो भयं न स्यात्तान्विवासयतां भवान्। निपुणेनाभ्युपायेन नगरं वारणावतम् ॥ ४ ॥ धृतराष्ट्रस्तु पुत्रेण श्रुत्वा वचनमीरितम्। मुहूर्तमिव सञ्चिन्त्य दुर्योधनमथाब्रवीत् ॥ ५ ॥

धृतराष्ट्र उवाच । धर्मनित्यः सदा पाण्डुस्तथा धर्मपरायणः । सर्वेषु ज्ञातिषु तथा मयि त्वासीद्विशेषतः ॥ ६ ॥ नास्मै किञ्चिद्विजानाति भोजनादि चिकीर्षितम् । निवेदयति नित्यं हि मम राज्यं धृतव्रतः ॥ ७ ॥ तस्य पुत्रो यथा पाण्डुस्तथा धर्मपरायणः । गुणवान् लोकविख्यातः पौरवाणां सुसम्मतः ॥ ८ ॥ स कथं शक्यतेऽस्माभिरपाकर्त्तुं बलादितः । पितृपैतामहाद्राज्यात्ससहायो विशेषतः ॥ ९ ॥ भृता हि पाण्डुनामात्या बलञ्च सततं भृतम् । भृताः पुत्राश्च पौत्राश्च तेषामपि विशेषतः ॥ १० ॥ ते पुरा सत्कृतास्तात पाण्डुना नागरा जनाः । कथं युधिष्ठिरस्यार्थे न नो हन्युः सबान्धवान् ॥ ११ ॥

दुर्य्योधन उवाच । एवमेतं यथा तात भावितं दोषमात्मनः । दृष्ट्वा प्रकृतयः सर्वा अर्थमानेन पूजिताः ॥ १२ ॥ ध्रुवमस्मत्सहायास्ते भविष्यन्ति प्रधानतः । अर्थवर्गः सहामात्यो मत्संस्थोऽद्य महीपते ॥ १३ ॥ स भवान् पाण्डवानाशु विवासयितुमर्हति । मृदुनैवाभ्युपायेन नगरं वारणावतम् ॥ १४ ॥ यदा प्रतिष्ठितं राज्यं मयि राजन् भविष्यति । तदा कुन्ती सहापत्या पुनरेष्यति भारत ॥ १५ ॥

धृतराष्ट्र उवाच । दुर्य्योधन ममाप्येतद्धृदि संपरिवर्त्तते । अभिप्रायस्य पापत्वान्नैवं तु विवृणोम्यहम् ॥ १६ ॥ न च भीष्मो न च द्रोणो न च क्षत्ता न गौतमः । विवास्यमानान् कौन्तेयाननुमंस्यन्ति कर्हिचित् ॥ १७ ॥ समा हि कौरवेयाणां वयन्ते चैव पुत्रक । नैते विषममिच्छेयुर्धर्मयुक्ता मनस्विनः ॥ १८ ॥ ते वयं कौरवेयाणामेतेषाञ्च महात्मनाम् । कथं न वध्यतान्तात गच्छेम जगतस्तथा ॥ १९ ॥

दुर्य्योधन उवाच । मध्यस्थः सततं भीष्मो द्रोणपुत्रो मयि स्थितः । यतः पुत्रस्ततो द्रोणो भविता नात संशयः ॥ २० ॥

अपः शारद्वतस्यैव यत एतौ ततो भवेत्। द्रोणश्च भागिनेयश्च न संत्यक्ष्यति कर्हिचित्॥२१॥ क्षत्तार्थबद्धस्त्वस्माकं प्रच्छन्नः संयतः परैः। न चैकः स समर्थोऽस्मान् पाण्डवार्थेऽधिबाधितुम्॥२२॥ सुविस्रब्धः पाण्डुपुत्रान् सह मात्रा प्रवासय। वारणावतमद्यैव यथा यान्ति तथा कुरु॥२३॥ विनिद्रकरणं घोरं हृदि शल्यमिवार्पितम्। शोकपावकमुद्भूतं कर्मणैतेन नाशय॥२४॥

इत्यादिपर्वणि जतुगृहपर्वणि दुर्योधनपरामर्शे चतुश्चत्वारिंशदधिकशततोऽध्यायः॥१४४॥

—•:०—

वैशम्पायन उवाच। ततो दुर्योधनो राजा सर्वाः प्रकृतयः शनैः। अर्थमानप्रदानाभ्यां संजहार सहानुजः॥१॥ धृतराष्ट्रप्रयुक्तास्ते केचित् कुशलमन्त्रिणः। कथयाञ्चक्रिरे रम्यं नगरं वारणावतम्॥२॥ अयं समाजः सुमहान् रमणीयतमो भुवि। उपस्थितः पशुपतेर्नगरे वारणावते॥३॥ सर्वरत्नसमाकीर्णे पुंसां देशे मनोरमे। इत्येवं धृतराष्ट्रस्य वचनाच्चक्रिरे कथाः॥४॥ कथ्यमाने तथा रम्ये नगरे वारणावते। गमने पाण्डुपुत्राणां जज्ञे तत्र मतिर्नृप॥५॥ यदा त्वमन्यत नृपो जातकौतूहला इति। उवाच चैतानथ तान् पाण्डवानम्बिकासुतः॥६॥

धृतराष्ट्र उवाच। ममैते पुरुषा नित्यं कथयन्ति पुनः पुनः। रमणीयतमं लोके नगरं वारणावतम्॥७॥ ते ताता यदि मन्यध्वमुत्सवं वारणावते। सगणाः सान्वयाश्चैव विहरध्वं यथामराः॥८॥ ब्राह्मणेभ्यश्च रत्नानि गायनेभ्यश्च सर्वशः। प्रयच्छध्वं यथाकामं देवा इव सुवर्चसः॥९॥ किञ्चित्कालं विहृ-

त्सवमनुभूय परां मुदम् । इहं वै हास्तिनपुरं सुखिनः पुनरेष्यथ ॥ १० ॥

वैशम्पायन उवाच । धृतराष्ट्रस्य तं काममनुबुद्ध्वा युधिष्ठिरः । आत्मनश्चासहायत्वं तथेति प्रत्युवाच तम् ॥ ११ ॥ ततो भीष्मं शान्तनवं विदुरञ्च महामतिम् । द्रोणञ्च वाह्लिकं चैव सोमदत्तञ्च कौरवम् ॥ १२ ॥ कृपमाचार्य्यपुत्रञ्च भूरिश्रवसमेव च । मान्यानन्यानमात्यांश्च ब्राह्मणांश्च तपोधनान् ॥ १३ ॥ पुरोहितांश्च पौरांश्च गान्धारञ्च यशस्विनीम् । युधिष्ठिरः शनैर्दीन उवाचेदं वचस्तदा ॥ १४ ॥ रमणीये जनाकीर्णे नगरे वारणावते । सगणास्तत्र यास्यामो धृतराष्ट्रस्य शासनात् ॥ १५ ॥ प्रसन्नमनसः सर्वे पुण्या वाचो विमुञ्चत । आशीर्भिर्बृंहितानस्मान्न पापं प्रसहिष्यति ॥ १६ ॥ एवमुक्तास्तु ते सर्वे पाण्डुपुत्रेण कौरवाः । प्रसन्नवदना भूत्वा तेऽन्ववर्त्तन्त पाण्डवान् ॥ १७ ॥ स्वस्त्यस्तु वः पथि सदा भूतेभ्यश्चैव सर्वशः । मा च वोऽस्त्वशुभं किञ्चित् सर्वतः पाण्डुनन्दनाः ॥ १८ ॥ ततः कृतस्वस्त्ययना राज्यलम्भाय पार्थिवाः । कृत्वा सर्वाणि कार्य्याणि प्रययुर्वारणावतम् ॥ १९ ॥

इत्यादिपर्वणि जतुगृहपर्वणि वारणावतयात्रायां पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

वैशम्पायन उवाच। एवमुक्तेषु राज्ञा तु पाण्डुपुत्रेषु भारत। दुर्य्योधनः परं हर्षमगच्छत्स दुरात्मवान्॥ १ ॥ स पुरोचनमेकान्तमानीय भरतर्षभ। गृहीत्वा दक्षिणे पाणौ सचिवं वाक्यमब्रवीत्॥ २ ॥

दुर्य्योधन उवाच। ममेयं वसुसम्पूर्णा पुरोचन वसुन्धरा। यथेयं मम तद्वत्ते स तां रक्षितुमर्हसि॥ ३ ॥ न हि मे कश्चिदन्योऽस्ति विश्वासिकतरस्त्वया। सहायो येन सन्धाय मन्त्रयेयं यथा त्वया॥ ४ ॥ संरक्ष तात मन्त्रञ्च सपत्नांश्च ममोद्धर। निपुणेनाभ्युपायेन यद्ब्रवीमि तथा कुरु॥ ५ ॥ पाण्डवा धृतराष्ट्रेण प्रेषिता वारणावतम्। उत्सवे विहरिष्यन्ति धृतराष्ट्रस्य शासनात्॥ ६ ॥ स त्वं रासभयुक्तेन स्यन्दनेनाशुगामिना। वारणावतमद्यैव यथा यासि तथा कुरु॥ ७ ॥ तत्र गत्वा चतुःशालं गृहं परमसंवृतम्। नगरोपान्तमाश्रित्य कारयेथा महाधनम्॥ ८ ॥ शणसर्जरसादीनि यानि द्रव्याणि कानिचित्। आग्नेयान्युत सन्तीह तानि तत्र प्रदापय॥ ९ ॥ सर्पिस्तैलवसाभिश्च लाक्षया चाप्यनल्पया। मृत्तिकां मिश्रयित्वा त्वं लेपं कुड्येषु दापय॥ १० ॥ शणं तैलं घृतं चैव जतु दारूणि चैव हि। तस्मिन्वेश्मनि सर्वाणि निक्षिपेथाः समन्ततः॥ ११ ॥ यथा च तन्न पश्येरन् परीक्षन्तोऽपि पाण्डवाः। आग्नेयमिति तत्कार्य्यमपि चान्येऽपि मानवाः॥ १३ ॥ वेश्मन्येवं कृते तत्र गत्वा तान् परमार्चितान्। वासयेथाः पाण्डवेयान् कुन्तीञ्च ससुहृज्जनाम्॥ १४ ॥ आसनानि च दिव्यानि यानानि शयनानि च। विधातव्यानि पाण्डूनां यथा तुष्येत वै पिता॥ १५ ॥ यथा च तन्न जानन्ति नगरे वारणावते। तथा सर्वं विधातव्यं यावत्कालस्य पर्य्ययः॥ १६ ॥ ज्ञात्वा च तान् सुविश्वस्तान् शयानानकुतोभयान्। अग्निस्त्वया ततो देयो द्वारतस्तस्य वेश्मनः

॥ १७ ॥ दह्यमाने स्वके गेहे दग्धा इति ततो जनाः। न गर्हयेयुरस्मान्वै पाण्डवार्थाय कर्हिचित् ॥ १८ ॥ स तथेति प्रतिज्ञाय कौरवाय पुरोचनः। प्रायाद्रासभयुक्तेन स्यन्दनेनाशु-गामिना ॥ १९ ॥ स गत्वा त्वरितं राजन्दुर्य्योधनमते स्थितः। यथोक्तं राजपुत्रेण सर्वं चक्रे पुरोचनः ॥ २० ॥

इत्यादिपर्व्वणि जतुगृहपर्व्वणि पुरोचनोपदेशे षट्-चत्वारिंशदधिकशततोऽध्यायः ॥ १४६ ॥

वैशम्पायन उवाच। पाण्डवास्तु रथान्युक्ता सदश्वैरनिलो-पमैः। आरोहमाणा भीष्मस्य पादौ जगृहुरार्त्तवत् ॥ १ ॥ राज्ञश्च धृतराष्ट्रस्य द्रोणस्य च महात्मनः। अन्येषाञ्चैव वृद्धानां कृपस्य विदुरस्य च ॥ २ ॥ एवं सर्वान् कुरून् वृद्धानभिवाद्य यतव्रताः। समालिङ्ग्य समानान्वै बालैश्चाप्यभिवादिताः ॥ ३ ॥ सर्वा मातॄस्तथापृच्छ्य कृत्वा चैव प्रदक्षिणम्। सर्वाः प्रकृतय-श्चैव प्रययुर्वारणावतम् ॥ ४ ॥ विदुरश्च महाप्राज्ञस्तथान्ये कुरु-पुङ्गवाः। पौराश्च पुरुषव्याघ्रानन्वयुः शोककर्षिताः ॥ ५ ॥ तत्र केचिद्ब्रुवन्ति स्म पौरजानपदा नराः। दीनान् दृष्ट्वा पाण्डु-सुतानतीव भृशदुःखिताः ॥ ६ ॥ विषमं पश्यते राजा सर्व्वथा स सुमन्दधीः। कौरव्यो धृतराष्ट्रस्तु न च धर्मं प्रपश्यति ॥ ७ ॥ न हि पापमपापात्मा रोचयिष्यति पाण्डवः। भीमो वा बलिनां श्रेष्ठः कौन्तेयो वा धनञ्जयः ॥ ८ ॥ कुत एव महात्मानौ माद्री-सुतौ करिष्यतः। तान् राज्यं पितृतः प्राप्तान् धृतराष्ट्रो न मृष्यते ॥ ९ ॥ अधर्म्यमिदमत्यन्तं कथं भीष्मोऽनुमन्यते। विवास्यमाना-नस्थाने नगरे योऽभिमन्यते ॥ १० ॥ पितेव हि नृपोऽस्माकमभू-च्छान्तनवः पुरा। विचित्रवीर्य्यो राजर्षिः पाण्डुश्च कुरुनन्दनः

॥ ११ ॥ स तस्मिन् पुरुषव्याघ्रे देवभावं गते सति । राज-
पुत्रानिमान् बालान् धृतराष्ट्रो न मृष्यते ॥ १२ ॥ वयमेतदनि-
च्छन्तः सर्व एव पुरोत्तमात् । गृहान्विहाय गच्छामो यत्र गन्ता
युधिष्ठिरः ॥ २२ ॥ तांस्तथा वादिनः पौरान् दुःखितान्दुःख-
कर्षितः । उवाच मनसा ध्यात्वा धर्मराजो युधिष्ठिरः ॥ २३ ॥
पिता मान्यो गुरुः श्रेष्ठो यदाह पृथिवीपतिः । अशङ्कमानैस्तत्
कार्य्यमस्माभिरिति नो व्रतम् ॥ २४ ॥ भवन्तः सुहृदोऽस्माक-
मस्मान् कृत्वा प्रदक्षिणम् । प्रतिनन्द्य तथाशीर्भिर्निवर्त्तध्वं
यथागृहम् ॥ २५ ॥ यदा तु कार्य्यमस्माकं भवद्भिरुपपत्स्यते ।
तदा करिष्यथास्माकं प्रियाणि च हितानि च ॥ २६ ॥ एवमुक्ता-
स्ततः पौराः कृत्वा चापि प्रदक्षिणम् । आशीर्भिश्चाभिनन्द्यैतान्
जग्मुर्नगरमेव हि ॥ २७ ॥ पौरेषु विनिवृत्तेषु विदुरः सर्वधर्म-
वित् । बोधयन् पाण्डवश्रेष्ठमिदं वचनमब्रवीत् ॥ २८ ॥ प्राज्ञः
प्राज्ञं प्रलापज्ञः प्रलापज्ञमिदं वचः । यो जानाति परप्रज्ञां नीति-
शास्त्रानुसारिणीम् । विज्ञायेह तथा कुर्य्यादापदं निस्तरेद्यथा
॥२९॥ अलोहं निशितं शस्त्रं शरीरपरिकर्त्तनम् । यो वेत्ति न तु
तं घ्नन्ति प्रतिघातविदं द्विषः ॥ ३० ॥ कक्षघ्नः शिशिरघ्नश्च महा-
कक्षे बिलौकसः । न दहेदिति चात्मानं यो रक्षति स जीवति
॥ ३१ ॥ नाचक्षुर्वेत्ति पन्थानं नाचक्षुर्विन्दते दिशः । नाधृति-
र्भूतिमाप्नोति बुध्यस्वैवं प्रबोधितः ॥ ३२ ॥ अनाप्तैर्दत्तमादत्ते
नरः शस्त्रमलोहजम् । श्वाविच्छरणमासाद्य प्रमुच्येत हुता-
शनात् ॥ ३३ ॥ चरन्मार्गान्विजानाति नक्षत्रैर्विन्दते दिशः ।
आत्मना चात्मनः पञ्च पीडयन्नानुपीड्यते ॥ ३४ ॥ एवमुक्तः प्रत्यु-
वाच धर्मराजो युधिष्ठिरः । विदुरं विदुषां श्रेष्ठं ज्ञातमि[illegible]
पाण्डवः ॥ ३५ ॥ अनुशिष्यानुगम्यैतान् कृत्वा चैव प्रदक्षिणम् ।
पाण्डवानभ्यनुज्ञाय विदुरः प्रययौ गृहान् ॥ ३६ ॥ निवृत्ते विदुरे

वैशम्पायन उवाच। ततो रात्र्यां व्यतीतायामन्नमादाय
पाण्डवः। भीमसेनो ययौ तत्र यत्रासौ पुरुषादकः॥४॥
आसाद्य तु वनं तस्य रक्षसः पाण्डवो बली। आजुहाव ततो
नाम्ना तदन्नमुपपादयन्॥५॥ ततः स राक्षसः क्रुद्धो भीमस्य
वचनात्तदा। आजगाम सुसंक्रुद्धो यत्र भीमो व्यवस्थितः॥६॥
महाकायो महावेगो दारयन्निव मेदिनीम्। लोहिताक्षः करा-
लश्च लोहितश्मश्रुमूर्द्धजः॥७॥ आकर्णभिन्नवक्त्रश्च शङ्कुकर्णो
विभीषणः। त्रिशिखां भ्रुकुटीं कृत्वा सन्दश्य दशनच्छदम्॥८॥
भुञ्जानमन्नं तं दृष्ट्वा भीमसेनं स राक्षसः। विवृत्य नयने क्रुद्ध
इदं वचनमब्रवीत्॥९॥ कोऽयमन्नमिदं भुङ्क्ते मदर्थमुपकल्पि-
तम्। पश्यतो मम दुर्बुद्धिर्यियासुर्यमसादनम्॥१०॥ भीम-
सेनस्ततः श्रुत्वा प्रहसन्निव भारत। राक्षसं तमनादृत्य भुङ्क्त एव
पराङ्मुखः॥११॥ रवं स भैरवं कृत्वा समुद्यम्य करावुभौ।
अभ्यद्रवद्भीमसेनं जिघांसुः पुरुषादकः॥१२॥ तथापि परि-
भूयैनं प्रेक्षमाणो वृकोदरः। राक्षसं भुङ्क्त एवान्नं पाण्डवः पर-
वीरहा॥१३॥ अमर्षेण तु संपूर्णः कुन्तीपुत्रं वृकोदरम्।
जघान पृष्ठे पाणिभ्यामुभाभ्यां पृष्ठतः स्थितः॥१४॥ तथा बल-
वता भीमः पाणिभ्यां भृशमाहतः। नैवावलोकयामास राक्षसं
भुङ्क्त एव सः॥१५॥ ततः स भूयः संक्रुद्धो वृक्षमादाय राक्षसः।
ताडयिष्यंस्तदा भीमं पुनरभ्यद्रवद्बली॥१६॥ ततो भीमः शनै-
र्भुक्त्वा तदन्नं पुरुषर्षभः। वार्य्युपस्पृश्य संहृष्टस्तस्थौ युधि महा-
बलः॥१७॥ क्षिप्तं क्रुद्धेन तं वृक्षं प्रतिजग्राह वीर्य्यवान्।
सव्येन पाणिना भीमः प्रहसन्निव भारत॥१८॥ ततः स पुन-
रुद्यम्य वृक्षान् बहुविधान् बली। प्राहिणोद्भीमसेनाय तस्मै
भीमश्च पाण्डवः॥१९॥ तद्वृक्षयुद्धमभवन्महीरुहविनाशनम्।
घोररूपं महाराज नरराक्षसराजयोः॥२०॥ नाम विश्राव्य तु

बधः समभिद्रुत्य पाण्डवम्। भुजाभ्यां परिजग्राह भीमसेनं महाबलम् ॥ २१ ॥ भीमसेनोऽपि तद्रक्षः परिरभ्य महाभुजः। विस्फुरन्तं महाबाहुं विचकर्ष बलाद्बली ॥ २२ ॥ स क्षुभ्यमाणो भीमेन कर्षमाणश्च पाण्डवम्। समयुज्यत तीव्रेण श्रमेण पुरुषादकः ॥ २३ ॥ तयोर्वेगेन महता पृथिवी समकम्पत। पादपांश्च महाकायांश्चूर्णयामासतुस्तदा ॥ २४ ॥ हीयमानन्तु तद्रक्षः समीक्ष्य पुरुषादकम्। निष्पिष्य भूमौ जानुभ्यां समाजघ्ने वृकोदरः ॥ २५ ॥ ततोऽस्य जानुना पृष्ठमवपीड्य बलादिव। बाहुना परिजग्राह दक्षिणेन शिरोधराम् ॥ २६ ॥ सव्येन च कटीदेशे गृह्य वाससि पाण्डवः। तद्रक्षो द्विगुणं चक्रे रुवन्तं भैरवं रवम् ॥ २७ ॥ ततोऽस्य रुधिरं वक्त्रात् प्रादुरासीद्विशाम्पते। भज्यमानस्य भीमेन तस्य घोरस्य रक्षसः ॥ २८ ॥

इत्यादिपर्व्वणि बकवधपर्व्वणि बकभीमयुद्धे पञ्चषष्ट्यधिकशततोऽध्यायः ॥ १६५ ॥

—०:०—

वैशम्पायन उवाच। ततः स भग्नपार्श्वाङ्गो नदित्वा भैरवं रवम्। शैलराजप्रतीकाशो गतासुरभवद्बकः ॥ १ ॥ तेन शब्देन वित्रस्तो जनस्तस्याथ रक्षसः। निष्पपात गृहाद्राजन् सहैव परिचारिभिः ॥ २ ॥ तान् भीतान् विगतज्ञानान् भीमः प्रहरतां वरः। सान्त्वयामास बलवान् समये च न्यवेशयत् ॥ ३ ॥ न हिंस्या मानुषा भूयो युष्माभिरिति कर्हिचित्। हिंसतां हि बधः शीघ्रमेवमेव भवेदिति ॥ ४ ॥ तस्य तद्वचनं श्रुत्वा तानि रक्षांसि भारत। एवमस्त्विति तं प्राहुर्जगृहुः समयञ्च तम् ॥ ५ ॥ ततः प्रभृति रक्षांसि तत्र सौम्यानि भारत। नगरे प्रत्यदृश्यन्त नरैर्नगरवासिभिः ॥ ६ ॥ ततो भीमस्तमादाय गतासुं पुरुषा-

दकम्। द्वारदेशे विनिक्षिप्य जगामानुपलक्षितः ॥ ७ ॥ दृष्ट्वा भीमबलोद्धूतं बकं विनिहतं तदा। ज्ञातयोऽस्य भयोद्विग्नाः प्रतिजग्मुस्ततस्ततः ॥ ८ ॥ ततः स भीमस्तं हत्वा गत्वा ब्राह्मणवेश्म तत्। आचचक्षे यथावृत्तं राज्ञः सर्वमशेषतः ॥ ९ ॥ ततो नरा विनिष्क्रान्ता नगरात्काल्यमेव तु। ददृशुर्निहतं भूमौ राक्षसं रुधिरोक्षितम् ॥ १० ॥ तमद्रिकूटसदृशं विनिकीर्णं भयानकम्। दृष्ट्वा संहृष्टरोमाणो बभूवुस्तत्र नागराः ॥ ११ ॥ एकचक्रां ततो गत्वा प्रवृत्तिं प्रददुः पुरे। ततः सहस्रशो राजन्नरा नगरवासिनः ॥ १२ ॥ तत्राजग्मुर्बकं द्रष्टुं सस्त्रीवृद्धकुमारकाः। ततस्ते विस्मिताः सर्वे कर्म दृष्ट्वातिमानुषम्। दैवतान्यर्चयाञ्चक्रुः सर्व एव विशाम्पते ॥ १३ ॥ ततः प्रगणयामासुः कस्य वारोऽद्य भोजने। ज्ञात्वा चागम्य तं विप्रं पप्रच्छुः सर्व एव ते ॥ १४ ॥ एवं पृष्टः स बहुशो रक्षमाणश्च पाण्डवान्। उवाच नागरान् सर्वानिदं विप्रर्षभस्तदा ॥ १५ ॥ आज्ञापितं मामशने रुदन्तं सह बन्धुभिः। ददर्श ब्राह्मणः कश्चिन्मन्त्रसिद्धो महामनाः ॥१६॥ परिपृच्छ्य स मां पूर्वं परिक्लेशं पुरस्य च। अब्रवीद्ब्राह्मणश्रेष्ठो विश्वास्य प्रहसन्निव ॥ १७ ॥ प्रापयिष्याम्यहं तस्मा अन्नमेतद्दुरात्मने। मन्निमित्तं भयं चापि न कार्यमिति चाब्रवीत् ॥१८॥ स तदन्नमुपादाय गतो बकवनं प्रति। तेन नूनं भवेदेतत्कर्म लोकहितं कृतम् ॥ १९ ॥ ततस्ते ब्राह्मणाः सर्वे क्षत्रियाश्च सुविस्मिताः। वैश्याः शूद्राश्च मुदिताश्चक्रुर्ब्रह्ममहं तदा ॥ २० ॥ ततो जानपदाः सर्वे आजग्मुर्नगरं प्रति। तदद्भुततमं द्रष्टुं पार्थास्तत्रैव चावसन् ॥ २१ ॥

इत्यादिपर्वणि बकवधपर्वणि बकवधे षट्षष्ट्यधिकशततमोऽध्यायः समाप्तञ्चेदं बकवधपर्व ॥ १६६ ॥

## अथ चैत्ररथपर्व ॥ ११ ॥

जनमेजय उवाच। ते तथा पुरुषव्याघ्रा निहत्य बकराक्षसम्। अत ऊर्द्ध्वं ततो ब्रह्मन् किमकुर्वत पाण्डवाः ॥ १ ॥

वैशम्पायन उवाच। तत्रैव न्यवसन् राजन्निहत्य बकराक्षसम्। अधीयानाः परं ब्रह्म ब्राह्मणस्य निवेशने ॥ २ ॥ ततः कतिपयाहस्य ब्राह्मणः संशितव्रतः। प्रतिश्रयार्थी तद्वेश्म ब्राह्मणस्याजगाम ह ॥ ३ ॥ स सम्यक् पूजयित्वा तं विप्रं विप्रर्षभस्तदा। ददौ प्रतिश्रयं तस्मै सदा सर्वातिथिव्रतः ॥ ४ ॥ ततस्ते पाण्डवाः सर्वे सह कुन्त्या नरर्षभाः। उपासाञ्चक्रिरे विप्रं कथयन्तं कथाः शुभाः ॥ ५ ॥ कथयामास देशांश्च तीर्थानि सरितस्तथा। राज्ञश्च विविधाश्चर्यान्देशांश्चैव पुराणि च ॥ ६ ॥ स तत्राकथयद्विप्रः कथान्ते जनमेजय। पाञ्चालेष्वद्भुताकारं याज्ञसेन्याः स्वयम्वरम् ॥ ७ ॥ धृष्टद्युम्नस्य चोत्पत्तिमुत्पत्तिञ्च शिखण्डिनः। अयोनिजत्वं कृष्णाया द्रुपदस्य महामखे ॥ ८ ॥ तदद्भुततमं श्रुत्वा लोके तस्य महात्मनः। विस्तरेणैव पप्रच्छुः कथान्ते पुरुषर्षभाः ॥ ९ ॥

पाण्डवा ऊचुः। कथं द्रुपदपुत्रस्य धृष्टद्युम्नस्य पावकात्। वेदीमध्याच्च कृष्णायाः सम्भवः कथमद्भुतः ॥ १० ॥ कथं द्रोणान्महेष्वासात्सर्वाण्यस्त्राण्यशिक्षत। कथं विप्र सखायौ तौ भिन्नौ कस्य कृतेन वा ॥ ११ ॥

वैशम्पायन उवाच। एवं तैश्चोदितो राजन् स विप्रः पुरुषर्षभैः। कथयामास तत्सर्वं द्रौपदीसम्भवं तदा ॥ १२ ॥

इत्यादिपर्वणि चैत्ररथपर्वणि द्रौपदीसम्भवे सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

ब्राह्मण उवाच । गङ्गाद्वारं प्रति महान्बभूवर्षिर्महातपाः ।
भरद्वाजो महाप्राज्ञः सततं संशितव्रतः ॥ १ ॥ सोऽभिषेक्तुं ततो
गङ्गां पूर्वमेवागतां सतीम् । ददर्शाप्सरसं तत्र घृताचीमाप्लुतामृ-
षिः ॥ २ ॥ तस्या वायुर्नदीतीरे वसनं व्यहरत्तदा । अप-
कृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे तदा ॥ ३ ॥ तस्यां संसक्तमनसः
कौमारब्रह्मचारिणः । चिरस्य रेतश्चस्कन्द तदृषिर्द्रोण आदधे
॥ ७ ॥ ततः समभवद्द्रोणः कुमारस्तस्य धीमतः । अध्यगीष्ट स
वेदांश्च वेदाङ्गानि च सर्वशः ॥ ८ ॥ भरद्वाजस्य तु सखा पृषतो
नाम पार्थिवः । तस्यापि द्रुपदो नाम तदा समभवत् सुतः ॥ ९ ॥
स नित्यमाश्रमं गत्वा द्रोणेन सह पार्षतः । चिक्रीडाध्ययनं चैव
चकार क्षत्रियर्षभः ॥ १० ॥ ततस्तु पृषतेऽतीते स राजा द्रुपदो-
ऽभवत् । द्रोणोऽपि रामं शुश्राव दित्सन्तं वसु सर्वशः ॥ ११ ॥
वनन्तु प्रस्थितं रामं भरद्वाजसुतोऽब्रवीत् । आगतं वित्तकामं
मां विद्धि द्रोणं द्विजोत्तम ॥ १२ ॥

राम उवाच । शरीरमात्रमेवाद्य मया समवशेषितम् ।
अस्त्राणि वा शरीरं वा ब्रह्मन्नेकतमं वृणु ॥ १३ ॥

द्रोण उवाच । अस्त्राणि चैव सर्वाणि तेषां संहारमेव च ।
प्रयोगञ्चैव सर्वेषां दातुमर्हति मे भवान् ॥ १४ ॥

ब्राह्मण उवाच । तथेत्युक्त्वा ततस्तस्मै प्रददौ भृगुनन्दनः ।
प्रतिगृह्य तदा द्रोणः कृतकृत्योऽभवत्तदा ॥ १५ ॥ संप्रहृष्टमना
द्रोणो रामात्परमसम्मतम् । ब्रह्मास्त्रं समनुप्राप्य नरेष्वभ्यधिको-
ऽभवत् ॥ १६ ॥ ततो द्रुपदमासाद्य भारद्वाजः प्रतापवान् ।
अब्रवीत् पुरुषव्याघ्रः सखायं विद्धि मामिति ॥ १७ ॥

द्रुपद उवाच । नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः
सखा । नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते ॥ १८ ॥

ब्राह्मण उवाच । स विनिश्चित्य मनसा पाञ्चाल्यं प्रति बुद्धि-

मान्। जगाम कुरुमुख्यानां नगरं नागसाह्वयम् ॥ १९ ॥ तस्मै पौत्रान् समादाय वसूनि विविधानि च। प्राप्ताय प्रददौ भीष्मः शिष्यान् द्रोणाय धीमते ॥ २० ॥ द्रोणः शिष्यांस्ततः पार्थानिदं वचनमब्रवीत्। समानीय तु तान् शिष्यान् द्रुपदस्यासुखाय वै ॥ २१ ॥ आचार्य्यवेतनं किञ्चिद्धृदि वर्त्तते मम। कृतास्त्रै-स्तत् प्रदेयं स्यात्तदृतं वदतानघाः। सोऽर्जुनप्रमुखैरुक्तस्तथा-स्त्विति गुरुस्तदा ॥ २२ ॥ यदा च पाण्डवाः सर्वे कृतास्त्राः कृतनिश्चयाः। ततो द्रोणोऽब्रवीद्भूयो वेतनार्थमिदं वचः ॥२३॥ पार्षतो द्रुपदो नाम छत्रवत्यां नरेश्वरः। तस्यादाकृष्य तद्राज्यं मम शीघ्रं प्रदीयताम् ॥ २४ ततः पाण्डुसुताः पञ्च निर्जित्य द्रुपदं युधि। द्रोणाय दर्शयामासुर्बद्ध्वा ससचिवं तदा ॥ २५ ॥

द्रोण उवाच। प्रार्थयामि त्वया सख्यं पुनरेव नराधिप। अराजा किल नो राज्ञः सखा भवितुमर्हति ॥ २६ ॥ अतः प्रयतितं राज्ये यज्ञसेन त्वया सह। राजासि दक्षिणे कूले भागीरथ्याहमुत्तरे ॥ २७ ॥

ब्राह्मण उवाच। एवमुक्तो हि पाञ्चाल्यो भारद्वाजेन धीमता। उवाचास्त्रविदां श्रेष्ठो द्रोणं ब्राह्मणसत्तमम् ॥ २८ ॥ एवं भवतु भद्रन्ते भारद्वाज महामते। सख्यं तदेव भवतु शश्वद्यदभिमन्यसे ॥ २९ ॥ एवमन्योन्यमुक्त्वा तौ कृत्वा सख्यमनुत्तमम्। जग्मतु-र्द्रोणपाञ्चाल्यौ यथागतमरिन्दमौ ॥ ३० ॥ असत्कारः स तु महान्मुहूर्त्तमपि तस्य तु। नापैति हृदयाद्राज्ञो दुर्मनाः स कृशोऽभवत् ॥ ३१ ॥

इत्यादिपर्व्वणि चैत्ररथपर्व्वणि द्रौपदीसम्भवे अष्टषष्ट्य-धिकशततोऽध्यायः ॥ १६८ ॥

ब्राह्मण उवाच। अमर्षी द्रुपदो राजा कर्मसिद्धान् द्विज-
र्षभान्। अन्विच्छन् परिचक्राम ब्राह्मणावसथान् बहून्॥ १॥
पुत्रजन्म परीप्सन् वै शोकोपहतचेतनः। नास्ति श्रेष्ठमपत्यं मे
इति नित्यमचिन्तयत्॥ २॥ जातान् पुत्रान् स निर्वेदाद्धिग्-
बन्धूनिति चाब्रवीत्। निःश्वासपरमश्चासीद्द्रोणं प्रतिचिकीर्षया
॥ ३॥ प्रभावं विनयं शिक्षां द्रोणस्य चरितानि च। क्षात्रेण
च बलेनास्य चिन्तयन्नाध्यगच्छत॥ ४॥ प्रतिकर्त्तुं नृपश्रेष्ठो
यतमानोऽपि भारत। अभितः सोऽथ कल्माषीं गङ्गाकूले परि-
भ्रमन्॥ ५॥ ब्राह्मणावसथं पुण्यमाससाद महीपतिः। तत्र
नास्नातकः कश्चिन्न चासीदव्रती द्विजः॥ ६॥ तथैव च महा-
भागः सोऽपश्यच्छंसितव्रतौ। याजोपयाजौ ब्रह्मर्षी शाम्यन्तौ
परमेष्ठिनौ॥ ७॥ संहिताध्ययने युक्तौ गोत्रतश्चापि काश्यपौ।
तारणेयौ युक्तरूपौ ब्राह्मणावृषिसत्तमौ॥ ८॥ स तावामन्त्रया-
मास सर्वकामैरतन्द्रितः। बुद्ध्वा बलं तयोस्तत्र कनीयांसमुपह्वरे
॥ ९॥ प्रपेदे छन्दयन् कामैरुपयाजं धृतव्रतम्। पादशुश्रूषणे
युक्तः प्रियवाक् सर्वकामदः॥ १०॥ अर्चयित्वा यथान्यायमुप-
याजमुवाच सः। येन मे कर्मणा ब्रह्मन् पुत्रः स्याद् द्रोणमृत्यवे।
उपयाज कृते तस्मिन् गवां दातास्मि तेऽर्बुदम्॥ ११॥ यद्वा
तेऽन्यद्द्विजश्रेष्ठ मनसः सुप्रियं भवेत्। सर्वं तत्ते प्रदाताहं न
हि मेऽत्रास्ति संशयः॥ १२॥ इत्युक्तो नाहमित्येवं तमृषिः प्रत्य-
भाषत। आराधयिष्यन् द्रुपदः स तं पर्य्यचरत् पुनः॥ १३॥
ततः संवत्सरस्यान्ते द्रुपदं स द्विजोत्तमः। उपयाजोऽब्रवी-
त्काले राजन्मधुरया गिरा॥ १४॥ ज्येष्ठो भ्राता ममाग्रह्णा-
द्विचरन् गहने वने। अपरिज्ञातशौचायां भूमौ निपतितं फलम्
॥ १५॥ तदपश्यमहं भ्रातुरसाम्प्रतमनुव्रजन्। विमर्शं सङ्करा-
दाने नायं कुर्य्यात्कदाचन॥ १६॥ दृष्ट्वा फलस्य नापश्यद्दोषान्

आपद्यनुबन्धकान्। विविनक्ति न शौचं यः सोऽन्यत्रापि कथं भवेत् ॥ १७ ॥ संहिताध्ययनं कुर्व्वन्वसन् गुरुकुले च यः। भैक्ष्यमुत्सृष्टमन्येषां भुङ्क्ते स्म च यदा तदा ॥ १८ ॥ कीर्त्तयन् गुणमन्नानामघृणी च पुनः पुनः। तं वै फलार्थिनं मन्ये भ्रातरं तर्कचक्षुषा ॥ १९ ॥ तं वै गच्छस्व नृपते स त्वां संयाजयिष्यति। जुगुप्समानो नृपतिर्मनसेदं विचिन्तयन् ॥ २० ॥ उपयाजवचः श्रुत्वा याजस्याश्रममभ्यगात्। अभिसंपूज्य पूजार्हमथ याजमुवाच ह ॥ २१ ॥ अयुतानि ददान्यष्टौ गवां याजय मां विभो। द्रोणवैराभिसन्तप्तं प्रह्लादयितुमर्हसि ॥ २२ ॥ स हि ब्रह्मविदां श्रेष्ठो ब्रह्मास्त्रे चाप्यनुत्तमः। तस्मात् द्रोणः पराजैष्ट मां वै सखिविग्रहे ॥ २३ ॥ क्षत्रियो नास्ति तस्याद्यां पृथिव्यां कश्चिदग्रणीः। कौरवाचार्य्यमुख्यस्य भारद्वाजस्य धीमतः ॥ २४ ॥ द्रोणस्य शरजालानि प्राणिदेहहराणि च। षडरत्नि धनुश्चास्य दृश्यते परमं महत् ॥ २५ ॥ स हि ब्राह्मणवेशेन क्षात्रं वेगमसंशयम्। प्रतिहन्ति महेष्वासो भारद्वाजो महामनाः ॥ २६ ॥ क्षत्रोच्छेदाय विहितो जामदग्न्य इवास्थितः। तस्य ह्यस्त्रबलं घोरमप्रधृष्यं नरैर्भुवि ॥ २७ ॥ ब्राह्मं सन्धारयंस्तेजो हुताहुतिरिवानलः। समेत्य स दहत्याजौ क्षात्रधर्मपुरःसरः ॥ २८ ॥ ब्रह्मक्षत्रे च विहिते ब्राह्मं तेजो विशिष्यते। सोऽहं क्षात्राद्बलाद्धीनो ब्राह्मं तेजः प्रपेदिवान् ॥ २९ ॥ द्रोणाद्विशिष्टमासाद्य भवन्तं ब्रह्मवित्तमम्। द्रोणान्तकमहं पुत्रं लभेयं युधि दुर्ज्जयम् ॥ ३० ॥ तत्कर्म कुरु मे याज वितराम्यर्बुदं गवाम्। तथेत्युक्त्वा तु तं याजो याज्यार्थमुपकल्पयत् ॥ ३१ ॥ गुर्व्वर्थ इति चाकाममुपयाजमचोदयत्। याजो द्रोणविनाशाय प्रतिजज्ञे तथा च सः ॥ ३२ ॥ ततस्तस्य नरेन्द्रस्य उपयाजो महातपाः। आचख्यौ कर्म्म वैतानं तदा पुत्रफलाय वै ॥ ३३ ॥ स च पुत्रो महावीर्य्यो

महातेजा महायशाः। दृश्यते यद्विधो राजन् भविता ते तथा-
विधः ॥ ३४ ॥ भारद्वाजस्य हन्तारं सोऽभिसन्धाय भूपतिः।
आजह्रे तत्तथा सर्वं द्रुपदः कर्मसिद्धये ॥ ३५ ॥ याजस्तु हवन-
स्यान्ते देवीमाह्वापयत्तदा। प्रेहि मां राज्ञि पृषति मिथुनं त्वा-
मुपस्थितम् ॥ ३६ ॥

राज्ञ्युवाच। अवलिप्तं मुखं ब्रह्मन् दिव्यान् गन्धान् बिभर्मि
च। सुतार्थेनोपलब्धास्मि तिष्ठ याज मम प्रिये ॥ ३७ ॥

याज उवाच। याजेन श्रपितं हव्यमुपयाजाभिमन्त्रितम्।
कथं कामं न सन्दध्यात् सा त्वं विप्रेहि तिष्ठ वा ॥ ३८ ॥

ब्राह्मण उवाच। एवमुक्ते तु याजेन हुते हविषि संस्कृते।
उत्तस्थौ पावकात्तस्मात् कुमारो देवसन्निभः ॥ ३९ ॥ ज्वालावर्णो
घोररूपः किरीटी वर्म चोत्तमम्। बिभ्रत् सखड्गः सशरो धनुष्मान्
विनदन्मुहुः ॥ ४० ॥ सोऽध्यारोहद्रथवरं तेन च प्रययौ तदा।
ततः प्रणेदुः पाञ्चालाः प्रहृष्टाः साधुसाध्विति ॥ ४१ ॥ हर्षा-
विष्टांस्ततश्चैतान्नेयं सेहे वसुन्धरा। भयापहो राजपुत्रः पाञ्चा-
लानां यशस्करः ॥ ४२ ॥ राज्ञः शोकापहो जात एष द्रोणवधाय
वै। इत्युवाच महद्भूतमदृश्यं खेचरं तदा ॥ ४३ ॥ कुमारी
चापि पाञ्चाली वेदीमध्यात् समुत्थिता। सुभगा दर्शनीयाङ्गी
स्वसितायतलोचना ॥ ४४ ॥ श्यामा पद्मपलाशाक्षी नीलकुञ्चित-
मूर्द्धजा। ताम्रतुङ्गनखी सुभ्रूश्चारुपीनपयोधरा ॥ ४५ ॥ मानुषं
विग्रहं कृत्वा साक्षादमरवर्णिनी। नीलोत्पलसमो गन्धो यस्याः
क्रोशात् प्रधावति ॥ ४६ ॥ या बिभर्ति परं रूपं यस्या नास्त्यु-
पमा भुवि। देवदानवयक्षाणामीप्सितां देवरूपिणीम् ॥ ४७ ॥
तां चापि जातां सुश्रोणीं वागुवाचाशरीरिणी। सर्वयोषिद्वरा
कृष्णा निनीषुः क्षत्रियान् क्षयम् ॥ ४८ ॥ सुरकार्यमियं काले
करिष्यति सुमध्यमा। अस्या हेतोः कौरवाणां महदुत्पत्स्यते

भयम् ॥ ४८ ॥ तच्छुत्वा सर्वपाञ्चालाः प्रणेदुः सिंहसंघवत् । न चैतान् हर्षसम्पूर्णानियं सेहे वसुन्धरा ॥ ५० ॥ तौ दृष्ट्वा पार्षती याजं प्रपेदे वै सुतार्थिनी । न वै मदन्यां जननीं जानीयातामिमाविति ॥ ५१ ॥ तथेत्युवाच तां याजो राज्ञः प्रियचिकीर्षया । तयोश्च नामनी चक्रुर्द्विजाः सम्पूर्णमानसाः ॥ ५२ ॥ धृष्टत्वादतिधृष्णुत्वाद्धर्म्माद्युत्सम्भवादपि । धृष्टद्युम्नः कुमारोऽयं द्रुपदस्य भवत्विति ॥ ५३ ॥ कृष्णेत्येवाब्रुवन् कृष्णां कृष्णा भूता हि वर्णतः । तथा तन्मिथुनं जज्ञे द्रुपदस्य महामखे ॥ ५४ ॥ धृष्टद्युम्नन्तु पाञ्चाल्यमानीय स्वं निवेशनम् । उपाकरोदस्त्रहेतोर्भारद्वाजः प्रतापवान् ॥ ५५ ॥ अमोक्षणीयं दैवं हि भावि मत्वा महामतिः । तथा तत् कृतवान्द्रोण आत्मकीर्त्त्यनुरक्षणात् ॥५६॥

इत्यादिपर्व्वणि चैत्ररथपर्व्वणि ऊनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

--०:०--

वैशम्पायन उवाच । एतच्छ्रुत्वा तु कौन्तेयाः शल्यविद्धा इवाभवन् । सर्वे चास्वस्थमनसो बभूवुस्ते महाबलाः ॥ १ ॥ ततः कुन्ती सुतान्दृष्ट्वा सर्वांस्तद्गतचेतसः । युधिष्ठिरमुवाचेदं वचनं सत्यवादिनी ॥ २ ॥

कुन्त्युवाच । चिररात्रोषिताः स्मेह ब्राह्मणस्य निवेशने । रममाणाः पुरे रम्ये लब्धभैक्षा महात्मनः ॥ ३ ॥ यानीह रमणीयानि वनान्युपवनानि च । सर्वाणि तानि दृष्टानि पुनः पुनररिन्दम ॥ ४ ॥ पुनर्दृष्टं हि तानीह प्रीणयन्ति न नस्तथा । भैक्ष्यञ्च न तथा वीर लभ्यते कुरुनन्दन ॥ ५ ॥ ते वयं साधु पाञ्चालान् गच्छाम यदि मन्यसे । अपूर्वदर्शनं वीर रमणीयं भविष्यति ॥ ६ ॥ सुभिक्षाश्चैव पाञ्चालाः श्रूयन्ते शत्रुकर्षण ।

यज्ञसेनस्य राजासौ ब्रह्मण्य इति शुश्रुम ॥ ७ ॥ एकत्र चिर-वासश्च क्षमो न च मतो मम। ते तत्र साधु गच्छामो यदि त्वं पुत्र मन्यसे ॥ ८ ॥

युधिष्ठिर उवाच। भवत्या यन्मतं कार्य्यं तदस्माकं परं हितम्। अनुजांस्तु न जानामि गच्छेयुर्नेति वा पुनः ॥ ९ ॥

वैशम्पायन उवाच। ततः कुन्ती भीमसेनमर्जुनं यमजौ तथा। उवाच गमनं ते च तथेत्येवाब्रुवंस्तदा ॥ १० ॥ तत आमन्त्र्य तं विप्रं कुन्ती राजन् सुतैः सह। प्रतस्थे नगरीं रम्यां द्रुपदस्य महात्मनः ॥ ११ ॥

इत्यादिपर्वणि चैत्ररथपर्वणि पाञ्चालदेशयात्रायां सप्तत्य-धिकशततोऽध्यायः ॥१७० ॥

—:o:—

वैशम्पायन उवाच। वसत्सु तेषु प्रच्छन्नं पाण्डवेषु महा-त्मसु। आजगामाथ तान्द्रष्टुं व्यासः सत्यवतीसुतः ॥ १ ॥ तमा-गतमभिप्रेक्ष्य प्रत्युद्गम्य परन्तपाः। प्रणिपत्याभिवाद्यैनं तस्थुः प्राञ्जलयस्तदा ॥ २ ॥ समनुज्ञाप्य तान् सर्वानासीनान्मुनिरब्र-वीत्। प्रच्छन्नं पूजितः पार्थैः प्रीतिपूर्वमिदं वचः ॥ ३ ॥ अपि धर्मेण वर्त्तध्वं शास्त्रेण च परन्तपाः। अपि विप्रेषु पूजा वः पूजार्हेषु न हीयते ॥ ४ ॥ अथ धर्मार्थवद्वाक्यमुक्त्वा स भगवा-नृषिः। विचित्राश्च कथास्तास्ताः पुनरेवेदमब्रवीत् ॥ ५ ॥

व्यास उवाच। आसीत्तपोवने काचिदृषेः कन्या महात्मनः। विलग्नमध्या सुश्रोणी सुभ्रूः सर्वगुणान्विता ॥ ६ ॥ कर्मभिः स्वकृतैः सा तु दुर्भगा समपद्यत। नाध्यगच्छत् पतिं सा तु कन्या रूपवती सती ॥७॥ तपस्तप्तुमथारेभे पत्यर्थमसुखा ततः। तोषयामास तपसा सा किलोग्रेण शङ्करम् ॥ ८ ॥ तस्याः स

भगवांस्तुष्टस्तामुवाच यशस्विनीम् । वरं वरय भद्रं ते वरदोऽस्मीति शङ्करः ॥ ९ ॥ अथेश्वरमुवाचेदमात्मनः सा वचो हितम् । पतिं सर्व्वगुणोपेतमिच्छामीति पुनः पुनः ॥ १० ॥ तामथ प्रत्युवाचेदमीशानो वदतां वरः । पञ्च ते पतयो भद्रे भविष्यन्तीति भारत ॥ ११ ॥ एवमुक्ता ततः कन्या देवं वरदमब्रवीत् । एकमिच्छाम्यहं देव त्वत्प्रसादात्पतिं प्रभो ॥ १२ ॥ पुनरेवाब्रवीद्देव इदं वचनमुत्तमम् । पञ्चकृत्वस्त्वया ह्युक्तः पतिं देहीत्यहं पुनः ॥ १३ ॥ देहमन्यङ्गतायास्ते यथोक्तं तद्भविष्यति । द्रुपदस्य कुले जज्ञे सा कन्या देवरूपिणी । निर्दिष्टा भवतां पत्नी कृष्णा पार्षत्यनिन्दिता ॥ १४ ॥ पाञ्चालनगरे तस्मान्निवसध्वं महाबलाः । सुखिनस्तामनुप्राप्य भविष्यथ न संशयः ॥१५॥ एवमुक्त्वा महाभागः पाण्डवान् स पितामहः । पार्थानामन्त्र्य कुन्तीञ्च प्रातिष्ठत महातपाः ॥ १६ ॥

इत्यादिपर्व्वणि चैत्ररथपर्व्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

---

वैशम्पायन उवाच । गते भगवति व्यासे पाण्डवा हृष्टमानसाः । ते प्रतस्थुः पुरस्कृत्य मातरं पुरुषर्षभाः ॥ १ ॥ समैरुदङ्मुखैर्मार्गैर्यथोद्दिष्टं परन्तपाः । ते त्वगच्छन्नहोरात्रात्तीर्थं सोमाश्रयायणम् ॥ २ ॥ आसेदुः पुरुषव्याघ्रा गङ्गायां पाण्डुनन्दनाः । उल्मुकन्तु समुद्यम्य तेषामग्रे धनञ्जयः । प्रकाशार्थं ययौ तत्र रक्षार्थञ्च महारथः ॥ ३ ॥ तत्र गङ्गाजले रम्ये विविक्ते क्रीडयन् स्त्रियः । ईर्षुर्गन्धर्वराजो वै जलक्रीडामुपागतः ॥ ४ ॥ शब्दं तेषां स शुश्राव नदीं समुपसर्पताम् । तेन शब्देन चाविष्टश्चुक्रोध बलवद्बली ॥ ५ ॥ स दृष्ट्वा पाण्डवांस्तत्र सह मात्रा पर-

न्तपान् । विस्फारयन्धनुर्घोरमिदं वचनमब्रवीत् ॥ ६ ॥ सन्ध्या संरज्यते घोरा पूर्वरात्रागमेषु या । अशीतिभिर्लवैर्हीनं तन्मुहूर्तं प्रचक्षते ॥ ७ ॥ विहितं कामचाराणां यक्षगन्धर्वरक्षसाम् । शेषमन्यन्मनुष्याणां कर्मचारेषु वै स्मृतम् ॥ ८ ॥ लोभात् प्रचारं चरतस्तासु वेलासु वै नरान् । उपक्रान्तान्निगृह्णीमो राक्षसैः सह बालिशान् ॥ ९ ॥ अतो रात्रौ प्राप्नुवतो जलं ब्रह्मविदो जनाः । गर्हयन्ति नरान् सर्वान् बलस्थान्नृपतीनपि ॥ १० ॥ आरात्तिष्ठत मा मह्यं समीपमुपसर्पत । कस्मान्मां नाभिजानीत प्राप्तं भागीरथीजलम् ॥ ११ ॥ अङ्गारपर्णं गन्धर्वं वित्त मां स्वबलाश्रयम् । अहं हि मानी चेर्षुश्च कुवेरस्य प्रियः सखा ॥१२॥ अङ्गारपर्णमित्येवं ख्यातं चेदं वनं मम । अनुगङ्गां चरन् कामांश्चित्रं यत्र रमाम्यहम् ॥ १३ ॥ न कौणपाः शृङ्गिणो वा न देवा न च मानुषाः । इदं समुपसर्पन्ति तत्किं समुपसर्पथ ॥ १४ ॥

अर्जुन उवाच । समुद्रे हिमवत्पार्श्वे गङ्गायामस्य च दुर्मते । रात्रावहनि सन्ध्यायां कस्य गुप्तः परिग्रहः ॥ १५ ॥ भुक्तो वाप्यथ वाभुक्तो रात्रावहनि खेचर । न कालनियमो ह्यस्ति गङ्गां प्राप्य सरिद्वराम् ॥ १६ ॥ वयञ्च शक्तिसम्पन्ना अकाले त्वामधृष्णुम । अशक्ता हि रणे क्रूर युष्मानर्चन्ति मानवाः ॥ १७ ॥ पुरा हिमवतश्चैषा हेमशृङ्गाद्विनिःसृता । गङ्गा गत्वा समुद्राम्भः सप्तधा समपद्यत ॥ १८ ॥ गङ्गाञ्च यमुनाञ्चैव प्लक्षजातां सरस्वतीम् । रथस्थां सरयूञ्चैव गोमतीं गण्डकीं तथा ॥ १९ ॥ अपर्युषितपापास्ते नदीः सप्त पिबन्ति ये । इयं भूत्वा चैकवप्रा शुचिराकाशगा पुनः । देवेषु गङ्गा गन्धर्व प्राप्नोत्यलकनन्दताम् ॥ २० ॥ तथा पितॄन् वैतरणी दुस्तरा पापकर्मभिः । गङ्गा भवति वै प्राप्य कृष्णद्वैपायनोऽब्रवीत् ॥ २१ ॥ असम्बाधा देवनदी स्वर्गसम्पादनी शुभा । कथमिच्छसि तां रोद्धुं नैष धर्मः सनातनः

॥ २२ ॥ अनित्यार्थं समस्वाधं तव वाचा कथं वयम्। न स्पृशेम यथाकामं पुण्यं भागीरथीजलम् ॥ २३ ॥

वैशम्पायन उवाच । अङ्गारपर्णांस्तच्छुत्वा क्रुद्ध आयम्य कार्म्मुकम्। मुमोच वाणान्निशितानहीनाशीविषानिव ॥ २४ ॥ उल्मुकं भ्रामयंस्तूर्णं पाण्डवानाञ्च चोत्तमम्। व्यपोहत शरांस्तस्य सर्व्वानेव धनञ्जयः ॥ २५ ॥

अर्ज्जुन उवाच। विभीषिका वै गन्धर्व्व नास्त्रज्ञेषु प्रयुज्यते। अस्त्रज्ञेषु प्रयुक्तेयं फेनवत् प्रविलीयते ॥ २६ ॥ मानुषानतिगन्धर्व्वान् सर्व्वान् गन्धर्व्व लक्षये। तस्मादस्त्रेण दिव्येन योत्स्येऽहं न तु मायया ॥ २७ ॥ पुरास्त्रमिदमाग्नेयं प्रादात्किल बृहस्पतिः। भरद्वाजाय गन्धर्व्व गुरुर्मान्यः शतक्रतोः ॥ २८ ॥ भरद्वाजादग्निवेश्य अग्निवेश्याद्गुरुर्मम। साध्विदं मह्यमददद्द्रोणो ब्राह्मणसत्तमः ॥ २९ ॥

वैशम्पायन उवाच। इत्युक्त्वा पाण्डवः क्रुद्धो गन्धर्व्वाय मुमोच ह। प्रदीप्तमस्त्रमाग्नेयं ददाहास्य रथन्तु तत् ॥ ३० ॥ विरथं विप्लुतं तन्तु स गन्धर्व्वं महाबलम्। अस्त्रतेजःप्रमूढञ्च प्रपतन्तमवाङ्मुखम् ॥ ३१ ॥ शिरोरुहेषु जग्राह माल्यवत्सु धनञ्जयः। भ्रातॄन् प्रति चकर्षाथ सोऽस्त्रपातादचेतसम् ॥ ३२ ॥ युधिष्ठिरं तस्य भार्य्या प्रपेदे शरणार्थिनी। नाम्ना कुम्भीनसी नाम पतित्राणमभीप्सती ॥ ३३ ॥

गन्धर्व्युवाच। त्रायस्व मां महाभाग पतिं चेमं विमुञ्च मे। गन्धर्व्वीं शरणं प्राप्तां नाम्ना कुम्भीनसी प्रभो ॥ ३४ ॥

युधिष्ठिर उवाच। युद्धे जितं यशोहीनं स्त्रीनाथमपराक्रमम्। को निहन्याद्रिपुं तात मुञ्चेमं रिपुसूदन ॥ ३५ ॥

अर्ज्जुन उवाच। जीवितं प्रतिपद्यस्व गच्छ गन्धर्व्व मा शुचः। प्रदिशत्यभयं तेऽद्य कुरुराजो युधिष्ठिरः ॥ ३६ ॥

गन्धर्व उवाच। जितोऽहं पूर्वकं नाम मुक्त्वाङ्गारपर्णताम्। न च श्लाघे बलेनाङ्ग न नाम्ना जनसंसदि ॥ ३७ ॥ साध्विमं लब्धवांल्लाभं योऽहं दिव्यास्त्रधारिणम्। गान्धर्व्या माययेच्छामि संयोजयितुमर्जुनम् ॥ ३८ ॥ अस्त्राग्निना विचित्रोऽयं दग्धो मे रथ उत्तमः। सोऽहं चित्ररथो भूत्वा नाम्ना दग्धरथोऽभवम् ॥ ३९ ॥ सम्भृता चैव विद्येयं तपसेह मया पुरा। निवेदयिष्ये तामद्य प्राणदाय महात्मने ॥ ४० ॥ संस्तम्भयित्वा तरसा जितं शरणमागतम्। यो रिपुं योजयेत् प्राणैः कल्याणं किं न सोऽर्हति ॥ ४१ ॥ चाक्षुषी नाम विद्येयं यां सोमाय ददौ मनुः। ददौ स विश्वावसवे मम विश्वावसुर्ददौ ॥ ४२ ॥ सेयं कापुरुषं प्राप्ता गुरुदत्ता प्रणश्यति। आगमोऽस्या मया प्रोक्तो वीर्यं प्रति निबोध मे ॥ ४३ ॥ यच्चक्षुषा द्रष्टुमिच्छेत्त्रिषु लोकेषु किञ्चन। तत्पश्येद्यादृशं चेच्छेत्तादृशं द्रष्टुमर्हति ॥ ४४ ॥ एकपादेन षण्मासान् स्थितो विद्यां लभेदिमाम्। अनुनेष्याम्यहं विद्यां स्वयं तुभ्यं व्रतेऽकृते ॥ ४५ ॥ विद्यया ह्यनया राजन्वयं नृभ्यो विशेषिताः। अविशिष्टाश्च देवानामनुभावप्रदर्शिनः ॥४६॥ गन्धर्वजानामश्वानामहं पुरुषसत्तम। भ्रातृभ्यस्तव तुभ्यञ्च पृथग्दाता शतं शतम् ॥ ४७ ॥ देवगन्धर्ववाहास्ते दिव्यवर्णा मनोजवाः। क्षीणाक्षीणा भवन्त्येते न हीयन्ते च रंहसः ॥४८॥ पुरा कृतं महेन्द्रस्य वज्रं वृत्रनिबर्हणम्। दशधा शतधा चैव तच्छीर्णं वृत्रमूर्द्धनि ॥ ४९ ॥ ततो भागीकृतो देवैर्वज्रभाग उपास्यते। लोके यशोधनं किञ्चित्सा वै वज्रतनुः स्मृता ॥५०॥ वज्रपाणिर्ब्राह्मणः स्यात् क्षत्रं वज्ररथं स्मृतम्। वैश्या वै दानवज्राश्च कर्मवज्रा यवीयसः ॥ ५१ ॥ क्षत्रं वज्रस्य भागेन अवध्या वाजिनः स्मृताः। रथाङ्गं वडवा सूते शूराश्चाश्वेषु ये मताः ॥ ५२ ॥ कामवर्णाः कामजवाः कामतः समुपस्थिताः। इति गन्धर्वजाः कामं पूरयिष्यन्ति मे हयाः ॥ ५३ ॥

अर्जुन उवाच । यदि प्रीतेन मे दत्तं संशये जीवितस्य वा । विद्याधनं श्रुतं वापि न तद्गन्धर्व रोचये ॥ ५४ ॥

गन्धर्व उवाच । संयोगो वै प्रीतिकरो महत्सु प्रतिदृश्यते । जीवितस्य प्रदानेन प्रीतो विद्यां ददामि ते ॥ ५५ ॥ त्वत्तोऽप्यहं ग्रहीष्यामि अस्त्रमाग्नेयमुत्तमम् । तथैव योग्यं बीभत्सो चिराय भरतर्षभ ॥ ५६ ॥

अर्जुन उवाच । त्वत्तोऽस्त्रेण वृणोम्यश्वान् संयोगः शाश्वतोऽस्तु नौ । सखे तद्ब्रूहि गन्धर्व युष्मभ्यो यद्भयं भवेत् ॥ ५७ ॥ कारणं ब्रूहि गन्धर्व किं तद्येन स्म धर्षिताः । यान्तो वेदविदः सर्वे सन्तो रात्रावरिन्दमाः ॥ ५८ ॥

गन्धर्व उवाच । अनग्नयोऽनाहुतयो न च विप्रपुरस्कृताः । यूयं ततो धर्षिताः स्थ मया वै पाण्डुनन्दनाः ॥ ५९ ॥ यक्षराक्षसगन्धर्वाः पिशाचोरगदानवाः । विस्तरं कुरुवंशस्य धीमन्तः कथयन्ति ते ॥ ६० ॥ नारदप्रभृतीनान्तु देवर्षीणां मया श्रुतम् । गुणान् कथयतां वीर पूर्व्वेषां तव धीमताम् ॥ ६१ ॥ स्वयं चापि मया दृष्टश्चरता सागराम्बराम् । इमां वसुमतीं कृत्स्नां प्रभावः सुकुलस्य ते ॥ ६२ ॥ वेदे धनुषि चाचार्य्यमभिजानामि तेऽर्ज्जुन । विश्रुतं त्रिषु लोकेषु भारद्वाजं यशस्विनम् ॥ ६३ ॥ धर्मं वायुञ्च शक्रञ्च विजानाम्यश्विनौ तथा । पाण्डुञ्च कुरुशार्दूल षडेतान् कुरुवर्द्धनान् । पितॄनेतानहं पार्थ देवमानुषसत्तमान् ॥ ६४ ॥ दिव्यात्मानो महात्मानः सर्व्वशस्त्रभृतांवराः । भवन्तो भ्रातरः शूराः सर्व्वे सुचरितव्रताः ॥ ६५ ॥ उत्तमाञ्च मनोबुद्धिं भवतां भावितात्मनाम् । जानन्नपि च वः पार्थ कृतवानिह धर्षणम् ॥ ६६ ॥ स्त्रीसकाशे च कौरव्य न पुमान् क्षन्तुमर्हति । धर्षणामात्मनः पश्यन् बाहुद्रविणमाश्रितः ॥ ६७ ॥ नक्तञ्च बलमस्माकं भूय एवाभिवर्द्धते । यतस्ततो मां कौन्तेय सदारं मन्युराविशत्

॥ ६८ ॥ सोऽहं त्वयेह विजितः संख्ये तापत्यवर्द्धन । येन तेनेह
विधिना कीर्त्त्यमानं निबोध मे ॥ ६९ ॥ ब्रह्मचर्य्यं परो धर्म्मः स
चापि नियतस्त्वयि । यस्मात्तस्मादहं पार्थ रणेऽस्मि विजितस्त्वया
॥ ७० ॥ यस्तु स्यात् क्षत्रियः कश्चित्कामवृत्तः परन्तप । नक्तञ्च
युधि युध्येत न स जीवेत्कथञ्चन ॥ ७१ ॥ यस्तु स्यात्कामवृत्तोऽपि
पार्थ ब्रह्मपुरस्कृतः । जयेन्नक्तञ्चरान् सर्वान् सपुरोहितधूर्गतः
॥ ७२ ॥ तस्मात्तापत्य यत्किञ्चिन्नृणां श्रेयं इहेप्सितम् । तस्मिन्
कर्म्मणि योक्तव्या दान्तात्मानः पुरोहिताः ॥ ७३ ॥ वेदे षडङ्गे
निरताः शुचयः सत्यवादिनः । धर्म्मात्मानः कृतात्मानः स्युर्नृ-
पाणां पुरोहिताः ॥ ७४ ॥ जयश्च नियतो राज्ञः स्वर्गश्च तद-
नन्तरम् । यस्य स्याद्धर्म्मविद्वाग्मी पुरोधाः शीलवान् शुचिः ॥७५॥
लाभं लब्धुमलब्धं वा लब्धं वा परिरक्षितुम् । पुरोहितं प्रकु-
र्वीत राजा गुणसमन्वितम् ॥ ७६ ॥ पुरोहितमते तिष्ठेद्य
इच्छेद्भूतिमात्मनः । प्राप्तुं वसुमतीं सर्वां सर्वशः सागराम्बराम्
॥ ७७ ॥ न हि केवलशौर्य्येण तापत्याभिजनेन च । जयेद-
ब्राह्मणः कश्चिद्भूमिं भूमिपतिः क्वचित् ॥ ७८ ॥ तस्मादेवं
विजानीहि कुरूणां वंशवर्द्धन । ब्राह्मणप्रमुखं राज्यं शक्यं
पालयितुं चिरम् ॥ ७९ ॥

इत्यादिपर्व्वणि चैत्ररथपर्व्वणि गन्धर्व्ववाक्ये द्विसप्तत्य-
धिकशततोऽध्यायः ॥ १७२ ॥

---

अर्जुन उवाच । तापत्य इति यद्वाक्यमुक्तवानसि मामिह ।
तदहं ज्ञातुमिच्छामि तापत्यार्थविनिश्चयम् ॥ १ ॥ तपती नाम
का चैषा तापत्या यत्कृते वयम् । कौन्तेया हि वयं साधो तत्त्व-
मिच्छामि वेदितुम् ॥ २ ॥

वैशम्पायन उवाच। एवमुक्तः स गन्धर्वः कुन्तीपुत्रं धनञ्जयम्। विश्रुतां त्रिषु लोकेषु श्रावयामास वै कथाम् ॥ ३ ॥

गन्धर्व उवाच। हन्त ते कथयिष्यामि कथामेतां मनोरमाम्। यथावदखिलां पार्थ सर्वबुद्धिमतां वर ॥ ४ ॥ उक्तवानस्मि येन त्वां तापत्य इति यद्वचः। तत्तेऽहं कथयिष्यामि शृणुष्वैकमना भव ॥ ५ ॥ य एष दिवि धिष्ण्येन नाकं व्याप्नोति तेजसा। एतस्य तपती नाम बभूव सदृशी सुता ॥ ६ ॥ विवस्वतो वै देवस्य सावित्र्यवरजा विभो। विश्रुता त्रिषु लोकेषु तपती तपसा युता ॥ ७ ॥ न देवी नासुरी चैव न यक्षी न च राक्षसी। नाप्सरा न च गन्धर्वी तथा रूपेण काचन ॥ ८ ॥ सुविभक्तानवद्याङ्गी स्वसितायतलोचना। स्वाचारा चैव साध्वी च सुवेशा चैव भामिनी ॥ ९ ॥ न तस्याः सदृशं कञ्चित्त्रिषु लोकेषु भारत। भर्त्तारं सविता मेने रूपशीलगुणश्रुतैः ॥ १० ॥ सम्प्राप्तयौवनां पश्यन्देयां दुहितरन्तु ताम्। नोपलेभे ततः शान्तिं सम्प्रदानं विचिन्तयन् ॥ ११ ॥ अथर्क्षपुत्रः कौन्तेय कुरूणामृषभो बली। सूर्य्यमाराधयामास नृपः सम्वरणस्तदा ॥ १२ ॥ अर्घ्यमाल्योपहाराद्यैर्गन्धैश्च नियतः शुचिः। नियमैरुपवासैश्च तपोभिर्विविधैरपि ॥ १३ ॥ शुश्रूषुरनहंवादी शुचिः पौरवनन्दनः। अंशुमन्तं समुद्यन्तं पूजयामास भक्तिमान् ॥ १४ ॥ ततः कृतज्ञं धर्मज्ञं रूपेणासदृशं भुवि। तपत्याः सदृशं मेने सूर्य्यः सम्वरणं पतिम् ॥ १५ ॥ दातुमैच्छत्ततः कन्यां तस्मै सम्वरणाय ताम्। नृपोत्तमाय कौरव्य विश्रुताभिजनाय च ॥ १६ ॥ यथा हि दिवि दीप्तांशुः प्रभासयति तेजसा। तथा भुवि महीपालो दीप्त्या सम्वरणोऽभवत् ॥ १७ ॥ यथार्च्चयन्ति चादित्यमुद्यन्तं ब्रह्मवादिनः। तथा सम्वरणं पार्थ ब्राह्मणावरजाः प्रजाः ॥ १८ ॥ स सोममतिकान्तत्वादादित्यमतितेजसा। बभूव नृपतिः

श्रीमान् सुदुर्लभां दुर्लभामपि ॥ १९ ॥ एवं गुणस्य नृपतेस्तथा-
वृत्तस्य कौरव। तस्मै दातुं मनश्चक्रे तपतीं तपनः स्वयम् ॥२०॥
स कदाचिदथो राजा श्रीमानमितविक्रमः। चचार मृगयां पार्थ
पर्वतोपवने किल ॥ २१ ॥ चरतो मृगयां तस्य क्षुत्पिपासा-
समन्वितः। ममार राज्ञः कौन्तेय गिरावप्रतिमो हयः ॥ २२ ॥
स मृताश्वश्चरन् पार्थ पद्भ्यामेव गिरौ नृपः। ददर्शासदृशीं
लोके कन्यामायतलोचनाम् ॥ २३ ॥ स एक एकामासाद्य कन्यां
परबलार्दनः। तस्थौ नृपतिशार्दूलः पश्यन्नविचलेक्षणः ॥ २४ ॥
स हि तां तर्कयामास रूपतो नृपतिः श्रियम्। पुनः सन्तर्कया-
मास रवेर्भ्रष्टामिव प्रभाम् ॥ २५ ॥ वपुषा वर्चसा चैव शिखा-
मिव विभावसोः। प्रसन्नत्वे च कान्त्या च चन्द्ररेखामिवामलाम्
॥२६॥ गिरिपृष्ठे तु सा यस्मिन् स्थिता स्वसितलोचना। विभ्राज-
माना शुशुभे प्रतिमेव हिरण्मयी ॥ २७ ॥ तस्या रूपेण स
गिरिर्वेशेन च विशेषतः। स सवृक्षक्षुपलतो हिरण्मय इवाभवत्
॥ २८ ॥ अवमेने च तां दृष्ट्वा सर्वलोकेषु योषितः। अवाप्तं
चात्मनो मेने स राजा चक्षुषः फलम् ॥ २९ ॥ जन्मप्रभृति यत्-
किञ्चिद् दृष्टवान् स महीपतिः। रूपं न सदृशं तस्यास्तर्कयामास
किञ्चन ॥ ३० ॥ यस्या नूनं विधात्राश्याः सदेवासुरमानुषम्।
लोकं निर्मथ्य धात्रेदं रूपमाविष्कृतं कृतम् ॥ ३१ ॥ एवं सन्त-
र्कयामास रूपद्रविणसम्पदा। कन्यामसदृशीं लोके नृपः संव-
रणस्तदा ॥ ३२ ॥ तां च दृष्ट्वैव कल्याणीं कल्याणाभिजनो नृपः।
जगाम मनसा चिन्तां कामबाणेन पीड़ितः ॥ ३३ ॥ दह्यमानः
स तीव्रेण नृपतिर्मन्मथाग्निना। अप्रगल्भां प्रगल्भस्तां तदो-
वाच मनोहराम् ॥ ३४ ॥ कासि कस्यासि रम्भोरु किमर्थं चेह
तिष्ठसि। कथञ्च निर्जनेऽरण्ये चरस्येका शुचिस्मिते ॥ ३५ ॥
त्वं हि सर्वानवद्याङ्गी सर्वाभरणभूषिता। विभूषणमिवैतेषां

भुवनानामभीप्सितम् ॥ ३६ ॥ न देवीं नासुरीं चैव न यक्षीं न च राक्षसीम्। न च भोगवतीं मन्ये न गन्धर्वीं न मानुषीम् ॥ ३७॥ या हि दृष्टा मया काश्चिच्छ्रुता वापि वराङ्गनाः। न तासां सदृशीं मन्ये त्वामहं मत्तकाशिनि ॥ ३८ ॥ दृष्ट्वैव चारु वदने चन्द्रात्कान्ततरं तव। वदनं पद्मपत्राक्षं मां मथ्नातीव मन्मथः ॥ ३९ ॥ एवं तां स महीपालो बभाषे न तु सा तदा। कामार्त्तं निर्जनेऽरण्ये प्रत्यभाषत किञ्चन ॥ ४० ॥ ततो लालप्यमानस्य पार्थिवस्यायतेक्षणा। सौदामिनीव चाभ्रेषु तत्रैवान्तरधीयत ॥ ४१ ॥ तामन्वेष्टुं स नृपतिः परिचक्राम सर्व्वतः। वनं वनजपत्राक्षीं भ्रमन्नुन्मत्तवत्तदा ॥ ४२ ॥ अपश्यमानः स तु तां बहु तत्र विलप्य च। निश्चेष्टः पार्थिवश्रेष्ठो मुहूर्त्तं स व्यतिष्ठत ॥ ४३ ॥

इत्यादिपर्व्वणि चैत्ररथपर्व्वणि तपत्युपाख्याने त्रिसप्तत्यधिकशततोऽध्यायः ॥ १७३ ॥

---

गन्धर्व्व उवाच। अथ तस्यामदृश्यायां नृपतिः काममोहितः। पातनः शत्रुसंघानां पपात धरणीतले ॥ १ ॥ तस्मिन्निपतिते भूमावथ सा चारुहासिनी। पुनः पीनायतश्रोणी दर्शयामास तं नृपम् ॥ २ ॥ अथाबभाषे कल्याणी वाचा मधुरया नृपम्। तं कुरूणां कुलकरं कामाभिहतचेतसम् ॥ ३ ॥ उवाच मधुरं वाक्यं तपती प्रहसन्निव। उत्तिष्ठोत्तिष्ठ भद्रन्ते न त्वमर्हस्यरिन्दम ॥ ४ ॥ मोहं नृपतिशार्दूल गन्तुमाविष्कृतः क्षितौ। एवमुक्तोऽथ नृपतिर्व्वाचा मधुरया तदा ॥ ५ ॥ ददर्श विपुलश्रोणीं तामेवाभिमुखे स्थिताम्। अथ तामसितापाङ्गीमाबभाषे स पार्थिवः ॥ ६ ॥ मन्मथाग्निपरीतात्मा सन्दिग्धाक्षरया गिरा।

साधु त्वमसितापाङ्गि कामार्त्तं मत्तकाशिनि ॥ ७ ॥ भजस्व भज-
मानं मां प्राणा हि प्रजहन्ति माम्। त्वदर्थं हि विशालाक्षि
मामयं निशितैः शरैः ॥ ८ ॥ कामः कमलगर्भाभे प्रति विध्यन्
शाम्यति। हृष्टमेवमनाक्रन्दे भद्रे काममहाहिना ॥ ९ ॥ सा
त्वं पीनायतश्रोणि मामाप्नुहि वरानने। त्वदधीना हि मे प्राणाः
किन्नरोद्गीतभाषिणि ॥ १० ॥ चारुसर्वानवद्याङ्गि पद्मेन्दुप्रति-
मानने। न ह्यहं त्वदृते भीरु शक्ष्यामि खलु जीवितुम् ॥ ११ ॥
कामः कमलपत्राक्षि प्रतिविध्यति मामयम्। तस्मात् कुरु विशा-
लाक्षि मय्यनुक्रोशमङ्गने ॥ १२ ॥ भक्तं मामसितापाङ्गि न परि-
त्यक्तुमर्हसि। त्वं हि मां प्रीतियोगेन त्रातुमर्हसि भाविनि ॥१३॥
त्वद्दर्शनकृतस्नेहं मनश्चलति मे भृशम्। न त्वां दृष्ट्वा पुनरन्यां
द्रष्टुं कल्याणि रोचते ॥ १४ ॥ प्रसीद वशगोऽहं ते भक्तं मां
भज भाविनि। दृष्ट्वैव त्वां वरारोहे मन्मथो भृशमङ्गने ॥ १५ ॥
अन्तर्गतं विशालाक्षि विध्यति स्म पतत्रिभिः। मन्मथाग्निसमु-
द्भूतं दाहं कमललोचने ॥ १६ ॥ प्रीतिसंयोगयुक्ताभिरद्भिः प्रह्ला-
दयस्व मे। पुष्पायुधं दुराधर्षं प्रचण्डशरकार्मुकम् ॥ १७ ॥ त्व-
द्दर्शनसमुद्भूतं विध्यन्तं दुःसहैः शरैः। उपशामय कल्याणि
आत्मदानेन भाविनि ॥ १८ ॥ गान्धर्वेण विवाहेन मामुपैहि वरा-
ङ्गने। विवाहानां हि रम्भोरु गान्धर्वः श्रेष्ठ उच्यते ॥ १९ ॥

तपस्युवाच। नाहमीशात्मनो राजन् कन्या पितृमती ह्यहम्।
मयि चेदस्ति ते प्रीतिर्याचस्व पितरं मम ॥ २० ॥ यथा हि ते
मया प्राणाः संगृहीता नरेश्वर। दर्शनादेव भूयस्त्वं तथा
प्राणाम्ममाहरः ॥२१॥ न चाहमीशा देहस्य तस्मान्नृपतिसत्तम।
समीपं नोपगच्छामि न स्वतन्त्रा हि योषितः ॥ २२ ॥ का हि
सर्वेषु लोकेषु विश्रुताभिजनं नृपम्। कन्या नाभिलषेन्नाथं भर्त्तारं
भक्तवत्सलम् ॥ २३ ॥ तस्मादेव गते काले याचस्व पितरं मम।

आदित्यं प्रणिपातेन तपसा नियमेन च ॥ २४ ॥ स चेत्कामयते दातुं तव मामरिसूदन । भविष्याम्यद्य ते राजन् सततं वशवर्त्तिनी ॥ २५ ॥ अहं हि तपती नाम सावित्र्यवरजा सुता । अस्य लोकप्रदीपस्य सवितुः क्षत्रियर्षभ ॥ २६ ॥

इत्यादिपर्व्वणि चैत्ररथपर्व्वणि तपत्युपाख्याने चतुःसप्तत्यधिकशततोऽध्यायः ॥ १७४ ॥

—०:०—

गन्धर्व्व उवाच । एवमुक्त्वा ततस्तूर्णं जगामोर्द्ध्वमनिन्दिता । स तु राजा पुनर्भूमौ तत्रैव निपपात ह ॥ १ ॥ अन्वेषमाणः सबलस्तं राजानं नृपोत्तमम् । अमात्यः सानुयात्रश्च तं ददर्श महावने ॥ २ ॥ क्षितौ निपतितं काले शक्रध्वजमिवोच्छ्रितम् । तं हि दृष्ट्वा महेष्वासं निरस्तं पतितं भुवि ॥ ३ ॥ बभूव सोऽस्य सचिवः संप्रदीप्त इवाग्निना । त्वरया चोपसङ्गम्य स्नेहादागतसम्भ्रमः ॥ ४ ॥ तं समुत्थापयामास नृपतिं काममोहितम् । भूतलाद्भूमिपालेशं पितेव पतितं सुतम् ॥ ५ ॥ प्रज्ञया वयसा चैव वृद्धः कीर्त्त्या नयेन च । अमात्यस्तं समुत्थाप्य बभूव विगतज्वरः ॥ ६ ॥ उवाच चैनं कल्याण्या वाचा मधुरयोत्थितम् । मा भैर्मनुजशार्दूल भद्रमस्तु तवानघ ॥ ७ ॥ क्षुत्पिपासापरिश्रान्तं तर्कयामास वै नृपम् । पतितं पातनं संख्ये शात्रवाणां महीतले ॥ ८ ॥ वारिणा च सुशीतेन शिरस्तस्याभ्यषेचयत् । अस्पृशन्मुकुटं राज्ञः पुण्डरीकसुगन्धिना ॥ ९ ॥ ततः प्रत्यागतप्राणस्तद्बलं बलवान्नृपः । सर्व्वं विसर्जयामास तमेकं सचिवं विना ॥ १० ॥ ततस्तस्याज्ञया राज्ञो विप्रतस्थे महद्बलम् । स तु राजा गिरिप्रस्थे तस्मिन् पुनरुपाविशत् ॥ ११ ॥ ततस्तस्मिन् गिरिवरे शुचिर्भूत्वा कृताञ्जलिः । आरिराधयिषुः सूर्य्यं तस्था-

वृत्तेऽनुगः क्षितौ ॥ १२ ॥ जगाम मनसा चैव वशिष्ठमृषिसत्तमम्। पुरोहितममित्रघ्नं तदा सम्बरणो नृपः ॥ १३ ॥ नक्तन्दिनमथैकत्र स्थिते तस्मिन् जनाधिप। अथाजगाम विप्रर्षिस्तदा द्वादशमेऽहनि ॥ १४ ॥ स विदित्वैव नृपतिं तपत्या हृतमानसम्। दिव्येन विधिना ज्ञात्वा भावितात्मा महानृषिः ॥ १५ ॥ तथा तु नियतात्मानं तं नृपं मुनिसत्तमः। आबभाषे स धर्मात्मा तस्यैवार्थचिकीर्षया ॥ १६ ॥ स तस्य मनुजेन्द्रस्य पश्यतो भगवानृषिः। ऊर्द्ध्वमाचक्रमे द्रष्टुं भास्करं भास्करद्युतिः ॥ १७ ॥ सहस्रांशुं ततो विप्रः कृताञ्जलिरुपस्थितः। वशिष्ठोऽहमिति प्रीत्या स चात्मानं न्यवेदयत् ॥ १८ ॥ तमुवाच महातेजा विवस्वान्मुनिसत्तमम्। महर्षे स्वागतं तेऽस्तु कथयस्व यथेप्सितम् ॥ १९ ॥ यदिच्छसि महाभाग मत्तः प्रवदतांवर। तत्ते दद्यामभिप्रेतं यद्यपि स्यात् सुदुष्करम् ॥ २० ॥ एवमुक्तः स तेनर्षिर्वशिष्ठः प्रत्यभाषत। प्रणिपत्य विवस्वन्तं भानुमन्तं महातपाः ॥ २१ ॥

वशिष्ठ उवाच। येषा ते तपती नाम सावित्र्यवरजा सुता। तां त्वां सम्बरणस्यार्थे वरयामि विभावसो ॥ २२ ॥ स हि राजा बृहत्कीर्त्तिर्धर्मार्थविदुदारधीः। युक्तः सम्बरणो भर्त्ता दुहितुस्ते विहङ्गम ॥ २३ ॥ इत्युक्तः स तदा तेन ददानीत्येव निश्चितः। प्रत्यभाषत तं विप्रं प्रतिनन्द्य दिवाकरः ॥ २४ ॥ वरः सम्बरणो राज्ञां त्वमृषीणां वरो मुने। तपती योषितां श्रेष्ठा किमन्यदपवर्जनात् ॥ २५ ॥ ततः सर्वानवद्याङ्गीं तपतीं तपनः स्वयम्। ददौ सम्बरणस्यार्थे वशिष्ठाय महात्मने ॥ २६ ॥ प्रतिजग्राह तां कन्यां महर्षिस्तपतीं तदा। वशिष्ठोऽथ विसृष्टस्तु पुनरेवाजगाम ह ॥ २७ ॥ यत्र विख्यातकीर्त्तिः स कुरूणामृषभोऽभवत्। स राजा मन्मथाविष्टस्तद्गतेनान्तरात्मना ॥ २८ ॥ दृष्ट्वा च देवकन्यां तां तपतीं चारुहासिनीम्। वशिष्ठेन सहा-

यान्तीं संहृष्टोऽभ्यधिकं बभौ ॥ २९ ॥ ववृधे साधिकं सुभ्रूराप-
तन्ती नभस्तलात्। सौदामिनीव विभ्रष्टा द्योतयन्ती दिशस्त्विषा
॥ ३० ॥ कृच्छ्रात् द्वादशरात्रे तु तस्य राज्ञः समाहिते। आज-
गाम विशुद्धात्मा वशिष्ठो भगवानृषिः ॥ ३१ ॥ तपसाराध्य वरदं
देवं गोपतिमीश्वरम्। लेभे संवरणो भार्य्यां वशिष्ठस्यैव तेजसा
॥ ३२ ॥ ततस्तस्मिन् गिरिश्रेष्ठे देवगन्धर्व्वसेविते। जग्राह विधि-
वत्पाणिं तपत्याः स नरर्षभः ॥ ३३ ॥ वशिष्ठेनाभ्यनुज्ञातस्तस्मि-
न्नेव धराधरे। सोऽकामयत राजर्षिर्विहर्त्तुं सह भार्य्यया ॥३४॥
ततः पुरे च राष्ट्रे च वनेषूपवनेषु च। आदिदेश महीपाल-
स्तमेव सचिवं तदा ॥ ३५ ॥ नृपतिं त्वभ्यनुज्ञाप्य वशिष्ठोऽथाप-
चक्रमे। सोऽथ राजा गिरौ तस्मिन् विजहारामरो यथा ॥ ३६ ॥
ततो द्वादशवर्षाणि काननेषु वनेषु च। रेमे तस्मिन् गिरौ राजा
तथैव सह भार्य्यया ॥ ३७ ॥ तस्य राज्ञः पुरे तस्मिन् समा
द्वादश सत्तम। न ववर्ष सहस्राक्षो राष्ट्रे चैवास्य भारत ॥३८॥
ततस्तस्यामनावृष्ट्यां प्रवृत्तायामरिन्दम। प्रजाः क्षयमुपाजग्मुः
सर्व्वाः सस्थाणुजङ्गमाः ॥ ३९ ॥ तस्मिंस्तथाविधे काले वर्त्तमाने
सुदारुणे। नावश्यायः पपातोर्व्व्यां ततः शस्यानि नारुहन् ॥४०॥
ततो विभ्रान्तमनसो जनाः क्षुद्भयपीड़िताः। गृहाणि सम्परि-
त्यज्य बभ्रमुः प्रदिशो दिशः ॥ ४१ ॥ ततस्तस्मिन् पुरे राष्ट्रे
त्यक्तदारपरिग्रहाः। परस्परममर्य्यादाः क्षुधार्त्ता जघ्निरे जनाः
॥ ४२ ॥ तत् क्षुधार्त्तैर्निराहारैः शवभूतैस्तथा नरैः। अभवत्
प्रेतराजस्य पुरं प्रेतैरिवावृतम् ॥ ४३ ॥ ततस्तु तादृशं दृष्ट्वा स
एव भगवानृषिः। अभ्यवर्षत धर्मात्मा वशिष्ठो मुनिसत्तमः ॥४४॥
तञ्च पार्थिवशार्दूलमानयामास तत् पुरम्। तपत्या सहितं
राजन् व्युषितं शाश्वतीः समाः ॥ ४५ ॥ ततः प्रविष्टस्तत्रासी-
द्यथापूर्व्वं सुरारिहा। तस्मिन्नृपतिशार्दूले प्रविष्टे नगरं पुनः

॥ ४६ ॥ प्रववर्ष सहस्राक्षः शस्यानि जनयन् प्रभुः। ततः सराष्ट्रं मुमुदे तत् पुरं परया मुदा। तेन पार्थिवमुख्येन भावितं भावितात्मना ॥ ४७ ॥ ततो द्वादशवर्षाणि पुनरीजे नराधिपः। तपत्या सहितः पत्न्या यथा शच्या मरुत्पतिः ॥ ४८ ॥

गन्धर्व उवाच। एवमासीन्महाभागा तपती नाम पौर्विकी। तव वैवस्वती पार्थ तापत्यस्त्वं यया मतः ॥ ४९ ॥ तस्यां सञ्जनयामास कुरुं संवरणो नृपः। तपत्यां तपतां श्रेष्ठ तापत्यस्त्वं ततोऽर्जुन ॥ ५० ॥

इत्यादिपर्वणि चैत्ररथपर्वणि तापत्ये पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

—•:•—

वैशम्पायन उवाच। स गन्धर्ववचः श्रुत्वा तत्तदा भरतर्षभ। अर्जुनः परया भक्त्या पूर्णचन्द्र इवाबभौ ॥ १ ॥ उवाच च महेष्वासो गन्धर्वं कुरुसत्तमः। जातकौतूहलोऽतीव वशिष्ठस्य तपोबलात् ॥ २ ॥ वशिष्ठ इति यस्यैतदृषेर्नाम त्वयेरितम्। एतदिच्छाम्यहं श्रोतुं यथावत्तद्वदस्व मे ॥ ३ ॥ य एष गन्धर्वपते पूर्वेषां नः पुरोहितः। आसीदेतन्ममाचक्ष्व क एष भगवानृषिः ॥ ४ ॥

गन्धर्व उवाच। ब्रह्मणो मानसः पुत्रो वशिष्ठोऽरुन्धतीपतिः। तपसा निर्जितौ शश्वदजेयावमरैरपि ॥ ५ ॥ कामक्रोधावुभौ यस्य चरणौ संववाहतुः। यस्तु नोच्छेदनं चक्रे कुशिकानामुदारधीः ॥ ६ ॥ विश्वामित्रापराधेन धारयन्मन्युमुत्तमम्। पुत्रव्यसनसन्तप्तः शक्तिमानप्यशक्तवत् ॥ ७ ॥ विश्वामित्रविनाशाय न चक्रे कर्म दारुणम्। मृतांश्च पुनराहर्तुं यः स पुत्रान् यमक्षयात् ॥ ८ ॥ कृतान्तं नातिचक्राम वेलामिव महोदधिः।

यं प्राप्य विजितात्मानं महात्मानं नराधिपाः ॥ ९ ॥ इक्ष्वाकवो महीपाला लेभिरे पृथिवीमिमाम् । पुरोहितमिमं प्राप्य वशिष्ठ-मृषिसत्तमम् ॥ १० ॥ ईजिरे क्रतुभिश्चैव नृपास्ते कुरुनन्दन । स हि तान्याजयामास सर्वान्नृपतिसत्तमान् । ब्रह्मर्षिः पाण्डव-श्रेष्ठ वृहस्पतिरिवामरान् ॥ ११ ॥ तस्माद्धर्म्मप्रधानात्मा वेदधर्म-विदीप्सितः । ब्राह्मणो गुणवान् कश्चित् पुरोधाः प्रतिदृश्यताम् ॥ १२ ॥ क्षत्रियेणाभिजातेन पृथिवीं जेतुमिच्छता । पूर्व्वं पुरो-हितः कार्य्यः पार्थ राज्याभिवृद्धये । महीं जिगीषता राज्ञा ब्रह्म-कार्य्यं पुरःसरम् ॥१३॥ तस्मात् पुरोहितः कश्चिद्गुणवान्विजिते-न्द्रियः । विद्वान् भवतु वो विप्रो धर्म्मकामार्थतत्त्ववित् ॥ १४ ॥

इत्यादिपर्व्वणि चैत्ररथपर्व्वणि पुरोहितकरणकथने षट्-सप्तत्यधिकशततोऽध्यायः ॥ १७६ ॥

---

अर्जुन उवाच । किं निमित्तमभूद्वैरं विश्वामित्रवशिष्ठयोः । वसतोराश्रमे दिव्ये शंस नः सर्व्वमेव तत् ॥ १ ॥

गन्धर्व्व उवाच । इदं वाशिष्ठमाख्यानं पुराणं परिचक्षते । पार्थ सर्व्वेषु लोकेषु यथावत्तन्निबोध मे ॥ २ ॥ कान्यकुब्जे महा-नासीत्पार्थिवो भरतर्षभ । गाधीति विश्रुतो लोके कुशिकस्यात्म-सम्भवः ॥ ३ ॥ तस्य धर्म्मात्मनः पुत्रः समृद्धबलवाहनः । विश्वा-मित्र इति ख्यातो बभूव रिपुमर्द्दनः ॥ ४ ॥ स चचार सहामात्यो मृगया गहने वने । मृगान्विध्यन्वराहांश्च रम्येषु मरुधन्वसु ॥ ५ ॥ व्यायामकर्षितः सोऽथ मृगलिप्सुः पिपासितः । आजगाम नर-श्रेष्ठ वशिष्ठस्याश्रमं प्रति ॥ ६ ॥ तमागतमभिप्रेक्ष्य वशिष्ठः श्रेष्ठ-भाग्टषिः । विश्वामित्रं नरश्रेष्ठं प्रतिजग्राह पूजया ॥ ७ ॥

पाद्यार्घ्याचमनीयेन स्वागतेन च भारत। तथैव परिजग्राह वन्येन हविषा तथा ॥ ८ ॥ तस्याथ कामधुग्धेनुर्वसिष्ठस्य महात्मनः। उक्ता कामान् प्रयच्छेति सा कामान्दुदुहे तदा ॥ ९ ॥ ग्राम्यारण्यौषधीश्च दुदुहे पय एव च। षड्रसं चामृतनिभं रसायनमनुत्तमम् ॥ १० ॥ भोजनीयानि पेयानि भक्ष्याणि विविधानि च। लेह्यान्यमृतकल्पानि चोष्याणि च तथार्जुन ॥ ११ ॥ रत्नानि च महार्हाणि वासांसि विविधानि च। तैः कामैः सर्वसंपूर्णैः पूजितश्च महीपतिः। सामात्यः सबलश्चैव तुतोष स भृशं तदा ॥ १२ ॥ षडुन्नतां सुपार्श्वोरुं पृथुपञ्चसमावृताम्। मण्डूकनेत्रां स्वाकारां पीनोधसमनिन्दिताम् ॥ १३ ॥ सुवालधिं शङ्कुकर्णां चारुशृङ्गां मनोरमाम्। पुष्टायतशिरोग्रीवां विस्मितः सोऽभिवीक्ष्य ताम् ॥ १४ ॥ अभिनन्द्य स तां राजन्नन्दिनीं गाधिनन्दनः। अब्रवीच्च भृशं तुष्टः स राजा तमृषिं तदा ॥ १५ ॥ अर्बुदेन गवां ब्रह्मन्मम राज्येन वा पुनः। नन्दिनीं संप्रयच्छस्व भुङ्क्ष्व राज्यं महामुने ॥ १६ ॥

वसिष्ठ उवाच। देवतातिथिपित्रर्थं याज्यार्थञ्च पयस्विनी। अदेया नन्दिनीयं वै राज्येनापि तवानघ ॥ १७ ॥

विश्वामित्र उवाच। क्षत्रियोऽहं भवान्विप्रस्तपःस्वाध्यायसाधनः। ब्राह्मणेषु कुतो वीर्यं प्रशान्तेषु धृतात्मसु ॥ १८ ॥ अर्बुदेन गवां यस्त्वं न ददासि ममेप्सिताम्। स्वधर्मं न प्रहास्यामि नेष्यामि च बलेन गाम् ॥ १९ ॥

वसिष्ठ उवाच। बलस्थश्चासि राजा च बाहुवीर्यश्च क्षत्रियः। यथेच्छसि तथा क्षिप्रं कुरु मा त्वं विचारय ॥ २० ॥

गन्धर्व उवाच। एवमुक्तस्तथा पार्थ विश्वामित्रो बलादिव। हंसचन्द्रप्रतीकाशां नन्दिनीं तां जहार गाम् ॥ २१ ॥ कशादण्डप्रणुदिता काल्यमानेतस्ततः। हम्भायमाना कल्याणी वसि-

छम्भाथ नन्दिनी ॥ २१ ॥ आगम्याभिमुखी पार्थ तस्थौ भगव-न्मुखी। भग्यमाना ताड्यमाना वै न जगामाश्रमात्ततः ॥ २२ ॥

वशिष्ठ उवाच। शृणोमि ते रवं भद्रे विनदन्त्याः पुनः पुनः। ह्रियसे त्वं बलाद्भद्रे विश्वामित्रेण नन्दिनि। किं कर्त्तव्यं मया तत्र क्षमावान् ब्राह्मणो ह्यहम् ॥ २४ ॥

गन्धर्व उवाच। सा भयान्नन्दिनी तेषां बलानां भरतर्षभ। विश्वामित्रभयोद्विग्ना वशिष्ठं समुपागमत् ॥ २५ ॥

गौरुवाच। कशाग्रदण्डाभिहतां क्रोशन्तीं मामनाथवत्। विश्वामित्रबलैर्घोरैर्भगवन् किमुपेक्षसे ॥ २६ ॥

गन्धर्व उवाच। नन्दिन्यामेवं क्रन्दन्त्यां धर्षितायां महा-मुनिः। न चुक्षुभे तदा धैर्य्यान्न चचाल धृतव्रतः ॥ २७ ॥

वशिष्ठ उवाच। क्षत्रियाणां बलं तेजो ब्राह्मणानां क्षमा बलम्। क्षमा मां भजते यस्माद्गम्यतां यदि रोचते ॥ २८ ॥

नन्दिन्युवाच। किन्नु त्यक्तास्मि भगवन्यदेवं त्वं प्रभाषसे। अत्यक्ताहं त्वया ब्रह्मन्नेतुं शक्या न वै बलात् ॥ २९ ॥

वशिष्ठ उवाच। न त्वां त्यजामि कल्याणि स्थीयतां यदि शक्यते। दृढेन दाम्ना बद्ध्वैष वत्सस्ते ह्रियते बलात् ॥ ३० ॥

गन्धर्व उवाच। स्थीयतामिति तच्छ्रुत्वा वशिष्ठस्य पय-स्विनी। ऊर्द्धाञ्चितशिरोग्रीवा प्रबभौ रौद्रदर्शना ॥ ३१ ॥ क्रोधरक्तेक्षणा सा गौर्हम्बारवघनस्वना। विश्वामित्रस्य तत्सैन्यं व्यद्रावयत सर्व्वशः ॥ ३२ ॥ कशाग्रदण्डाभिहता काल्यमाना तत-स्ततः। क्रोधरक्तेक्षणा क्रोधं भूय एव समाददे ॥ ३३॥ आदित्य इव मध्याह्ने क्रोधदीप्तवपुर्बभौ। अङ्गारवर्षं मुञ्चन्ती मुहु-र्वालधितो महत् ॥ ३४ ॥ असृजत् पह्लवान् पुच्छात् प्रस्रवा-द्द्राविडाञ्छकान्। योनिदेशाच्च यवनान् शकृतः शवरान् बहून् ॥ ३५ ॥ मूत्रतश्चासृजत्काञ्चीञ्छरभांश्चैव पार्श्वतः। पौण्ड्रान्

किरातान् यवनान् सिंहलान्बर्बरान् खशान् ॥ ३६ ॥ चिबुकांश्च पुलिन्दांश्च चीनान् हूनान् सकेरलान्। ससर्ज फेनतः सा गौः म्लेच्छान् बहुविधानपि ॥ ३७ ॥ तैर्विसृष्टैर्महासैन्यैर्नानाम्लेच्छगणैस्तदा। नानावरणसंच्छन्नैर्नानायुधधरैस्तथा ॥ ३८ ॥ अवाकीर्य्यत संरब्धैर्विश्वामित्रस्य पश्यतः। एकैकश्च तदा योधः पञ्चभिः सप्तभिर्वृतः ॥ ३९ ॥ अस्त्रवर्षेण महता वध्यमानं बलं तदा। प्रभग्नं सर्वतस्त्रस्तं विश्वामित्रस्य पश्यतः ॥ ४० ॥ न च प्राणैर्वियुज्यन्ते केचित्तत्रास्य सैनिकाः। विश्वामित्रस्य संक्रुद्धैर्वासिष्ठैर्भरतर्षभ ॥ ४१ ॥ सा गौस्तत्सकलं सैन्यं कालयामास दूरतः। विश्वामित्रस्य तत् सैन्यं काल्यमानं त्रियोजनम् ॥४२॥ क्रोशमानं भयोद्विग्नं त्रातारं नाध्यगच्छत। दृष्ट्वा तन्महदाश्चर्य्यं ब्रह्मतेजोभवन्तदा ॥ ४३ ॥ विश्वामित्रः क्षत्रभावान्निर्विण्णो वाक्यमब्रवीत्। धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम् ॥ ४४ ॥ बलाबलं विनिश्चित्य तप एव परं बलम्। स राज्यं स्फीतमुत्सृज्य तांश्च दीप्तां नृपश्रियम् ॥ ४५ ॥ भोगांश्च पृष्ठतः कृत्वा तपस्येव मनो दधे। स गत्वा तपसा सिद्धिं लोकान्विष्टभ्य तेजसा ॥४६॥ तताप सर्वान्दीप्तौजा ब्राह्मणत्वमवाप्तवान्। अपिबच्च ततः सोममिन्द्रेण सह कौशिकः ॥ ४७ ॥

इत्यादिपर्वणि चैत्ररथपर्वणि वाशिष्ठे विश्वामित्रपराभवे
सप्तसप्तत्यधिकशततोऽध्यायः ॥ १७७ ॥

—:o—

गन्धर्व उवाच। कल्माषपाद इत्येवं लोके राजा बभूव ह। इक्ष्वाकुवंशजः पार्थ तेजसासदृशो भुवि ॥ १ ॥ स कदाचिद्वनं राजा मृगयां निर्ययौ पुरात्। मृगान्विध्यन्वराहांश्च चचार रिपुमर्दनः ॥ २ ॥ तस्मिन् वने महाघोरे खड्गांश्च बहुशोऽहनत्।

कृत्वा च सुचिरं श्रान्तो राजा निववृते ततः ॥ ३ ॥ अकामयत्तं याज्यार्थे विश्वामित्रः प्रतापवान् । स तु राजा महात्मानं वाशिष्ठमृषिसत्तमम् ॥ ४ ॥ तृषार्त्तश्च क्षुधार्त्तश्च एकायनगतः पथि । अपश्यदजितः शूरो मुनिं प्रतिमुखागतम् ॥ ५ ॥ शक्तिं नाम महाभागं वशिष्ठकुलवर्द्धनम् । ज्येष्ठं पुत्रं पुत्रशताद्वशिष्ठस्य महात्मनः ॥ ६ ॥ अपगच्छ पथोऽस्माकमित्येवं पार्थिवोऽब्रवीत् । तथा ऋषिरुवाचैनं सान्त्वयन् श्लक्ष्णया गिरा ॥ ७ ॥ मम पन्था महाराज धर्म्म एष सनातनः । राज्ञा सर्व्वेषु धर्म्मेषु देयः पन्था द्विजातये ॥ ८ ॥ एवं परस्परं तौ तु पथोऽर्थं वाक्यमूचतुः । अपसर्पापसर्पेति वागुत्तरमकुर्व्वताम् ॥ ९ ॥ ऋषिस्तु नापचक्राम तस्मिन् धर्म्मपथे स्थितः । नापि राजा मुनेर्म्मानात् क्रोधाच्चापि जगाम ह ॥ १० ॥ अमुञ्चन्तन्तु पन्थानं तमृषिं नृपसत्तमः । जघान कशया मोहात्तदा राक्षसवन्मुनिम् ॥ ११ ॥ कशाप्रहाराभिहतस्ततः स मुनिसत्तमः । तं शशाप नृपश्रेष्ठं वाशिष्ठः क्रोधमूर्च्छितः ॥ १२ ॥ हंसि राक्षसवद्यस्माद्राजापसद तापसम् । तस्मात्त्वमद्यप्रभृति पुरुषादो भविष्यसि ॥ १३ ॥ मनुष्यपिशिते सक्तश्चरिष्यसि महीमिमाम् । गच्छ राजाधमेत्युक्तः शक्तिना वीर्य्यशक्तिना ॥ १४ ॥ ततो याज्यनिमित्तन्तु विश्वामित्रवशिष्ठयोः । वैरमासीत्तदा तन्तु विश्वामित्रोऽन्वपद्यत ॥ १५ ॥ तयोर्विवदतोरेवं समीपमुपचक्रमे । ऋषिरुग्रतपाः पार्थ विश्वामित्रः प्रतापवान् ॥ १६ ॥ ततः स बुबुधे पश्चात्तमृषिं नृपसत्तमः । ऋषेः पुत्रं वशिष्ठस्य वशिष्ठमिव तेजसा ॥ १७ ॥ अन्तर्द्धाय ततोऽऽत्मानं विश्वामित्रोऽपि भारत । तावुभावतिचक्राम चिकीर्षन्नात्मनः प्रियम् ॥ १८ ॥ स तु शप्तस्तदा तेन शक्तिना वै नृपोत्तमः । जगाम शरणं शक्तिं प्रसादयितुमर्हयन् ॥ १९ ॥ तस्य भावं विदित्वा स नृपतेः कुरुसत्तम । विश्वामित्रस्ततो रक्ष

ादिदेश नृपं प्रति ॥ २० ॥ शापात्तस्य तु विप्रर्षेर्विश्वामित्रस्य चाज्ञया । राक्षसः किङ्करो नाम विवेश नृपतिं तदा ॥ २१ ॥ रक्षसा तं गृहीतं तु विदित्वा मुनिसत्तमः । विश्वामित्रोऽप्यपाक्रामत्तस्माद्देशादरिन्दम ॥ २२ ॥ ततः स नृपतिस्तेन रक्षसान्तर्गतेन च । बलवत्पीडितः पार्थ नान्वबुध्यत किञ्चन ॥ २३ ॥ ददर्शाथ द्विजः कश्चिद्राजानं प्रस्थितं वनम् । अयाचत क्षुधापन्नः समांसं भोजनं तदा ॥ २४ ॥ तमुवाचाथ राजर्षिर्द्विजं मित्रसहं तदा । आस्स्व ब्रह्मंस्त्वमत्रैव मुहूर्त्तं प्रतिपालयन् ॥ २५ ॥ निवृत्तः प्रतिदास्यामि भोजनं ते यथेप्सितम् । इत्युक्त्वा प्रययौ राजा तस्थौ स द्विजसत्तमः ॥२६॥ ततो राजा परिक्रम्य यथाकामं यथासुखम् । निवृत्तोऽन्तःपुरं पार्थ प्रविवेश महामनाः ॥ २७ ॥ ततोऽर्द्धरात्र उत्थाय सूदमानाय्य सत्वरम् । उवाच राजा संस्मृत्य ब्राह्मणस्य प्रतिश्रुतम् ॥ २८ ॥ गच्छामुष्मिन्वनोद्देशे ब्राह्मणो मां प्रतीक्षते । अन्नार्थी तं त्वमन्नेन समांसेनोपपादय ॥ २९ ॥

गन्धर्व उवाच । एवमुक्तस्ततः सूदः सोऽनासाद्यामिषं क्वचित् । निवेदयामास तदा तस्मै राज्ञे व्यथान्वितः ॥ ३० ॥ राजा तु रक्षसाविष्टः सूदमाह गतव्यथः । अप्येनं नरमांसेन भोजयेति पुनः पुनः ॥ ३१ ॥ तथेत्युक्त्वा ततः सूदः संस्थानं वध्यघातिनाम् । गत्वा जहार त्वरितो नरमांसमपेतभीः ॥ ३२ ॥ स तत् संस्कृत्य विधिवदन्नोपहितमाशु वै । तस्मै प्रादाद्ब्राह्मणाय क्षुधिताय तपस्विने ॥ ३३ ॥ स सिद्धचक्षुषा दृष्ट्वा तदन्नं द्विजसत्तमः । अभोज्यमिदमित्याह क्रोधपर्य्याकुलेक्षणः ॥३४॥

ब्राह्मण उवाच । यस्मादभोज्यमन्नं मे ददाति स नृपाधमः । तस्मात्तस्यैव मूढस्य भविष्यत्यत्र लोलुपा ॥ ३५ ॥ सक्तो मानुषमांसेषु यथोक्तः शक्तिना पुरा । उद्वेजनीयो भूतानां चरिष्यति महीमिमाम् ॥ ३६ ॥ द्विरनुव्याहृते राज्ञः स शापो बल-

दानभूत् । रक्षोबलसमाविष्टो विसंज्ञश्चाभवन्नृपः ॥ ३७ ॥ ततः स नृपतिश्रेष्ठो रक्षसापहृतेन्द्रियः । उवाच शक्तिं तं दृष्ट्वा न चिरादिव भारत ॥ ३८ ॥ यस्मादसदृशः शापः प्रयुक्तोऽयं मयि त्वया । तस्मात्त्वत्तः प्रवर्त्तिष्ये खादितुं पुरुषानहम् ॥ ३९ ॥ एवमुक्त्वा ततः सद्यस्तं प्राणैर्विप्रयुज्य च । शक्तिं तं भक्षयामास व्याघ्रः पशुमिवेप्सितम् ॥ ४० ॥ शक्तिं तन्तु मृतं दृष्ट्वा विश्वामित्रः पुनः पुनः । वशिष्ठस्यैव पुत्रेषु तद्रक्षः सन्दिदेश ह ॥ ४१ ॥ स तान् शक्त्यवरान् पुत्रान्वशिष्ठस्य महात्मनः । भक्षयामास संक्रुद्धः सिंहः क्षुद्रमृगानिव ॥ ४२ ॥ वशिष्ठो घातितान् श्रुत्वा विश्वामित्रेण तान् सुतान् । धारयामास तं शोकं महाद्रिरिव मेदिनीम् ॥ ४३ ॥ चक्रे चात्मविनाशाय बुद्धिं स मुनिसत्तमः । न त्वेव कौशिकोच्छेदं मेने मतिमतांवरः ॥ ४४ ॥ स मेरुकूटादात्मानं मुमोच भगवानृषिः । गिरेस्तस्य शिलायान्तु तूलराशाविवापतत् ॥ ४५ ॥ न ममार च पातेन स यदा तेन पाण्डव । तदाग्निमिद्धं भगवान् संविवेश महावने ॥ ४६ ॥ तं तदा सुसमिद्धोऽपि न ददाह हुताशनः । दीप्यमानोऽप्यमित्रघ्न शीतोऽग्निरभवत्ततः ॥ ४७ ॥ स समुद्रमभिप्रेक्ष्य शोकाविष्टो महामुनिः । बद्ध्वा कण्ठे शिलां गुर्वीं निपपात तदाम्भसि ॥ ४८ ॥ स समुद्रोर्म्मिवेगेन स्थले न्यस्तो महामुनिः । जगाम स ततः खिन्नः पुनरेवाश्रमं प्रति ॥ ४९ ॥

इत्यादिपर्व्वणि चैत्ररथपर्व्वणि वाशिष्ठे वशिष्ठशोके अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

— ०:० —

गन्धर्व उवाच । ततो दृष्ट्वाश्रमपदं रहितं तैः सुतैर्म्मुनिः । निर्जगाम सुदुःखार्त्तः पुनरप्याश्रमात्ततः ॥ १ ॥ सोऽपश्यत्सरितं पूर्णां प्रावृट्काले नवाम्भसा । वृक्षान् बहुविधान् पार्थ हरन्तीं

तीरजान् बहून् ॥ २ ॥ अथ चिन्तां समापेदे पुनः कौरव-
नन्दन । अन्यास्तस्यां निमज्जेयमिति दुःखसमन्वितः ॥ ३ ॥ ततः
पाशैस्तदात्मानं गाढं बद्ध्वा महामुनिः । तस्या जले महानद्या
निममज्ज सुदुःखितः ॥ ४ ॥ अथ छित्त्वा नदी पाशांस्तस्यारि-
बलसूदन । स्थलस्थं तमृषिं कृत्वा विपाशं समवासृजत् ॥ ५ ॥
उत्ततार ततः पाशैर्विमुक्तः स महानृषिः । विपाशेति च नामास्या
नद्याश्चक्रे महानृषिः ॥ ६ ॥ शोके बुद्धिं तदा चक्रे न चैकत्र
व्यतिष्ठत । सोऽगच्छत्पर्वतांश्चैव सरितश्च सरांसि च ॥ ७ ॥
दृष्ट्वा स पुनरेवर्षिर्नदीं हैमवतीं तदा । चण्डग्राहवतीं भीमां
तस्याः स्रोतस्यपातयत् ॥ ८ ॥ सा तमग्निसमं विप्रमनुचिन्त्य
सरिद्वरा । शतधा विद्रुता यस्माच्छतद्रुरिति विश्रुता ॥ ९ ॥
ततः स्थलगतं दृष्ट्वा तत्राप्यात्मानमात्मना । मर्त्तुं न शक्यमीत्युक्त्वा
पुनरेवाश्रमं ययौ ॥ १० ॥ स गत्वा विविधान् शैलान्देशान्
बहुविधांस्तथा । अदृश्यन्त्याख्यया वध्वाथाश्रमेऽनुसृतोऽभवत् ॥ ११ ॥
अथ शुश्राव सङ्गत्या वेदाध्ययननिःस्वनम् । पृष्ठतः परिपूर्णार्थं
षड्भिरङ्गैरलङ्कृतम् ॥ १२ ॥ अनुव्रजति कोऽयं मामित्येवाथ
सोऽब्रवीत् । अहमित्यदृश्यन्तीमं सा स्नुषा प्रत्यभाषत । शक्तेः-
भार्य्या महाभाग तपोयुक्ता तपस्विनी ॥ १३ ॥

वशिष्ठ उवाच । पुत्रि कस्यैष साङ्गस्य वेदस्याध्ययनस्वनः ।
पुरा साङ्गस्य वेदस्य शक्तेरिव मया श्रुतः ॥ १४ ॥

अदृश्यन्त्युवाच । अयं कुक्षौ समुत्पन्नः शक्तेर्गर्भः सुतस्य
ते । समा द्वादश तस्येह वेदानभ्यस्यतो मुने ॥ १५ ॥

गन्धर्व उवाच । एवमुक्तस्तया हृष्टो वशिष्ठः श्रेष्ठभागृषिः ।
अस्ति सन्तानमित्युक्त्वा मृत्योः पार्थ न्यवर्त्तत ॥ १६ ॥ ततः
प्रतिनिवृत्तः स तया वध्वा सहानघ । कल्माषपादमासीनं ददर्श
विजने वने ॥ १७ ॥ स तु दृष्ट्वैव तं राजा क्रुद्ध उत्थाय भारत ।

आविष्टो रक्षसोग्रेण इयेषात्तुं तदा मुनिम् ॥ १८ ॥ अदृश्यन्ती
तु तं दृष्ट्वा क्रूरकर्माणमग्रतः । भयसंविग्नया वाचा वशिष्ठमिद-
मब्रवीत् ॥ १९ ॥ असौ मृत्युरिवोग्रेण दण्डेन भगवन्नितः ।
प्रगृहीतेन काष्ठेन राक्षसोऽभ्येति दारुणः ॥ २० ॥ तं निवा-
रयितुं शक्तो नान्योऽस्ति भुवि कश्चन । त्वदृतेऽद्य महाभाग सर्व-
वेदविदांवर ॥ २१ ॥ पाहि मां भगवन् पापादस्माद्दारुणदर्श-
नात् । राक्षसोऽयमिहात्तुं वै नूनमावां समीहते ॥ २२ ॥

वशिष्ठ उवाच । मा भैः पुत्रि न भेतव्यं राक्षसात्तु कथ-
ञ्चन । नैतद्रक्षो भयं यस्मात् पश्यसि त्वमुपस्थितम् ॥ २३ ॥
राजा कल्माषपादोऽयं वीर्य्यवान् प्रथितो भुवि । स एषोऽस्मिन्
वनोद्देशे निवसत्यतिभीषणः ॥ २४ ॥

गन्धर्व्व उवाच । तमापतन्तं संप्रेक्ष्य वशिष्ठो भगवानृषिः ।
वारयामास तेजस्वी हुङ्कारेणैव भारत ॥ २५ ॥ मन्त्रपूतेन च
पुनः स तमभ्युक्ष्य वारिणा । मोक्षयामास वै शापात्तस्माद्योगा-
न्नराधिपम् ॥ २६ ॥ स हि द्वादशवर्षाणि वाशिष्ठस्यैव तेजसा ।
ग्रस्त आसीद्गृहेणेव पर्व्वकाले दिवाकरः ॥ २७ ॥ रक्षसा विप्र-
मुक्तोऽथ स नृपस्तद्वनं महत् । तेजसा रञ्जयामास सन्ध्याभ्रमिव
भास्करः ॥ २८ ॥ प्रतिलभ्य ततः संज्ञामभिवाद्य कृताञ्जलिः ।
उवाच नृपतिः काले वशिष्ठमृषिसत्तमम् ॥ २९ ॥ सौदासोऽहं
महाभाग याज्यस्ते मुनिसत्तम । अस्मिन् काले यदिष्टं ते ब्रूहि
किं करवाणि ते ॥ ३० ॥

वशिष्ठ उवाच । वृत्तमेतद्यथाकालं गच्छ राज्यं प्रशाधि वै ।
ब्राह्मणांस्तु मनुष्येन्द्र मावमंस्थाः कदाचन ॥ ३१ ॥

राजोवाच । नावमंस्ये महाभाग कदाचिद्ब्राह्मणर्षभान् ।
त्वन्निदेशे स्थितः सम्यक् पूजयिष्याम्यहं द्विजान् ॥ ३२ ॥ इक्ष्वा-
कूणाञ्च येनाहमनृणः स्यां द्विजोत्तमः । तत्त्वत्तः प्राप्तुमिच्छामि

सर्ववेदविदांवर ॥ ३३ ॥ अपत्यमीप्सितं मह्यं दातुमर्हसि सत्तम। शीलरूपगुणोपेतमिक्ष्वाकुकुलवृद्धये ॥ ३४ ॥

गन्धर्व उवाच। ददानीत्येव तं तत्र राजानं प्रत्युवाच ह। वशिष्ठः परमेष्वासं सत्यसन्धो द्विजोत्तमः ॥ ३५ ॥ ततः प्रतिययौ काले वशिष्ठः सह तेन वै। ख्यातां पुरीमिमां लोकेष्वयोध्यां मनुजेश्वर ॥ ३६ ॥ तं प्रजाः प्रतिमोदन्त्यः सर्वाः प्रत्युद्गतास्तदा। विपाप्मानं महात्मानं दिवौकस इवेश्वरम् ॥ ३७ ॥ सुचिराय मनुष्येन्द्रो नगरीं पुण्यलक्षणाम्। विवेश सहितस्तेन वशिष्ठेन महर्षिणा ॥ ३८ ॥ ददृशुस्तं महीपालमयोध्यावासिनो जनाः। पुरोहितेन सहितं दिवाकरमिवोदितम् ॥ ३९ ॥ स च तां पूरयामास लक्ष्म्या लक्ष्मीवतां वरः। अयोध्यां व्योम शीतांशुः शरत्काल इवोदितः ॥ ४० ॥ संसिक्तमृष्टपन्थानं पताकाध्वजशोभितम्। मनः प्रह्लादयामास तस्य तत् पुरमुत्तमम् ॥ ४१ ॥ तुष्टपुष्टजनाकीर्णा सा पुरी कुरुनन्दन। अशोभत तदा तेन शक्रेणेवामरावती ॥ ४२ ॥ ततः प्रविष्टे राजर्षौ तस्मिंस्तत् पुरमुत्तमम्। राज्ञस्तस्याज्ञया देवी वशिष्ठमुपचक्रमे ॥ ४३ ॥ ऋतावथ महर्षिः सम्बभूव तया सह। देव्या दिव्येन विधिना वशिष्ठः श्रेष्ठभाग्टषिः ॥ ४४ ॥ ततस्तस्यां समुत्पन्ने गर्भे स मुनिसत्तमः। राज्ञाभिवादितस्तेन जगाम मुनिराश्रमम् ॥ ४५ ॥ दीर्घकालेन सा गर्भं सुषुवे न तु तं यदा। तदा देव्यश्मना कुक्षिं निर्बिभेद यशस्विनी ॥ ४६ ॥ ततोऽपि द्वादशे वर्षे स जज्ञे पुरुषर्षभः। अश्मको नाम राजर्षिः पौदन्यं यो न्यवेशयत् ॥ ४७ ॥

इत्यादिपर्वणि चैत्ररथपर्वणि वाशिष्ठे सौदासमुतोत्पौ एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

---

गन्धर्व उवाच। आश्रमस्था ततः पुत्रमदृश्यन्ती व्यजायत।
शक्तेः कुलकरं राजन् द्वितीयमिव शक्तिकम्॥ १॥ जातकर्मा-
दिकास्तस्य क्रियाः स मुनिसत्तमः। पौत्रस्य भरतश्रेष्ठ चकार
भगवान् स्वयम्॥ २॥ परासुः स यतस्तेन वशिष्ठः स्थापितो
मुनिः। गर्भस्थेन ततो लोके पराशर इति स्मृतः॥ ३॥ अम-
न्यत स धर्मात्मा वशिष्ठं पितरं मुनिम्। जन्मप्रभृति तस्मिंस्तु
पितरीवान्ववर्त्तत॥ ४॥ स तात इति विप्रर्षिं वशिष्ठं प्रत्य-
भाषत। मातुः समक्षं कौन्तेय अदृश्यन्त्याः परन्तप॥ ५॥
तातेति परिपूर्णार्थं तस्य तन्मधुरं वचः। अदृश्यन्त्यश्रुपूर्णाक्षी
शृण्वती तमुवाच ह॥ ६॥ मा तात तात तातेति ब्रूह्येनं पितरं
पितुः। रक्षसा भक्षितस्तात तव तातो वनान्तरे॥ ७॥ मन्यसे
यन्तु तातेति नैष तातस्तवानघ। आर्य्य एष पिता तस्य पितु-
स्तव यशस्विनः॥ ८॥ स एवमुक्तो दुःखार्त्तः सत्यवागृषिसत्तमः।
सर्वलोकविनाशाय मतिं चक्रे महामनाः॥ ९॥ तं तथा निश्चि-
तात्मानं स महात्मा महातपाः। ऋषिर्ब्रह्मविदां श्रेष्ठो मैत्रा-
वरुणिरन्त्यधीः॥ १०॥ वशिष्ठो वारयामास हेतुना येन तच्छृणु।

वशिष्ठ उवाच। कृतवीर्य्य इति ख्यातो बभूव पृथिवीपतिः।
याज्यो वेदविदां लोके भृगूणां पार्थिवर्षभः॥ ११॥ स तानग्र-
भुजस्तात धान्येन च धनेन च। सोमान्ते तर्पयामास विपुलेन
विशाम्पतिः॥ १२॥ तस्मिन्नृपतिशार्दूले स्वर्यातेऽथ कथञ्चन।
बभूव तत्कुलेयानां द्रव्यकार्य्यमुपस्थितम्॥ १३॥ भृगूणान्तु
धनं ज्ञात्वा राजानः सर्व एव ते। याचिष्णवोऽभिजग्मुस्तांस्ततो
भार्गवसत्तमान्॥ १४॥ भूमौ तु निदधुः केचिद्भृगवो धन-
मक्षयम्। ददुः केचिद्द्विजातिभ्यो ज्ञात्वा क्षत्रियतो भयम्॥ १५॥
भृगवस्तु ददुः केचित्तेषां वित्तं यथेप्सितम्। क्षत्रियाणां तदा
तात कारणान्तरदर्शनात्॥ १६॥ ततो महीतलं तात क्षत्रि-

येषां यद्वस्तु तथा । खननाधिगतं वित्तं केनचिद्भृगुवेश्मनि ॥१७॥ तद्वित्तं ददृशुः सर्वे समेताः क्षत्रियर्षभाः । अवमन्य ततः क्रोधाद्भृगूंस्तान् शरणागतान् ॥ १८ ॥ निजघ्नुः परमेष्वासाः सर्वांस्तान्निशितैः शरैः । आगर्भादवकृन्तन्तश्चेरुः सर्वां वसुन्धराम् ॥ १९ ॥ तत उच्छिद्यमानेषु भृगुष्वेवं भयात्तदा । भृगुपत्न्यो गिरिं दुर्गं हिमवन्तं प्रपेदिरे ॥ २० ॥ तासामन्यतमा गर्भं भयाद्दध्रे महौजसम् । ऊरुणैकेन वामोरुर्भर्तुः कुलविवृद्धये ॥ २१ ॥ तद्गर्भमुपलभ्याशु ब्राह्मणी या भयार्दिता । गत्वैका कथयामास क्षत्रियाणामुपह्वरे ॥ २२ ॥ ततस्ते क्षत्रिया जग्मुस्तं गर्भं हन्तुमुद्यताः । ददृशुर्ब्राह्मणीं तेऽथ दीप्यमानां स्वतेजसा ॥ २३ ॥ अथ गर्भः स भित्त्वोरुं ब्राह्मण्या निर्जगाम ह । मुष्णन्दृष्टीः क्षत्रियाणां मध्याह्न इव भास्करः ॥ २४ ॥ ततश्चक्षुर्विहीनास्ते गिरिदुर्गेषु बभ्रमुः । ततस्ते मोहमापन्ना राजानो नष्टदृष्टयः । ब्राह्मणीं शरणं जग्मुर्दृष्ट्यर्थं तामनिन्दिताम् ॥ २५ ॥ ऊचुश्चैनां महाभागां क्षत्रियास्ते विचेतसः । ज्योतिःप्रहीणा दुःखार्ताः शान्तार्चिष इवाग्नयः ॥ २६ ॥ भगवत्याः प्रसादेन गच्छेत् क्षत्रं सचक्षुषम् । उपरम्य च गच्छेम सहिताः पापकर्मिणः ॥२७॥ सपुत्रा त्वं प्रसादं नः कर्तुमर्हसि शोभने । पुनर्दृष्टिप्रदानेन राज्ञः सन्त्रातुमर्हसि ॥ २८ ॥

इत्यादिपर्वणि चैत्ररथपर्वण्यौर्वोपाख्याने अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

---

ब्राह्मण्युवाच । नाहं गृह्णामि वस्तात दृष्टीर्नास्मि रुषान्विता । अयन्तु भार्गवो नूनमूरुजः कुपितोऽद्य वः ॥ १ ॥ तेन चक्षूंषि वस्तात व्यक्तं कोपान्महात्मना । स्मरता निहतान्

चक्षूंष्याहृतानि न संशयः ॥ २ ॥ गर्भानपि यदा नूनं भृगूणां घ्नत पुत्रकाः । तदायमूरुणा गर्भो मया वर्षशतं धृतः ॥ ३ ॥ षडङ्गश्चाखिलो वेद इमं गर्भस्थमेव च । विवेश भृगुवंशस्य भूयः प्रियचिकीर्षया ॥ ४ ॥ सोऽयं पितृवधाद्व्यक्तं क्रोधाद्वो हन्तुमिच्छति । तेजसा तस्य दिव्येन चक्षूंषि मुषितानि वः ॥ ५ ॥ तमिमं तात याचध्वमौर्वं मम सुतोत्तमम् । अयं वः प्रणिपातेन तुष्टो दृष्टीः प्रमोक्ष्यति ॥ ६ ॥

वसिष्ठ उवाच । एवमुक्तास्ततः सर्वे राजानस्ते तमूरुजम् । ऊचुः प्रसीदेति तदा प्रसादञ्च चकार सः ॥ ७ ॥ अनेनैव च विख्यातो नाम्ना लोकेषु सत्तमः । स और्व इति विप्रर्षिरूरुं भित्त्वा व्यजायत ॥ ८ ॥ चक्षूंषि प्रतिलब्ध्वा च प्रतिजग्मुस्ततो नृपाः । भार्गवस्तु मुनिर्मेने सर्वलोकपराभवम् ॥ ९ ॥ स चक्रे तात लोकानां विनाशाय महामनाः । सर्वेषामेव कार्त्स्न्येन मनः प्रवणमात्मनः ॥ १० ॥ इच्छन्नपचितिं कर्त्तुं भृगूणां भृगुनन्दनः । सर्वलोकविनाशाय तपसा महतैधितः ॥ ११ ॥ तापयामास तांल्लोकान् सदेवासुरमानुषान् । तपसोग्रेण महता नन्दयिष्यन् पितामहान् ॥ १२ ॥ ततस्तं पितरस्तात विज्ञाय कुलनन्दनम् । पितृलोकादुपागम्य सर्व ऊचुरिदं वचः ॥ १३ ॥

पितर ऊचुः । और्व दृष्टः प्रभावस्ते तपसोग्रस्य पुत्रक । प्रसादं कुरु लोकानां नियच्छ क्रोधमात्मनः ॥ १४ ॥ नानीशैर्हि तदा तात भृगुभिर्भावितात्मभिः । वधो ह्युपेक्षितः सर्वैः क्षत्रियाणां विहिंसताम् ॥ १५ ॥ आयुषा विप्रकृष्टेन यदा नः खेद आविशत् । तदास्माभिर्वधस्तात क्षत्रियैरीप्सितः स्वयम् ॥ १६ ॥ निखातं यच्च वै वित्तं केनचिद्भृगुवेश्मनि । वैरायैव तदा न्यस्तं क्षत्रियान् कोपयिष्णुभिः ॥ १७ ॥ किं हि वित्तेन नः कार्य्यं स्वर्गेप्सूनां द्विजोत्तम । यदस्माकं धनाध्यक्षः प्रभूतं धनमाहरत्

॥ १८ ॥ यदा तु त्वत्पराद्धातुं न नः शक्नोति सर्वशः। तदास्माभिरयं दृष्ट उपायस्तात संमतः ॥ १९ ॥ आत्महा च पुमांस्तात न लोकाल्लभते शुभान्। ततोऽस्माभिः समीक्ष्यैवं नात्मनात्मा निपातितः ॥ २० ॥ न चैतन्नः प्रियं तात यदिदं कर्तुमिच्छसि। नियच्छेदं मनः पापात्सर्वलोकपराभवात् ॥ २१ ॥ मा बधीः क्षत्रियांस्तात न लोकान् सप्त पुत्रक। दूषयन्तं तपस्तेजः क्रोधमुत्पतितं जहि ॥ २२ ॥

इत्यादिपर्वणि चैत्ररथपर्वण्यौर्वंवारणे एकाशीत्यधिकशततोऽध्यायः ॥ १८१ ॥

— •:• —

और्व उवाच। उक्तवानस्मि यां क्रोधात् प्रतिज्ञां पितरस्तदा। सर्वलोकविनाशाय न सा मे वितथा भवेत् ॥ १ ॥ वृथारोषप्रतिज्ञो वै नाहं भवितुमुत्सहे। अनिस्तीर्णो हि मां रोषो दहेदग्निरिवारणिम् ॥ २ ॥ यो हि कारणतः क्रोधं सञ्जातं क्षन्तुमर्हति। नालं स मनुजः सम्यक् त्रिवर्गं परिरक्षितुम् ॥३॥ अशिष्टानां नियन्ता हि शिष्टानां परिरक्षिता। स्थाने रोषः प्रयुक्तः स्यान्नृपैः सर्वजिगीषुभिः ॥ ४ ॥ अश्रौषमहमूरुस्थो गर्भशय्यागतस्तदा। आरावं मातृवर्गस्य भृगूणां क्षत्रियैर्वधे ॥ ६ ॥ संहारो हि यदा लोके भृगूणां क्षत्रियाधमैः। आगर्भोच्छेदनात् क्रान्तस्तदा मां मन्युराविशत् ॥ ७ ॥ संपूर्णकोशाः किल मे मातरः पितरस्तथा। भयात्सर्वेषु लोकेषु नाधिजग्मुः परायणम् ॥ ८ ॥ तान् भृगूणां यदा दारान् कश्चिन्नाभ्युपपद्यत। माता तदा दधारेयमूरुणैकेन मां शुभा ॥ ९ ॥ प्रतिषेद्धा हि पापस्य यदा लोकेषु विद्यते। तदा सर्वेषु लोकेषु पापकृन्नोपपद्यते ॥ १० ॥ यदा तु प्रतिषेद्धारं पापो न लभते क्वचित्।

तिष्ठन्ति बहवो लोकास्तदा पापेषु कर्मसु ॥ ११ ॥ जानन्नपि च यः पापं शक्तिमान्न नियच्छति । ईशः सन् सोऽपि तेनैव कर्मणा संप्रयुज्यते ॥ १२ ॥ राजभिरीश्वरैश्चैव यदि वै पितरो मम । शक्तैर्न शकितास्त्रातुमिष्टं मत्वेह जीवितम् ॥ १३ ॥ अत एषामहं क्रुद्धो लोकानामीश्वरो ह्यहम् । भवताञ्च वचो नालमहं समभिवर्त्तितुम् ॥ १४ ॥ ममापि चेद्भवेदेवमीश्वरस्य सतो महत् । उपेक्षमाणस्य पुनर्लोकानां किल्बिषाद्भयम् ॥ १५ ॥ यश्चायं मन्युजो मेऽग्निर्लोकानादातुमिच्छति । दहेदेष च मामेव निगृहीतः स्वतेजसा ॥ १६ ॥ भवताञ्च विजानामि सर्वलोकहितेप्सुताम् । तस्माद्विधध्वं यच्छ्रेयो लोकानां मम चेश्वराः ॥ १७ ॥

पितर ऊचुः । य एष मन्युजस्तेऽग्निर्लोकानादातुमिच्छति । अप्सु तं मुञ्च भद्रं ते लोका ह्यप्सु प्रतिष्ठिताः ॥ १८ ॥ आपोमयाः सर्वरसाः सर्वमापोमयं जगत् । तस्मादप्सु विमुञ्चेमं क्रोधाग्निं द्विजसत्तम ॥ १९ ॥ अयं तिष्ठतु ते विप्र यदीच्छसि महोदधौ । मन्युजोऽग्निर्दहन्नापो लोका ह्यापोमयाः स्मृताः ॥ २० ॥ एवं प्रतिज्ञा सत्येयं तवानघ भविष्यति । न चैवं सामरा लोका गमिष्यन्ति पराभवम् ॥ २१ ॥

वशिष्ठ उवाच । ततस्तं क्रोधसञ्जातं और्वोऽग्निं वरुणालये । उत्ससर्ज स चैवाप उपयुङ्क्ते महोदधौ ॥ २२ ॥ महद्धयशिरो भूत्वा यत्तद्वेदविदो विदुः । तमग्निमुद्गिरन् वक्त्रात्पिबत्यापो महोदधौ ॥ २३ ॥ तस्मात्त्वमपि भद्रं ते न लोकान् हन्तुमर्हसि । पराशर परांल्लोकाञ्जानन् ज्ञानवतां वर ॥ २४ ॥

इत्यादिपर्वणि चैत्ररथपर्वण्यौर्वोपाख्याने द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

---

गन्धर्व उवाच। एवमुक्तः स विप्रर्षिर्वशिष्ठेन महात्मना।
न्ययच्छदात्मनः क्रोधं सर्वलोकपराभवात्॥ १॥ ईजे च स
महातेजाः सर्ववेदविदांवरः। ऋषी राक्षससत्रेण शाक्तेयोऽथ
पराशरः॥ २॥ ततो वृद्धांश्च बालांश्च राक्षसान् स महामुनिः।
ददाह वितते यज्ञे शक्तेर्वधमनुस्मरन्॥ ३॥ न हि तं वारया-
मास वशिष्ठो रक्षसां बधात्। द्वितीयामस्य मा भाङ्क्षं प्रतिज्ञा-
मिति निश्चयात्॥ ४॥ त्रयाणां पावकानाञ्च सत्रे तस्मिन्महा-
मुनिः। आसीत् पुरस्ताद्दीप्तानाञ्चतुर्थ इव पावकः॥ ५॥ तेन
यज्ञेन शुभ्रेण हूयमानेन शक्तिजः। तद्वि दीपितमाकाशं सूर्य्ये-
णेव घनात्यये॥ ६॥ तं वशिष्ठादयः सर्वे मुनयस्तत्र मेनिरे।
तेजसा दीप्यमानं वै द्वितीयमिव भास्करम्॥ ७॥ ततः परम-
दुष्प्रापमन्यैरृषिरुदारधीः। समापिपयिषुः सत्रं तमत्रिः समु-
पागमत्॥ ८॥ तथा पुलस्त्यः पुलहः क्रतुश्चैव महाक्रतुः। तत्रा-
जग्मुरमित्रघ्न रक्षसां जीवितेप्सया॥ ९॥ पुलस्त्यस्तु बधात्तेषां
रक्षसां भरतर्षभ। उवाचेदं वचः पार्थ पराशरमरिन्दमम्॥ १०॥
कच्चित्तातापविघ्नं ते कच्चिन्नन्दसि पुत्रक। अजानतामदोषाणां
सर्वेषां रक्षसां बधात्॥ ११॥ प्रजोच्छेदमिमं मह्यं न हि कर्त्तुं
त्वमर्हसि। नैष तात द्विजातीनां धर्मो दृष्टस्तपस्विनाम्॥ १२॥
शम एव परो धर्मस्तमाचर पराशर। अधर्मिष्ठं वरिष्ठः सन्
कुरुषे त्वं पराशर॥ १३॥ शक्तिञ्चापि हि धर्मज्ञं नातिक्रान्तु-
मिहार्हसि। प्रजायाश्च ममोच्छेदं न चैवं कर्त्तुमर्हसि॥ १४॥
शापाद्धि शक्तेर्वाशिष्ठ तदा तदुपपादितम्। आत्मजेन स दोषेण
शक्तिर्नीत इतो दिवम्॥ १५॥ न हि तं राक्षसः कश्चिच्छक्तो
भक्षयितुं मुने। आत्मनैवात्मनस्तेन दृष्टो मृत्युस्तदाभवत्॥ १६॥
निमित्तमात्रस्तत्रासीद्विश्वामित्रः पराशर। राजा कल्माषपादश्च
दिवमारुह्य मोदते॥ १७॥ ये च शक्त्यवराः पुत्रा वशिष्ठस्य

महामुनेः । ते च सर्वे मुदा युक्ता मोदन्ते सहिताः सुरैः ॥ १८ ॥ सर्वमेतद्वशिष्ठस्य विदितं वै महामुने । रक्षसाञ्च समुच्छेद एष तात तपस्विनाम् ॥ १९ ॥ निमित्तभूतस्त्वं चात्र क्रतौ वाशिष्ठनन्दन । तत्सत्रं मुञ्च भद्रं ते समाप्तमिदमस्तु ते ॥ २० ॥

गन्धर्व उवाच । एवमुक्तः पुलस्त्येन वशिष्ठेन च धीमता । तदा समापयामास सत्रं शाक्तो महामुनिः ॥ २१ ॥ सर्वराक्षससत्राय सम्भृतं पावकं तदा । उत्तरे हिमवत्पार्श्वे उत्ससर्ज्ज महावने ॥ २२ ॥ स तत्राद्यापि रक्षांसि वृक्षानश्मन एव च । भक्षयन्दृश्यते वह्निः सदा पर्वणि पर्वणि ॥ २३ ॥

इत्यादिपर्वणि चैत्ररथपर्वण्यौर्वोपाख्याने त्र्यशीत्यधिकशततोऽध्यायः ॥ १८३ ॥

---

अर्जुन उवाच । राज्ञा कल्माषपादेन गुरौ ब्रह्मविदांवरे । कारणं किं पुरस्कृत्य भार्य्या वै सन्नियोजिता ॥ १ ॥ जानता वै परं धर्मं वशिष्ठेन महात्मना । अगम्यागमनं कस्मात् कृतं तेन महर्षिणा ॥ २ ॥ अधर्मिष्ठं वशिष्ठेन कृतञ्चापि पुरा सखे । एतन्मे संशयं सर्वं छेत्तुमर्हसि पृच्छतः ॥ ३ ॥

गन्धर्व उवाच । धनञ्जय निबोधेदं यन्मां त्वं परिपृच्छसि । वशिष्ठं प्रति दुर्धर्षं तथामित्रसहं नृपम् ॥ ४ ॥ कथितं ते मया सर्वं यथा शप्तः स पार्थिवः । शक्तिना भरतश्रेष्ठ वाशिष्ठेन महात्मना ॥ ५ ॥ स तु शापवशं प्राप्तः क्रोधपर्य्याकुलेक्षणः । निर्जगाम पुराद्राजा सहदारः परन्तपः ॥ ६ ॥ अरण्यं निर्जनं गत्वा सदारः परिचक्रमे । नानामृगगणाकीर्णं नानासत्त्वसमाकुलम् ॥ ७ ॥ नानागुल्मलताच्छन्नं नानाद्रुमसमावृतम् । अरण्यं घोर-

सन्नाहं शापयस्तः परिभ्रमन्॥ ८॥ स कदाचित् क्षुधाविष्टो मृगयन् भक्ष्यमात्मनः। ददर्श सुपरिक्लिष्टः कस्मिंश्चिद्विजने वने॥ ९॥ ब्राह्मणं ब्राह्मणीञ्चैव मिथुनायोपसङ्गतौ। तौ तं वीक्ष्य सुवित्रस्तावकृतार्थौ प्रधावितौ॥ १०॥ तयोः प्रद्रवतो-र्विप्रं जग्राह नृपतिर्बलात्। दृष्ट्वा गृहीतं भर्त्तारमथ ब्राह्मण्यभाषत॥ ११॥ शृणु राजन्मम वचो यत्त्वां वक्ष्यामि सुव्रत। आदित्यवंशप्रभवस्त्वं हि लोके परिश्रुतः॥ १२॥ अप्रमत्तः स्थितो धर्मे गुरुशुश्रूषणे रतः। शापोपहतदुर्धर्ष न पापं कर्त्तु-मर्हसि॥ १३॥ ऋतुकाले तु सम्प्राप्ते भर्त्तृव्यसनकर्षिता। अकृतार्था ह्यहं भर्त्रा प्रसवार्थं समागता॥ १४॥ प्रसीद नृपतिश्रेष्ठ भर्त्तायं मे विसृज्यताम्। एवं विक्रोशमानायास्तस्यास्तु स नृशंसवत्॥ १५॥ भर्त्तारं भक्षयामास व्याघ्रो मृगमिवेप्सितम्। तस्याः क्रोधाभिभूताया यान्यश्रूण्यपतन् भुवि॥ १६॥ सोऽग्निः समभवद्दीप्तस्तञ्च देशं व्यदीपयत्। ततः सा शोकसन्तप्ता भर्त्तृ-व्यसनकर्षिता॥ १७॥ कल्माषपादं राजर्षिमशपद्ब्राह्मणी रुषा। यस्मान्ममाकृतार्थायास्त्वया क्षुद्र नृशंसवत्॥ १८॥ प्रेक्षन्त्या भक्षितो मेऽद्य प्रियो भर्त्ता महायशाः। तस्मात्त्वमपि दुर्बुद्धे मच्छापपरिविक्षतः॥ १९॥ पत्नीमृतावनुप्राप्य सद्यस्त्यक्ष्यसि जीवितम्। यस्य चर्षेर्वशिष्ठस्य त्वया पुत्रा विनाशिताः॥ २०॥ तेन सङ्गम्य ते भार्य्या तनयं जनयिष्यति। स ते वंशकरः पुत्रो भविष्यति नृपाधम॥ २१॥ एवं शप्त्वा तु राजानं सा तमाङ्गि-रसी शुभा। तस्यैव सन्निधौ दीप्तं प्रविवेश हुताशनम्॥ २२॥ वशिष्ठश्च महाभागः सर्वमेतदवैक्षत। ज्ञानयोगेन महता तपसा च परन्तप॥ २३॥ मुक्तशापश्च राजर्षिः कालेन महता ततः। ऋतुकालेऽभिपतितो मदयन्त्या निवारितः॥२४॥ न हि सस्मार स नृपस्तं शापं काममोहितः। देव्याः सोऽथ वचः श्रुत्वा सम्भ्रान्तो

नृपसत्तमः। तं शापमनुसंस्मृत्य पर्य्यतप्यद्भृशं तदा ॥ २५ ॥ एतस्मात्कारणाद्राजा वशिष्ठं संन्ययोजयत्। स्वदारेषु नरश्रेष्ठ शापदोषसमन्वितः ॥ २६ ॥

इत्यादिपर्व्वणि चैत्ररथपर्व्वणि वशिष्ठोपाख्याने चतुरशीत्यधिकशततोऽध्यायः ॥ १८४ ॥

अर्जुन उवाच। अस्माकमनुरूपो वै यः स्याद्गन्धर्व्व वेदवित्। पुरोहितस्तमाचक्ष्व सर्वं हि विदितं तव ॥ १ ॥

गन्धर्व उवाच। यवीयान्देवलस्यैष वने भ्राता तपस्यति। धौम्य उत्कोचके तीर्थे तं वृणुध्वं यदीच्छथ ॥ २ ॥

वैशम्पायन उवाच। ततोऽर्जुनोऽस्त्रमाग्नेयं प्रददौ तद्यथाविधि। गन्धर्वाय तदा प्रीतो वचनं चेदमब्रवीत् ॥ ३ ॥ त्वय्येव तावत् तिष्ठन्तु हया गन्धर्वसत्तम। कार्य्यकाले ग्रहीष्यामः स्वस्ति तेऽस्त्विति चाब्रवीत् ॥ ४ ॥ तेऽन्योन्यमभिसंपूज्य गन्धर्वः पाण्डवाश्च ह। रम्याद्भागीरथीतीराद्यथाकामं प्रतस्थिरे ॥ ५ ॥ तत उत्कोचकं तीर्थं गत्वा धौम्याश्रमन्तु ते। तं वव्रुः पाण्डवा धौम्यं पौरोहित्याय भारत ॥ ६ ॥ तान् धौम्यः प्रतिजग्राह सर्ववेदविदांवरः। वन्येन फलमूलेन पौरोहित्येन चैव ह ॥ ७ ॥ ते समाशंसिरे लब्धां श्रियं राज्यञ्च पाण्डवाः। मातृषष्ठास्तु ते तेन गुरुणा सङ्गतास्तदा। ब्राह्मणं तं पुरस्कृत्य पाञ्चालीं च स्वयम्वरे ॥ ८ ॥ पुरोहितेन तेनाथ गुरुणा सङ्गतास्तदा। नाथवन्तमिवात्मानं मेनिरे भरतर्षभाः ॥ ९ ॥ स हि वेदार्थतत्त्वज्ञस्तेषां गुरुरुदारधीः। तेन धर्मविदा पार्थाः याज्याः सर्वविदा कृताः ॥ १० ॥ वीरांस्तु स हि तान्मेने प्राप्तराज्यान् स्वधर्मतः। बुद्धिवीर्य्यबलोत्साहैर्युक्तान्देवानिव द्विजः ॥ ११ ॥

ज्ञातस्वस्त्ययनास्तेन ततस्ते मनुजाधिपाः । मेनिरे सहिता गन्तुं पाञ्चाल्यास्तं स्वयम्वरम् ॥ १२ ॥

इत्यादिपर्वणि चैत्ररथपर्वणि धौम्यपुरोहितकरणे पञ्चाशीत्यधिकशततोऽध्यायः समाप्तञ्च चैत्ररथपर्व ॥ १८५ ॥

---

अथ स्वयम्वरपर्व ॥ १२ ॥

वैशम्पायन उवाच । ततस्ते नरशार्दूला भ्रातरः पञ्च पाण्डवाः । प्रययुर्द्रौपदीं द्रष्टुं तञ्च देशं महोत्सवम् ॥ १ ॥ ते प्रयाता नरव्याघ्राः सह मात्रा परन्तपाः । ब्राह्मणान्ददृशुर्मार्गे गच्छतः संहतान् बहून् ॥२॥ त ऊचुर्ब्राह्मणा राजन् पाण्डवान् ब्रह्मचारिणः । क्व भवन्तो गमिष्यन्ति कुतो वाभ्यागता इह ॥ ३ ॥

युधिष्ठिर उवाच । आगतानेकचक्रायाः सोदर्यानेकचारिणः । भवन्तो वै विजानन्तु सह मात्रा द्विजर्षभाः ॥ ४ ॥

ब्राह्मणा ऊचुः । गच्छताद्यैव पाञ्चालान्द्रुपदस्य निवेशने । स्वयम्वरो महांस्तत्र भविता सुमहाधनः ॥ ५ ॥ एकसार्थं प्रयाताः स्म वयं तत्रैव गामिनः । तत्र ह्यद्भुतसङ्काशो भविता सुमहोत्सवः ॥ ६ ॥ यज्ञसेनस्य दुहिता द्रुपदस्य महात्मनः । वेदीमध्यात्समुत्पन्ना पद्मपत्रनिभेक्षणा ॥ ७ ॥ दर्शनीयानवद्याङ्गी सुकुमारी मनस्विनी । धृष्टद्युम्नस्य भगिनी द्रोणशत्रोः प्रतापिनः ॥ ८ ॥ यो जातः कवची खड्गी सशरः सशरासनः । सुसमिद्धे महाबाहुः पावके पावकोपमः ॥ ९ ॥ स्वसा तस्यानवद्याङ्गी द्रौपदी तनुमध्यमा । नीलोत्पलसमो गन्धो यस्याः क्रोशात् प्रवाति वै ॥ १० ॥ यज्ञसेनस्य च सुतां स्वयम्वरकृतक्षणाम् । गच्छामो वै वयं द्रष्टुं तञ्च दिव्यं महोत्सवम् ॥ ११ ॥ राजानो राजपुत्राश्च यज्वानो भूरिदक्षिणाः । स्वाध्यायवन्तः शुचयो

महात्मानो यतव्रताः ॥ १२ ॥ तरुणा दर्शनीयाश्च नानादेश-समागताः । महारथाः कृतास्त्राश्च समुपैष्यन्ति भूमिपाः ॥ १३ ॥ ते तत्र विविधान्दायाञ्जिगीषार्थं नरेश्वराः । प्रदास्यन्ति धनं गाश्च भक्ष्यं भोज्यञ्च सर्व्वशः ॥ १४ ॥ प्रतिगृह्य च तत्सर्व्वं दृष्ट्वा चैव स्वयम्वरम् । अनुभूयोत्सवं चैव गमिष्यामो यथेप्सितम् ॥ १५ ॥ नटा वैतालिकास्तत्र नर्त्तकाः सूतमागधाः । नियोधकाश्च देशेभ्यः समेष्यन्ति महाबलाः ॥ १६ ॥ एवं कौतूहलं कृत्वा दृष्ट्वा च प्रतिगृह्य च । सहास्माभिर्महात्मानः पुनः प्रतिनिवर्त्स्यथ ॥ १७ ॥ दर्शनीयांश्च वः सर्व्वान्देवरूपानवस्थितान् । समीक्ष्य कृष्णा वरयेत्सङ्गत्यैकतमं वरम् ॥ १८ ॥ अयं भ्राता तव श्रीमान्दर्शनीयो महाभुजः । नियुज्यमानो विजयेत्सङ्गत्या द्रविणं बहु ॥ १९ ॥

युधिष्ठिर उवाच । परमं भो गमिष्यामो द्रष्टुं चैव महोत्सवम् । भवद्भिः सहिताः सर्व्वे कन्यायास्तं स्वयम्वरम् ॥ २० ॥

इत्यादिपर्व्वणि स्वयम्वरपर्व्वणि पाण्डवगमने षडशीत्यधिकशततोऽध्यायः ॥ १८६ ॥

—:•—

वैशम्पायन उवाच । एवमुक्ताः प्रयातास्ते पाण्डवा जनमेजय । राज्ञा दक्षिणपाञ्चालान्द्रुपदेनाभिरक्षितान् ॥ १ ॥ ततस्तेषु महात्मानं शुद्धात्मानमकल्मषम् । ददृशुः पाण्डवा वीरा मुनिं द्वैपायनं तदा ॥ २ ॥ तस्मै यथावत्सत्कारं कृत्वा तेन च सत्कृताः । कथान्ते चाभ्यनुज्ञाताः प्रययुर्द्रुपदक्षयम् ॥३॥ पश्यन्तो रमणीयानि वनानि च सरांसि च । तत्र तत्र वसन्तश्च शनैर्जग्मुर्महारथाः ॥ ४ ॥ स्वाध्यायवन्तः शुचयो मधुराः प्रियवादिनः । आनुपूर्व्व्येण सम्प्राप्ताः पाञ्चालान् पाण्डुनन्दनाः ॥५॥ ते तु दृष्ट्वा पुरं तच्च स्कन्धावारञ्च पाण्डवाः । कुम्भकारस्य

शालायां निवासञ्चक्रिरे तदा ॥ ६ ॥ तत्र भैक्ष्यं समाजह्रुर्ब्राह्मीं वृत्तिं
समाश्रिताः। तान् सम्प्राप्तांस्तथा वीरान् जज्ञिरे न नराः
क्वचित् ॥ ७ ॥ यज्ञसेनस्य कामस्तु पाण्डवाय किरीटिने।
कृष्णां दद्यामिति सदा न चैतद्विवृणोति सः ॥ ८ ॥ सोऽन्वेष-
माणः कौन्तेयं पाञ्चाल्यो जनमेजय। दृढं धनुरनायम्यं कारया-
मास भारत ॥ ९ ॥ यन्त्रं वैहायसं चापि कारयामास कृत्रि-
मम्। तेन यन्त्रेण सहितं राजा लक्ष्यं चकार सः ॥ १० ॥

द्रुपद उवाच। इदं सज्यं धनुः कृत्वा सज्यैरेभिश्च सायकैः।
अतीत्य लक्ष्यं यो वेद्धा स लब्धा मत्सुतामिति ॥ ११ ॥

वैशम्पायन उवाच। इति स द्रुपदो राजा स्वयम्बरमघो-
षयत्। तच्छ्रुत्वा पार्थिवाः सर्वे समीयुस्तत्र भारत ॥ १२ ॥
ऋषयश्च महात्मानः स्वयम्बरदिदृक्षवः। दुर्य्योधनपुरोगाश्च सकर्णाः
कुरवो नृप ॥ १३ ॥ ब्राह्मणाश्च महाभागा देशेभ्यः समुपागमन्।
ततोऽर्चिता राजगणा द्रुपदेन महात्मना ॥ १४ ॥ उपोपविष्टा
मञ्चेषु द्रष्टुकामाः स्वयम्बरम्। ततः पौरजनाः सर्वे सागरोद्धूत-
निःस्वनाः ॥ १५ ॥ शिशुमारशिरः प्राप्य न्यविशंस्ते स्म पार्थिवाः।
प्रागुत्तरेण नगराद्भूमिभागे समे शुभे। समाजवाटः शुशुभे
भवनैः सर्वतो वृतः ॥ १६ ॥ प्राकारपरिखोपेतो द्वारतोरण-
मण्डितः। वितानेन विचित्रेण सर्वतः समलङ्कृतः ॥ १७ ॥
तूर्य्यौघशतसङ्कीर्णः परार्द्ध्यागुरुधूपितः। चन्दनोदकसिक्तश्च माल्य-
दामोपशोभितः ॥ १८ ॥ कैलासशिखरप्रख्यैर्नभस्तलविलेखिभिः।
सर्वतः संवृतः शुभ्रैः प्रासादैः सुकृतोच्छ्रयैः ॥ १९ ॥ सुवर्णजाल-
सम्वीतैर्मणिकुट्टिमभूषितैः। सुखारोहणसोपानैर्महासनपरि-
च्छदैः ॥ २० ॥ अग्राम्यसमवच्छन्नैरगुरूत्तमवासितैः। हंसांशु-
वर्णैर्बहुभिरायोजनसुगन्धिभिः ॥ २१ ॥ असम्बाधशतद्वारैः शयना-
सनशोभितैः। बहुधातुपिनद्धाङ्गैर्हिमवच्छिखरैरिव ॥ २२ ॥

तत्र नानाप्रकारेषु विमानेषु स्वलङ्कृताः। स्पर्द्धमानास्तदान्योन्यं निषेदुः सर्व्वपार्थिवाः ॥ २३ ॥ तत्रोपविष्टान्ददृशुर्महासत्त्वपराक्रमान्। राजसिंहान्महाभागान् कृष्णागुरुविभूषितान् ॥२४॥ महाप्रसादान् ब्रह्मण्यान् स्वराष्ट्रपरिरक्षिणः। प्रियान् सर्व्वस्य लोकस्य सुकृतैः कर्म्मभिः शुभैः ॥ २५ ॥ मञ्चेषु च परार्द्ध्येषु पौरजानपदा जनाः। कृष्णादर्शनसिद्ध्यर्थं सर्व्वतः समुपाविशन् ॥२६॥ ब्राह्मणैस्ते च सहिताः पाण्डवाः समुपाविशन्। ऋद्धिं पाञ्चालराजस्य पश्यन्तस्तामनुत्तमाम् ॥ २७ ॥ ततः समाजो ववृधे स राजन्दिवसान् बहून्। रत्नप्रदानबहुलः शोभितो नटनर्त्तकैः ॥ २८ ॥ वर्त्तमाने समाजे तु रमणीयेऽह्नि षोडशे। आप्लुताङ्गी सुवसना सर्व्वाभरणभूषिता ॥ २९ ॥ मालाञ्च समुपादाय काञ्चनीं समलङ्कृताम्। अवतीर्णा ततो रङ्गं द्रौपदी भरतर्षभ ॥ ३० ॥ पुरोहितः सोमकानां मन्त्रविद्ब्राह्मणः शुचिः। परिस्तीर्य्य जुहावाग्निमाज्येन विधिवत्तदा ॥३१॥ स तर्पयित्वा ज्वलनं ब्राह्मणान् स्वस्ति वाच्य च। वारयामास सर्व्वाणि वादित्राणि समन्ततः ॥ ३२ ॥ निःशब्दे तु कृते तस्मिन् धृष्टद्युम्नो विशाम्पते। कृष्णामादाय विधिवन्मेघदुन्दुभिनिःस्वनः ॥ ३३ ॥ रङ्गमध्ये गतस्तत्र मेघगम्भीरया गिरा। वाक्यमुच्चैर्जगादेदं श्लक्ष्णमर्थवदुत्तमम् ॥३४॥ इदं धनुर्लक्ष्यमिमे च बाणाः शृण्वन्तु मे भूपतयः समेताः। छिद्रेण यन्त्रस्य समर्पयध्वं शरैः शितैर्व्योमचरैर्दशार्द्धैः ॥ ३५ ॥ एतन्महत्कर्म्म करोति यो वै कुलेन रूपेण बलेन युक्तः। तस्याद्य भार्य्या भगिनी ममेयं कृष्णा भवित्री न मृषा ब्रवीमि ॥ ३६ ॥ तानेवमुक्त्वा द्रुपदस्य पुत्रः पश्चादिदं तां भगिनीमुवाच। नाम्ना च गोत्रेण च कर्म्मणा च सङ्कीर्त्तयन् भूमिपतीन् समेतान् ॥ ३७ ॥

इत्यादिपर्व्वणि स्वयम्बरपर्व्वणि धृष्टद्युम्नवाक्ये सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

धृष्टद्युम्न उवाच। दुर्य्योधनो दुर्विषहो दुर्मुखो दुष्प्रधर्षणः। विविंशतिर्विकर्णश्च सहो दुःशासनस्तथा॥ १॥ युयुत्सुर्वायुवेगश्च भीमवेगधरस्तथा। उग्रायुधो बलाकी च करकायुर्विरोचनः॥२॥ कुण्डकश्चित्रसेनश्च सुवर्चाः कनकध्वजः। नन्दको बाहुशाली च तुहुण्डो विकटस्तथा॥ ३॥ एते चान्ये च बहवो धार्त्तराष्ट्रा महाबलाः। कर्णेन सहिता वीरास्त्वदर्थं समुपागताः॥ ४॥ असङ्ख्याता महात्मानः पार्थिवाः क्षत्रियर्षभाः। शकुनिः सौबलश्चैव वृषकोऽथ वृहद्बलः॥ ५॥ एते गान्धारराजस्य सुताः सर्वे समागताः। अश्वत्थामा च भोजश्च सर्वशस्त्रभृतां वरौ॥ ६॥ समवेतौ महात्मानौ त्वदर्थे समलङ्कृतौ। वृहन्तो मणिमांश्चैव दण्डधारश्च पार्थिवः॥ ७॥ सहदेवजयत्सेनौ मेघसन्धिश्च पार्थिवः। विराटः सह पुत्राभ्यां शङ्खेनैवोत्तरेण च॥ ८॥ वार्द्धक्षेमिः सुशर्मा च सेनाबिन्दुश्च पार्थिवः। सुकेतुः सह पुत्रेण सुनाम्ना च सुवर्चसा॥ ९॥ सुचित्रः सुकुमारश्च वृकः सत्यधृतिस्तथा। सूर्य्यध्वजो रोचमानो नीलश्चित्रायुधस्तथा॥ १०॥ अंशुमांश्चेकितानश्च श्रेणिमांश्च महाबलः। समुद्रसेनपुत्रश्च चन्द्रसेनः प्रतापवान्॥ ११॥ जलसन्धः पितापुत्रौ विदण्डो दण्ड एव च। पौण्ड्रको वासुदेवश्च भगदत्तश्च वीर्य्यवान्॥ १२॥ कलिङ्गस्ताम्रलिप्तश्च पत्तनाधिपतिस्तथा। मद्रराजस्तथा शल्यः सहपुत्रो महारथः॥ १३॥ रुक्माङ्गदेन वीरेण तथा रुक्मरथेन च। कौरव्यः सोमदत्तश्च पुत्राश्चास्य महारथाः॥ १४॥ समवेतास्त्रयः शूरा भूरिर्भूरिश्रवाः शलः। सुदक्षिणश्च काम्बोजो दृढधन्वा च कौरवः॥ १५॥ वृहद्बलः सुषेणश्च शिविरौशीनरस्तथा। पटच्चरनिहन्ता च कारूषाधिपतिस्तथा॥ १६॥ सङ्कर्षणो वासुदेवो रौक्मिणेयश्च वीर्य्यवान्। साम्बश्च चारुदेष्णश्च प्राद्युम्निः सगदस्तथा॥ १७॥ अक्रूरः सात्यकिश्चैव उद्धवश्च महामतिः।

कृतवर्म्मा च हार्दिक्यः पृथुर्विपृथुरेव च ॥ १८ ॥ विदूरथश्च कङ्कश्च शङ्कुश्च सगवेषणः । आशावहो निरुद्धश्च समीकः सारिमेजयः ॥ १९ ॥ वीरो वातपतिश्चैव झिल्ली पिण्डारकस्तथा । उशीनरश्च विक्रान्तो वृष्णयस्ते प्रकीर्त्तिताः ॥ २० ॥ भगीरथो बृहत्क्षत्रः सैन्धवश्च जयद्रथः । बृहद्रथो वाह्लिकश्च श्रुतायुश्च महारथः ॥२१॥ उलूकः कैतवो राजा चित्राङ्गदशुभाङ्गदौ । वत्सराजश्च मतिमान् कोशलाधिपतिस्तथा ॥ २२ ॥ शिशुपालश्च विक्रान्तो जरासन्धस्तथैव च । एते चान्ये च बहवो नानाजनपदेश्वराः ॥२३॥ त्वदर्थमागता भद्रे क्षत्रियाः प्रथिता भुवि । एते भेत्स्यन्ति विक्रान्तास्त्वदर्थं लक्ष्यमुत्तमम् । विध्येत य इदं लक्ष्यं वरयेथाः शुभेऽद्य तम् ॥ २४ ॥

इत्यादिपर्व्वणि स्वयम्वरपर्व्वणि राजनामकीर्त्तने अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

वैशम्पायन उवाच । तेऽलङ्कृताः कुण्डलिनो युवानः परस्परं स्पर्द्धमाना नरेन्द्राः । अस्त्रं बलं चात्मनि मन्यमानाः सर्व्वे समुत्पेतुरुदायुधास्ते ॥ १ ॥ रूपेण वीर्य्येण कुलेन चैव शीलेन वित्तेन च यौवनेन । समिद्धदर्पा मदवेगभिन्ना मत्ता यथा हैमवता गजेन्द्राः ॥ २ ॥ परस्परं स्पर्द्धया प्रेक्षमाणाः सङ्कल्पजेनाभिपरिप्लुताङ्गाः । कृष्णा ममैवेत्यभिभाषमाणा नृपासनेभ्यः सहसोदतिष्ठन् ॥ ३ ॥ ते क्षत्रिया रङ्गगताः समेता जिगीषमाणा द्रुपदात्मजां ताम् । चकाशिरे पर्व्वतराजकन्यामुमां यथा देवगणाः समेताः ॥ ४ ॥ कन्दर्पबाणाभिनिपीडिताङ्गाः कृष्णागतैस्ते हृदयैर्नरेन्द्राः । रङ्गावतीर्णा द्रुपदात्मजार्थं द्वेषं प्रचक्रुः सुहृदोऽपि तत्र ॥ ५ ॥ अथाययुर्देवगणा विमानै रुद्रादित्या

वसवोऽथाश्विनौ च। साध्याश्च सर्वे मरुतस्तथैव यमं पुरस्कृत्य धनेश्वरञ्च ॥ ६ ॥ दैत्याः सुपर्णाश्च महोरगाश्च देवर्षयो गुह्यकाश्चारणाश्च। विश्वावसुर्नारदपर्वतौ च गन्धर्वमुख्याः सह चाप्सरोभिः ॥ ७ ॥ हलायुधस्तत्र जनार्दनश्च वृष्ण्यन्धकाश्चैव यथाप्रधानम्। प्रेक्षां स्म चक्रुर्यदुपुङ्गवास्ते स्थिताश्च कृष्णस्य मते महान्तः ॥ ८ ॥ दृष्ट्वा तु तान्मत्तगजेन्द्ररूपान् पञ्चाभिपद्मानिव वारणेन्द्रान्। भस्मावृताङ्गानिव हव्यवाहान् कृष्णः प्रदध्यौ यदुवीरमुख्यः ॥ ९ ॥ शशंस रामाय युधिष्ठिरं स भीमं सजिष्णुं च यमौ च वीरौ। शनैः शनैस्तान् प्रसमीक्ष्य रामो जनार्दनं प्रीतमना ददर्श ॥ १० ॥ अन्ये तु वीरा नृपपुत्रपौत्राः कृष्णागतैर्नेत्रमनःस्वभावैः। व्यायच्छमाना ददृशुर्न तान् वै सन्दष्टदन्तच्छदताम्रनेत्राः ॥ ११ ॥ तथैव पार्थाः पृथुबाहवस्ते वीरौ यमौ चैव महानुभावौ। तां द्रौपदीं प्रेक्ष्य तदा स्म सर्वे कन्दर्पबाणाभिहता बभूवुः ॥ १२ ॥ देवर्षिगन्धर्वसमाकुलं तत् सुपर्णनागासुरसिद्धजुष्टम्। दिव्येन गन्धेन समाकुलञ्च दिव्यैश्च पुष्पैरवकीर्यमाणम् ॥ १३ ॥ महास्वनैर्दुन्दुभिनादितैश्च बभूव तत् सङ्कुलमन्तरीक्षम्। विमानसम्बाधमभूत्समन्तात्सवेणुवीणापणवानुनादम् ॥ १४ ॥ ततस्तु ते राजगणाः क्रमेण कृष्णानिमित्तं कृतविक्रमाश्च। सकर्णदुर्योधनशाल्वशल्यद्रौण्यायनिक्राथसुनीथवक्राः ॥ १५ ॥ कलिङ्गवङ्गाधिपपाण्ड्यपौण्ड्रा विदेहराजो यवनाधिपश्च। अन्ये च नानानृपपुत्रपौत्रा राष्ट्राधिपाः पङ्कजपत्रनेत्राः ॥ १६ ॥ किरीटहाराङ्गदचक्रवालैर्विभूषिताङ्गाः पृथुबाहवस्ते। अनुक्रमं विक्रमसत्त्वयुक्ता बलेन वीर्येण च नर्दमानाः ॥१७॥ तत्कार्मुकं संहननोपपन्नं सज्यं न शेकुर्मनसापि कर्तुम्। ते विक्रमन्तः स्फुरता दृढेन निक्षिप्यमाणा धनुषा नरेन्द्राः ॥१८॥ विचेष्टमाना धरणीतलस्था यथाबलं प्रेक्ष्यगुणक्रमाश्च। गतौजसः

स्त्रस्तकिरीटहारा विनिश्वसन्तः शमयाम्बभूवुः ॥ १९ ॥ हाहा-
कृतं तद्धनुषा दृढेन विस्रस्तहाराङ्गदचक्रवालम्। कृष्णानिमित्तं
विनिवृत्तकामं राज्ञां तदा मण्डलमार्त्तमासीत् ॥ २० ॥ सर्वा-
न्नृपांस्तान् प्रसमीक्ष्य कर्णो धनुर्द्धराणां प्रवरो जगाम। उद्धृत्य
तूर्णं धनुरुद्यतं तत्सज्यं चकाराशु युयोज बाणान् ॥ २१ ॥ दृष्ट्वा
सूतं मेनिरे पाण्डुपुत्रा भित्त्वा नीतं लक्ष्यवरं धरायाम्। धनु-
र्द्धरा रागकृतप्रतिज्ञमत्यग्निसोमार्कमथार्कपुत्रम् ॥ २२ ॥ दृष्ट्वा तु
तं द्रौपदी वाक्यमुच्चैर्जगाद नाहं वरयामि सूतम्। सामर्षहासं
प्रसमीक्ष्य सूर्य्यं तत्याज कर्णः स्फुरितं धनुस्तत् ॥ २३ ॥ एवं तेषु
निवृत्तेषु क्षत्रियेषु समन्ततः। चेदीनामधिपो वीरो बलवान-
न्तकोपमः ॥ २४ ॥ दमघोषसुतो धीरः शिशुपालो महामतिः।
धनुरादायमानस्तु जानुभ्यामगमन्महीम् ॥ २५ ॥ ततो राजा
महावीर्य्यो जरासन्धो महाबलः। धनुषोऽभ्याशमागत्य तस्थौ
गिरिरिवाचलः ॥ २६ ॥ धनुषा पीड्यमानस्तु जानुभ्यामगमन्-
महीम्। तत उत्थाय राजा स स्वराष्ट्राण्यभिजग्मिवान् ॥ २७ ॥
ततः शल्यो महावीर्य्यो मद्रराजो महाबलः। तदप्यारोप्यमाणस्तु
जानुभ्यामगमन्महीम् ॥ २८ ॥ तस्मिंस्तु संभ्रान्तजने समाजे
निक्षिप्तवादेषु जनाधिपेषु। कुन्तीसुतो जिष्णुरियेष कर्त्तुं सज्यं
धनुस्तत्प्रवरं प्रवीरः ॥ २९ ॥

इत्यादिपर्व्वणि स्वयम्वरपर्व्वणि राजपराङ्मुखे ऊन-
नवत्यधिकशततोऽध्यायः ॥ १८९ ॥

वैशम्पायन उवाच। यदा निवृत्ता राजानो धनुषः सज्य-
कर्म्मणः। अथोदतिष्ठद्विप्राणां मध्याज्जिष्णुरुदारधीः ॥ १ ॥
उदक्रोशन्विप्रमुख्या विधुन्वन्तोऽजिनानि च। दृष्ट्वा सम्प्रस्थितं

पार्थमिन्द्रकेतुसमप्रभम् ॥ २ ॥ केचिदासन्विमनसः केचिदासन् मुदान्विताः । आहुः परस्परं केचिन्निपुणा बुद्धिजीविनः ॥३॥ यत्कर्णशल्यप्रमुखैः पार्थिवैर्लोकविश्रुतैः । नानतं बलवद्भिर्हि धनुर्वेदपरायणैः ॥ ४ ॥ तत्कथं त्वकृतास्त्रेण प्राणतो दुर्बलीयसा । वटुमात्रेण शक्यं हि सज्यं कर्तुं धनुर्द्विजाः ॥ ५ ॥ अवहास्या भविष्यन्ति ब्राह्मणाः सर्वराजसु । कर्मण्यस्मिन्नसंसिद्धे चापलादपरीक्षिते ॥ ६ ॥ यद्येष दर्पाद्धर्षाद्वाप्यथ ब्राह्मणचापलात् । प्रस्थितो धनुरायन्तुं वार्यतां साधु मा गमत् ॥ ७ ॥

ब्राह्मणा ऊचुः । नावहास्या भविष्यामो न च लाघवमास्थिताः । न च विद्विष्टतां लोके गमिष्यामो महीक्षिताम् ॥८॥ केचिदाहुर्युवा श्रीमान्नागराजकरोपमः । पीनस्कन्धोरुबाहुश्च धैर्येण हिमवानिव ॥ ९ ॥ सिंहखेलगतिः श्रीमान्मत्तनागेन्द्रविक्रमः । सम्भाव्यमस्मिन् कर्मेदमुत्साहाच्चानुमीयते ॥ १० ॥ शक्तिरस्य महोत्साहा न ह्यशक्तः स्वयं व्रजेत् । न च तद्विद्यते किञ्चित्कर्म लोकेषु यद्भवेत् ॥ ११ ॥ ब्राह्मणानामसाध्यञ्च नृषु संस्थानचारिषु । अब्भक्षा वायुभक्षाश्च फलाहारा दृढव्रताः ॥१२॥ दुर्बला अपि विप्रा हि बलीयांसः स्वतेजसा । ब्राह्मणो नावमन्तव्यः सदसद्वा समाचरन् ॥ १३ ॥ सुखं दुःखं महद्ध्रस्वं कर्म यत्समुपागतम् । जामदग्न्येन रामेण निर्जिताः क्षत्रिया युधि ॥ १४ ॥ पीतः समुद्रोऽगस्त्येन अगाधो ब्रह्मतेजसा । तस्माद्ब्रुवन्तु सर्वेऽत्र वटुरेष धनुर्महान् ॥ १५ ॥ आरोपयतु शीघ्रं वै तथेत्यूचुर्द्विजर्षभाः । एवं तेषां विलपतां विप्राणां विविधा गिरः ॥ १६ ॥ अर्जुनो धनुषोऽभ्याशे तस्थौ गिरिरिवाचलः । स तद्धनुः परिक्रम्य प्रदक्षिणमथाकरोत् ॥ १७ ॥ प्रणम्य शिरसा देवमीशानं वरदं प्रभुम् । कृष्णञ्च मनसा कृत्वा जगृहे चार्जुनो धनुः ॥ १८ ॥ यत्पार्थिवै रुक्मसुनीथवक्रै राधेयदुर्योधनशल्य

शाल्वैः। तदा धनुर्वेदपरैर्नृसिंहैः कृतं न सज्यं महतोऽपि यत्नात् ॥ १९ ॥ तदर्ज्जुनो वीर्य्यवतां सदर्पस्तदैन्द्रिरिन्द्रावरज-प्रभावः। सज्यञ्च चक्रे निमिषान्तरेण शरांश्च जग्राह दशार्द्ध-सङ्ख्यान् ॥ २० ॥ विव्याध लक्ष्यं निपपात तच्च छिद्रेण भूमौ सहसातिविद्धम् ॥ २१ ॥ ततोऽन्तरीक्षे च बभूव नादः समाज-मध्ये च महान्निनादः ॥ २२ ॥ पुष्पाणि दिव्यानि ववर्ष देवः पार्थस्य मूर्द्ध्नि द्विषतां निहन्तुः। चैलानि विव्यधुस्तत्र ब्राह्म-णाश्च सहस्रशः ॥ २३ ॥ विलज्जितास्ततश्चक्रुर्हाहाकारांश्च सर्व्वशः। न्यपतंश्चात्र नभसः समन्तात् पुष्पवृष्टयः ॥ २४ ॥ शताङ्गानि च तूर्य्याणि वादकाः समवादयन्। सूतमागधसङ्घाश्च व्यस्तुवंस्तत्र सुस्वराः ॥ २५ ॥ तं दृष्ट्वा द्रुपदः प्रीतो बभूव रिपुसूदनः। सह सैन्यैश्च पार्थस्य साहाय्यार्थमियेष सः ॥ २६ ॥ तस्मिंस्तु शब्दे महति प्रवृद्धे युधिष्ठिरो धर्म्मभृतां वरिष्ठः। आवासमेवोपजगाम शीघ्रं सार्द्धं यमाभ्यां पुरुषोत्तमाभ्याम् ॥ २७ ॥ विद्धन्तु लक्ष्यं प्रसमीक्ष्य कृष्णा पार्थञ्च शक्रप्रतिमं निरीक्ष्य। आदाय शुक्लाम्बर-माल्यदाम जगाम कुन्तीसुतमुत्स्मयन्ती ॥ २८ ॥ स तामुपादाय विजित्य रङ्गे द्विजातिभिस्तैरभिपूज्यमानः। रङ्गान्निरक्राम-दचिन्त्यकर्म्मा पत्न्या तया चाप्यनुगम्यमानः ॥ २९ ॥

इत्यादिपर्व्वणि स्वयम्वरपर्व्वणि लक्ष्यच्छेदने नव-
त्यधिकशततमोऽध्यायः ॥ १९० ॥

---

वैशम्पायन उवाच। तस्मै दित्सति कन्यान्तु ब्राह्मणाय तदा नृपे। कोप आसीन्महीपानामालोक्यान्योन्यमन्तिकात् ॥ १ ॥ अस्मानयमतिक्रम्य तृणीकृत्य च सङ्गतान्। दातुमिच्छति विप्राय द्रौपदीं योषितांवराम् ॥ २ ॥ अवरोप्येह वृक्षन्तु फलकाले

निपात्यते। निहन्मैनं दुरात्मानं योऽयमस्मान्न मन्यते ॥ ३ ॥
न ह्यर्हत्येष सम्मानं नापि वृद्धक्रमं गुणैः। हन्मैनं सह पुत्रेण
दुराचारं नृपद्विषम् ॥ ४ ॥ अयं हि सर्वानाहूय सत्कृत्य च
नराधिपान्। गुणवद्भोजयित्वान्नं ततः पश्चान्न मन्यते ॥ ५ ॥
अस्मिन्राजसमावाये देवानामिव सन्नये। किमयं सदृशं कञ्चि-
न्नृपतिं नैव दृष्टवान् ॥ ६ ॥ न च विप्रेष्वधीकारो विद्यते
वरणं प्रति। स्वयम्वरः क्षत्रियाणामितीयं प्रथिता श्रुतिः
॥ ७ ॥ अथवा यदि कन्येयं न च कञ्चिद्बुभूषति। अग्ना-
वेनां प्रतिक्षिप्य याम राष्ट्राणि पार्थिवाः ॥ ८ ॥ ब्राह्मणो
यदि चापल्याल्लोभाद्वा कृतवानिदम्। विप्रियं पार्थिवेन्द्राणां
नैव वध्यः कथञ्चन ॥ ९ ॥ ब्राह्मणार्थं हि नो राज्यं जीवितं
हि वसूनि च। पुत्रपौत्रं च यच्चान्यदस्माकं विद्यते धनम्
॥ १० ॥ अवमानभयाच्चैव स्वधर्मस्य च रक्षणात्। स्वय-
म्वराणामन्येषां माभूदेवंविधा गतिः ॥ ११ ॥ इत्युक्त्वा राज-
शार्दूला हृष्टाः परिघबाहवः। द्रुपदन्तु जिघांसन्तः सायुधाः
समुपाद्रवन् ॥ १२ ॥ तान् गृहीतशरावापान् क्रुद्धानापततो
बहून्। द्रुपदो वीक्ष्य सन्त्रासाद्ब्राह्मणाञ्छरणं गतः ॥ १३ ॥
वेगेनापततस्तांस्तु प्रभिन्नानिव वारणान्। पाण्डुपुत्रौ महेष्वासौ
प्रतियातावरिन्दमौ ॥ १४ ॥ ततः समुत्पेतुरुदायुधास्ते महो-
क्षितो बद्धतलाङ्गुलित्राः। जिघांसमानाः कुरुराजपुत्रावमर्ष-
यन्तोऽर्जुनभीमसेनौ ॥ १५ ॥ ततस्तु भीमोऽद्भुतभीमकर्मा महा-
बलो वज्रसमानसारः। उत्पाट्य दोर्भ्यां द्रुममेकवीरो निष्पत्रया-
मास यथा गजेन्द्रः ॥ १६ ॥ तं वृक्षमादाय रिपुप्रमाथी दण्डीव
दण्डं पितृराज उग्रम्। तस्थौ समीपे पुरुषर्षभस्य पार्थस्य पार्थः
पृथुदीर्घबाहुः ॥ १७ ॥ तत् प्रेक्ष्य कर्मातिमनुष्यबुद्धिर्जिष्णुः स
हि भ्रातुरचिन्त्यकर्मा। विसिस्मिये चापि भयं विहाय तस्थौ

धनुर्गृह्य महेन्द्रकर्मा ॥ १८ ॥ तत् प्रेक्ष्य कर्मातिमनुष्यबुद्धि-
र्जिष्णोः सहभ्रातुरचिन्त्यकर्मा । दामोदरो भ्रातरमुग्रवीर्यं हला-
युधं वाक्यमिदं बभाषे ॥ १९ ॥ य एष सिंहर्षभखेलगामी महद्-
धनुः कर्षति तालमात्रम् । एषोऽर्जुनो नात्र विचार्य्यमस्ति यद्यस्मि
सङ्कर्षण वासुदेवः ॥ २० ॥ यस्त्वेष वृक्षं तरसावभज्य राज्ञां
निकारे सहसा प्रवृत्तः । वृकोदरान्नान्य इहैतदद्य कर्त्तुं समर्थः
समरे पृथिव्याम् ॥ २१ ॥ योऽसौ पुरस्तात्कमलायताक्षस्तनुर्महा-
सिंहगतिर्विनीतः । गौरः प्रलम्बोज्ज्वलचारुघोणो विनिःसृतः
सोऽच्युत धर्म्मपुत्रः ॥ २२ ॥ यौ तौ कुमाराविव कार्त्तिकेयौ
द्वावश्विनेयाविति मे वितर्कः । मुक्ता हि तस्माज्जतुवेश्मदाहा-
न्मया श्रुताः पाण्डुसुताः पृथा च ॥ २३ ॥ तमब्रवीन्निर्ज्जलतो-
यदाभो हलायुधोऽनन्तरजं प्रतीतः । प्रीतोऽस्मि दृष्ट्वा हि पितृ-
स्वसारं पृथां विमुक्तां सह कौरवाग्र्यैः ॥ २४ ॥

इत्यादिपर्व्वणि स्वयम्बरपर्व्वणि कृष्णवाक्ये एकनवत्य-
धिकशततोऽध्यायः ॥ १९१ ॥

---

वैशम्पायन उवाच । अजिनानि विधुन्वन्तः करकांश्च द्विज-
र्षभाः । ऊचुस्ते भीर्न कर्त्तव्या वयं योत्स्यामहे परान् ॥ १ ॥
तानेवं वदतो विप्रानर्जुनः प्रहसन्निव । उवाच प्रेक्षका भूत्वा
यूयं तिष्ठत पार्श्वतः ॥ २ ॥ अहमेनानजिह्माग्रैः शतशो विकि-
रञ्छरैः । वारयिष्यामि संक्रुद्धान्मन्त्रैराशीविषानिव ॥ ३ ॥ इति
तद्धनुरानम्य शुल्कावाप्तं महाबलः । भ्रात्रा भीमेन सहितस्तस्थौ
गिरिरिवाचलः ॥ ४ ॥ ततः कर्णमुखान्दृष्ट्वा क्षत्रियान् युद्धदुर्म-
दान् । सम्पेततुरभीतौ तौ गजौ प्रति गजानिव ॥ ५ ॥ ऊचुश्च
वाचः परुषास्ते राजानो युयुत्सवः । आहवे हि द्विजस्यापि वधो

हृष्टो युयुत्सत: ॥ ६ ॥ इत्येवमुक्त्वा राजानः सहसा दुद्रुवुर्द्विजान्।
तत: कर्णो महातेजा जिष्णुं प्रति ययौ रणे ॥ ७ ॥ युद्धार्थी
वाशिताहेतोर्गज: प्रतिगजं यथा। भीमसेनं ययौ शल्यो मद्राणा-
मीश्वरो बली ॥ ८ ॥ दुर्योधनादय: सर्वे ब्राह्मणैः सह सङ्गता:।
लघुपर्वमयत्नेन प्रत्ययुध्यंस्तदाहवे ॥ ९ ॥ ततोऽर्जुन: प्रत्यविध्य-
दापतन्तं शितैः शरै:। कर्णं वैकर्त्तनं श्रीमान्विकृष्य बलवद्धनुः
॥ १० ॥ तेषां शराणां वेगेन शितानां तिग्मतेजसाम्। विमुह्य-
मानो राधेयो यत्नात्तमनुधावति ॥ ११ ॥ तावुभावप्यनिर्देश्यौ
लाघवाज्जयतां वरौ। अयुध्येतां सुसंरब्धावन्योऽन्यविजिगीषिणौ
॥ १२ ॥ कृते प्रतिकृतं पश्य पश्य बाहुबलञ्च मे। इति शूरार्थ-
वचनैरभाषेतां परस्परम् ॥ १३ ॥ ततोऽर्जुनस्य भुजयोर्वीर्य-
मप्रतिमं भुवि। ज्ञात्वा वैकर्त्तन: कर्णः संरब्ध: समयोधयत् ॥१४॥
अर्जुनेन प्रयुक्तांस्तान्बाणान्वेगवतस्तदा। प्रतिहत्य ननादोच्चै:
सैन्यानि तदपूजयन् ॥ १५ ॥

कर्ण उवाच। तुष्यामि ते विप्रमुख्य भुजवीर्यस्य संयुगे।
अविषादस्य चैवास्य शस्त्रास्त्रविजयस्य च ॥ १६ ॥ किं त्वं
साक्षाद्धनुर्वेदो रामो वा विप्रसत्तम। अथ साक्षाद्धरिहय: साक्षाद्वा
विष्णुरच्युत: ॥ १७ ॥ आत्मप्रच्छादनार्थं वै बाहुवीर्यमुपाश्रित:।
विप्ररूपं विधायेदं मन्ये मां प्रतियुध्यसे ॥ १८ ॥ न हि मामाहवे
क्रुद्धमन्य: साक्षाच्छचीपतेः। पुमान् योधयितुं शक्त: पाण्डवाद्वा
किरीटिन: ॥ १९ ॥ तमेवं वादिनं तत्र फाल्गुनः प्रत्यभाषत।
नास्मि कर्ण धनुर्वेदो नास्मि राम: प्रतापवान् ॥२०॥ ब्राह्मणोऽस्मि
युधां श्रेष्ठ: सर्वशस्त्रभृतांवर:। ब्राह्मे पौरन्दरे चास्त्रे निष्ठितो
गुरुशासनात्। स्थितोऽस्म्यद्य रणे जेतुं त्वां वै वीर स्थिरो भव ॥२१॥

वैशम्पायन उवाच। एवमुक्तस्तु राधेयो युद्धात्कर्णो न्यव-
र्त्तत। ब्राह्मं तेजस्तदाजय्यं मन्यमानो महारथ: ॥ २२ ॥

अपरस्मिन्नवोद्देशे वीरौ शल्यवृकोदरौ । बलिनौ युद्धसम्पन्नौ विद्यया च बलेन च ॥ २३ ॥ अन्योन्यमाह्वयन्तौ तु मत्ताविव महागजौ । मुष्टिभिर्जानुभिश्चैव निघ्नन्तावितरेतरम् ॥ २४ ॥ प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः । आचकर्षतुरन्योन्यं मुष्टिभिश्चापि जघ्नतुः ॥ २५ ॥ ततश्चटचटाशब्दः सुघोरो ह्यभवत्तयोः । पाषाणसम्पातनिभैः प्रहारैरभिजघ्नतुः ॥ २६ ॥ मुहूर्त्तं तौ तदान्योऽन्यं समरे पर्य्यकर्षताम् । ततो भीमः समुत्क्षिप्य बाहुभ्यां शल्यमाहवे । अपातयत् कुरुश्रेष्ठो ब्राह्मणा जहसुस्तदा ॥ २७ ॥ तत्राश्चर्य्यं भीमसेनश्चकार पुरुषर्षभः । यच्छल्यं पातितं भूमौ नावधीद्बलिनं बली ॥ २८ ॥ पातिते भीमसेनेन शल्ये कर्णे च शङ्किते । शङ्किताः सर्वराजानः परिवव्रुर्वृकोदरम् ॥ २९ ॥ ऊचुश्च सहितास्तत्र साध्विमौ ब्राह्मणर्षभौ । विज्ञायेतां क्वजन्मानौ क्वनिवासौ तथैव च ॥ ३० ॥ को हि राधासुतं कर्णं शक्तो योधयितुं रणे । अन्यत्र रामाद्द्रोणाद्वा पाण्डवाद्वा किरीटिनः ॥ ३१ ॥ कृष्णाद्वा देवकीपुत्रात् कृपाद्वापि शरद्वतः । को वा दुर्य्योधनं शक्तः प्रतियोधयितुं रणे ॥ ३२ ॥ तथैव मद्राधिपतिं शल्यं बलवतां वरम् । बलदेवादृते वीरात् पाण्डवाद्वा वृकोदरात् ॥ ३३ ॥ वीराद्दुर्य्योधनाद्वान्यः शक्तः पातयितुं रणे । क्रियतामवहारोऽस्माद्युद्धाद्ब्राह्मणसंयुतात् ॥ ३४ ॥ ब्राह्मणा हि सदा रक्ष्याः सापराधापि नित्यदा । अथैनानुपलभ्येह पुनर्योत्स्याम हृष्टवत् ॥ ३५ ॥

वैशम्पायन उवाच । तत्कर्म्म भीमस्य समीक्ष्य कृष्णः कुन्तीसुतौ तौ परिशङ्कमानः । निवारयामास महीपतींस्तान्धर्म्मेण लब्धेत्यनुनीय सर्वान् ॥ ३६ ॥ एवं ते विनिवृत्तास्तु युद्धाद्युद्धविशारदाः । यथावासं ययुः सर्वे विस्मिता राजसत्तमाः ॥ ३७ ॥ वृत्तो ब्रह्मोत्तरो रङ्गः पाञ्चाली ब्राह्मणैर्वृता । इति ब्रुवन्तः

प्रययुश्च ततस्तत्र समागताः ॥ ३८ ॥ ब्राह्मणैस्तु प्रतिच्छन्नौ
रौरवाजिनवासिभिः । कृच्छ्रेण जग्मतुस्तौ तु भीमसेनधनञ्जयौ
॥ ३९ ॥ विमुक्तौ जनसम्बाधाच्छत्रुभिः परिविक्षतौ । कृष्णया-
नुगतौ तत्र नृवीरौ तौ विरेजतुः ॥ ४० ॥ पौर्णमास्यां घनै-
र्मुक्तौ चन्द्रसूर्याविवोदितौ । तेषां माता बहुविधं विनाशं
पर्य्यचिन्तयत् ॥ ४१ ॥ अनागच्छत्सु पुत्रेषु भैक्ष्यकालेऽभि-
गच्छति । धार्तराष्ट्रैर्हता नु स्युर्विज्ञाय कुरुपुङ्गवाः ॥ ४२ ॥
मायान्वितैर्वा रक्षोभिः सुघोरैर्दृढवैरिभिः । विपरीतं मतं जातं
व्यासस्यापि महात्मनः ॥ ४३ ॥ इत्येवं चिन्तयामास सुतस्नेहा-
वृता पृथा । ततः सुप्तजनप्राये दुर्द्दिने मेघसंप्लुते ॥ ४४ ॥ मह-
त्यथापराह्णे तु घनैः सूर्य्य इवावृतः । ब्राह्मणैः प्राविशत्तत्र
जिष्णुर्भार्गववेश्म तत् ॥ ४५ ॥

इत्यादिपर्व्वणि स्वयम्वरपर्व्वणि पाण्डवप्रत्यागमने
द्विनवत्यधिकशततोऽध्यायः ॥ १९२ ॥

---

वैशम्पायन उवाच । गत्वा तु तां भार्गवकर्म्मशालां पार्थौ
पृथां प्राप्य महानुभावौ । तां याज्ञसेनीं परमप्रतीतौ भिक्षेत्यथा-
वेदयतां नराग्र्यौ ॥ १ ॥ कुटीगता सा त्वनवेक्ष्य पुत्रौ प्रोवाच
भुङ्क्तेति समेत्य सर्वे । पश्चाच्च कुन्ती प्रसमीक्ष्य कृष्णां कष्टं मया
भाषितमित्युवाच ॥ २ ॥ सा धर्म्मभीता परिचिन्तयन्ती तां याज्ञ-
सेनीं परमप्रतीताम् । पाणौ गृहीत्वोपजगाम कुन्ती युधिष्ठिरं
वाक्यमुवाच चेदम् ॥ ३ ॥

कुन्त्युवाच । इयन्तु कन्या द्रुपदस्य राज्ञस्तवानुजाभ्यां मयि
सन्निसृष्टा । यथोचितं पुत्र मयापि चोक्तं समेत्य भुङ्क्तेति नृप

प्रसादात् ॥ ४ ॥ एतत् कथं नानृतमुक्तमद्य भवेत् कुरूणामृषभ ब्रवीहि । पाञ्चालराजस्य सुतामधर्म्मो न चोपवर्त्तेत न विभ्रमेच्च ॥ ५ ॥

वैशम्पायन उवाच । स एवमुक्तो मतिमान् सुवीरो भ्रात्रा मुहूर्त्तं तु विचिन्त्य राजा । कुन्तीं समाश्वास्य कुरुप्रवीरो धनञ्जयं वाक्यमिदं बभाषे ॥ ६ ॥ त्वया जिता फाल्गुन याज्ञसेनी त्वयैव शोभिष्यति राजपुत्री । प्रज्वाल्यतामग्निरमित्रसाह गृहाण पाणिं विधिवत्त्वमस्याः ॥ ७ ॥

अर्जुन उवाच । मा मां नरेन्द्र त्वमधर्म्मभाजं कृथा न धर्म्मोऽयमशिष्टदृष्टः । भवान्निवेश्यः प्रथमं ततोऽयं भीमो महाबाहुरचिन्त्यकर्म्मा ॥ ८ ॥ अहं ततो नकुलोऽनन्तरो मे पश्चादयं सहदेवस्तरस्वी । वृकोदरोऽहञ्च यमौ च राजन्नियञ्च कन्या भवतो नियोज्या ॥ ९ ॥ एवं गते यत्करणीयमत्र धर्म्म्यं यशस्यं कुरु तद्विचिन्त्य । पञ्चालराजस्य हितञ्च यत् स्यात् प्रशाधि सर्वे स्म वशे स्थितास्ते ॥ १० ॥

वैशम्पायन उवाच । जिष्णोर्वचनमाज्ञाय भक्तिस्नेहसमन्वितम् । दृष्टिं निवेशयामासुः पाञ्चाल्यां पाण्डुनन्दनाः ॥ ११ ॥ दृष्ट्वा ते तत्र पश्यन्तीं सर्वे कृष्णां यशस्विनीम् । सम्प्रेक्ष्यान्योन्यमासीना हृदयैस्तामधारयन् ॥ १२ ॥ तेषान्तु द्रौपदीं दृष्ट्वा सर्वेषाममितौजसाम् । सम्प्रमथ्येन्द्रियग्रामं प्रादुरासीन्मनोभवः ॥ १३ ॥ काम्यं हि रूपं पाञ्चाल्या विधात्रा विहितं स्वयम् । बभूवाधिकमन्याभ्यः सर्वभूतमनोहरम् ॥ १४ ॥ तेषामाकारभावज्ञः कुन्तीपुत्रो युधिष्ठिरः । द्वैपायनवचः कृत्स्नं सस्मार मनुजर्षभाः ॥ १५ ॥ अब्रवीत् स हि तान् भ्रातॄन्मिथो भेदभयान्नृपः । सर्वेषां द्रौपदी भार्य्या भविष्यति हि नः शुभा ॥ १६ ॥

वैशम्पायन उवाच । भ्रातुर्वचस्तत् प्रसमीक्ष्य सर्वे ज्येष्ठस्य

पाण्डोः सुतानयथासत्तदानीम्। तमेवार्थं ध्यायमाना मनोभिः सर्वे च ते तस्थुरदीनसत्त्वाः ॥ १७ ॥ वृष्णिप्रवीरस्तु कुरुप्रवीरानाशंसमानः सहरौहिणेयः। जगाम तां भार्गवकर्मशालां यत्रासते ते पुरुषप्रवीराः ॥ १८ ॥ तत्रोपविष्टं पृथुदीर्घबाहुं ददर्श कृष्णः सहरौहिणेयः। अजातशत्रुं परिवार्य्य तांश्चाप्युपोपविष्टान् ज्वलनप्रकाशान् ॥ १९ ॥ ततोऽब्रवीद्वासुदेवोऽभिगम्य कुन्तीसुतं धर्मभृतांवरिष्ठम्। कृष्णोऽहमस्मीति निपीड्य पादौ युधिष्ठिरस्याजमीढस्य राज्ञः ॥ २० ॥ तथैव तस्याप्यनुरौहिणेयस्तौ चापि हृष्टाः कुरवोऽभ्यनन्दन्। पितृष्वसुश्चापि यदुप्रवीरावगृह्णतां भारतमुख्य पादौ ॥ २१ ॥ अजातशत्रुश्च कुरुप्रवीरः पप्रच्छ कृष्णं कुशलं विलोक्य। कथं वयं वासुदेव त्वयेह गूढा वसन्तो विदिताश्च सर्वे ॥ २२ ॥ तमब्रवीद्वासुदेवः प्रहस्य गूढोऽप्यग्निर्ज्ञायत एव राजन्। तं विक्रमं पाण्डवेयानतीत्य कोऽन्यः कर्त्ता विद्यते मानुषेषु ॥ २३ ॥ दिष्ट्या सर्वे पावकाद्विप्रमुक्ता यूयं घोरात् पाण्डवाः शत्रुसाहाः। दिष्ट्या पापो धृतराष्ट्रस्य पुत्रः सहामात्यो न सकामोऽभविष्यत् ॥ २४ ॥ भद्रं वोऽस्तु निहितं यद्गुहायां विवर्द्धध्वं ज्वलना इवैधमानाः। मा वो विद्युः पार्थिवाः केचिदेव यास्यावहे शिबिरायैव तावत्। सोऽनुज्ञातः पाण्डवेनाव्ययश्रीः प्रायाच्छीघ्रं बलदेवेन सार्द्धम् ॥ २५ ॥

इत्यादिपर्व्वणि स्वयम्वरपर्व्वणि रामकृष्णागमने त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

—•:•—

वैशम्पायन उवाच। धृष्टद्युम्नस्तु पाञ्चाल्यः पृष्ठतः कुरुनन्दनौ। अन्वगच्छत्तदा यान्तौ भार्गवस्य निवेशने ॥ १ ॥ सोऽज्ञायमानः पुरुषानवधाय समन्ततः। स्वयमारान्निलीनो-

श्रृङ्गाणंवस्य निवेशने ॥ २ ॥ सायञ्च भीमस्तु रिपुप्रमाथी जिष्णु-श्चमौ चापि महानुभावौ। भैक्ष्यं चरित्वा तु युधिष्ठिराय निवेदयाञ्चक्रुरदीनसत्त्वाः ॥ ३ ॥ ततस्तु कुन्ती द्रुपदात्मजां तामुवाच काले वचनं वदान्या। त्वमग्रमादाय कुरुष्व भद्रे बलिञ्च विप्राय च देहि भिक्षाम् ॥ ४ ॥ ये चान्नमिच्छन्ति ददस्व तेभ्यः परिश्रिता ये परितो मनुष्याः। ततश्च शेषं प्रविभज्य शीघ्रमर्द्धं चतुर्णां मम चात्मनश्च ॥ ५ ॥ अर्द्धन्तु भीमाय च देहि भद्रे य एष नागर्षभतुल्यरूपः। गौरो युवा संहननोपपन्न एषो हि वीरो बहुभुक् सदैव ॥ ६ ॥ सा हृष्टरूपेव तु राजपुत्री तस्या वचः साध्वविशङ्कमाना। यथावदुक्तं प्रचकार साध्वी ते चापि सर्वे बुभुजुस्तदन्नम् ॥ ७ ॥ कुशैस्तु भूमौ शयनं चकार माद्रीपुत्रः सहदेवस्तरस्वी। यथा स्वकीयान्यजिनानि सर्वे संस्तीर्य्य वीराः सुषुपुर्द्धरण्याम् ॥ ८ ॥ अगस्त्यशास्तामभितो दिशन्तु शिरांसि तेषां कुरुसत्तमानाम्। कुन्ती पुरस्तात्तु बभूव तेषां पादान्तरे चाथ बभूव कृष्णा ॥ ९ ॥ अशेत भूमौ सह पाण्डुपुत्रैः पादोपधानीव कृता कुशेषु। न तत्र दुःखं मनसापि तस्या न चावमेने कुरुपुङ्गवांस्तान् ॥ १० ॥ ते तत्र शूराः कथयाम्बभूवुः कथा विचित्राः पृतनाधिकाराः। अस्त्राणि दिव्यानि रथांश्च नागान् खड्गान् गदाश्चापि परश्वधांश्च ॥ ११ ॥ तेषां कथास्ताः परिकीर्त्त्यमानाः पञ्चालराजस्य सुतस्तदानीम्। शुश्राव कृष्णां च तदा निषण्णां ते चापि सर्वे ददृशुर्मनुष्याः ॥ १२ ॥ धृष्टद्युम्नो राजपुत्रस्तु सर्वं वृत्तं तेषां कथितञ्चैव रात्रौ। सर्वं राज्ञे द्रुपदायाखिलेन निवेदयिष्यंस्त्वरितो जगाम ॥ १३ ॥ पाञ्चालराजस्तु विषण्णरूपस्तान् पाण्डवानप्रतिविन्दमानः। धृष्टद्युम्नं पर्य्यपृच्छन्महात्मा क्व सा गता केन नीता च कृष्णा ॥ १४ ॥ कच्चिन्न शूद्रेण न हीनजेन वैश्येन वा करदेनोपपन्ना। कच्चित्पदं मूर्द्ध्नि

न पङ्कदिग्धं कच्चिन्न माला पतिता श्मशाने ॥ १५ ॥ कच्चित् सवर्णप्रवरो मनुष्य उद्रिक्तवर्णोऽप्युत एव कच्चित्। कच्चिन्न वामो मम मूर्ध्नि पादः कृष्णाभिमर्षेण कृतोऽद्य पुत्र ॥ १६ ॥ कच्चिन्न तप्ये परमप्रतीतः संयुज्य पार्थेन नरर्षभेण। ब्रवीहि तत्त्वेन महानुभाव कोऽसौ विजेता दुहितुर्ममाद्य ॥ १७॥ विचित्रवीर्यस्य सुतस्य कच्चित् कुरुप्रवीरस्य ध्रियन्ति पुत्राः। कच्चित्तु पार्थेन यवीयसाद्य धनुर्गृहीतं निहतञ्च लक्ष्यम् ॥ १८ ॥

इत्यादिपर्वणि स्वयम्बरपर्वणि धृष्टद्युम्नप्रत्यागमने चतुर्नवत्यधिकशततोऽध्यायः समाप्तञ्च स्वयम्बरपर्व ॥ १९४ ॥

---

अथ वैवाहिकपर्व ॥ १२ ॥

वैशम्पायन उवाच। ततस्तथोक्तः परिहृष्टरूपः पित्रे शशंसाथ स राजपुत्रः। धृष्टद्युम्नः सोमकानां प्रबर्हो वृत्तं यथा येन हृता च कृष्णा ॥ १ ॥

धृष्टद्युम्न उवाच। योऽसौ युवा व्यायतलोहिताक्षः कृष्णाजिनी देवसमानरूपः। यः कार्मुकाग्र्यं कृतवानधिज्यं लक्ष्यञ्च यः पातितवान् पृथिव्याम् ॥ २ ॥ असज्जमानश्च ततस्तरस्वी वृतो द्विजाग्र्यैरभिपूज्यमानः। चक्राम वज्रीव दितेः सुतेषु सर्वैश्च देवैर्ऋषिभिश्च जुष्टः ॥ ३ ॥ कृष्णा प्रगृह्याजिनमन्वयात्तं नागं यथा नागवधूः प्रहृष्टा। अमृष्यमाणेषु नराधिपेषु क्रुद्धेषु वै तत्र समापतत्सु ॥ ४ ॥ ततोऽपरः पार्थिवसङ्घमध्ये प्रवृद्धमारुज्य महीप्ररोहम्। प्रकालयन्नेव स पार्थिवौघान् क्रुद्धोऽन्तकः प्राणभृतो यथैव ॥ ५ ॥ तौ पार्थिवानां मिषतां नरेन्द्र कृष्णामुपादाय गतौ नराग्र्यौ। विभ्राजमानाविव चन्द्रसूर्यौ बाह्यां पुराद्भार्गवकर्मशालाम् ॥ ६ ॥ तत्रोपविष्टार्चिरिवानलस्य तेषां

चलितीति मम प्रतर्कः । तथाविधैरेव नरप्रवीरैरुपोपविष्टैस्त्रिभि-रग्निकल्पैः ॥ ७ ॥ तस्यास्ततस्तावभिवाद्य पादौ प्रोक्ता च कृष्णा त्वभिवादयेति । स्थिताश्च तत्रैव निवेद्य कृष्णां भिक्षाप्रचाराय गता नराग्र्याः ॥ ८ ॥ तेषान्तु भैक्ष्यं प्रतिगृह्य कृष्णा दत्त्वा बलिं ब्राह्मणसाच्च कृत्वा । ताञ्चैव वृद्धां परिविष्य तांश्च नरप्रवीरान् स्वयमप्यभुङ्क्त ॥ ९ ॥ सुप्तास्तु ते पार्थिव सर्व एव कृष्णा च तेषां चरणोपधाने । आसीत् पृथिव्यां शयनञ्च तेषां दर्भाजिनाग्र्या-स्तरणोपपन्नम् ॥ १० ॥ ते नर्दमाना इव कालमेघाः कथा विचित्राः कथयाम्बभूवुः । न वैश्यशूद्रौपयिकीः कथास्ता न च द्विजानां कथयन्ति वीराः ॥ ११ ॥ निःसंशयं क्षत्रियपुङ्गवास्ते यथा हि युद्धं कथयन्ति राजन् । आशा हि नो व्यक्तमियं समृद्धा मुक्तान् हि पार्थान् शृणुमोऽग्निदाहात् ॥ १२ ॥ यथा हि लक्ष्यं निहतं धनुश्च सज्यं कृतं तेन तथा प्रसह्य । यथा च भाषन्ति परस्परन्ते छन्ना ध्रुवं ते प्रचरन्ति पार्थाः ॥ १३ ॥ ततः स राजा द्रुपदः प्रहृष्टः पुरोहितं प्रेषयामास तेषाम् । विद्याम युष्मानिति भाषमाणो महात्मनः पाण्डुसुतांश्च कच्चित् ॥ १४ ॥ गृहीतवाक्यो नृपतेः पुरोधा गत्वा प्रशंसामभिधाय तेषाम् । वाक्यं समग्रं नृपते-र्यथावदुवाच चानुक्रमविक्रमेण ॥ १५ ॥ विज्ञातुमिच्छत्यवनी-श्वरो वः पाञ्चालराजो वरदा वरार्हाः । लक्ष्यस्य वेद्धारमिमं हि दृष्ट्वा हर्षस्य नान्तं प्रतिपद्यते सः ॥ १६ ॥ आख्यात च ज्ञाति-कुलानुपूर्वीं पदं शिरःसु द्विषतां कुरुध्वम् । प्रह्लादयध्वं हृदयं ममेदं पाञ्चालराजस्य च सानुगस्य ॥ १७ ॥ पाण्डुर्हि राजा द्रुपदस्य राज्ञः प्रियः सखा चात्मसमो बभूव । तस्यैष कामो दुहिता ममेयं स्नुषां प्रदास्यामि हि कौरवाय ॥ १८ ॥ अयं हि कामो द्रुपदस्य राज्ञो हृदि स्थितो नित्यमनिन्दिताङ्गाः । यद-र्जुनो वै पृथुदीर्घबाहुर्धर्मेण विन्देत सुतां ममैताम् ॥ १९ ॥ कृतं

हि तत् स्यात् सुकृतं ममेदं यशश्च पुण्यञ्च हितं तदेतत् । पद्मोत्त-
वाक्यं हि पुरोहितं स्थितं ततो विनीतं समुदीक्ष्य राजा ॥ २० ॥
समीपतो भीममिदं शशास प्रदीयतां पाद्यमर्घ्यं तथास्मै । मान्यः
पुरोधा द्रुपदस्य राज्ञस्तस्मै प्रयोज्याभ्यधिका हि पूजा ॥ २१ ॥
भीमस्ततस्तत् कृतवान्नरेन्द्र तां चैव पूजां प्रतिगृह्य हर्षात् ।
सुखोपविष्टन्तु पुरोहितं तदा युधिष्ठिरो ब्राह्मणमित्युवाच ॥२२॥
पाञ्चालराजेन सुता निसृष्टा स्वधर्मदृष्टेन यथा न कामात् ।
प्रदिष्टशुल्का द्रुपदेन राज्ञा सा तेन वीरेण तथानुवृत्ता ॥ २३ ॥
न तत्र वर्णेषु कृता विवक्षा न चापि शीले न कुले न गोत्रे ।
कृतेन सज्येन हि कार्मुकेन विद्धेन लक्ष्येण हि विप्रकृष्टा ॥ २४ ॥
सेयं तथा तेन महात्मनेह कृष्णा जिता पार्थिवसंघमध्ये । नैवं
गते सौमकिरद्य राजा सन्तापमर्हत्यसुखाय कर्तुम् ॥ २५ ॥
कामश्च योऽसौ द्रुपदस्य राज्ञः स चापि संपत्स्यति पार्थिवस्य ।
संप्राप्तरूपां हि नरेन्द्रकन्यामिमामहं ब्राह्मण साधु मन्ये ॥ २६ ॥
न तद्धनुर्मन्दबलेन शक्यं मौर्व्या समायोजयितुं तथाहि । न
चाकृतास्त्रेण न हीनजेन लक्ष्यं तथा पातयितुं हि शक्यम् ॥२७॥
तस्मान्न तापं दुहितुर्निमित्तं पाञ्चालराजोऽर्हति कर्त्तुमद्य । न
चापि तत्पातनमन्यथेह कर्त्तुं हि शक्यं भुवि मानवेन ॥ २८ ॥
एवं ब्रुवत्येव युधिष्ठिरे तु पाञ्चालराजस्य समीपतोऽन्यः । तत्रा-
जगामाशु नरो द्वितीयो निवेदयिष्यन्निह सिद्धमन्नम् ॥ २९ ॥

इत्यादिपर्वणि वैवाहिकपर्वणि पुरोहितागमने
पञ्चनवत्यधिकशततोऽध्यायः ॥ १९५ ॥

दूत उवाच। जन्यार्थमन्नं द्रुपदेन राज्ञा विवाहहेतोरुप-
संस्कृतञ्च। तदाप्नुवध्वं कृतसर्वकार्याः कृष्णा च तत्रैव चिरं न
कार्य्यम् ॥ १ ॥ इमे रथाः काञ्चनपद्मचित्राः सदश्वयुक्ता वसुधा-
धिपार्हाः। एतान् समारुह्य परैत सर्वे पाञ्चालराजस्य निवे-
शनं तत् ॥ २ ॥

वैशम्पायन उवाच। ततः प्रयाताः कुरुपुङ्गवास्ते पुरोहितं
तं परियाप्य सर्वे। आस्थाय यानानि महान्ति तानि कुन्ती च
कृष्णा च सहैकयाने ॥ ३ ॥ श्रुत्वा तु वाक्यानि पुरोहितस्य तान्
युक्तवान् भारत धर्मराजः। जिज्ञासयैवाथ कुरूत्तमानां द्रव्या-
ण्यनेकान्युपसंजहार ॥ ४ ॥ फलानि माल्यानि च संस्कृतानि
वर्माणि चर्माणि तथासनानि। गाश्चैव राजन्नथ चैव रज्जु-
र्बीजानि चान्यानि कृषीनिमित्तम् ॥ ५ ॥ अन्येषु शिल्पेषु च
यान्यपि स्युः सर्वाणि कृत्यान्यखिलेन तत्र। क्रीड़ानिमित्ता-
न्यपि यानि तत्र सर्वाणि तत्रोपजहार राजा ॥ ६ ॥ वर्माणि
चर्माणि च भानुमन्ति खड्गा महान्तोऽश्वरथाश्च चित्राः। धनूंषि
चाग्र्याणि शराश्च चित्राः शक्त्यृष्टयः काञ्चनभूषणाश्च ॥ ७ ॥ प्रासा
भुशुण्ड्यश्च परश्वधाश्च सांग्रामिकञ्चैव तथैव सर्वम्। शय्यासना-
न्युत्तमवस्तुवन्ति तथैव वासो विविधञ्च तत्र ॥ ८ ॥ कुन्ती तु
कृष्णां परिगृह्य साध्वीमन्तःपुरं द्रुपदस्याविवेश। स्त्रियश्च तां
कौरवराजपत्नीं प्रत्यर्चयामासुरदीनसत्त्वाः ॥ ९ ॥ तान् सिंह-
विक्रान्तगतीन्निरीक्ष्य महर्षभाक्षानजिनोत्तरीयान्। गूढोत्तरां-
सान् भुजगेन्द्रभोगप्रलम्बबाहून् पुरुषप्रवीरान् ॥ १० ॥ राजा
च राज्ञः सचिवाश्च सर्वे पुत्राश्च राज्ञः सुहृदस्तथैव। प्रेष्याश्च
सर्वे निखिलेन राजन् हर्षं समापेतुरतीव तत्र ॥ ११ ॥ ते तत्र
वीराः परमासनेषु सपादपीठेष्वविशङ्कमानाः। यथानुपूर्व्वं
विविशुर्नराग्र्यास्तथा महार्हेषु न विस्मयन्तः ॥ १२ ॥ उच्चावचं

पार्थिवभोजनीयं पात्रीषु जाम्बूनदराजतीषु। दासाश्च दास्यश्च सुमृष्टवेशाः सम्भोजकाश्चाप्युपजह्रुरन्नम्॥ १३॥ ते तत्र भुक्त्वा पुरुषप्रवीरा यथात्मकामं सुभृशं प्रतीताः। उत्क्रम्य सर्वाणि वसूनि राजन् सांग्रामिकाण्यन्वविशुर्नृवीराः॥ १४॥ तल्लक्षयित्वा द्रुपदस्य पुत्रो राजा च सर्वैः सह मन्त्रिमुख्यैः। समर्थयामासुरुपेत्य हृष्टाः कुन्तीसुतान् पार्थिव राजपुत्रान्॥ १५॥

इत्यादिपर्वणि वैवाहिकपर्वणि सांग्रामिकद्रव्यग्रहणे पञ्चनवत्यधिकशततमोऽध्यायः॥ १९५॥

—०:०—

वैशम्पायन उवाच। तत आहूय पाञ्चाल्यो राजपुत्रं युधिष्ठिरम्। परिग्रहेण ब्राह्मेण परिगृह्य महाद्युतिः॥ १॥ पर्यपृच्छददीनात्मा कुन्तीपुत्रं सुवर्चसम्। कथं जानीम भवतः क्षत्रियान् ब्राह्मणानुत॥ २॥ वैश्यान् वा गुणसम्पन्नानथवा शूद्रयोनिजान्। मायामास्थाय वा सिद्धांश्चरतः सर्वतो दिशम्॥३॥ कृष्णाहेतोरनुप्राप्ता देवाः सन्दर्शनार्थिनः। ब्रवीतु नो भवान् सत्यं सन्देहो ह्यत्र नो महान्॥ ४॥ अपि नः संशयस्यान्ते मनः सन्तुष्टिमावहेत्। अपि नो भागधेयानि शुभानि स्युः परन्तप॥ ५॥ इच्छया ब्रूहि तत्सत्यं सत्यं राजसु शोभते। इष्टापूर्त्तेन च तथा वक्तव्यमनृतं न तु॥ ६॥ श्रुत्वा ह्यमरसङ्काश तव वाक्यमरिन्दम। ध्रुवं विवाहकरणमास्थास्यामि विधानतः॥ ७॥

युधिष्ठिर उवाच। मा राजन्विमना भूस्त्वं पाञ्चाल्य प्रीतिरस्तु ते। ईप्सितस्ते ध्रुवः कामः सम्वृत्तोऽयमसंशयम्॥ ८॥ वयं हि क्षत्रिया राजन् पाण्डोः पुत्रा महात्मनः। ज्येष्ठं मां विद्धि कौन्तेयं भीमसेनार्जुनाविमौ॥ ९॥ आभ्यां तव सुता राजन् निर्जिता राजसंसदि। यमौ च तत्र कुन्ती च यत्र कृष्णा व्यव-

स्थिता ॥ १० ॥ व्येतु ते मानसं दुःखं क्षत्रियाः स्मो नरर्षभ । पद्मिनीव सुतेयं ते ह्रदादन्यह्रदं गता ॥ ११ ॥ इति सत्यं महाराज सर्वमेतद्ब्रवीमि ते । भवान् हि गुरुरस्माकं परमञ्च परायणम् ॥ १२ ॥

वैशम्पायन उवाच । ततः स द्रुपदो राजा हर्षव्याकुललोचनः । प्रतिवक्तुं मुदा युक्तो नाशक्नोत् युधिष्ठिरम् ॥ १३ ॥ यत्नेन तु स तं हर्षं संनिगृह्य परन्तपः । अनुरूपं तदा वाचा प्रत्युवाच युधिष्ठिरम् ॥ १४ ॥ पप्रच्छ चैनं धर्मात्मा यथा ते प्रद्रुताः पुरात् । स तस्मै सर्वमाचख्यावानुपूर्व्येण पाण्डवः ॥ १५ ॥ तच्छ्रुत्वा द्रुपदो राजा कुन्तीपुत्रस्य भाषितम् । विगर्हयामास तदा धृतराष्ट्रं नरेश्वरम् ॥ १६ ॥ आश्वासयामास च तं कुन्तीपुत्रं युधिष्ठिरम् । प्रतिजज्ञे च राज्याय द्रुपदो वदतां वरः ॥ १७ ॥ ततः कुन्ती च कृष्णा च भीमसेनार्जुनावपि । यमौ च राज्ञा सन्दिष्टं विविशुर्भवनं महत् ॥ १८ ॥ तत्र ते न्यवसन् राजन् यज्ञसेनेन पूजिताः । प्रत्याश्वस्तस्ततो राजा सह पुत्रैरुवाच तम् ॥ १९ ॥ गृह्णातु विधिवत् पाणिमद्यायं कुरुनन्दनः । पुण्येऽहनि महाबाहुरर्जुनः कुरुतां क्षणम् ॥ २० ॥

वैशम्पायन उवाच । तमब्रवीत्ततो राजा धर्मात्मा च युधिष्ठिरः । ममापि दारसम्बन्धः कार्य्यस्तावद्विशाम्पते ॥ २१ ॥

द्रुपद उवाच । भवान् वा विधिवत्पाणिं गृह्णातु दुहितुर्मम । यस्य वा मन्यसे वीर तस्य कृष्णामुपादिश ॥ २२ ॥

युधिष्ठिर उवाच । सर्वेषां महिषी राजन्द्रौपदी नो भविष्यति । एवं प्रव्याहृतं पूर्वं मम मात्रा विशाम्पते ॥ २३ ॥ अहञ्चाप्यनिविष्टो वै भीमसेनश्च पाण्डवः । पार्थेन विजिता चैषा रत्नभूता सुता तव ॥ २४ ॥ एष नः समयो राजन् रत्नस्य सह भोजनम् । न च तं हातुमिच्छामः समयं राजसत्तम ॥ २५ ॥

सर्वेषां धर्मतः कृष्णा महिषी नो भविष्यति। आनुपूर्व्येण सर्वेषां गृह्णातु ज्वलने करान् ॥ २६ ॥

द्रुपद उवाच। एकस्य बह्व्यो विहिता महिष्यः कुरुनन्दन। नैकस्या बहवः पुंसः श्रूयन्ते पतयः क्वचित् ॥ २७ ॥ लोकवेदविरुद्धं त्वं नाधर्मं धर्मविच्छुचिः। कर्तुमर्हसि कौन्तेय कस्मात्ते बुद्धिरीदृशी ॥ २८ ॥

युधिष्ठिर उवाच। सूक्ष्मो धर्मो महाराज नास्य विद्मो वयं गतिम्। पूर्वेषामानुपूर्व्येण यातं वर्त्मानुयामहे ॥ २९ ॥ न मे वागनृतं प्राह नाधर्मे धीयते मतिः। एवं चैव वदत्यम्बा मम चैतन्मनोगतम् ॥ ३० ॥ एष धर्मो ध्रुवो राजंश्चरैनमविचारयन्। मा च शङ्का तत्र ते स्यात्कथञ्चिदपि पार्थिव ॥ ३१ ॥

द्रुपद उवाच। त्वञ्च कुन्ती च कौन्तेय धृष्टद्युम्नश्च मे सुतः। कथयन्त्वितिकर्त्तव्यं श्वः काले करवामहे ॥ ३२ ॥

वैशम्पायन उवाच। ते समेत्य ततः सर्वे कथयन्ति स्म भारत। अथ द्वैपायनो राजन्नभ्यागच्छद्यदृच्छया ॥ ३३ ॥

इत्यादिपर्वणि वैवाहिकपर्वणि द्वैपायनागमने सप्तनवत्यधिकशततोऽध्यायः ॥ १९७ ॥

—:०—

वैशम्पायन उवाच। ततस्ते पाण्डवाः सर्वे पाञ्चाल्यश्च महायशाः। प्रत्युत्थाय महात्मानं कृष्णं सर्वेऽभ्यवादयन् ॥ १ ॥ प्रतिनन्द्य स तां पूजां दृष्ट्वा कुशलमन्ततः। आसने काञ्चने शुभ्रे निषसाद महामनाः ॥ २ ॥ अनुज्ञातास्तु ते सर्वे कृष्णेनामिततेजसा। आसनेषु महार्हेषु निषेदुर्द्विपदां वराः ॥ ३ ॥ ततो मुहूर्त्तान्मधुरां वाणीमुच्चार्य्य पार्षतः। पप्रच्छ तं महात्मानं द्रौपद्यर्थं विशाम्पते ॥ ४ ॥ कथमेका बहूनां स्यान्न च स्याद्धर्मसङ्करः। एतन्नो भगवान् सर्वं प्रब्रवीतु यथातथम् ॥ ५ ॥

व्यास उवाच। अस्मिन्धर्म्मे विप्रलब्धे लोकवेदविरोधके। यस्य यस्य मतं यद्यच्छ्रोतुमिच्छामि तस्य तत्॥ ६॥

द्रुपद उवाच। अधर्म्मोऽयं मम मतो विरुद्धो लोकवेदयोः। न ह्येका विद्यते पत्नी बहूनां द्विजसत्तम॥ ७॥ न चाप्याचरितः पूर्वैरयं धर्म्मो महात्मभिः। न चाप्यधर्म्मो विद्वद्भिश्चरितव्यः कथञ्चन॥ ८॥ ततोऽहं न करोम्येनं व्यवसायं क्रियां प्रति। धर्म्मः सदैव सन्दिग्धः प्रतिभाति हि मे त्वयम्॥ ९॥

धृष्टद्युम्न उवाच। यवीयसः कथं भार्य्यां ज्येष्ठो भ्राता द्विजर्षभ। ब्रह्मन् समभिवर्त्तेत सद्वृत्तः सन्तपोधन॥ १०॥ न तु धर्म्मस्य सूक्ष्मत्वाद्गतिं विद्मः कथञ्चन। अधर्म्मो धर्म्म इति वा व्यवसायो न शक्यते॥ ११॥ कर्त्तुमस्मद्विधैर्ब्रह्मंस्ततोऽयं न व्यवस्यति। पञ्चानां महिषी कृष्णा भवत्विति कथञ्चन॥ १२॥

युधिष्ठिर उवाच। न मे वागनृतं प्राह नाधर्म्मे धीयते मतिः। वर्त्तते हि मनो मेऽत्र नैषोऽधर्म्मः कथञ्चन॥ १३॥ श्रूयते हि पुराणेऽपि जटिला नाम गौतमी। ऋषीनध्यासितवती सप्त धर्म्मभृतांवरा॥ १४॥ तथैव मुनिजा वार्क्षी तपोभिर्भावितात्मनः। संगताभूद्दश भ्रातॄनेकनाम्नः प्रचेतसः॥ १५॥ गुरोर्हि वचनं प्राहुर्धर्म्यं धर्म्मज्ञसत्तम। गुरूणाञ्चैव सर्व्वेषां माता परमको गुरुः॥ १६॥ सा चाप्युक्तवती वाचं भैक्ष्यवद्भुज्यतामिति। तस्मादेतदहं मन्ये परं धर्म्मं द्विजोत्तम॥ १७॥

कुन्त्युवाच। एवमेतद्यथा प्राह धर्म्मचारी युधिष्ठिरः। अनृतान्मे भयं तीव्रं मुच्येऽहमनृतात्कथम्॥ १८॥

व्यास उवाच। अनृतान्मोक्ष्यसे भद्रे धर्म्मश्चैष सनातनः। न तु वक्ष्यामि सर्व्वेषां पाञ्चाल शृणु मे स्वयम्॥ १९॥ यथायं विहितो धर्म्मो यतश्चायं सनातनः। यथा च प्राह कौन्तेयस्तथा धर्म्मो न संशयः॥ २०॥

॥ ५१ ॥ तेनाभिपतता दावं शैलेन महता भृशम्। भूयएव निहतास्तत्र प्राणिनः खाण्डवालयाः ॥ ५२ ॥

इत्यादिपर्वणि खाण्डवदाहनपर्वणि देवकृष्णार्जुनयुद्धे ऊनविंशत्यधिकद्विशततोऽध्यायः ॥ २२९ ॥

वैशम्पायन उवाच। तथा शैलनिपातेन भीषिता खाण्डवालयाः। दानवा राक्षसा नागास्तरक्ष्वृक्षवनौकसः ॥ १ ॥ द्विपाः प्रभिन्नाः शार्दूलाः सिंहाः केशरिणस्तथा। समुद्विग्ना विसस्रुस्तथान्या भूतजातयः ॥ २ ॥ तं दावं समुदैक्षन्त कृष्णौ चाभ्युद्यतायुधौ। उत्पातनादशब्देन सन्त्रासित इव स्थिताः ॥३॥ ते वनं प्रसमीक्ष्याथ दह्यमानमनेकधा। कृष्णमभ्युद्यतास्त्रञ्च नादं मुमुचुरुल्वणम् ॥ ४ ॥ तेन नादेन रौद्रेण नादेन च विभावसोः। ररास गगनं कृत्स्नमुत्पातजलदैरिव ॥ ५ ॥ ततः कृष्णो महाबाहुः स्वतेजोभास्वरं महत्। चक्रं व्यसृजदत्युग्रं तेषां नाशाय केशवः ॥ ६ ॥ तेनार्ता जातयः क्षुद्राः सदानवनिशाचराः। निकृत्ताः शतशः सर्वा निपेतुरनलं क्षणात् ॥ ७ ॥ तत्राहृश्यन्त ते दैत्याः कृष्णचक्रविदारिताः। वसारुधिरसंपृक्ताः सन्ध्यायामिव तोयदाः ॥ ८ ॥ पिशाचान् पक्षिणो नागान् पशूंश्चैव सहस्रशः। निघ्नंश्चरति वार्ष्णेयः कालवत्तत्र भारत ॥९॥ क्षिप्तं क्षिप्तं पुनश्चक्रं कृष्णस्यामित्रघातिनः। छित्वा नैकानि सत्त्वानि पाणिमेति पुनः पुनः ॥ १० ॥ तथा तु निघ्नतस्तस्य पिशाचोरगराक्षसान्। बभूव रूपमत्युग्रं सर्वभूतात्मनस्तदा ॥११॥ समेतानान्तु सर्वेषां देवतानाञ्च सर्वशः। विजेता नाभवत्कश्चित् कृष्णपाण्डवयोर्मृधे ॥ १२ ॥ तयोर्बलात् परित्रातुं तच्च दावं यदा सुराः। नाशक्नुवन् शमयितुं तदाभूवन् पराङ्मुखाः ॥१३॥

शतक्रतुस्तु संप्रेक्ष्य विमुखानमरांस्तथा । बभूव मुदितो राजन् प्रशंसन् केशवार्जुनौ ॥ १४ ॥ निवृत्तेष्वथ देवेषु वागुवाचाशरीरिणी । शतक्रतुं समाभाष्य महागम्भीरनिस्वना ॥ १५ ॥ न ते सखा संनिहितस्तक्षको भुजगोत्तमः । दाहकाले खाण्डवस्य कुरुक्षेत्रं गतो ह्यसौ ॥ १६ ॥ न च शक्यौ युधा जेतुं कथञ्चिदपि वासव । वासुदेवार्जुनावेतौ निबोध वचनान्मम ॥ १७ ॥ नरनारायणावेतौ पूर्व्वदेवौ दिवि श्रुतौ । भवानप्यभिजानाति यद्वीर्य्यौ यत्पराक्रमौ ॥ १८ ॥ नैतौ शक्यौ दुराधर्षौ विजेतुमजितौ युधि । अपि सर्व्वेषु लोकेषु पुराणावृषिसत्तमौ ॥ १९ ॥ पूजनीयतमावेतावपि सर्व्वैः सुरासुरैः । यक्षराक्षसगन्धर्व्वनरकिन्नरपन्नगैः ॥ २० ॥ तस्मादितः सुरैः सार्द्धं गन्तुमर्हसि वासव । दिष्टं चाप्यनुपश्यैतत् खाण्डवस्य विनाशनम् ॥ २१ ॥ इति वाक्यमुपश्रुत्य तथ्यमित्यमरेश्वरः । क्रोधामर्षौ समुत्सृज्य संप्रतस्थे दिवं तदा ॥ २२ ॥ तं प्रस्थितं महात्मानं समवेक्ष्य दिवौकसः । सहिताः सेनया राजन्ननुजग्मुः पुरन्दरम् ॥ २२ ॥ देवराजं तदा यान्तं सह देवैरवेक्ष्य तु । वासुदेवार्जुनौ वीरौ सिंहनादं विनेदतुः ॥ २३ ॥ देवराजे गते राजन् प्रहृष्टौ केशवार्जुनौ । निर्व्विशङ्कं वनं वीरौ दाहयामासतुस्तदा ॥ २४ ॥ स मारुत इवाभ्राणि नाशयित्वार्जुनः सुरान् । व्यधमच्छरसङ्घातैर्देहिनः खाण्डवालयान् ॥ २५ ॥ न च स्म किञ्चिच्छक्नोति भूतं निश्चरितुं ततः । संच्छिद्यमानमिषुभिरस्यता सव्यसाचिना ॥ २६ ॥ नाशक्नुवंश्च भूतानि महान्त्यपि रणेऽर्जुनम् । निरीक्षितुममोघास्त्रं योद्धुमपि कुतो रणे ॥ २७ ॥ शतं चैकेन विव्याध शतेनैकं पतत्रिणाम् । व्यसवस्तेऽपतन्नग्नौ साक्षात्कालहता इव ॥ २८ ॥ न चालभन्त ते शर्म्म रोधःसु विषमेषु च । पितृदेवनिवासेषु सन्तापश्चाप्यजायत ॥ २९ ॥ भूतसंघाश्च बहवो दीनाश्चक्रुर्महा-

स्वनम्। दुन्दुभीरवाश्चैव तथा जगतस्तथा: ॥ ३० ॥ तेन शब्देन वित्रेसुर्यक्षोदधिचरा भृशम्। विद्याधरगणाश्चैव ये च तत्र वनौकसः ॥ ३१ ॥ न त्वर्जुनं महाबाहो नापि कृष्णं जनार्दनम्। निरीक्षितुं वै शक्नोति कश्चिद्योद्धुं कुतः पुनः ॥ ३२ ॥ एकायनगता येऽपि निष्पेतुस्तत्र केचन। राक्षसा दानवा नागा जघ्ने चक्रेण तान् हरिः ॥ ३३ ॥ ते तु भिन्नशिरोदेहाश्चक्रवेगाद्गतासवः। पेतुरन्ये महाकायाः प्रदीप्ते वसुरेतसि ॥ ३४ ॥ स मांसरुधिरौघैश्च वसाभिश्चापि तर्पितः। उपर्याकाशगो भूत्वा विधूमः समपद्यत ॥ ३५ ॥ दीप्ताक्षो दीप्तजिह्वश्च सम्प्रदीप्तमहाननः। दीप्तोर्द्ध्वकेशः पिङ्गाक्षः पिबन् प्राणभृतां वसाः ॥ ३६ ॥ तां स कृष्णार्जुनकृतां सुधां प्राप्य हुताशनः। बभूव मुदितस्तृप्तः परां निर्वृतिमागतः ॥ ३७ ॥ तथासुरं मयं नाम तक्षकस्य निवेशनात्। विप्रद्रवन्तं सहसा ददर्श मधुसूदनः ॥ ३८ ॥ तमग्निः प्रार्थयामास दिधक्षुर्वातसारथिः। शरीरवान् जटी भूत्वा नदन्निव बलाहकः ॥३९॥ जिघांसुर्वासुदेवस्तं चक्रमुद्यम्य धिष्ठितः। स चक्रमुद्यतं दृष्ट्वा दिधक्षन्तञ्च पावकम् ॥४०॥ अभिधावार्जुनेत्येवं मयस्त्राहीति चाब्रवीत्। तस्य भीतस्वनं श्रुत्वा मा भैरिति धनञ्जयः ॥ ४१ ॥ प्रत्युवाच मयं पार्थो जीवयन्निव भारत। तं न भेतव्यमित्याह मयं पार्थो दयापरः ॥ ४२ ॥ तं पार्थेनाभये दत्ते नमुचेर्भ्रातरं मयम्। न हन्तुमैच्छद्दाशार्हः पावको न ददाह च ॥४३॥

वैशम्पायन उवाच। तद्वनं पावको धीमान् दिनानि दश पञ्च च। ददाह कृष्णपार्थाभ्यां रक्षितः पाकशासनात् ॥ ४४ ॥ तस्मिन् वने दह्यमाने षडग्निर्न ददाह च। अश्वसेनं मयञ्चैव चतुरः शार्ङ्गकांस्तथा ॥ ४५ ॥

इत्यादिपर्वणि खाण्डवदाहपर्वणि मयदानवत्राणे त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

जनमेजय उवाच। किमर्थं शार्ङ्गकानग्निर्न्न ददाह तथागते। तस्मिन्वने दह्यमाने ब्रह्मन्नेतत् प्रचक्ष्व मे॥१॥ अदाहे ह्यश्वसेनस्य दानवस्य मयस्य च। कारणं कीर्त्तितं ब्रह्मन् शार्ङ्गकाणां न कीर्त्तितम्॥२॥ तदेतदद्भुतं ब्रह्मन् शार्ङ्गकाणामनामयम्। कीर्त्तयस्वाग्निसम्मर्द्दे कथन्ते न विनाशिताः॥३॥

वैशम्पायन उवाच। यदर्थं शार्ङ्गकानग्निर्न्न ददाह तथागते। तत्ते सर्वं प्रवक्ष्यामि यथा भूतमरिन्दम॥४॥ धर्म्मज्ञानां मुख्यतमस्तपस्वी संशितव्रतः। आसीन्महर्षिः श्रुतवान्मन्दपाल इति श्रुतः॥५॥ स मार्गमाश्रितो राजन्नृषीणामूर्द्ध्वरेतसाम्। स्वाध्यायवान् धर्म्मरतस्तपस्वी विजितेन्द्रियः॥६॥ स गत्वा तपसः पारं देहमुत्सृज्य भारत। जगाम पितृलोकाय न लेभे तत्र तत्फलम्॥७॥ स लोकानफलान् दृष्ट्वा तपसा निर्ज्जितानपि। पप्रच्छ धर्म्मराजस्य समीपस्थान् दिवौकसः॥८॥

मन्दपाल उवाच। किमर्थमावृता लोका ममैते तपसार्ज्जिताः। किं मया न कृतं तत्र यस्यैतत् कर्म्मणः फलम्॥९॥ तत्राहं तत्करिष्यामि यदर्थमिदमावृतम्। फलमेतस्य तपसः कथयध्वं दिवौकसः॥१०॥

देवा ऊचुः। ऋणिनो मानवा ब्रह्मन् जायन्ते येन तच्छृणु। क्रियाभिर्ब्रह्मचर्य्येण प्रजया च न संशयः॥११॥ तदपाक्रियते सर्वं यज्ञेन तपसा सुतैः। तपस्वी यज्ञकृच्चापि न च ते विद्यते प्रजा॥१२॥ त इमे प्रसवस्यार्थे तव लोकाः समावृताः। प्रजायस्व ततो लोकानुपभोक्ष्यसि पुष्कलान्॥१३॥ पुन्नाम्नो नरकात् पुत्रस्त्रायते पितरं श्रुतिः। तस्मादपत्यसन्ताने यतस्व ब्रह्मसत्तम॥१४॥

वैशम्पायन उवाच। तच्छ्रुत्वा मन्दपालस्तु वचस्तेषां दिवौकसाम्। क्व नु शीघ्रमपत्यं स्याद्बहुलं चेत्यचिन्तयत्॥१५॥ स चिन्तयन्नभ्यगच्छत् सुबहुप्रसवान् खगान्। शार्ङ्गिकां शार्ङ्गको

भूत्वा जरितां समुपेयिवान् ॥ १६ ॥ तस्यां पुत्रानजनयच्चतुरो
ब्रह्मवादिनः । तानपास्य स तत्रैव जगाम लपितां प्रति ॥१७॥
बालान् सुतानण्डगतान् सह मात्रा मुनिर्वने । तस्मिन् गते महा-
भागे लपितां प्रति भारत ॥ १८ ॥ अपत्यस्नेहसंयुक्ता जरिता
बह्वचिन्तयत् । तेन त्यक्तानसन्त्याज्यानृषीनण्डगतान्वने ॥१९॥
न जहौ पुत्रशोकार्त्ता जरिता खाण्डवे सुतान् । बभार चैतान्
सञ्जातान् स्ववृत्त्या स्नेहविक्लवा ॥२०॥ ततोऽग्निं खाण्डवं दग्धु-
मायान्तं दृष्टवानृषिः । मन्दपालश्चरंस्तस्मिन् वने लपितया सह
॥ २१ ॥ तं सङ्कल्पं विदित्वाग्नेर्ज्ञात्वा पुत्रांश्च बालकान् । सोऽभि-
तुष्टाव विप्रर्षिर्ब्राह्मणो जातवेदसम् । पुत्रान् प्रति वदन् भीतो
लोकपालं महौजसम् ॥ २२ ॥

मन्दपाल उवाच । त्वमग्ने सर्वलोकानां मुखं त्वमसि हव्य-
वाट् । त्वमन्तः सर्वभूतानां गूढश्चरसि पावक ॥ २३ ॥ त्वमेक-
माहुः कवयस्त्वामाहुस्त्रिविधं पुनः । त्वामष्टधा कल्पयित्वा यज्ञ-
वाहमकल्पयन् ॥ २४ ॥ त्वया विश्वमिदं सृष्टं वदन्ति परम-
र्षयः । त्वदृते हि जगत् कृत्स्नं सद्यो नश्येद्धुताशन ॥ २५ ॥
तुभ्यं कृत्वा नमो विप्राः स्वकर्मविजितां गतिम् । गच्छन्ति सह
पत्नीभिः सुतैरपि च शाश्वतीम् ॥ २६ ॥ त्वामग्ने जलदानाहुः
खे विषक्तान् सविद्युतः । दहन्ति सर्वभूतानि त्वत्तो निष्क्रम्य
हेतयः ॥ २७ ॥ जातवेदस्तवैवेदं विश्वं सृष्टं महाद्युते । तवैव
कर्म विहितं भूतं सर्वं चराचरम् । २८ ॥ त्वय्यापो विहिताः
पूर्वं त्वयि सर्वमिदं जगत् । त्वयि हव्यञ्च कव्यञ्च यथावत्
सम्प्रतिष्ठितम् ॥२९॥ त्वमेव दहनो देव त्वं धाता त्वं बृहस्पतिः ।
त्वमश्विनौ यमौ मित्रः सोमस्त्वमसि चानिलः ॥ ३० ॥

वैशम्पायन उवाच । एवं स्तुतस्तदा तेन मन्दपालेन पावकः ।
तुतोष तस्य नृपते मुनेरमिततेजसः ॥ ३१ ॥ उवाच चैनं प्रीतात्मा

किमिष्टं करवाणि ते। तमब्रवीन्मन्दपालः प्राञ्जलिर्हव्यवाहनम्।
प्रदहन् खाण्डवं दावं मम पुत्रान् विसर्जय॥ २२॥ तथेति
तत् प्रतिश्रुत्य भगवान् हव्यवाहनः। खाण्डवे तेन कालेन प्रज-
ज्वाल दिधक्षया॥ २३॥

इत्यादिपर्व्वणि खाण्डवदहनपर्व्वणि शार्ङ्गकोपाख्याने
एकत्रिंशदधिकद्विशततोऽध्यायः॥ २३१॥

—०:०—

वैशम्पायन उवाच। ततः प्रज्वलिते वह्नौ शार्ङ्गकास्ते सुदुः-
खिताः। व्यथिताः परमोद्विग्ना नाधिजग्मुः परायणम्॥ १॥
निशम्य पुत्रकान् बालान् माता तेषां तपस्विनी। जरिता दुःख-
शोकार्त्ता विललाप सुदुःखिता॥ २॥

जरितोवाच। अयमग्निर्दहन् कक्षमित आयाति भीषणः।
जगत्सन्दीपयन् भीमो मम दुःखविवर्द्धनः॥ ३॥ इमे च मां
कर्षयन्ति शिशवो मन्दचेतसः। अवर्णाश्चरणैर्हीनाः पूर्व्वेषां नः
परायणाः॥ ४॥ त्रासयंश्चायमायाति लेलिहानो महीरुहान्।
अजातपक्षाश्च सुता न शक्ताः सरणे मम॥ ५॥ आदाय च न
शक्नोमि पुत्रांस्तरितुमात्मना। न च त्यक्तुमहं शक्ता हृदयं दूय-
तीव मे॥ ६॥ कन्तु जह्यामहं पुत्रं कमादाय व्रजाम्यहम्।
किन्नु मे स्यात् कृतं कृत्ये किं वा मन्यत पुत्रकाः॥ ७॥ चिन्त-
यामा विमोक्षं वो नाधिगच्छामि किञ्चन। छादयिष्यामि वो
गात्रैः करिष्ये मरणं सह॥ ८॥ जरितारौ कुलं ह्येतत् ज्येष्ठ-
त्वेन प्रतिष्ठितम्। सारिसृक्कः प्रजायेत पितॄणां कुलवर्द्धनः॥ ९॥
स्तम्बमित्रस्तपः कुर्य्यात् द्रोणो ब्रह्मविदाम्वरः। इत्येवमुक्ता
प्रययौ पिता वो निर्घृणः पुरा॥ १०॥ कमुपादाय शक्येयं गन्तुं
कष्टापदुत्तमा। किन्नु कृत्वा कृतं कार्य्यं भवेदिति च विह्वला।
नापश्यत् स्वधिया मोक्षं स्वसुतानां तदानलात्॥ ११॥

वैशम्पायन उवाच। एवं ब्रुवाणं शार्ङ्गीका प्रत्यूचुरथ
मातरम्। स्नेहमुत्सृज्य मातस्त्वं पत यत्र न हव्यवाट् ॥ १२ ॥
अस्मास्विह विनष्टेषु भवितारः सुतास्तव। त्वयि मातर्विनष्टायां
नातः स्यात् कुलसन्ततिः ॥ १३ ॥ अन्ववेक्ष्यैतदुभयं क्षमं स्याद्
यत् कुलस्य नः। तद्वै कर्त्तुं परः कालो मातरेष भवेत्तव ॥१४॥
मा त्वं सर्वविनाशाय स्नेहं कार्षीः सुते पुनः। न ह्येदं कर्म
मोघं स्याल्लोककामस्य नः पितुः ॥ १५ ॥

जरितोवाच। इदमाखोर्बिलं भूमौ वृक्षस्यास्य समीपतः।
तदाविशध्वं त्वरिता वह्नेरत्र न वो भयम् ॥ १६ ॥ ततोऽहं
पांशुना छिद्रमपिधास्यामि पुत्रकाः। एवं प्रतिकृतं मन्ये ज्वलतः
कृष्णवर्त्मनः ॥ १७ ॥ तत एष्याम्यतीतेऽग्नौ विहर्त्तुं पांशुसञ्चयम्।
रोचतामेष वो वादो मोक्षार्थञ्च हुताशनात् ॥ १८ ॥

शार्ङ्गा ऊचुः। अबर्हान्मांसभूतान्नः क्रव्यादाखुर्विनाशयेत्।
पश्यमाना भयमिदं प्रवेष्टुं नात्र शक्नुमः ॥ १९ ॥ कथमग्निर्न नो
दहेत् कथमाखुर्न नाशयेत्। कथं न स्यात् पिता मोघः कथं
माता ध्रियेत नः ॥ २० ॥ बिल आखोर्विनाशः स्यादग्नेराकाश-
चारिणाम्। अन्ववेक्ष्यैतदुभयं श्रेयान् दाहो न भक्षणम् ॥२१॥
गर्हितं मरणं नः स्यादाखुना भक्षिते बिले। शिष्टादिष्टः परि-
त्यागः शरीरस्य हुताशनात् ॥ २२ ॥

इत्यादिपर्वणि खाण्डवदहनपर्वणि जरिताविलापे
द्वात्रिंशदधिकद्विशततोऽध्यायः ॥ २३२ ॥

---

जरितोवाच। अस्माद्बिलान्निष्पतितमाखुं श्येनो जहार
तम्। क्षुद्रं पद्भ्यां गृहीत्वा च यातो नात्र भयं हि वः ॥ १ ॥
शार्ङ्गा ऊचुः। न हृतं तं वयं विद्मः श्येनेनाखुं कथञ्चन।

अन्येऽपि भवितारोऽत्र तेभ्योऽपि भयमेव नः ॥ २ ॥ संशयो वह्निरागच्छेद्दृष्टं वायोर्निवर्त्तनम् । मृत्युर्नो बिलवासिभ्यो बिले स्यान्नात्र संशयः ॥ ३ ॥ निःसंशयात् संशयितो मृत्युर्मातर्विशिष्यते । चर खे त्वं यथान्यायं पुत्रानाप्स्यसि शोभनान् ॥ ४ ॥

जरितोवाच । अहं वेगेन तं यान्तमद्राक्षं पततांवरम् । बिलादाखुं समादाय श्येनं पुत्रा महाबलम् ॥ ५ ॥ तं पतन्तं महावेगात्त्वरिता पृष्ठतोऽन्वगाम् । आशिषोऽस्य प्रयुञ्जाना हरतो मूषिकं बिलात् ॥ ६ ॥ यो नो द्वेष्टारमादाय श्येनराज प्रधावसि । भव त्वं दिवमास्थाय निरमित्रो हिरण्मयः ॥ ७ ॥ स यदा भक्षितस्तेन श्येनेनाखुः पतत्रिणा । तदाहं तदनुज्ञाप्य प्रत्युपायां पुनर्गृहे ॥ ८ ॥ प्रविशध्वं बिलं पुत्रा विस्रब्धा नास्ति वो भयम् । श्येनेन मम पश्यन्त्या हृत आखुर्महात्मना ॥ ९ ॥

शार्ङ्गा ऊचुः । न विद्महे हृतं मातः श्येनेनाखुं कथञ्चन । अविज्ञाय न शक्यामः प्रवेष्टुं विवरं भुवः ॥ १० ॥

जरितोवाच । अहं तमभिजानामि हृतं श्येनेन मूषिकम् । नास्ति वोऽत्र भयं पुत्राः क्रियतां वचनं मम ॥ ११ ॥

शार्ङ्गा ऊचुः । न त्वं मिथ्योपचारेण मोक्षयेथा भयाद्धि नः । समाकुलेषु ज्ञानेषु न बुद्धिकृतमेव तत् ॥ १२ ॥ न चोपकृतमस्माभिर्न चास्मान्वेत्थ ये वयम् । पीड्यमाना बिभर्ष्यस्मान् का सती के वयं तव ॥ १३ ॥ तरुणी दर्शनीयासि समर्था भर्तुरेषणे । अनुगच्छ पतिं मातः पुत्रानाप्स्यसि शोभनान् ॥ १४ ॥ वयमग्निं समाविश्य लोकानाप्स्याम शोभनान् । अथास्मान्न दहेदग्निरायास्त्वं पुनरेव नः ॥ १५ ॥

वैशम्पायन उवाच । एवमुक्ता ततः शार्ङ्गी पुत्रानुत्सृज्य खाण्डवे । जगाम त्वरिता देशं क्षेममग्नेरनामयम् ॥ १६ ॥ ततस्तीक्ष्णार्चिरभ्यागात्त्वरितो हव्यवाहनः । यत्र शार्ङ्गा बभू-

वुस मन्दपालस्य पुत्रकाः ॥ १७ ॥ ततस्तं ज्वलितं दृष्ट्वा ज्वलनं ते विहङ्गमाः । जरितारिस्ततो वाक्यं श्रावयामास पावकम् ॥ १८ ॥

इत्यादिपर्वणि खाण्डवदाहनपर्वणि शार्ङ्गकोपाख्याने त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥

---

जरितारिरुवाच । पुरतः कृच्छ्रकालस्य धीमान् जागर्ति पूरुषः । स कृच्छ्रकालं संप्राप्य व्यथां नैवेति कर्हिचित् ॥ १ ॥ यस्तु कृच्छ्रमनुप्राप्तं विचेता नावबुध्यते । स कृच्छ्रकाले व्यथितो न श्रेयो विन्दते महत् ॥ २ ॥

सारिसृक्क उवाच । धीरस्त्वमसि मेधावी प्राणकृच्छ्रमिदं च नः । प्राज्ञः शूरो बहूनां हि भवत्येको न संशयः ॥ ३ ॥

स्तम्बमित्र उवाच । ज्येष्ठस्त्राता भवति वै ज्येष्ठो मुञ्चति कृच्छ्रतः । ज्येष्ठश्चेन्न प्रजानाति कनीयान् किं करिष्यति ॥ ४ ॥

द्रोण उवाच । हिरण्यरेतास्त्वरितो ज्वलन्नायाति नः क्षयम् । सप्तजिह्वाननः क्रूरो लेलिहानो विसर्पति ॥ ५ ॥

वैशम्पायन उवाच । एवं सम्भाष्य तेऽन्योऽन्यं मन्दपालस्य पुत्रकाः । तुष्टुवुः प्रयता भूत्वा यथाग्निं शृणु पार्थिव ॥ ६ ॥

जरितारिरुवाच । आत्मासि वायोर्ज्वलन शरीरमसि वीरुधाम् । योनिरापश्च ते शुक्रं योनिस्त्वमसि चाम्भसः ॥ ७ ॥ ऊर्द्ध्वं चाधश्च सर्पन्ति पृष्ठतः पार्श्वतस्तथा । अर्चिषस्ते महावीर्य रश्मयः सवितुर्यथा ॥ ८ ॥

सारिसृक्क उवाच । माता प्रणष्टा पितरं न विद्मः पक्षा जाता नैव नो धूमकेतो । न नस्त्राता विद्यते वै त्वदन्यस्तस्मादस्मांस्त्राहि बालांस्त्वमग्ने ॥ ९ ॥ यदग्ने ते शिवं रूपं ये च ते सप्त हेतयः । तेन नः परिपाहि त्वमार्त्तान्नः शरणैषिणः ॥ १० ॥

त्वमेवैकस्तपसे जातवेदो नान्यस्त्राता विद्यते गोषु देव । ऋषीनस्मान् बालकान् पालयस्व परेणास्मान् प्रैहि वै हव्यवाह ॥ ११ ॥

सारिसृक्व उवाच । सर्वमग्ने त्वमेवैकस्त्वयि सर्वमिदं जगत् । त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च ॥ १२ ॥ त्वमग्निर्हव्यवाहस्त्वं त्वमेव परमं हविः । मनीषिणस्त्वां जानन्ति बहुधा चैकधापि च ॥ १३ ॥ सृष्ट्वा लोकांस्त्रीनिमान् हव्यवाह काले प्राप्ते पचसि पुनः समिद्धः । त्वं सर्वस्य भुवनस्य प्रसूतिस्त्वमेवाग्ने भवसि पुनः प्रतिष्ठा ॥ १४ ॥

द्रोण उवाच । त्वमन्नं प्राणिभिर्भुक्तमन्तर्भूतो जगत्पते । नित्यं प्रवृद्धः पचसि त्वयि सर्वं प्रतिष्ठितम् ॥ १५ ॥ सूर्यो भूत्वा रश्मिभिर्जातवेदो भूमेरम्भो भूमिजातान् रसांश्च । विश्वानादाय पुनरुत्सृज्य काले दृष्ट्या वृष्ट्या भावयसीह शुक्र ॥ १६ ॥ त्वत्त एताः पुनः शुक्र वीरुधो हरितच्छदाः । जायन्ते पुष्करिण्यश्च सुभद्रश्च महोदधिः ॥ १७ ॥ इदं वै सद्म तिग्मांशो वरुणस्य परायणम् । शिवस्त्राता भवास्माकं मास्मानद्य विनाशय ॥ १८ ॥ पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्मन् हुताशन । परेण प्रैहि मुञ्चास्मान् सागरस्य गृहानिव ॥ १९ ॥

वैशम्पायन उवाच । एवमुक्तो जातवेदा द्रोणेन ब्रह्मवादिना । द्रोणमाह प्रतीतात्मा मन्दपालप्रतिज्ञया ॥ २० ॥

अग्निरुवाच । ऋषिर्द्रोणस्त्वमसि वै ब्रह्मैतद्व्याहृतं त्वया । ईप्सितं ते करिष्यामि न च ते विद्यते भयम् ॥ २१ ॥ मन्दपालेन वै यूयं मम पूर्वं निवेदिताः । वर्जयेः पुत्रकान्मह्यं दहन् दावमिति स्म ह ॥ २२ ॥ तस्य तद्वचनं द्रोण त्वया यच्चेह भाषितम् । उभयं मे गरीयस्तु ब्रूहि किं करवाणि ते । भृशं प्रीतोऽस्मि भद्रं ते ब्रह्मन् स्तोत्रेण सत्तम ॥ २३ ॥

द्रोण उवाच । इमे मार्जारकाः शुक्र नित्यमुद्वेजयन्ति

नः। एतान् कृष्ण दग्धांस्त्वं हुताशन सबान्धवान् ॥ २४ ॥ तथा तत् कृतवानग्निरभ्यनुज्ञाय शार्ङ्गकान्। ददाह खाण्डवं दावं समिद्धो जनमेजय ॥ २५ ॥

इत्यादिपर्वणि खाण्डवदाहनपर्वणि शार्ङ्गोपाख्याने चतुस्त्रिंश-दधिकद्विशततोऽध्यायः ॥ २३४ ॥

—•:•—

वैशम्पायन उवाच। मन्दपालोऽपि कौरव्य चिन्तयामास पुत्रकान्। उक्त्वापि च स तिग्मांशुं नैव शर्माधिगच्छति ॥ १ ॥ स तप्यमानः पुत्रार्थे जरितामिदमब्रवीत्। कथं न्वशक्ताः शरणे लपिते मम पुत्रकाः ॥ २ ॥ वर्द्धमाने हुतवहे वाते चाशु प्रवायति। असमर्था विमोक्षाय भविष्यन्ति ममात्मजाः ॥ ३ ॥ कथं न्वशक्ता त्राणाय माता तेषां तपस्विनी। भविष्यति हि शोकार्त्ता पुत्रत्राणमपश्यती ॥ ४ ॥ कथमुड्डीयनेऽशक्तान् पतने च ममात्मजान्। सन्तप्यमाना बहुधा वाशमाना प्रधावति ॥ ५ ॥ जरितारिः कथं पुत्रः सारिसृक्वः कथञ्च मे। स्तम्बमित्रः कथं द्रोणः कथं सा च तपस्विनी ॥ ६ ॥ लालप्यमानं तमृषिं मन्दपालं तथा वने। लपिता प्रत्युवाचेदं सासूयमिव भारत ॥ ७ ॥ न ते पुत्रेष्ववेक्षास्ति यानृषीनुक्तवानसि। तेजस्विनो वीर्यवन्तो न तेषां ज्वलनाद्भयम् ॥ ८ ॥ त्वयाग्नौ ते परीताश्च स्वयं हि मम सन्निधौ। प्रतिश्रुतं तथा चेति ज्वलनेन महात्मना ॥ ९ ॥ लोकपालो न तां वाचमुक्त्वा मिथ्या करिष्यति। समर्थं बन्धुकृत्येन तेन ते स्वस्थमानसम् ॥ १० ॥ तामेव तु ममामित्रां चिन्तयन् परितप्यसे। ध्रुवं मयि न ते स्नेहो यथा तस्यां पुराभवत् ॥ ११ ॥ न हि पक्षवता न्याय्यं निःस्नेहेन सुहृज्जने। पीड्यमान उपद्रष्टुं शक्तेनात्मा कथञ्चन ॥ १२ ॥ गच्छ त्वं जरि-

तामेव हृदयं परितप्यसे। चरिष्याम्यहमप्येका यथा कुपुरुषाश्रिता ॥ १३ ॥

मन्दपाल उवाच। नाहमेवं चरे लोके यथा त्वमभिमन्यसे। अपत्यहेतोर्विचरे तच्च कृच्छ्रगतं मम ॥ १४ ॥ भूतं हित्वा च भाव्यर्थे योऽवलम्बेत मन्दधीः। अवमन्येत तं लोको यथेच्छसि तथा कुरु ॥ १५ ॥ एष हि प्रज्वलन्नग्निर्लेलिहानो महीरुहान्। आविग्ने हृदि सन्तापं जनयत्यशिवं तथा ॥ १६ ॥

वैशम्पायन उवाच। तस्माद्देशादतिक्रान्ते ज्वलने जरिता पुनः। जगाम पुत्रकानेव जरिता पुत्रगृद्धिनी ॥ १७ ॥ सा तान् कुशलिनः सर्वान् विमुक्तान् जातवेदसः। रोरूयमाणान् ददृशे वने पुत्रान्निरामयान् ॥ १८ ॥ अश्रूणि मुमुचे तेषां दर्शनात्सा पुनः पुनः। एकैकशो न तान् सर्वान् क्रोशमानान्वपद्यत ॥ १९ ॥ ततोऽभ्यगच्छत्सहसा मन्दपालोऽपि भारत। अथ ते सर्व एवैनं नाभ्यनन्दंस्तदा सुताः ॥ २० ॥ लालप्यमानमेकैकं जरितां च पुनः पुनः। न चैवोचुस्तदा किञ्चित्तमृषिं साध्वसाधु वा ॥ २१ ॥

मन्दपाल उवाच। ज्येष्ठः सुतस्ते कतमः कतमस्तस्य चानुजः। मध्यमः कतमश्चैव कनीयान् कतमश्च ते ॥ २२ ॥ एवं ब्रुवन्तं दुःखार्त्तं किं मां न प्रतिभाषसे। कृतवानपि हि त्यागं नैव शान्तिमितो लभे ॥ २३ ॥

जरितोवाच। किन्नु ज्येष्ठेन ते कार्य्यं किमनन्तरजेन ते। किं वा मध्यमजातेन किङ्कनिष्ठेन वा पुनः ॥ २४ ॥ यां त्वं मां सर्वतो हीनामुत्सृज्यापि गतः पुरा। तामेव लपिताङ्गच्छ तरुणीं चारुहासिनीम् ॥ २५ ॥

मन्दपाल उवाच। न स्त्रीणां विद्यते किञ्चिदमुत्र पुरुषान्तरात्। सापत्नकमृते लोके नान्यदर्थविनाशनम् ॥ २६ ॥ वैराग्निदीपनं चैव भृशमुद्वेगकारि च। सुव्रता चापि कल्याणि

सर्वभूतेषु विश्रुता ॥ २७ ॥ अरुन्धती महात्मानं वशिष्ठं पर्य्य-शङ्कत। विशुद्धभावमत्यन्तं सदा प्रियहिते रतम् ॥२८॥ सप्तर्षि-मध्यगं वीरमवमेने च तं मुनिम्। अपध्यानेन सा तेन धूमा-रुणसमप्रभा। लक्ष्यालक्ष्या नाभिरूपा निमित्तमिव पश्यति ॥२९॥ अपत्यहेतोः संप्राप्तं तथा त्वमपि मामिह। इष्टमेवं गते हि त्वं सा तथैवाद्य वर्त्तते ॥ ३० ॥ न हि भार्य्येति विश्वासः कार्य्यः पुंसा कथञ्चन। न हि कार्य्यमनुध्याति नारी पुत्रवती सती ॥३१॥

वैशम्पायन उवाच। ततस्ते सर्व एवैनं पुत्राः सम्यगुपासते। स च तानात्मजान् सर्वानाश्वासयितुमुद्यतः ॥ ३२ ॥

इत्यादिपर्व्वणि खाण्डवदहनपर्व्वणि शार्ङ्गोपाख्याने पञ्चत्रिंशदधिकद्विशततोऽध्यायः ॥ २३५ ॥

---

मन्दपाल उवाच। युष्माकमपवर्गार्थं विज्ञप्तो ज्वलनो मया। अग्निना च तथेत्येवं प्रतिज्ञातं महात्मना ॥ १ ॥ अग्नेर्वचन-मादाय मातुर्द्धर्म्मज्ञतां च वः। भवतां च परं वीर्य्यं पूर्वं नाह-मिहागतः ॥ २ ॥ न सन्तापो हि वः कार्य्यः पुत्रका हृदि मां प्रति। ऋषीन् वेद हुताशोऽपि ब्रह्म तद्विदितञ्च वः ॥ ३ ॥

वैशम्पायन उवाच। एवमाश्वासितान् पुत्रान् भार्य्यामादाय स द्विजः। मन्दपालस्ततो देशादन्यं देशं जगाम ह ॥ ४ ॥ भग-वानपि तिग्मांशुः समिद्धः खाण्डवं गतः। ददाह सह कृष्णाभ्यां जनयन् जगतो हितम् ॥ ५ ॥ वसामेदोवहाः कुल्यास्तत्र पीत्वा च पावकः। जगाम परमां तृप्तिं दर्शयामास चार्जुनम् ॥ ६ ॥ ततोऽन्तरीक्षाद्भगवानवतीर्य्य पुरन्दरः। मरुद्गणैर्वृतः पार्थं केशवं चेदमब्रवीत् ॥ ७ ॥ कृतं युवाभ्यां कर्म्मेदममरैरपि दुष्क-रम्। वरं वृणीतं तुष्टोऽस्मि दुर्लभं पुरुषेष्विह ॥ ८ ॥

वैशम्पायन उवाच । पार्थस्तु वरयामास शक्रादस्त्राणि सर्व्वशः । प्रदातुं तच्च शक्रस्तु कालं चक्रे महाद्युतिः ॥ ९ ॥ यदा प्रसन्नो भगवान्महादेवो भविष्यति । तदा तुभ्यं प्रदास्यामि पाण्डवास्त्राणि सर्व्वशः ॥ १० ॥ अहमेव च तं कालं वेत्स्यामि कुरुनन्दन । तपसा महता चापि दास्यामि भवतोऽप्यहम् ॥ ११ ॥ आग्नेयानि च सर्व्वाणि वायव्यानि च सर्व्वशः । मदीयानि च सर्व्वाणि ग्रहीष्यसि धनञ्जय ॥ १२ ॥ वासुदेवोऽपि जग्राह प्रीतिं पार्थेन शाश्वतीम् । ददौ सुरपतिश्चैव वरं कृष्णाय धीमते ॥ १३ ॥ एवं दत्त्वा वरं ताभ्यां सह देवैर्मरुत्पतिः । हुताशनमनुज्ञाप्य जगाम त्रिदिवं प्रभुः ॥ १४ ॥ पावकश्च तदा दावं दग्ध्वा समृगपक्षिणम् । अहानि पञ्च चैकञ्च विरराम सुतर्पितः ॥ १५ ॥ जग्ध्वा मांसानि पीत्वा च मेदांसि रुधिराणि च । युक्तः परमया प्रीत्या तावुवाचाच्युतार्ज्जुनौ ॥ १६ ॥ युवाभ्यां पुरुषाग्र्याभ्यां तर्पितोऽस्मि यथासुखम् । अनुजानामि वां वीरौ चरतं यत्र वाञ्छितम् ॥ १७ ॥ एवं तौ समनुज्ञातौ पावकेन महात्मना । अर्ज्जुनो वासुदेवश्च दानवश्च मयस्तथा ॥ १८ ॥ परिक्रम्य ततः सर्व्वे त्रयोऽपि भरतर्षभ । रमणीये नदीकूले सहिताः समुपाविशन् ॥ १९ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां आदिपर्व्वणि खाण्डवदाहः समाप्तः षट्त्रिंश-दधिकद्विशततमोऽध्यायः ॥ २३६ ॥

समाप्तमादिपर्व्व ।

वेदाङ्काश्वसुभूमितेऽब्दे नभसं शुभम् ।
भास्करेऽभिगते पर्व समाप्तं चेदमादिमम् ॥

# महाभारतम् ।

## सभापर्व्व ।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

वैशम्पायन उवाच । ततोऽब्रवीन्मयः पार्थं वासुदेवस्य सन्निधौ । प्राञ्जलिः श्लक्ष्णया वाचा पूजयित्वा पुनः पुनः ॥ १ ॥ अस्मात् कृष्णात् सुसंरब्धात् पावकाच्च दिधक्षतः । त्वया त्रातोऽस्मि कौन्तेय ब्रूहि किं करवाणि ते ॥ २ ॥

अर्जुन उवाच । कृतमेव त्वया सर्वं स्वस्ति गच्छ महासुर । प्रीतिमान् भव मे नित्यं प्रीतिमन्तो वयञ्च ते ॥ ३ ॥

मय उवाच । युक्तमेतत्त्वयि विभो यथात्थ पुरुषर्षभ । प्रीतिपूर्व्वमहं किञ्चित्कर्त्तुमिच्छामि भारत ॥ ४ ॥ अहं हि विश्वकर्म्मा वै दानवानां महाकविः । सोऽहं वै त्वत्कृते किञ्चित्कर्त्तुमिच्छामि पाण्डव ॥ ५ ॥

अर्जुन उवाच । प्राणकृच्छ्राद्विमुक्तं त्वमात्मानं मन्यसेऽनघ । एवं गते न शक्ष्यामि किञ्चित्कारयितुं त्वया ॥ ६ ॥ न चापि तव सङ्कल्पं मोघमिच्छामि दानव । कृष्णस्य क्रियतां किञ्चित्तथा प्रतिकृतं मयि ॥ ७ ॥ चोदितो वासुदेवस्तु मयेन भरतर्षभ । मुहूर्त्तमिव सन्दध्यौ किमयं चोद्यतामिति ॥ ८ ॥ ततो विचिन्त्य

मनसा लोकनाथः प्रजापतिः । चोदयामास तं कृष्णः सभा वै
क्रियतामिति ॥ ९ ॥ यदि त्वं कर्त्तुकामोऽसि प्रियं शिल्पवतां
वर । धर्मराजस्य दैतेय यादृशीमिह मन्यसे ॥ १० ॥ यां कृतां
नानुकुर्य्युर्हि मानवाः प्रेक्ष्य दानवाः । मनुष्यलोके सकले तादृशीं
कुरु वै सभाम् ॥ ११ ॥ यत्र दिव्यानभिप्रायान् पश्येम हि कृतां-
स्त्वया । आसुरान्मानुषांश्चैव सभां तां कुरु वै मय ॥ १२ ॥

वैशम्पायन उवाच । प्रतिगृह्य तु तद्वाक्यं सम्प्रहृष्टो मय-
स्तदा । विमानप्रतिमाञ्चक्रे पाण्डवस्य शुभां सभाम् ॥ १३ ॥
ततः कृष्णश्च पार्थश्च धर्मराजे युधिष्ठिरे । सर्वमेतत् समावेद्य
दर्शयामासतुर्मयम् ॥ १४ ॥ तस्मै युधिष्ठिरः पूजां यथार्हा-
मकरोत्तदा । स तु तां प्रतिजग्राह मयः सत्कृत्य भारत ॥ १५ ॥
स पूर्वदेवचरितं तदा तत्र विशाम्पते । कथयामास दैतेयः पाण्डु-
पुत्रेषु भारत ॥१६॥ स कालं कञ्चिदाश्वस्य विश्वकर्मा विचिन्त्य
तु । सभां प्रचक्रमे कर्त्तुं पाण्डवानां महात्मनाम् ॥ १७ ॥ अभि-
प्रायेण पार्थानां कृष्णस्य च महात्मनः । पुण्येऽहनि महातेजाः
कृतकौतुकमङ्गलः ॥ १८ ॥ तर्पयित्वा द्विजश्रेष्ठान् पायसेन सह-
स्रशः । धनं बहुविधं दत्त्वा तेभ्य एव च वीर्य्यवान् ॥ १९ ॥
सर्वर्त्तुगुणसम्पन्नां दिव्यरूपां मनोरमाम् । दशकिष्कुसहस्रां तां
मापयामास सर्वतः ॥ २० ॥

इति सभापर्वणि सभाक्रियापर्वणि सभास्थाननिर्माणे
प्रथमोऽध्यायः ॥ १ ॥

---

वैशम्पायन उवाच । उषित्वा खाण्डवप्रस्थे सुखवासं जना-
र्दनः । पार्थैः प्रीतिसमायुक्तैः पूजनार्होऽभिपूजितः ॥ १ ॥ गम-
नाय मतिं चक्रे पितुर्दर्शनलालसः । धर्मराजमथामन्त्र्य पृथाञ्च

पृथुलोचनः ॥ २ ॥ ववन्दे चरणौ मूर्ध्ना जगद्वन्द्यः पितृष्वसुः । स तया मूर्ध्न्युपाघ्रातः परिष्वक्तश्च केशवः ॥ ३ ॥ ददर्शानन्तरं कृष्णो भगिनीं स्वां महायशाः । तामुपेत्य हृषीकेशः प्रीत्या बाष्पसमन्वितः ॥ ४ ॥ अर्थ्यं तथ्यं हितं वाक्यं लघुयुक्तमनुत्तमम् । उवाच भगवान् भद्रां सुभद्रां भद्रभाषिणीम् ॥ ५ ॥ तया स्वजनगामीनि श्रावितो वचनानि सः । संपूजितश्चाप्यसकृच्छिरसा चाभिवादितः ॥ ६ ॥ तामनुज्ञाप्य वार्ष्णेयः प्रतिनन्द्य च भामिनीम् । ददर्शानन्तरं कृष्णां धौम्यञ्चापि जनार्दनः ॥ ७ ॥ ववन्दे च यथान्यायं धौम्यं पुरुषसत्तमः । द्रौपदीं सान्त्वयित्वा च आमन्त्र्य च जनार्दनः ॥ ८ ॥ भ्रातॄनभ्यगमद्विद्वान् पार्थेन सहितो बली । भ्रातृभिः पञ्चभिः कृष्णो वृतः शक्र इवामरैः ॥ ९ ॥ यात्राकालस्य योग्यानि कर्माणि गरुड़ध्वजः । कर्तुकामः शुचिर्भूत्वा स्नातवान् समलङ्कृतः ॥ १० ॥ अर्चयामास देवांश्च द्विजांश्च यदुपुङ्गवः । माल्यजाप्यनमस्कारैर्गन्धैरुच्चावचैरपि ॥ ११ ॥ स कृत्वा सर्वकार्य्याणि प्रतस्थे तस्थुषाम्वरः । उपेत्य स यदुश्रेष्ठो बाह्यकक्ष्यां विनिर्गतः ॥ १२ ॥ स्वस्तिवाच्यार्हतो विप्रान्दधिपात्रफलाक्षतैः । वसु प्रदाय च ततः प्रदक्षिणमथाकरोत् ॥१४॥ काञ्चनं रथमास्थाय तार्क्ष्यकेतनमाशुगम् । गदाचक्रासिशार्ङ्गाद्यैरायुधैरावृतं शुभम् ॥ १५ ॥ तिथावथ च नक्षत्रे मुहूर्त्ते च गुणान्विते । प्रययौ पुण्डरीकाक्षः शैव्यसुग्रीववाहनः ॥ १६ ॥ अन्वारुरोह चाप्येनं प्रेम्णा राजा युधिष्ठिरः । अपास्य चास्य यन्तारं दारुकं यन्तृसत्तमम् ॥ १७ ॥ अभीषून् संप्रजग्राह स्वयं कुरुपतिस्तदा । उपारुह्यार्जुनश्चापि चामरव्यजनं सितम् ॥१८॥ रुक्मदण्डं बृहद्वाङ्कर्विदधौ च प्रदक्षिणम् । तथैव भीमसेनोऽपि यमाभ्यां सहितो बली ॥ १९ । पृष्ठतोऽनुययौ कृष्णमृत्विक्पौरजनैः सह । स तथा भ्रातृभिः सर्वैः केशवः परवीरहा ॥२०॥

अन्वीयमानः शुशुभे शिष्यैरिव गुरुः प्रियैः। पार्थमामन्त्र्य
गोविन्दः परिष्वज्य सुपीडितम्॥ २१॥ युधिष्ठिरं पूजयित्वा
भीमसेनं यमौ तथा। परिष्वक्तो भृशं ताभ्यां यमाभ्यामभिवादितः
॥ २२ ॥ योजनार्द्धमथो गत्वा कृष्णः परपुरञ्जयः। युधिष्ठिरं
समामन्त्र्य निवर्त्तस्वेति भारत॥ २३॥ ततोऽभिवाद्य गोविन्दः
पादौ जग्राह धर्मवित्। उत्थाप्य धर्मराजस्तु मूर्द्ध्न्युपाघ्राय केश-
वम्॥ २४॥ पाण्डवो यादवश्रेष्ठं कृष्णं कमललोचनम्। गम्यता-
मित्यनुज्ञाप्य धर्मराजो युधिष्ठिरः॥ २५॥ ततस्तैः संविदं कृत्वा
यथावन्मधुसूदनः। निवर्त्त्य च तथा कृच्छ्रात् पाण्डवान् सपदा-
नुगान्॥ २६॥ स्वां पुरीं प्रययौ हृष्टो यथा शक्रोऽमरावतीम्।
लोचनैरनुजग्मुस्ते तमादृष्टिपथात्तदा॥ २७॥ मनोभिरभि-
जग्मुस्ते कृष्णं प्रीतिसमन्वयात्। अतृप्तमनसामेव तेषां केशव-
दर्शने॥ २८॥ क्षिप्रमन्तर्दधे शौरिश्चक्षुषां प्रियदर्शनः। अकामा
एव पार्थास्ते गोविन्दगतमानसाः॥ २९॥ निवृत्त्योपययुस्तूर्णं
स्वपुरं पुरुषर्षभाः। स्यन्दनेनाथ कृष्णोऽपि त्वरितं द्वारका-
मगात्॥ ३०॥ सात्वतेन च वीरेण पृष्ठतो यायिना तदा।
दारुकेण च सूतेन सहितो देवकीसुतः। प्रययौ द्वारकां
शौरिर्गरुत्मानिव वेगवान्॥ ३१॥

वैशम्पायन उवाच। निवृत्य धर्मराजस्तु सह भ्रातृभि-
रच्युतः। सुहृत्परिवृतो राजा प्रविवेश पुरोत्तमम्॥ ३२॥
विसृज्य सुहृदः सर्वान् भ्रातॄन् पुत्रांश्च धर्मराट्। मुमोद पुरुष-
व्याघ्रो द्रौपद्या सहितो नृप॥ ३३॥

वैशम्पायन उवाच। केशवोऽपि मुदा युक्तः प्रविवेश पुरो-
त्तमम्। पूज्यमानो यदुश्रेष्ठैरुग्रसेनमुखैस्तथा॥ ३४॥ आहुकं
पितरं वृद्धं मातरञ्च यशस्विनीम्। अभिवाद्य बलञ्चैव स्थितः
कमललोचनः॥ ३५॥ प्रद्युम्नसाम्बनिशठांश्चारुदेष्णं गदं

तथा । अनिरुद्धञ्च मातुञ्च परिष्वज्य जनार्दनः । स दृष्टैरभ्यनु-
ज्ञातो रुक्मिण्या भवनं ययौ ॥ २६ ॥

इति सभापर्व्वणि सभाक्रियापर्व्वणि भगवद्याने
द्वितीयोऽध्यायः ॥ २ ॥

---

वैशम्पायन उवाच । अथाब्रवीन्मयः पार्थमर्जुनं जयतां-
वरम् । आपृच्छे त्वां गमिष्यामि पुनरेष्यामि चाप्यहम् ॥ १ ॥
उत्तरेण तु कैलासं मैनाकं पर्व्वतं प्रति । यियक्षमाणेषु पुरा
दानवेषु मया कृतम् ॥ २ ॥ चित्रं मणिमयं भाण्डं रम्यं बिन्दु-
सरः प्रति । सभायां सत्यसन्धस्य यदासीद्वृषपर्व्वणः ॥ ३ ॥ आग-
मिष्यामि तद्गृह्य यदि तिष्ठति भारत । ततः सभां करिष्यामि
पाण्डवस्य यशस्विनीम् ॥ ४ ॥ मनःप्रह्लादिनीं चित्रां सर्व्वरत्न-
विभूषिताम् । अस्ति बिन्दुसरस्युग्रा गदा च कुरुनन्दन ॥ ५ ॥
निहिता भावयाम्येवं राज्ञा हत्वा रणे रिपून् । सुवर्णबिन्दुभि-
श्चित्रा गुर्व्वी भारसहा दृढा ॥ ६ ॥ सा वै शतसहस्रस्य सम्मिता
शत्रुघातिनी । अनुरूपा च भीमस्य गाण्डीवं भवतो यथा ॥७॥
वारुणश्च महाशङ्खो देवदत्तः सुघोषवान् । सर्व्वमेतत् प्रदास्यामि
भवते नात्र संशयः ॥ ८ ॥ इत्युक्त्वा सोऽसुरः पार्थं प्रागुदीचीं
दिशं गतः । अथोत्तरेण कैलासान्मैनाकं पर्व्वतं प्रति ॥ ९ ॥
हिरण्यशृङ्गः सुमहान्महामणिमयो गिरिः । रम्यं बिन्दुसरो
नाम यत्र राजा भगीरथः ॥ १० ॥ दृष्ट्वा भागीरथीं गङ्गामुवास
बहुलाः समाः । यत्रेष्टं सर्व्वभूतानामीश्वरेण महात्मना ॥ ११॥
आहृताः क्रतवो मुख्याः शतं भरतसत्तम । यत्र यूपा मणि-
मयाश्चैत्याश्चापि हिरण्मयाः ॥ १२ ॥ शोभार्थं विहितास्तत्र न
तु दृष्टान्ततः कृताः । यत्रेष्ट्वा स गतः सिद्धिं सहस्राक्षः शची-

पति: ॥ १३ ॥ यत्र भूतपति: सृष्ट्वा सर्वान् लोकान् सनातन:। उपास्यते तिग्मतेजा स्थितो भूतै: सहस्रश: ॥ १४ ॥ नरनारायणौ ब्रह्मा यम: स्थाणुश्च पञ्चम:। उपासते यत्र सत्रं सहस्रयुगपर्य्यये ॥ १५ ॥ यत्रेष्टं वासुदेवेन सत्रैर्वर्षगणान् बहून्। श्रद्दधानेन सततं धर्मसम्प्रतिपत्तये ॥ १६ ॥ सुवर्णमालिनो यूपांश्चैत्यांश्चाप्यतिभास्वरान्। ददौ यत्र सहस्राणि प्रयुतानि च केशव: ॥ १७ ॥ तत्र गत्वा स जग्राह गदां शङ्खञ्च भारत। स्फाटिकञ्च सभाद्रव्यं यदासीद्वृषपर्वण: ॥ १८ ॥ किङ्करा: सह रक्षोभिर्यदरक्षन्महद्धनम्। तदगृह्णान्मयस्तत्र गत्वा सर्वं महासुर: ॥ १९ ॥ तदाहृत्य च तां चक्रे सोऽसुरोऽप्रतिमां सभाम्। विश्रुतां त्रिषु लोकेषु दिव्यां मणिमयीं सभाम् ॥ २० ॥ गदाञ्च भीमसेनाय प्रददौ प्रवरां तदा। देवदत्तञ्चार्जुनाय शङ्खप्रवरमुत्तमम् ॥ २१ ॥ यस्य शङ्खस्य नादेन भूतानि प्रचकम्पिरे। सभा च सा महाराज शातकुम्भमयद्रुमा ॥ २२ ॥ दशकिष्कुसहस्राणि समन्तादायताभवत्। यथा वह्नेर्यथार्कस्य सोमस्य च यथा सभा ॥ २३ ॥ भ्राजमाना तथात्यर्थं दधार परमं वपु:। प्रतिघ्नतीव प्रभया प्रभामर्कस्य भास्वराम् ॥ २४ ॥ प्रबभौ ज्वलमानेव दिव्या दिव्येन वर्चसा। नवमेघप्रतीकाशा दिवमावृत्य विष्ठिता ॥ २५ ॥ आयता विपुला रम्या विपाप्मा विगतक्लमा। उत्तमद्रव्यसम्पन्ना रत्नप्राकारमालिनी ॥ २६ ॥ बहुचित्रा बहुधना निर्मिता विश्वकर्मणा। न दाशार्ही सुधर्मा वा ब्रह्मणो वाथ तादृशी ॥ २७ ॥ सभा रूपेण सम्पन्ना यां चक्रे मतिमान् मय:। तां स्म तत्र मयेनोक्ता: रक्षन्ति च वहन्ति च ॥ २८ ॥ सभामष्टौ सहस्राणि किङ्करा नाम राक्षसा:। अन्तरीक्षचरा घोरा महाकाया महाबला: ॥ २९ ॥ रक्ताक्षा: पिङ्गलाक्षाश्च शुक्तिकर्णा: प्रहारिण:। तस्यां सभायां नलिनीं चकाराप्रतिमां

मयः ॥ २० ॥ वैदूर्यपत्रविततां मणिनालमयाम्बुजाम् । पद्म-
सौगन्धिकवतीं नानाद्विजगणायुताम् ॥ २१ ॥ पुष्पितैः पङ्कजै-
श्चित्रां कूर्मैर्मत्स्यैश्च काञ्चनैः । चित्रस्फटिकसोपानां निष्पङ्क-
सलिलां शुभाम् ॥ २२ ॥ मन्दानिलसमुद्धूतां मुक्ताबिन्दुभि-
राचिताम् । महामणिशिलापट्टबद्धपर्यन्तवेदिकाम् ॥२३ ॥ मणि-
रत्नचितां तान्तु केचिदभ्येत्य पार्थिवाः । दृष्ट्वापि नाभ्यजानन्त
तेऽज्ञानात् प्रपतन्त्युत ॥ २४ ॥ तां सभामभितो नित्यं पुष्प-
वन्तो महाद्रुमाः । आसन्नानाविधा नीलाः शीतच्छाया मनो-
रमाः ॥ २५ ॥ काननानि सुगन्धीनि पुष्करिण्यश्च सर्वशः ।
हंसकारण्डवोपेताश्चक्रवाकोपशोभिताः ॥ २६ ॥ जलजानाञ्च
माल्यानां स्थलजानाञ्च सर्वशः । मारुतो गन्धमादाय पाण्डवान्
स्म निषेवते ॥ २७ ॥ ईदृशीं तां सभां कृत्वा मासैः परिचतुर्दशैः ।
निष्ठितां धर्मराजाय मयो राजन् न्यवेदयत् ॥ २८ ॥

इति सभापर्वणि सभाक्रियापर्वणि सभानिर्माणे
तृतीयोऽध्यायः ॥ ३ ॥

---

वैशम्पायन उवाच । ततः प्रवेशनं तस्याश्चक्रे राजा युधि-
ष्ठिरः । अयुतं भोजयित्वा तु ब्राह्मणानां नराधिपः ॥ १ ॥
साज्येन पायसेनैव मधुना मिश्रितेन च । भक्ष्यैर्मूलैः फलैश्चैव
मांसैर्वाराहहारिणैः ॥ २ ॥ कृसरेणाथ जीवन्त्या हविष्येण च
सर्वशः । मांसप्रकारैर्विविधैः खाद्यैश्चापि तथा नृप ॥ ३ ॥ चोष्यैश्च
विविधै राजन् पेयैश्च बहुविस्तरैः । अहतैश्चैव वासोभिर्माल्यैरु-
च्चावचैरपि ॥ ४ ॥ तर्पयामास विप्रेन्द्रान् नानादिग्भ्यः समा-
गतान् । ददौ तेभ्यः सहस्राणि गवां प्रत्येकशः प्रभुः ॥ ५ ॥
पुण्याहघोषस्तत्रासीत् दिवस्पृगिव भारत । वादित्रैर्विविधै-

दिव्यैर्गन्धैश्च माल्यैश्च ॥ ६ ॥ पूजयित्वा कुरुश्रेष्ठो दैवतानि
निवेश्य च । तत्र मल्ला नटा झल्लाः सूता वैतालिकास्तथा ।
उपतस्थुर्महात्मानं धर्मपुत्रं युधिष्ठिरम् ॥ ७ ॥ तथा स कृत्वा
पूजां तां भ्रातृभिः सह पाण्डवः । तस्यां सभायां रम्यायां
रेमे शक्रो यथा दिवि ॥ ८ ॥ सभायामृषयस्तस्यां पाण्डवैः सह
आसते । आसाञ्चक्रुर्नरेन्द्राश्च नानादेशसमागताः ॥ ९ ॥ असितो
देवलः सत्यः सर्पमाली महाशिराः । अर्वावसुः सुमित्रश्च मैत्रेयः
शुनको बलिः ॥१०॥ बको दाल्भ्यः स्थूलशिराः कृष्णद्वैपायनः शुकः ।
सुमन्तुर्जैमिनिः पैलो व्यासशिष्यास्तथा वयम् ॥ ११ ॥ तित्तिरि-
र्याज्ञवल्क्यश्च ससुतो लोमहर्षणः । अप्सुहोम्यश्च धौम्यश्च अणी-
माण्डव्यकौशिकौ ॥ १२ ॥ दामोष्णीषस्त्रैबलिश्च पर्णादो वर-
जानुकः । मौञ्जायनो वायुभक्षः पाराशर्य्यश्च सारिकः ॥ १३ ॥
बलीवाकः सिनीवाकः सत्यपालः कृतश्रमः । जातूकर्णः शिखा-
वांश्च आलम्बः पारिजातकः ॥ १४ ॥ पर्वतश्च महाभागो मार्क-
ण्डेयो महामुनिः । पवित्रपाणिः सावर्णो भालुकिर्गालवस्तथा
॥ १५ ॥ जङ्घाबन्धुश्च रैभ्यश्च कोपवेगस्तथा भृगुः । हरिबभ्रुश्च
कौण्डिन्यो बभ्रुमाली सनातनः ॥ १६ ॥ काक्षीवानौषिजश्चैव
नाचिकेतोऽथ गौतमः । पैङ्गो वराहः शुनकः शाण्डिल्यश्च महा-
तपाः ॥ १७ ॥ कुक्कुरो वेणुजङ्घोऽथ कालापः कठ एव च ।
मुनयो धर्मविद्वांसो धृतात्मानो जितेन्द्रियाः ॥ १८ ॥ एते चान्ये
च बहवो वेदवेदाङ्गपारगाः । उपासते महात्मानं सभायामृषि-
सत्तमाः ॥ १९ ॥ कथयन्तः कथाः पुण्याः धर्मज्ञाः शुचयोऽमलाः ।
तथैव क्षत्रियश्रेष्ठा धर्मराजमुपासते ॥ २० ॥ श्रीमान्महात्मा
धर्मात्मा मुञ्जकेतुर्विवर्द्धनः । संग्रामजिद्दुर्मुखश्च उग्रसेनश्च वीर्य-
वान् ॥ २१ ॥ कक्षसेनः क्षितिपतिः क्षेमकश्चापराजितः ।
काम्बोजराजः कमठः कम्पनश्च महाबलः । सततं कम्पयामास

यवनानामेक एव यः ॥ २२ ॥ बलपौरुषसम्पन्नान् कृतास्त्रानमितौ-
जसः । यथासुरान् कालकेयान्देवो वज्रधरस्तथा ॥ २३ ॥ जटा-
सुरो मद्रकाणाञ्च राजा कुन्तिः पुलिन्दश्च किरातराजः । तथाङ्ग-
वङ्गौ सह पुण्ड्रकेण पाण्ड्यौड्रराजौ च सहान्ध्रकेण ॥ २४ ॥
अङ्गो वङ्गः सुमित्रश्च शैव्यश्चामित्रकर्षणः । किरातराजः सुमना
यवनाधिपतिस्तथा ॥ २५ ॥ चाणूरो देवरातश्च भोजो भीम-
रथश्च यः । श्रुतायुधश्च कालिङ्गो जयसेनश्च मागधः ॥ २६ ॥
सुशर्म्मा चेकितानश्च पुरुश्चामित्रकर्षणः । केतुमान्वसुदानश्च
वैदेहोऽथ कृतक्षणः ॥ २७ ॥ सुधर्म्मा चानिरुद्धश्च श्रुतायुश्च महा-
बलः । अनूपराजो दुर्द्धर्षः क्रमजिच्च सुदर्शनः ॥ २८ ॥ शिशु-
पालः सहसुतः करूषाधिपतिस्तथा । वृष्णीनां चैव दुर्द्धर्षाः
कुमारा देवरूपिणः ॥ २९ ॥ आहुको विपृथुश्चैव गदः सारण
एव च । अक्रूरः कृतवर्म्मा च सत्यकश्च शिनेः सुतः ॥ ३० ॥
भीष्मकोऽथाकृतिश्चैव द्युमत्सेनश्च वीर्य्यवान् । केकयाश्च महे-
ष्वासा यज्ञसेनश्च सौमकिः ॥ ३१ ॥ केतुमान्वसुमांश्चैव कृता-
स्त्रश्च महाबलः । एते चान्ये च बहवः क्षत्रिया मुख्यसम्मताः
॥ ३२ ॥ उपासते सभायां स्म कुन्तीपुत्रं युधिष्ठिरम् । अर्ज्जुनं ये
च संश्रित्य राजपुत्रा महाबलाः । अशिक्षन्त धनुर्वेदं रौरवाजिन-
वाससः ॥ ३३ ॥ तत्रैव शिक्षिता राजन् कुमारा वृष्णिनन्दनाः ।
रौक्मिणेयश्च साम्बश्च युयुधानश्च सात्यकिः ॥ ३४ ॥ सुधर्म्मा चानि-
रुद्धश्च शैव्यश्च नरपुङ्गवः । धनञ्जयसखा चात्र नित्यमास्ते स्म
तुम्बुरुः ॥ ३५ ॥ उपासते महात्मानमासीनं सप्तविंशतिः ।
चित्रसेनः सहामात्यो गन्धर्वाप्सरसस्तथा । गीतवादित्रकुशलाः
सम्यक् तालविशारदाः ॥ ३६ ॥ प्रमाणेऽथ लयस्थाने किन्नराः
कृतनिश्रमाः । सञ्चोदितास्तुम्बुरुणा गन्धर्वसहितास्तदा ॥ ३७ ॥
गायन्ति दिव्यतानैस्ते यथान्यायं मनस्विनः । पाण्डुपुत्रानृषीं-

चैव रंसयन्त उपासते ॥ १८ ॥ तस्यां सभायामासीनाः सुव्रताः सत्यसङ्गराः। दिवीव देवा ब्रह्माणं युधिष्ठिरमुपासते ॥ १९ ॥

इति सभापर्वणि सभाक्रियापर्वणि सभाप्रवेशो नाम चतुर्थोऽध्यायः समाप्तञ्च सभाक्रियापर्व ॥ ४ ॥

---

अथ लोकपालसभाख्यानपर्व।

वैशम्पायन उवाच। अथ तत्रोपविष्टेषु पाण्डवेषु महात्मसु। महत्सु चोपविष्टेषु गन्धर्वेषु च भारत ॥ १ ॥ वेदोपनिषदां वेत्ता ऋषिः सुरगणार्चितः। इतिहासपुराणज्ञः पुराकल्पविशेषवित् ॥ २ ॥ न्यायविद्धर्मतत्त्वज्ञः षडङ्गविदनुत्तमः। ऐक्यसंयोग-नानात्वसमवायविशारदः ॥ ३ ॥ वक्ता प्रगल्भो मेधावी स्मृति-मान्नयवित्कविः। परावरविभागज्ञः प्रमाणकृतनिश्चयः ॥ ४ ॥ पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवित्। उत्तरोत्तरवक्ता च वदतोऽपि बृहस्पतेः ॥ ५ ॥ धर्मकामार्थमोक्षेषु यथावत् कृत-निश्चयः। तथा भुवनकोषस्य सर्व्वस्यास्य महामतिः ॥ ६ ॥ प्रत्यक्ष-दर्शी लोकस्य तिर्य्यगूर्द्ध्वमधस्तथा। सांख्ययोगविभागज्ञो निर्वि-वित्सुः सुरासुरान् ॥ ७ ॥ सन्धिविग्रहतत्त्वज्ञस्त्वनुमानविभाग-वित्। षाड्गुण्यविधियुक्तश्च सर्व्वशास्त्रविशारदः ॥ ८ ॥ युद्धगान्धर्व-सेवी च सर्व्वत्राप्रतिघस्तथा। एतैश्चान्यैश्च बहुभिर्युक्तो गुणगणै-र्मुनिः ॥ ९ ॥ लोकाननुचरन् सर्व्वानागमत्तां सभां नृप। नारदः सुमहातेजा ऋषिभिः सहितस्तदा ॥ १० ॥ पारिजातेन राजेन्द्र रैवतेन च धीमता। सुमुखेन च सौम्येन देवर्षिरमितद्युतिः ॥ ११ ॥ सभास्थान् पाण्डवान् द्रष्टुं प्रीयमाणो मनोजवः। जयाशीर्भिस्तु तं विप्रो धर्म्मराजानमार्च्चयत् ॥ १२ ॥ तमागतमृषिं दृष्ट्वा नारदं सर्व्वधर्म्मवित्। सहसा पाण्डवश्रेष्ठः प्रत्युत्थायानुजैः

सह ॥ १३ ॥ अभ्यवादयत प्रीत्या विनयावनतस्तदा । तदर्ह-मासनं तस्मै सम्प्रदाय यथाविधि । गाञ्चैव मधुपर्कञ्च सम्प्रदाया-र्घ्यमेव च ॥ १४ ॥ अर्चयामास रत्नैश्च सर्वकामैश्च धर्मवित् । तुतोष च यथावच्च पूजां प्राप्य युधिष्ठिरात् ॥ १५ ॥ सोऽर्चितः पाण्डवैः सर्वैर्महर्षिर्वेदपारगः । धर्मकामार्थसंयुक्तं पप्रच्छेदं युधिष्ठिरम् ॥ १६ ॥

नारद उवाच । कच्चिदर्थाश्च कल्पन्ते धर्मे च रमते मनः । सुखानि चानुभूयन्ते मनश्च न विहन्यते ॥ १७ ॥ कच्चिदाचरितां पूर्वैर्नरदेव पितामहैः । वर्त्तसे वृत्तिमक्षुद्रां धर्मार्थसहितां त्रिषु ॥ १८ ॥ कच्चिदर्थेन वा धर्मं धर्मेणार्थमथापि वा । उभौ वा प्रीतिसारेण न कामेन प्रबाधसे ॥ १९ ॥ कच्चिदर्थञ्च धर्मञ्च कामञ्च जयतांवर । विभज्य काले कालज्ञ समं वरद सेवसे ॥ २० ॥ कच्चिद्राजगुणैः षड्भिः सप्तोपायांस्तथानघ । बलाबलेन सम्यक् त्वं चतुर्दश परीक्षसे ॥ २१ ॥ कच्चिदात्मानमन्वीक्ष्य परांश्च जयतांवर । तथा सन्धाय कर्माणि अष्टौ भारत सेवसे ॥ २२ ॥ कच्चित् प्रकृतयः सप्त न लुप्ता भरतर्षभ । आढ्यास्तथा व्यसनिनः स्वनुरक्ताश्च सर्वशः ॥ २३ ॥ कच्चिन्न कृतकैर्दूतैर्ये चाप्यपरि-शङ्किताः । त्वत्तो वा तव चामात्यैर्भिद्यते मन्त्रितन्तथा ॥ २४ ॥ मित्रोदासीनशत्रूणां कच्चित् वेत्सि चिकीर्षितम् । कच्चित्सन्धिं यथाकालं विग्रहं चोपसेवसे । कच्चिद्वृत्तिमुदासीने मध्यमे चानु-मन्यसे ॥ २५ ॥ कच्चिदात्मसमा वृद्धाः शुद्धाः सम्बोधनक्षमाः । कुलीनाश्चानुरक्ताश्च कृतास्ते वीर मन्त्रिणः ॥ २६ ॥ विजयो मन्त्र-मूलो हि राज्ञो भवति भारत । कच्चित् संवृतमन्त्रैस्ते अमात्यैः शास्त्रकोविदैः । राष्ट्रं सुरक्षितं तात शत्रुभिर्न्न विलुप्यते ॥२७॥ कच्चिन्निद्रावशं नैषि कच्चित्काले विबुध्यसे । कच्चिच्चापररात्रेषु चिन्तयस्यर्थमर्थवित् ॥ २८ ॥ कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः

तव । कच्चित्ते मन्त्रितो मन्त्रो न राष्ट्रं परिधावति ॥ २९ ॥
कच्चिदर्थान्विनिश्चित्य लघुमूलान्महोदयान् । क्षिप्रमारभसे कर्तुं
न विघ्नयसि तादृशान् ॥ ३० ॥ कच्चिन्न सर्वे कर्मान्ताः परोक्षास्ते
विशङ्किताः । सर्वे वा पुनरुत्सृष्टाः संसृष्टश्चात्र कारणम् ॥ ३१ ॥
आप्तैरलुब्धैः क्रमिकैस्ते च कच्चिदनुष्ठिताः । कच्चिद्राजन् कृता-
न्येव कृतप्रायाणि वा पुनः ॥ ३२ ॥ विदुस्ते वीर कर्माणि नान-
वाप्तानि कानिचित् । कच्चित्कारणिका धर्मे सर्वशास्त्रेषु कोविदाः
॥ ३३ ॥ कारयन्ति कुमारांश्च योधमुख्यांश्च सर्वशः । कच्चित्
सहस्रैर्मूर्खाणामेकं क्रीणासि पण्डितम् ॥ ३४ ॥ पण्डितो ह्यर्थ-
कृच्छ्रेषु कुर्यान्निःश्रेयसं परम् । कच्चिद्दुर्गाणि सर्वाणि धन-
धान्यायुधोदकैः ॥ ३५ ॥ यन्त्रैश्च परिपूर्णानि तथा शिल्पिधनु-
र्धरैः । एकोऽप्यमात्यो मेधावी शूरो दान्तो विचक्षणः ॥ ३६ ॥
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् । कच्चिदष्टादशान्येषु
स्वपक्षे दश पञ्च च ॥ ३७ ॥ त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि
चारकैः । कच्चिद्द्विषामविदितः प्रतिपन्नश्च सर्वदा ॥ ३८ ॥ नित्य-
युक्तो रिपून् सर्वान् वीक्षसे रिपुसूदन । कच्चिद्विनयसम्पन्नः
कुलपुत्रो बहुश्रुतः ॥ ३९ ॥ अनसूयुरसङ्कीर्णः सत्कृतस्ते पुरो-
हितः । कच्चिदग्निषु ते युक्तो विधिज्ञो मतिमानृजुः ॥ ४० ॥
हुतञ्च होष्यमाणञ्च काले वेदयते सदा । कच्चिदङ्गेषु निष्णातो
ज्योतिषः प्रतिपादकः ॥ ४१ ॥ उत्पातेषु हि सर्वेषु दैवज्ञः कुशल-
स्तव । कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः ॥ ४२ ॥
जघन्याश्च जघन्येषु भृत्याः कर्मसु योजिताः । अमात्यानुपधा-
तीतान् पितृपैतामहान् शुचीन् ॥ ४३ ॥ श्रेष्ठान् श्रेष्ठेषु कच्चित्त्वं
नियोजयसि कर्मसु । कच्चिन्नोग्रेण दण्डेन भृशमुद्विजसे प्रजाः
॥ ४४ ॥ राष्ट्रं तवानुशासन्ति मन्त्रिणो भरतर्षभ । कच्चित्त्वां
नावजानन्ति याजकाः पतितं यथा ॥ ४५ ॥ उग्रप्रतिग्रहीतारं

कामयाननिव स्त्रियः। कच्चिद्धृष्टश्च शूरश्च मतिमान् धृतिमान्
शुचिः। कुलीनश्चानुरक्तश्च दक्षः सेनापतिस्तव ॥ ४६ ॥ कच्चि-
द्बलस्य ते मुख्याः सर्वयुद्धविशारदाः। धृष्टावदाता विक्रान्ता-
स्त्वया सत्कृत्य मानिताः ॥ ४७ ॥ कच्चिद्बलस्य भक्तञ्च वेतनञ्च
यथोचितम्। सम्प्राप्तकाले दातव्यं ददासि न विकर्षसि ॥ ४८ ॥
कालातिक्रमणाद्ध्येते भक्तवेतनयोर्भृताः। भर्त्तुः कुर्वन्ति दौर्ग-
त्यात् सोऽनर्थः सुमहान् स्मृतः ॥ ४९ ॥ कच्चित्सर्व्वेऽनुरक्तास्त्वां
कुलपुत्राः प्रधानतः। कच्चित् प्राणांस्तवार्थेषु सन्त्यजन्ति सदा
युधि ॥ ५० ॥ कच्चिन्नैको बहूनर्थान् सर्वशः साम्परायिकान्।
अनुशास्सि यथाकामं कामात्मा शासनातिगः ॥ ५१ ॥ कच्चित्
पुरुषकारेण पुरुषः कर्म्म शोभयन्। लभते मानमधिकं भूयो वा
भक्तवेतनम् ॥ ५२ ॥ कच्चिद्विद्याविनीतांश्च नरान् ज्ञानविशा-
रदान्। यथार्हं गुणतश्चैव दानेनाभ्युपपद्यसे ॥ ५३ ॥ कच्चि-
द्दारान्मनुष्याणां तवार्थे मृत्युमीयुषाम्। व्यसनं चाभ्युपेतानां
बिभर्षि भरतर्षभ ॥ ५४ ॥ कच्चिद्भयादुपगतं क्षीणं वा रिपु-
मागतम्। युद्धे वा विजितं पार्थ पुत्रवत् परिरक्षसि ॥ ५५ ॥
कच्चित्त्वमेव सर्व्वस्याः पृथिव्याः पृथिवीपते। समश्चानभिशङ्क्यश्च
यथा माता यथा पिता ॥ ५६ ॥ कच्चिद्व्यसनिनं शत्रुं निशम्य
भरतर्षभ। अभियासि जवेनैव समीक्ष्य त्रिविधं बलम् ॥ ५७ ॥
यात्रामारभसे दिष्ट्या प्राप्तकालमरिन्दम। पार्ष्णिमूलञ्च विज्ञाय
व्यवसायं पराजयम्। बलस्य च महाराज दत्त्वा वेतनमग्रतः
॥ ५८ ॥ कच्चित् च बलमुख्येभ्यः परराष्ट्रे परन्तप। उपच्छ-
न्नानि रत्नानि प्रयच्छसि यथार्हतः ॥ ५९ ॥ कच्चिदात्मानमेवाग्रे
विजित्य विजितेन्द्रियः। परान् जिगीषसे पार्थ प्रमत्तानजिते-
न्द्रियान् ॥ ६० ॥ कच्चित्ते यास्यतः शत्रून् पूर्वं यान्ति स्वनु-
ष्ठिताः। साम दानञ्च भेदश्च दण्डश्च विधिवद्गुणाः ॥ ६१ ॥

कच्चिन्मूलं दृढं कृत्वा परान् यासि विशाम्पते। तांश्च विक्रमसे जेतुं जित्वा च परिरक्षसि ॥ ६२ ॥ कच्चिदष्टाङ्गसंयुक्ता चतुर्विधबला चमूः। बलमुख्यैः सुनीता ते द्विषतां प्रतिवर्हणी ॥६३॥ कच्चिल्लवञ्च मुष्टिञ्च परराष्ट्रे परन्तप। अविहाय महाराज निहंसि समरे रिपून् ॥६४॥ कच्चित् स्वपरराष्ट्रेषु बहवोऽधिकृतास्तव। अर्थान् समधितिष्ठन्ति रक्षन्ति च परस्परम् ॥६५॥ कच्चिदभ्यवहार्य्याणि गात्रसंस्पर्शकानि च। घ्रेयाणि च महाराज रक्षन्त्यनुमतास्तव ॥ ६६ ॥ कच्चित्कोषश्च कोष्ठञ्च वाहनं द्वारमायुधम्। आयश्च कृतकल्याणैस्तव भक्तैरनुष्ठितः ॥ ६७ ॥ कच्चिदाभ्यन्तरेभ्यश्च बाह्येभ्यश्च विशाम्पते। रक्षस्यात्मानमेवाग्रे तांश्च स्वेभ्यो मिथश्च तान्॥६८॥ कच्चिन्न पाने द्यूते वा क्रीड़ासु प्रमदासु च। प्रतिजानन्ति पूर्वाह्णे व्ययं व्यसनजं तव ॥६९॥ कच्चिदायस्य चार्द्धेन चतुर्भागेन वा पुनः। पादभागैस्त्रिभिर्वापि व्ययः संशोध्यते तव ॥ ७० ॥ कच्चित् ज्ञातीन् गुरून् वृद्धान् वणिजः शिल्पिनः श्रितान्। अभीक्ष्णमनुगृह्णासि धनधान्येन दुर्गतान् ॥ ७१ ॥ कच्चिज्जायव्यये युक्ताः सर्वे गणकलेखकाः। अनुतिष्ठन्ति पूर्वाह्णे नित्यमायव्ययं तव ॥ ७२ ॥ कच्चिदर्थेष्वसम्प्रौढ़ान् हितकामाननुप्रियान्। नापकर्षसि कर्मभ्यः पूर्वमप्राप्य किल्बिषम् ॥ ७३ ॥ कच्चिद्विदित्वा पुरुषानुत्तमाधममध्यमान्। त्वं कर्मस्वनुरूपेषु नियोजयसि भारत ॥ ७४ ॥ कच्चिन्न लुब्धाश्चौरा वा वैरिणो वा विशाम्पते। अप्राप्तव्यवहारा वा तव कर्मस्वनुष्ठिताः ॥ ७५ ॥ कच्चिन्न चौरैर्लुब्धैर्वा कुमारैः स्त्रीबलेन वा। त्वया वा पीड्यते राष्ट्रं कच्चित्तुष्टाः कृषीबलाः ॥७६॥ कच्चिद्राष्ट्रे तड़ागानि पूर्णानि च बृहन्ति च। भागशो विनिविष्टानि न कृषिर्देवमातृका ॥७७॥ कच्चिन्न बीजं भक्तञ्च कर्षकस्यावसीदति। पादिकञ्च शतं वृद्ध्या ददास्यृणमनुग्रहम्॥७८॥

कच्चित् स्वनुष्ठिता तात वार्त्ता ते साधुभिर्जनैः । वार्त्तायां सं-
श्रितस्तात लोकोऽयं सुखमेधते ॥ ७९ ॥ कच्चिच्छूराः कृतप्रज्ञाः
पञ्च पञ्चस्वनुष्ठिताः । क्षेमं कुर्वन्ति संहत्य राजन् जनपदे तव
॥ ८० ॥ कच्चिन्नगरगुप्त्यर्थं ग्रामा नगरवत् कृताः । ग्रामवच्च
कृता घोषास्ते च सर्वे त्वदर्पणाः ॥ ८१ ॥ कच्चिद्बलेनानुगताः
समानि विषमाणि च । पुराणि चौराः निघ्नन्तश्चरन्ति विषये
तव ॥ ८२ ॥ कच्चित् स्त्रियः सान्त्वयसि कच्चित्ताश्च सुरक्षिताः ।
कच्चिन्न श्रद्दधास्यासां कच्चिद्गुह्यं न भाषसे ॥ ८३ ॥ कच्चिदात्य-
यिकं श्रुत्वा तदर्थमनुचिन्त्य च । प्रियाण्यनुभवन् शेषे न त्वमन्तः-
पुरे नृप ॥ ८४ ॥ कच्चिद्द्वौ प्रथमौ यामौ रात्रेः सुप्त्वा विशाम्पते ।
संचिन्तयसि धर्मार्थौ याम उत्थाय पश्चिमे ॥ ८५ ॥ कच्चिद्दर्शयसे
नित्यं मनुष्यान् समलंकृतः । उत्थाय काले कालज्ञैः सह पाण्डव
मन्त्रिभिः ॥ ८६ ॥ कच्चिद्रक्ताम्बरधराः खड्गहस्ताः स्वलंकृताः ।
उपासते त्वामभितो रक्षणार्थमरिन्दम ॥ ८७ ॥ कच्चिद्दण्ड्येषु
यमवत् पूज्येषु च विशाम्पते । परीक्ष्य वर्त्तसे सम्यगप्रियेषु प्रियेषु
च ॥ ८८ ॥ कच्चिच्छारीरमाबाधमौषधैर्नियमेन वा । मानसं
वृद्धसेवाभिः सदा पार्थापकर्षसि ॥ ८९ ॥ कच्चिद्वैद्याश्चिकित्-
सायामष्टाङ्गायां विशारदाः । सुहृदश्चानुरक्ताश्च शरीरे ते हिताः
सदा ॥ ९० ॥ कच्चिन्न लोभान्मोहाद्वा मानाद्वापि विशाम्पते ।
अर्थिप्रत्यर्थिनः प्राप्तान् न पश्यसि कथञ्चन ॥ ९१ ॥ कच्चिन्न
लोभान्मोहाद्वा विश्रम्भात् प्रणयेन वा । आश्रितानां मनुष्याणां
वृत्तिं त्वं संरुणत्सि वै ॥ ९२ ॥ कच्चित् पौरा न सहिता ये च
ते राष्ट्रवासिनः । त्वया सह विरुध्यन्ते परैः क्रीताः कथञ्चन
॥ ९३ ॥ कच्चिन्न दुर्बलः शत्रुर्बलेन परिपीड़ितः । मन्त्रेण बल-
वान् कच्चिदुभाभ्याञ्च कथञ्चन ॥ ९४ ॥ कच्चित् सर्वेऽनुरक्तास्त्वां
भूमिपालाः प्रधानतः । कच्चित् प्राणांस्त्वदर्थेषु सन्त्यजन्ति त्वया-

हृताः ॥ ९५ ॥ कच्चित्ते सर्वविद्यासु गुणतोऽर्च्चा प्रवर्त्तते। ब्राह्मणानाञ्च साधूनां तव नैःश्रेयसी शुभा ॥ ९६ ॥ कच्चिद्धर्मे त्रयीमूले पूर्वैराचरिते जनैः। यतमानस्तथा कर्त्तुं तस्मिन् कर्म्मणि वर्त्तसे ॥ ९७ ॥ कच्चित्तव गृहेऽन्नानि स्वादून्यश्नन्ति वै द्विजाः। गुणवन्ति गुणोपेतास्तवाध्यक्षं सदक्षिणम् ॥ ९८ ॥ कच्चित् क्रतू-नेकचित्तो वाजपेयांश्च सर्व्वशः। पुण्डरीकांश्च कार्त्स्न्येन यतसे कर्त्तुमात्मवान् ॥ ९९ ॥ कच्चिज्ज्ञातीन् गुरून् वृद्धान्दैवतांस्तापसा-नपि। चैत्यांश्च वृक्षान् कल्याणान् ब्राह्मणांश्च नमस्यसि ॥१००॥ कच्चिच्छोको न मन्युर्वा त्वया प्रोत्पाद्यतेऽनघ। अपि मङ्गलहस्तश्च जनः पार्श्वेऽनुतिष्ठति ॥ १०१ ॥ कच्चिदेषा च ते बुद्धिर्वृत्तिरेषा च तेऽनघ। आयुष्या च यशस्या च धर्म्मकामार्थदर्शिनी ॥१०२॥ एतया वर्त्तमानस्य बुद्ध्या राष्ट्रं न सीदति। विजित्य च महीं राजा सोऽत्यन्तं सुखमेधते ॥ १०३ ॥ कच्चिदार्य्यो विशुद्धात्मा क्षारितश्चौरकर्म्मणि। अदृष्टशास्त्रकुशलैर्न्न लोभाद्बध्यते शुचिः ॥ १०४ ॥ दृष्टो गृहीतस्तत्कारी तज्ज्ञैर्दृष्टः सकारणः। कच्चिन्न मुच्यते स्तेनो द्रव्यलोभान्नरर्षभ ॥ १०५ ॥ उत्पन्नान् कच्चिदाढ्यस्य दरिद्रस्य च भारत। अर्थान्न मिथ्या पश्यन्ति तवामात्या हृता धनैः ॥ १०६ ॥ नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम्। अदर्शनं ज्ञानवतामालस्यं क्षिप्तचित्तताम् ॥ १०७ ॥ एकचिन्तन-मर्थानामनर्थज्ञैश्च चिन्तनम्। निश्चितानामनारम्भं मन्त्रस्या-परिरक्षणम् ॥ १०८ ॥ मङ्गलाद्यप्रयोगञ्च प्रत्युत्थानञ्च सर्व्वतः। कच्चित्त्वं वर्जयस्येतान् राजदोषांश्चतुर्दश। प्रायशो यैर्विनश्यन्ति कृतमूलापि पार्थिवाः ॥ १०९ ॥ कच्चित्ते सफला वेदाः कच्चित्ते सफलं धनम्। कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम् ॥११०॥

युधिष्ठिर उवाच। कथं वै सफला वेदाः कथं वै सफलं धनम्। कथं वै सफला दाराः कथं वै सफलं श्रुतम् ॥ १११ ॥

नारद उवाच। अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम्।
रतिपुत्रफला दाराः शीलवृत्तफलं श्रुतम्॥ ११२॥
वैशम्पायन उवाच। एतदाख्याय स मुनिर्नारदो वै महा-
तपाः। पप्रच्छानन्तरमिदं धर्मात्मानं युधिष्ठिरम्॥ ११३॥
नारद उवाच। कच्चिदभ्यागता दूराद्वणिजो लाभकार-
णात्। यथोक्तमवहार्य्यन्ते शुल्कं शुल्कोपजीविभिः॥ ११४॥
कच्चित्ते पुरुषा राजन् पुरे राष्ट्रे च मानिताः। उपानयन्ति
पण्यानि उपधाभिरवञ्चिताः॥ ११५॥ कच्चित् शृणोषि वृद्धानां
धर्मार्थसहिता गिरः। नित्यमर्थविदां तात तथा धर्मार्थदर्शि-
नाम्॥ ११६॥ कच्चित्ते कृषितन्त्रेषु गोषु पुष्पफलेषु च। धर्मा-
र्थञ्च द्विजातिभ्यो दीयते मधुसर्पिषी॥ ११७॥ द्रव्योपकरणं
किञ्चित् सर्वदा सर्वशिल्पिनाम्। चातुर्मास्यावरं सम्यङ्नियतं
सम्प्रयच्छसि॥ ११८॥ कच्चित् कृतं विजानीषे कर्त्तारञ्च प्रशं-
ससि। सतां मध्ये महाराज सत्करोषि च पूजयन्॥ ११९॥
कच्चित् सूत्राणि सर्वाणि गृह्णासि भरतर्षभ। हस्तिसूत्राश्व-
सूत्राणि रथसूत्राणि वा विभो॥ १२०॥ कच्चिदभ्यस्यते सम्यग्
गृहे ते भरतर्षभ। धनुर्वेदस्य सूत्रं वै यन्त्रसूत्रञ्च नागरम्
॥१२१॥ कच्चिदस्त्राणि सर्वाणि ब्रह्मदण्डश्च तेऽनघ। विषयोगा-
स्तथा सर्वे विदिताः शत्रुनाशनाः॥१२२॥ कच्चिदग्निभयाच्चैव सर्वं
व्यालभयात्तथा। रोगरक्षोभयाच्चैव राष्ट्रं स्वं परिरक्षसि॥ १२३॥
कच्चिदन्धांश्च मूकांश्च पङ्गून् व्यङ्गानबान्धवान्। पितेव पासि धर्मज्ञ
तथा प्रव्रजितानपि॥ १२४॥ षडनर्था महाराज कच्चित्ते पृष्ठतः
कृताः। निद्रालस्यं भयं क्रोधो मार्दवं दीर्घसूत्रता॥ १२५॥
वैशम्पायन उवाच। ततः कुरूणामृषभो महात्मा श्रुत्वा
गिरो ब्राह्मणसत्तमस्य। प्रणम्य पादावभिवाद्य तुष्टो राजाब्रवी-
न्नारदं देवरूपम्॥ १२६॥

युधिष्ठिर उवाच । एवं करिष्यामि यथा त्वयोक्तं प्रज्ञा हि मे भूय एवाभिवृद्धा । उक्त्वा तथा चैव चकार राजा लेभे महीं सागरमेखलाञ्च ॥ १२७ ॥

नारद उवाच । एवं यो वर्त्तते राजा चातुर्वर्ण्यस्य रक्षणे । स विहृत्येह सुसुखी शक्रस्यैति सलोकताम् ॥ १२८ ॥

इति सभापर्वणि लोकपालसभाख्यानपर्वणि कच्चिदध्यायो नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

वैशम्पायन उवाच । संपूज्याथाभ्यनुज्ञातो महर्षेर्वचनात् परम् । प्रत्युवाचानुपूर्व्येण धर्मराजो युधिष्ठिरः ॥ १ ॥ भगवन् न्याय्यमाहैतं यथावद्धर्मनिश्चयम् । यथाशक्ति यथान्यायं क्रियतेऽयं विधिर्मया ॥ २ ॥ राजभिर्यद्यथा कार्य्यं पुरा वै तन्न संशयः । यथान्यायोपनीतार्थं कृतं हेतुमदर्थवत् ॥ ३ ॥ वयन्तु सत्पथं तेषां यातुमिच्छामहे प्रभो । न तु शक्यं तथा गन्तुं यथा तैर्नियतात्मभिः ॥ ४ ॥

वैशम्पायन उवाच । तं तु विश्वान्तमालक्ष्य देवर्षिममितद्युतिम् । एवमुक्त्वा स धर्मात्मा वाक्यं तदभिपूज्य च ॥५॥ मुहूर्त्तात् प्राप्तकालञ्च दृष्ट्वा लोकचरं मुनिम् । नारदं सुस्थमासीनमुपासीनो युधिष्ठिरः । अपृच्छत् पाण्डवस्तत्र राजमध्ये महाद्युतिः ॥ ६ ॥

युधिष्ठिर उवाच । भवान् सञ्चरते लोकान् सदा नानाविधान् बहून् । ब्रह्मणा निर्मितान् पूर्वं प्रेक्षमाणो मनोजवः ॥ ७ ॥ ईदृशी भविता काचिद्दृष्टपूर्व्वा सभा क्वचित् । इतो वा श्रेयसी ब्रह्मंस्तन्ममाचक्ष्व पृच्छतः ॥ ८ ॥

वैशम्पायन उवाच । तच्छ्रुत्वा नारदस्तस्य धर्मराजस्य भाषितम् । पाण्डवं प्रत्युवाचेदं स्मयन्मधुरया गिरा ॥ ९ ॥

नारद उवाच । मानुषेषु न मे तात दृष्टपूर्वा न च श्रुता । सभा मणिमयी राजन् यथेयं तव भारत ॥ १० ॥ सभान्तु पितृराजस्य वरुणस्य च धीमतः । कथयिष्ये तथेन्द्रस्य कैलासनिलयस्य च ॥ ११ ॥ ब्रह्मणश्च सभां दिव्यां कथयिष्ये गतक्लमाम् । दिव्यां दिव्यैरभिप्रायैरुपेतां विश्वरूपिणीम् ॥ १२ ॥ देवैः पितृगणैः साध्यैर्यज्वभिर्नियतात्मभिः । जुष्टां मुनिगणैः शान्तैर्वेदयज्ञैः सदक्षिणैः ॥ १३ ॥ यदि ते श्रवणे बुद्धिर्वर्त्तते भरतर्षभ । नारदेनैवमुक्तस्तु धर्मराजो युधिष्ठिरः ॥ १४ ॥ प्राञ्जलिर्भ्रातृभिः सार्द्धं तैश्च सर्वैर्द्विजोत्तमैः । नारदं प्रत्युवाचेदं धर्मराजो महामनाः ॥ १५ ॥

युधिष्ठिर उवाच । सभाः कथय ताः सर्वाः श्रोतुमिच्छामहे वयम् । किन्द्रव्यास्ताः सभा ब्रह्मन् किंविस्ताराः किमायताः ॥१६॥ पितामहञ्च के तस्यां सभायां पर्य्युपासते । वासवं देवराजञ्च यमं वैवस्वतञ्च के ॥ १७ ॥ वरुणञ्च कुवेरञ्च सभायां पर्य्युपासते । एतत्सर्वं यथान्यायं ब्रह्मर्षे वदतस्तव । श्रोतुमिच्छाम सहिताः परं कौतूहलं हि नः ॥ १८ ॥ एवमुक्तः पाण्डवेन नारदः प्रत्यभाषत । क्रमेण राजन् दिव्यास्ताः श्रूयन्तामिह नः सभाः ॥ १९ ॥

इति सभापर्वणि लोकपालसभाख्यानपर्वणि सभाजिज्ञासा नाम षष्ठोऽध्यायः॥ ६ ॥

— —

नारद उवाच । शक्रस्य तु सभा दिव्या भास्वरा कर्मभिर्जिता । स्वयं शक्रेण कौरव्य निर्मितार्कसमप्रभा ॥ १ ॥ विस्तीर्णा योजनशतं शतमध्यर्द्धमायता । वैहायसी कामगमा पञ्चयोजनमुच्छ्रिता ॥ २ ॥ जराशोकक्लमापेता निरातङ्का शिवा शुभा । वेश्मासनवती रम्या दिव्यपादपशोभिता ॥ ३ ॥ तस्यां देवेश्वरः

पार्थ सभायां परमासने । आस्ते शच्या महेन्द्राण्या श्रिया लक्ष्म्या च भारत ॥ ४ ॥ बिभ्रद्वपुरनिर्देश्यं किरीटी लोहिताङ्गदः । विरजोऽम्बरश्चित्रमाल्यो ह्रीकीर्त्तिद्युतिभिः सह ॥ ५ ॥ तस्यामुपासते नित्यं महात्मानं शतक्रतुम् । मरुतः सर्वशो राजन् सर्वे च गृहमेधिनः ॥ ६ ॥ सिद्धा देवर्षयश्चैव साध्या देवगणास्तथा । मरुत्वन्तश्च सहिता भास्वन्तो हेममालिनः ॥ ७ ॥ एते सानुचराः सर्वे दिव्यरूपाः स्वलंकृताः । उपासते महात्मानं देवराजमरिन्दमम् ॥ ८ ॥ तथा देवर्षयः सर्वे पार्थ शक्रमुपासते । अमला धूतपाप्मानो दीप्यमाना इवाग्नयः ॥ ९ ॥ तेजस्विनः सोमसुतो विशोका विगतज्वराः । पराशरः पर्वतश्च तथा सावर्णिगालवौ ॥ १० ॥ शङ्खश्च लिखितश्चैव तथा गौरशिरा मुनिः । दुर्वासा क्रोधनः श्येनस्तथा दीर्घतमा मुनिः ॥ ११ ॥ पवित्रपाणिः सावर्णिर्याज्ञवल्क्योऽथ भालुकिः । उद्दालकः श्वेतकेतुस्ताण्ड्यो भाण्डायनिस्तथा ॥ १२ ॥ हविष्मांश्च गरिष्ठश्च हरिश्चन्द्रश्च पार्थिवः । हृद्यश्चोदरशाण्डिल्यः पाराशर्य्यः कृषीवलः ॥ १३ ॥ वातस्कन्धो विशाखश्च विधाता काल एव च । करालदन्तस्त्वष्टा च विश्वकर्मा च तुम्बुरुः ॥ १४ ॥ अयोनिजा योनिजाश्च वायुभक्षा हुताशिनः । ईशानं सर्वलोकस्य वज्रिणं समुपासते ॥ १५ ॥ सहदेवः सुनीथश्च वाल्मीकिश्च महातपाः । शमीकः सत्यवाक् चैव प्रचेताः सत्यसङ्गरः ॥ १६ ॥ मेधातिथिर्वामदेवः पुलस्त्यः पुलहः क्रतुः । मरुत्तश्च मरीचिश्च स्थाणुश्चात्रिर्महातपाः ॥ १७ ॥ काक्षीवान् गौतमस्तार्क्ष्यस्तथा वैश्वानरो मुनिः । मुनिः कालकवृक्षीय आश्राव्योऽथ हिरण्मयः ॥ १८ ॥ संवर्त्तो देवहव्यश्च विष्वक्सेनश्च वीर्य्यवान् । कण्वो कात्यायनो राजन् गार्ग्यः कौशिक एव च । दिव्या आपस्तथौषध्यः श्रद्धा मेधा सरस्वती ॥ १९ ॥ अर्थो धर्मश्च कामश्च विद्युतश्चैव पाण्डव । जलवाहास्तथा मेघा

वायवस्तनयित्नवः ॥ २० ॥ प्राची दिग्यज्ञवाहाश्च पावकाः सप्तविंशतिः । अग्नीषोमौ तथेन्द्राग्नी मित्रश्च सविताऽर्यमा ॥ २१ ॥ भगो विश्वे च साध्याश्च गुरुः शुक्रस्तथैव च । विश्वावसुश्चित्रसेनः सुमनस्तरुणस्तथा ॥ २२ ॥ यज्ञाश्च दक्षिणाश्चैव ग्रहास्ताराश्च भारत । यज्ञवाहाश्च ये मन्त्राः सर्वे तत्र समासते ॥ २३ ॥ तथैवाप्सरसो राजन् गन्धर्वाश्च मनोरमाः । नृत्यवादित्रगीतैश्च हास्यैश्च विविधैरपि ॥ २४ ॥ रमयन्ति स्म नृपते देवराजं शतक्रतुम् । स्तुतिभिर्मङ्गलैश्चैव स्तुवन्तः कर्मभिस्तथा ॥ २५ ॥ विक्रमैश्च महात्मानं बलवृत्रनिषूदनम् । ब्रह्मराजर्षयश्चैव सर्वे देवर्षयस्तथा ॥ २६ ॥ विमानैर्विविधैर्दिव्यैर्दीप्यमाना इवाग्नयः । स्रग्विणो भूषिताः सर्वे यान्ति चायान्ति चापरे ॥ २७ ॥ बृहस्पतिश्च शुक्रश्च नित्यमास्तां हि तत्र वै । एते चान्ये च बहवो महात्मानो यतव्रताः ॥ २८ ॥ विमानैश्चन्द्रसङ्काशैः सोमवत् प्रियदर्शनाः । ब्रह्मणः सदृशा राजन् भृगुः सप्तर्षयस्तथा ॥ २९ ॥ एषा सभा मया राजन् दृष्टा पुष्करमालिनी । शतक्रतोर्महाबाहो याम्यामपि सभां शृणु ॥ ३० ॥

इति सभापर्वणि लोकपालसभाख्यानपर्वणि शक्रसभावर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

नारद उवाच । कथयिष्ये सभां याम्यां युधिष्ठिर निबोध ताम् । वैवस्वतस्य यां पार्थ विश्वकर्मा चकार ह ॥ १ ॥ तैजसी सा सभा राजन् बभूव शतयोजना । विस्तारायामसम्पन्ना भूयसी चापि पाण्डव ॥ २ ॥ अर्कप्रकाशा भ्राजिष्णुः सर्वतः कामरूपिणी । नातिशीता न चात्युष्णा मनसश्च प्रहर्षिणी ॥ ३ ॥ न शोको न जरा तस्यां क्षुत्पिपासे न चाप्रियम् । न च दैन्यं क्लमो वापि

प्रतिकूलं न चाप्युत ॥ ४ ॥ सर्वे कामाः स्थितास्तस्यां ये दिव्या
ये च मानुषाः। रसवच्च प्रभूतञ्च भक्ष्यभोज्यमरिन्दम। लेह्यं
चोष्यञ्च पेयञ्च हृद्यं स्वादु मनोहरम् ॥ ५ ॥ पुण्यगन्धाः स्रज-
स्तस्यां नित्यं कामफला द्रुमाः। रसवन्ति च तोयानि शीता-
न्युष्णानि चैव ह ॥ ६ ॥ तस्यां राजर्षयः पुण्यास्तथा ब्रह्मर्षयो-
ऽमलाः। यमं वैवस्वतं तात प्रहृष्टाः पर्य्युपासते ॥ ७ ॥ ययाति-
र्नहुषः पूरुर्मान्धाता सोमको नृगः। त्रसदस्युश्च राजर्षिः कृत-
वीर्य्यः श्रुतश्रवाः ॥ ८ ॥ अरिष्टनेमिः सिद्धश्च कृतवेगः कृति-
र्निमिः। प्रतर्दनः शिविर्मत्स्यः पृथ्वक्षो बृहद्रथः ॥ ९ ॥ वार्त्तो
मरुत्तः कुशिकः साङ्काश्यः सांकृतिर्ध्रुवः। चतुरश्वः सदश्वोर्मिः
कार्त्तवीर्य्यश्च पार्थिवः ॥ १० ॥ भरतः सुरथश्चैव सुनीथो निशठो
नलः। दिवोदासश्च सुमना अम्बरीषो भगीरथः ॥ ११ ॥ व्यश्वः
सदश्वो वध्र्यश्वः पृथुवेगः पृथुश्रवाः। पृषदश्वो वसुमनाः क्षुपश्च
सुमहाबलः। रुषद्गुर्वृषसेनश्च पुरुकुत्सो ध्वजी रथी ॥ १२ ॥
आर्ष्टिषेणो दिलीपश्च महात्मा चाप्युशीनरः। औशीनरिः पुण्ड-
रीकः शर्यातिः शरभः शुचिः ॥ १३ ॥ अङ्गोऽरिष्टश्च वेनश्च
दुष्यन्तः सृञ्जयो जयः। भाङ्गासुरिः सुनीथश्च निषधोऽथ वही-
नरः ॥ १४ ॥ करन्धमो बाह्लिकश्च सुद्युम्नो बलवान्मधुः। ऐलो
मरुत्तश्च तथा बलवान् पृथिवीपतिः ॥ १५ ॥ कपोतरोमा तृणकः
सहदेवार्जुनौ तथा। व्यश्वः साश्वः कृशाश्वश्च शशबिन्दुश्च पार्थिवः
॥ १६ ॥ रामो दाशरथिश्चैव लक्ष्मणोऽथ प्रतर्दनः। अलर्कः
कक्षसेनश्च गयो गौराश्व एव च ॥ १७ ॥ जामदग्न्योऽथ रामश्च
नाभागसगरौ तथा। भूरिद्युम्नो महाश्वश्च पृथाश्वो जनकस्तथा
॥ १८ ॥ राजा वैन्यो वारिषेणः पुरुजिज्जनमेजयः। ब्रह्मदत्त-
स्त्रिगर्त्तश्च राजोपरिचरस्तथा ॥ १९ ॥ इन्द्रद्युम्नो भीमजानु-
र्गौरपृष्ठो नलो गयः। पद्मोऽथ मुचुकुन्दश्च भूरिद्युम्नः प्रसेन-

जित् ॥ २० ॥ अरिष्टनेमिः सुद्युम्नः पृथुलाश्वोऽष्टकस्तथा । शतं
मत्स्या नृपतयः शतं नीपाः शतं हयाः ॥ २१ ॥ धृतराष्ट्राश्चैक-
शतं अशीतिर्ज्जनमेजयाः । शतञ्च ब्रह्मदत्तानामीरिणाञ्च शतं
तथा ॥ २२ ॥ भीष्माणां द्वे शते साग्रे भीमानान्तु तथा शतम् ।
शतञ्च प्रतिविन्ध्यानां शतं नागाः शतं हयाः ॥ २३ ॥ पलाशानां
शतं ज्ञेयं शतञ्चाशकुशादयः । शान्तनुश्चैव राजेन्द्र पाण्डुश्चैव
पिता तव ॥ २४ ॥ उशद्गवः शतरथो देवराजो जयद्रथः । वृष-
दर्भश्च राजर्षिर्बुद्धिमान् सह मन्त्रिभिः ॥ २५ ॥ अथापरे सह-
स्राणि ये गताः शशविन्दवः । इष्ट्वाश्वमेधैर्बहुभिर्महद्भिर्भूरि-
दक्षिणैः ॥ २६ ॥ एते राजर्षयः पुण्याः कीर्त्तिमन्तो बहुश्रुताः ।
तस्यां सभायां राजेन्द्र वैवस्वतमुपासते ॥ २७ ॥ अगस्त्योऽथ मत-
ङ्गश्च कालो मृत्युस्तथैव च । यज्वानश्चैव सिद्धाश्च ये च योगशरी-
रिणः ॥ २८ ॥ अग्निष्वात्ताश्च पितरः फेनपाश्चोष्मपाश्च ये ।
स्वधावन्तो बर्हिषदो मूर्त्तिमन्तस्तथा परे ॥ २९ ॥ कालचक्रञ्च
साक्षाच्च भगवान् हव्यवाहनः । नरा दुष्कृतकर्म्माणो दक्षिणा-
यनमृत्यवः ॥ ३० ॥ कालस्य नयने युक्ता यमस्य पुरुषाश्च ये ।
तस्यां शिंशपपालाशास्तथा काशकुशादयः ॥ ३१ ॥ उपासते
धर्म्मराजं मूर्त्तिमन्तो जनाधिप । एते चान्ये च बहवः पितृ-
राजसभासदः ॥ ३२ ॥ न शक्याः परिसङ्ख्यातुं नामभिः कर्म्मभि-
स्तथा । असम्बाधा हि सा पार्थ रम्या कामगमा सभा । दीर्घ-
कालं तपस्तप्त्वा निर्म्मिता विश्वकर्म्मणा ॥ ३३ ॥ ज्वलन्ती भास-
माना च तेजसा स्वेन भारत । तामुग्रतपसो यान्ति सुव्रताः
सत्यवादिनः ॥ ३४ ॥ शान्ताः सन्न्यासिनः शुद्धाः पूताः पुण्येन
कर्म्मणा । सर्व्वे भास्वरदेहाश्च सर्व्वे च विरजोऽम्बराः ॥ ३५ ॥
चित्राङ्गदाश्चित्रमाल्याः सर्व्वे ज्वलितकुण्डलाः । सुकृतैः कर्म्मभिः
पुण्यैः पारिबर्हैश्च भूषिताः ॥ ३६ ॥ गन्धर्व्वाश्च महात्मानः संघश-

श्चाप्सरोगणाः । वादित्रं नृत्यगीतञ्च हास्यं लास्यञ्च सर्वशः ॥३७॥ पुण्याश्च गन्धाः शब्दाश्च तस्यां पार्थ समन्ततः । दिव्यानि चैव माल्यानि उपतिष्ठन्ति नित्यशः ॥ ३८ ॥ शतं शतसहस्राणि धर्मिणां तं प्रजेश्वरम् । उपासते महात्मानं रूपयुक्ता मनस्विनः ॥ ३९ ॥ ईदृशी सा सभा राजन् पितृराज्ञो महात्मनः । वरुणस्यापि वक्ष्यामि सभां पुष्करमालिनीम् ॥ ४० ॥

इति सभापर्वणि लोकपालसभाख्यानपर्वणि यमसभावर्णनं नाम अष्टमोऽध्यायः ॥ ८ ॥

---

नारद उवाच । युधिष्ठिर सभा दिव्या वरुणस्यामितप्रभा । प्रमाणेन यथा याम्या शुभ्रप्राकारतोरणा ॥ १ ॥ अन्तःसलिलमास्थाय विहिता विश्वकर्मणा । दिव्यैरत्नमयैर्वृक्षैः फलपुष्पप्रदैर्युता ॥ २ ॥ नीलपीतासितश्यामैः सितैर्लोहितकैरपि । अवतानैस्तथा गुल्मैर्मञ्जरीजालधारिभिः ॥ ३ ॥ तथा शकुनयस्तस्यां विचित्रा मधुरस्वराः । अनिर्देश्या वपुष्मन्तः शतशोऽथ सहस्रशः ॥ ४ ॥ सा सभा सुखसंस्पर्शा न शीता न च घर्मदा । वेश्मासनवती रम्या सिता वरुणपालिता ॥ ५ ॥ यस्यामास्ते स वरुणो वारुण्या च समन्वितः । दिव्यरत्नाम्बरधरो दिव्याभरणभूषितः ॥ ६ ॥ स्रग्विणो दिव्यगन्धाश्च दिव्यगन्धानुलेपनाः । आदित्यास्तत्र वरुणं जलेश्वरमुपासते ॥ ७ ॥ वासुकिस्तक्षकश्चैव नागश्चैरावणस्तथा । कृष्णश्च लोहितश्चैव पद्मश्चित्रश्च वीर्यवान् ॥८॥ कम्बलाश्वतरौ नागौ धृतराष्ट्रबलाहकौ । मणिमान् कुण्डधारश्च कर्कोटकधनञ्जयौ ॥ ९ ॥ पाणिमान् कुण्डकश्चैव बलवान् पृथिवीपते । प्रह्लादो मूषिकादश्च तथैव जनमेजयः ॥ १० ॥ पताकिनो मण्डलिनः फणवन्तश्च सर्वशः । एते चान्ये च बहवः

सर्पास्तस्यां युधिष्ठिर ॥ ११ ॥ उपासते महात्मानं वरुणं विगतक्लमाः। बलिर्वैरोचनो राजा नरकः पृथिवीञ्जयः ॥ १२ ॥ संह्रादो विप्रचित्तिश्च कालखञ्जाश्च दानवाः। सुहनुर्दुर्मुखः शङ्खः सुमनाः सुमतिस्तथा ॥ १३ ॥ घटोदरो महापार्श्वः क्रथनः पिठरस्तथा। विश्वरूपः स्वरूपश्च विरूपोऽथ महाशिराः ॥ १४ ॥ दशग्रीवश्च वाली च मेघवासा दशावरः। टिट्टिभो विटभूतश्च संह्रादश्चेन्द्रतापनः ॥ १५ ॥ दैत्यदानवसंघाश्च सर्वे रुचिरकुण्डलाः। स्रग्विणो मौलिनश्चैव तथा दिव्यपरिच्छदाः ॥ १६ ॥ सर्वे लब्धवराः शूराः सर्वे विगतमृत्यवः। ते तस्यां वरुणं देवं धर्मपाशधरं सदा ॥ १७ ॥ उपासते महात्मानं सर्वे सुचरितव्रताः। तथा समुद्राश्चत्वारो नदी भागीरथी च सा ॥ १८ ॥ कालिन्दी विदिशा वेण्णा नर्मदा वेगवाहिनी। विपाशा च शतद्रुश्च चन्द्रभागा सरस्वती ॥ १९ ॥ इरावती वितस्ता च सिन्धुर्देवनदी तथा। गोदावरी कृष्णवेण्णा कावेरी च सरिद्वरा ॥ २० ॥ किम्पुना च विशल्या च तथा वैतरणी नदी। तृतीया ज्येष्ठिला चैव शोणश्चापि महानदः। चर्मण्वती तथा चैव पर्णाशा च महानदी ॥ २१ ॥ सरयूर्वारवत्या च लाङ्गली च सरिद्वरा। करतोया तथात्रेयी लौहित्यश्च महानदः ॥ २२ ॥ लघन्ती गोमती चैव सन्ध्या त्रिःस्रोतसी तथा। एताश्चान्याश्च राजेन्द्र सुतीर्था लोकविश्रुताः ॥ २३ ॥ सरितः सर्वतश्चान्यास्तीर्थानि च सरांसि च। कूपाश्च सप्रस्रवणा देहवन्तो युधिष्ठिर ॥ २४ ॥ पल्वलानि तडागानि देहवन्त्यथ भारत। दिशस्तथा मही चैव तथा सर्वे महीधराः ॥ २५ ॥ उपासते महात्मानं सर्वे जलचरास्तथा। गीतवादित्रवन्तश्च गन्धर्वाप्सरसाङ्गणाः ॥ २६ ॥ स्तुवन्तो वरुणं तस्यां सर्व एव समासते। महीधरा रत्नवन्तो रसा ये च प्रतिष्ठिताः ॥ २७ ॥ कथयन्तः सुमधुराः कथास्तत्र समासते।

वारुणश्च तथा मन्त्री सुनाभः पर्य्युपासते ॥ २८ ॥ पुत्रपौत्रैः परिवृतो गोनाम्ना पुष्करेण च। सर्वे विग्रहवन्तस्ते तमीश्वरमुपासते ॥ २९ ॥ एषा मया सम्पतता वारुणी भरतर्षभ। दृष्टपूर्वा सभा रम्या कुवेरस्य सभां शृणु ॥ ३० ॥

इति सभापर्वणि लोकपालसभाख्यानपर्वणि वरुणसभावर्णनं नाम नवमोऽध्यायः ॥ ९ ॥

---

नारद उवाच। सभा वैश्रवणी राजन् शतयोजनमायता। विस्तीर्णा सप्ततिश्चैव योजनानि सितप्रभा ॥ १ ॥ तपसा निर्जिता राजन् स्वयं वैश्रवणेन सा। शशिप्रभा प्रावरणा कैलासशिखरोपमा ॥ २ ॥ गुह्यकैरुह्यमाना सा खे विषक्तेव शोभते। दिव्या हेममयैरुच्चैः प्रासादैरुपशोभिता ॥ ३ ॥ महारत्नवती चित्रा दिव्यगन्धा मनोरमा। सिताभ्रशिखराकारा प्लवमानेव दृश्यते ॥ ४ ॥ दिव्यैर्हेममयैरङ्गैर्विद्युद्भिरिव चित्रिता। तस्यां वैश्रवणो राजा विचित्राभरणाम्बरः ॥ ५ ॥ स्त्रीसहस्रैर्वृतः श्रीमानास्ते ज्वलितकुण्डलः। दिवाकरनिभे पुण्ये दिव्यास्तरणसंवृते ॥ ६ ॥ दिव्यपादोपधाने च निषण्णः परमासने। मन्दाराणामुदाराणां वनानि परिलोड़यन् ॥ ७ ॥ सौगन्धिकवनानाञ्च गन्धं गन्धवहो वहन्। नलिन्याश्चालकाख्याया नन्दनस्य वनस्य च। शीतो हृदयसंह्लादी वायुस्तमुपसेवते ॥ ८ ॥ तत्र देवाः सगन्धर्वाः गणैरप्सरसां वृताः। दिव्यतानैर्महाराज गायन्तिस्म सभागताः ॥ ९ ॥ मिश्रकेशी च रम्भा च चित्रसेना शुचिस्मिता। चारुनेत्रा घृताची च मेनका पुञ्जिकस्थला। विश्वाची सहजन्या च प्रम्लोचा उर्वशी इरा ॥ १० ॥ वर्गा च सौरभेयी च समीची बुद्बुदा लता। एताः सहस्रशश्चान्या नृत्यगीतविशारदाः ॥ ११ ॥

उपतिष्ठन्ति धनदं गन्धर्वाप्सरसाङ्गणाः। अनिशं दिव्यवादित्रै-
र्नृत्यगीतैश्च सा सभा ॥ १२ ॥ अशून्या रुचिरा भाति गन्धर्वा-
प्सरसां गणैः। किन्नरा नाम गन्धर्वा नरा नाम तथा परे ॥ १३ ॥
मणिभद्रोऽथ धनदः श्वेतभद्रश्च गुह्यकः। कशेरको गण्डकण्डुः
प्रद्योतश्च महाबलः ॥ १४ ॥ कुस्तुम्बुरुः पिशाचश्च गजकर्णो विशा-
लकः। वराहकर्णस्ताम्रौष्ठः फलकक्षः फलोदकः ॥ १५ ॥ हंस-
चूड़ः शिखावर्त्तो हेमनेत्रो विभीषणः। पुष्पाननः पिङ्गलकः
शोणितोदः प्रवालकः ॥ १६ ॥ वृक्षवाष्पनिकेतश्च चीरवासाश्च
भारत। एते चान्ये च बहवो यक्षाः शतसहस्रशः ॥ १७ ॥
सदा भगवती लक्ष्मीस्तत्रैव नलकूवरः। अहञ्च बहुशस्तस्यां
भवन्त्यन्ये च मद्विधाः ॥ १८ ॥ ब्रह्मर्षयो भवन्त्यत्र तथा देवर्षयो-
ऽपरे। क्रव्यादाश्च तथैवान्ये गन्धर्वाश्च महाबलाः। उपासते
महात्मानं तस्यां धनदमीश्वरम् ॥ १९ ॥ भगवान् भूतसङ्घैश्च
वृतः शतसहस्रशः। उमापतिः पशुपतिः शूलभृद्भगनेत्रहा ॥ २० ॥
त्र्यम्बको राजशार्दूल देवी च विगतक्लमा। वामनैर्विकटैः कुब्जैः
क्षतजाक्षैर्महारवैः ॥ २१ ॥ मेदोमांसाशनैरुग्रैरुग्रधन्वा महा-
बलः। नानाप्रहरणैरुग्रैर्वातैरिव महाजवैः ॥ २२ ॥ वृतः सखा-
यमन्वास्ते सदैव धनदं नृप। प्रहृष्टाः शतशश्चान्ये बहुशः सपरि-
च्छदाः ॥ २३ ॥ गन्धर्वाणाञ्च पतयो विश्वावसुर्हहाहुहुः।
तुम्बुरुः पर्वतश्चैव शैलूषश्च तथापरः ॥ २४ ॥ चित्रसेनश्च गीतज्ञः
तथा चित्ररथोऽपि च। एते चान्ये च गन्धर्वा धनेश्वरमुपासते
॥ २५ ॥ विद्याधराधिपश्चैव चक्रधर्मा सहानुजैः। उपाचरति
तत्रस्म धनानामीश्वरं प्रभुम् ॥ २६ ॥ किन्नराः शतशस्तत्र धना-
नामीश्वरं प्रभुम्। आसते चापि राजानो भगदत्तपुरोगमाः
॥ २७ ॥ द्रुमः किम्पुरुषेशश्च उपास्ते धनदेश्वरम्। राक्षसाधि-
पतिश्चैव महेन्द्रो गन्धमादनः ॥ २८ ॥ सहयक्षैः सगन्धर्वैः सह

सर्वैर्विश्वाचरैः । विभीषणश्च धर्मिष्ठ उपास्ते भ्रातरं प्रभुम् ॥२९॥ हिमवान् पारिपात्रश्च विन्ध्यकैलासमन्दराः । मलयो दर्दुरश्चैव महेन्द्रो गन्धमादनः ॥ ३० ॥ इन्द्रकीलः सुनाभश्च तथा दिव्यौ च पर्वतौ । एते चान्ये च बहवः सर्वे मेरुपुरोगमाः ॥ ३१ ॥ उपासते महात्मानं धनानामीश्वरं प्रभुम् । नन्दीश्वरश्च भगवान् महाकालस्तथैव च ॥३२॥ शङ्कुकर्णमुखाः सर्वे दिव्याः पारिषदा-स्तथा । काष्ठः कुटीमुखो दन्ती विजया च तपोऽधिका ॥ ३३ ॥ श्वेतश्च वृषभस्तत्र नर्द्दन्नास्ते महाबलः । धनदं राक्षसाश्चान्ये पिशाचाश्च उपासते ॥ ३४ ॥ पारिषदैः परिवृतमुपायाति महे-श्वरम् । सदा हि देवदेवेशं शिवं त्रैलोक्यभावनम् ॥ ३५ ॥ प्रणम्य मूर्द्ध्ना पौलस्त्यो बहुरूपमुमापतिम् । ततोऽभ्यनुज्ञां सम्प्राप्य महादेवाद्धनेश्वरः । आस्ते कदाचिद्भगवान् भवो धनपतेः सखा ॥ ३६ ॥ निधिप्रवरमुख्यौ च शङ्खपद्मौ धनेश्वरौ । सर्वान्निधीन् प्रगृह्याथ उपास्तां वै धनेश्वरम् ॥ ३७ ॥ सा सभा तादृशी रम्या मया दृष्टान्तरीक्षगा । पितामहसभां राजन् कीर्त्तयिष्ये निबो-धताम् ॥ ३८ ॥

इति सभापर्वणि लोकपालसभाख्यानपर्वणि वैश्रवणसभावर्णनं नाम दशमोऽध्यायः ॥ १० ॥

---

नारद उवाच । पितामहसभां तात कथ्यमानां निबोध मे । शक्यते या न निर्द्देष्टुमेवंरूपेति भारत ॥ १ ॥ पुरा देव-युगे राजन्नादित्यो भगवान्दिवः । आगच्छन्मानुषं लोकं दिदृक्षु-र्विगतक्लमः ॥ २ ॥ चरन्मानुषरूपेण सभां दृष्ट्वा स्वयम्भुवः । स तामकथयन्मह्यं दृष्ट्वा तत्त्वेन पाण्डव ॥ ३ ॥ अप्रमेयां सभां दिव्यां मानसीं भरतर्षभ । अनिर्देश्यां प्रभावेण सर्वभूतमनो-

रमाम् ॥ ४ ॥ श्रुत्वा गुणानहं तस्याः सभायाः पाण्डवर्षभ । दर्शनेप्सुस्तथा राजन्नादित्यमिदमब्रुवम् ॥ ५ ॥ भगवन् द्रष्टुमिच्छामि पितामहसभां शुभाम् । येन वा तपसा शक्या कर्मणा वापि गोपते ॥ ६ ॥ औषधैर्वा तथा युक्तैरुत्तमा पापनाशनी । तन्ममाचक्ष्व भगवन् पश्येयं तां सभां यथा ॥ ७ ॥ स तन्मम वचः श्रुत्वा सहस्रांशुर्दिवाकरः । प्रोवाच भरतश्रेष्ठ व्रतं वर्षसहस्रिकम् ॥ ८ ॥ ब्रह्मव्रतमुपास्स्व त्वं प्रयतेनान्तरात्मना । ततोऽहं हिमवत्पृष्ठे समारब्धो महाव्रतम् ॥ ९ ॥ ततः स भगवान् सूर्य्यो मामुपादाय वीर्य्यवान् । आगच्छत्तां सभां ब्राह्मीं विपाप्मा विगतक्लमः ॥ १० ॥ एवंरूपेति सा शक्या न निर्देष्टुं नराधिप । क्षणेन हि बिभर्त्यन्यदनिर्देश्यं वपुस्तथा ॥ ११ ॥ न वेद परिमाणं वा संस्थानं चापि भारत । न च रूपं मया तादृग्दृष्टपूर्वं कदाचन ॥ १२ ॥ सुसुखा सा सदा राजन्न शीता न च घर्मदा । न क्षुत्पिपासे न ग्लानिं प्राप्य तां प्राप्नुवन्त्युत ॥ १३ ॥ नानारूपैरिव कृता मणिभिः सा सुभास्वरैः । स्तम्भैर्न च धृता सा तु शाश्वती न च सा क्षरा ॥ १४ ॥ दिव्यैर्नानाविधैर्भावैर्भासद्भिरमितप्रभैः । अतिचन्द्रञ्च सूर्य्यञ्च शिखिनञ्च स्वयंप्रभा ॥ १५ ॥ दीप्यते नाकपृष्ठस्था भर्त्सयन्तीव भास्करम् । तस्यां स भगवानास्ते विदधद्देवमायया ॥ १६ ॥ स्वयमेकोऽनिशं राजन् सर्वलोकपितामहः । उपतिष्ठन्ति चाप्येनं प्रजानां पतयः प्रभुम् ॥ १७ ॥ दक्षः प्रचेताः पुलहो मरीचिः कश्यपः प्रभुः । भृगुरत्रिर्वशिष्ठश्च गौतमोऽथ तथाङ्गिराः ॥ १८ ॥ पुलस्त्यश्च क्रतुश्चैव प्रह्लादः कर्द्दमस्तथा । अथर्वाङ्गिरसश्चैव वालिखिल्या मरीचिपाः ॥ १९ ॥ मनोऽन्तरीक्षं विद्याश्च वायुस्तेजो जलं मही । शब्दस्पर्शौ तथा रूपं रसो गन्धश्च भारत ॥ २० ॥ प्रकृतिश्च विकारश्च यच्चान्यत् कारणं भुवः । अगस्त्यश्च

महातेजा मार्कण्डेयश्च वीर्यवान् ॥ २१ ॥ जमदग्निर्भरद्वाजः
संवर्त्तश्च्यवनस्तथा। दुर्वासाश्च महाभागः ऋष्यशृङ्गश्च धार्मिकः
॥ २२ ॥ सनत्कुमारो भगवान् योगाचार्यो महातपाः। असितो
देवलश्चैव जैगीषव्यश्च तत्त्ववित् ॥ २३ ॥ ऋषभोऽजितशत्रुश्च
महावीर्यस्तथा मणिः। आयुर्वेदस्तथाष्टाङ्गो देहवांस्तत्र भारत
॥ २४ ॥ चन्द्रमाः सह नक्षत्रैरादित्यश्च गभस्तिमान्। वायवः
क्रतवश्चैव सङ्कल्पः प्राण एव च ॥ २५ ॥ मूर्त्तिमन्तो महात्मानो
महाव्रतपरायणाः। एते चान्ये च बहवो ब्रह्माणं समुपस्थिताः
॥ २६ ॥ अर्थो धर्मश्च कामश्च हर्षो द्वेषस्तपो दमः। आयान्ति
तस्यां सहिताः गन्धर्वाप्सरसां गणाः ॥ २७ ॥ विंशतिः सप्त
चैवान्ये लोकपालाश्च सर्वशः। शुक्रो बृहस्पतिश्चैव बुधोऽङ्गारक
एव च ॥ २८ ॥ शनैश्चरश्च राहुश्च ग्रहाः सर्वे तथैव च। मन्त्रो
रथन्तरश्चैव हरिमान् वसुमानपि ॥ २९ ॥ आदित्याः साधि-
राजानो नामद्वन्द्वैरुदाहृताः। मरुतो विश्वकर्मा च वसवश्चैव
भारत ॥ ३० ॥ तथा पितृगणाः सर्वे सर्वाणि च हवींष्यथ।
ऋग्वेदः सामवेदश्च यजुर्वेदश्च पाण्डव ॥ ३१ ॥ अथर्ववेदश्च तथा
सर्वशास्त्राणि चैव ह। इतिहासोपवेदाश्च वेदाङ्गानि च सर्वशः
॥ ३२ ॥ ग्रहा यज्ञाश्च सोमश्च देवताश्चापि सर्वशः। सावित्री
दुर्गतरणी वाणी सप्तविधा तथा ॥ ३३ ॥ मेधा धृतिः श्रुति-
श्चैव प्रज्ञा बुद्धिर्यशः क्षमा। सामानि स्तुतिशास्त्राणि गाथाश्च
विविधास्तथा ॥ ३४ ॥ भाष्याणि तर्कयुक्तानि देहवन्ति विशां-
पते। नाटका विविधाः काव्याः कथाख्यायिककारिकाः ॥ ३५ ॥
तत्र तिष्ठन्ति ते पुण्या ये चान्ये गुरुपूजकाः। क्षणा लवा
मुहूर्त्ताश्च दिवा रात्रिस्तथैव च ॥ ३६ ॥ अर्द्धमासाश्च मासाश्च
ऋतवः षट् च भारत। संवत्सराः पञ्चयुगमहोरात्रश्चतुर्विधः
॥ ३७ ॥ कालचक्रञ्च तद्दिव्यं नित्यमक्षयमव्ययम्। धर्मचक्रं

प्रभा चापि नित्यमास्ते युधिष्ठिर ॥ ३८ ॥ अदितिर्दितिर्दनुश्चैव सुरसा विनता दूरा । कालिका सुरभी देवी सरमा चाथ गौतमी ॥ ३९ ॥ प्रभा कद्रुश्च वै देव्यौ देवतानाञ्च मातरः । रुद्राणी श्रीश्च लक्ष्मीश्च भद्रा षष्ठी तथापरा ॥ ४० ॥ पृथिवी गाङ्गता देवी ह्रीः स्वाहा कीर्त्तिरेव च । सुरा देवी शची चैव तथा पुष्टिररुन्धती ॥ ४१ ॥ संवृत्तिराशा नियतिः सृष्टिर्देवी रतिस्तथा । एताश्चान्याश्च वै देव्य उपतस्थुः प्रजापतिम् ॥ ४२ ॥ आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि । विश्वेदेवाश्च साध्याश्च पितरश्च मनोजवाः ॥ ४३ ॥ पितॄणाञ्च गणान्विद्धि सप्त वै पुरुषर्षभ । मूर्त्तिमन्तो वै चत्वारस्त्रयश्चाप्यशरीरिणः ॥ ४४ ॥ वैराजाश्च महाभागा अग्निष्वात्ताश्च भारत । गार्हपत्या नाकचराः पितरो लोकविश्रुताः ॥ ४५ ॥ सोमपा एकशृङ्गाश्च चतुर्वेदाः कलास्तथा । एते चतुर्षु वर्णेषु पूज्यन्ते पितरो नृप ॥ ४६ ॥ एतैराप्यायितैः पूर्वं सोमश्चाप्यायते पुनः । त एते पितरः सर्वे प्रजापतिमुपस्थिताः । उपासते च संहृष्टा ब्रह्माणममितौजसम् ॥ ४७ ॥ राक्षसाश्च पिशाचाश्च दानवा गुह्यकास्तथा । नागाः सुपर्णाः पशवः पितामहमुपासते ॥ ४८ ॥ स्थावरा जङ्गमाश्चैव महाभूतास्तथापरे । पुरन्दरश्च देवेन्द्रो वरुणो धनदो यमः ॥ ४९ ॥ महादेवः सहोमोऽत्र सदा गच्छति सर्वगः । महासेनश्च राजेन्द्र सदोपास्ते पितामहम् ॥ ५० ॥ देवो नारायणस्तस्यां तथा देवर्षयश्च ये । ऋषयो वालिखिल्याश्च योनिजायोनिजास्तथा ॥ ५१ ॥ यच्च किञ्चित्त्रिलोकेऽस्मिन् दृश्यते स्थाणुजङ्गमम् । सर्वं तस्यां मया दृष्टमिति विद्धि नराधिप ॥ ५२ ॥ अष्टाशीतिसहस्राणि ऋषीणामूर्द्ध्वरेतसाम् । प्रजावताञ्च पञ्चाशदृषीणामपि पाण्डव ॥ ५३ ॥ ते स्म तत्र यथा कामं दृष्ट्वा सर्वे दिवौकसः । प्रणम्य शिरसा तस्मै सर्वे यान्ति यथागतम् ॥ ५४ ॥ अतिथीनागता-

देवान्दैत्यान्नागांस्तथा द्विजान्। यक्षान् सुपर्णान् कालेयान्
गन्धर्वाप्सरसस्तथा ॥ ५५ ॥ महाभागानमितधीर्ब्रह्मा लोक-
पितामहः। दयावान् सर्वभूतेषु यथार्हं प्रतिपद्यते ॥ ५६ ॥
प्रतिगृह्य तु विश्वात्मा स्वयम्भूरमितद्युतिः। सान्त्वमानार्थसम्भोगै-
र्युनक्ति मनुजाधिप ॥ ५७ ॥ तथा तैरुपयातैश्च प्रतिपद्भिश्च
भारत। आकुला सा सभा तात भवति स्म सुखप्रदा ॥ ५८ ॥
सर्वतेजोमयी दिव्या ब्रह्मर्षिगणसेविता। ब्राह्म्या श्रिया दीप्य-
माना शुशुभे विगतक्लमा ॥ ५८ ॥ सा सभा तादृशी दृष्टा मया
लोकेषु दुर्लभा। सभेयं राजशार्दूल मनुष्येषु यथा तव ॥ ५९ ॥
एता मया दृष्टपूर्वाः सभा देवेषु भारत। सभेयं मानुषे लोके
सर्वश्रेष्ठतमा तव ॥ ६० ॥

इति सभापर्वणि लोकपालसभाख्यानपर्वणि ब्रह्मसभावर्णनं
नामैकादशोऽध्यायः ॥ ११ ॥

---

युधिष्ठिर उवाच। प्रायशो राजलोकस्ते कथितो वदता-
म्वर। वैवस्वतसभायां तु यथा वदसि मे प्रभो ॥ १ ॥ वरुणस्य
सभायां तु नागास्ते कथिता विभो। दैत्येन्द्राश्चापि भूयिष्ठाः
सरितः सागरास्तथा ॥ २ ॥ तथा धनपतेर्यक्षा गुह्यका राक्षसा-
स्तथा। गन्धर्वाप्सरसश्चैव भगवांश्च वृषध्वजः ॥ ३ ॥ पितामह-
सभायां तु कथितास्ते महर्षयः। सर्वे देवनिकायाश्च सर्वशास्त्राणि
चैव ह ॥ ४ ॥ शक्रस्य तु सभायां तु देवाः सङ्कीर्त्तिताः मुने।
उद्देशतश्च गन्धर्वा विविधाश्च महर्षयः ॥ ५ ॥ एक एव तु
राजर्षिर्हरिश्चन्द्रो महामुने। कथितस्ते सभायां वै देवेन्द्रस्य महा-
त्मनः ॥ ६ ॥ किं कर्म्म तेनाचरितं तपो वा नियतव्रत। येनासौ
सह शक्रेण स्पर्द्धते सुमहायशाः ॥ ७ ॥ पितृलोकगतश्चैव त्वया

विप्र पिता मम। दृष्टः पाण्डुर्महाभागः कथं वापि समागतः ॥८॥ किमुक्तवांश्च भगवंस्तन्ममाचक्ष्व सुव्रत। त्वत्तः श्रोतुं सर्वमिदं परं कौतूहलं हि मे ॥ ९ ॥

नारद उवाच। यन्मां पृच्छसि राजेन्द्र हरिश्चन्द्रं प्रति प्रभो। तत्तेऽहं सम्प्रवक्ष्यामि माहात्म्यं तस्य धीमतः ॥ १० ॥ स राजा बलवानासीत् सम्राट् सर्वमहीक्षिताम्। तस्य सर्वे महीपालाः शासनावनताः स्थिताः ॥ ११ ॥ तेनैकं रथमास्थाय जैत्रं हेमविभूषितम्। शस्त्रप्रतापेन जिताः द्वीपाः सप्त जनेश्वर ॥ १२ ॥ स निर्जित्य महीं कृत्स्नां सशैलवनकाननाम्। आजहार महाराज राजसूयं महाक्रतुम् ॥ १३ ॥ तस्य सर्वे महीपाला धनान्याजह्रुराज्ञया। द्विजानां परिवेष्टारस्तस्मिन् यज्ञे च तेऽभवन् ॥ १४ ॥ प्रादाच्च द्रविणं प्रीत्या याचकानां नरेश्वरः। यथोक्तवन्तस्ते तस्मिंस्ततः पञ्चगुणाधिकम् ॥ १५ ॥ अतर्पयच्च विविधैर्वसुभिर्ब्राह्मणांस्तदा। प्रसर्पकाले सम्प्राप्ते नानादिग्भ्यः समागतान् ॥ १६ ॥ भक्ष्यभोज्यैश्च विविधैर्यथाकाम-पुरस्कृतैः। रत्नौघतर्पितैस्तुष्टैर्द्विजैश्च समुदाहृतम् ॥ १७ ॥ तेजस्वी च यशस्वी च नृपेभ्योऽभ्यधिकोऽभवत्। एतस्मात् कारणाद्राजन् हरिश्चन्द्रो विराजते ॥ १८ ॥ तेभ्यो राजसहस्रेभ्यः तद्विद्धि भरत-र्षभ। समाप्य च हरिश्चन्द्रो महायज्ञं प्रतापवान् ॥ १९ ॥ अभिषिक्तश्च शुशुभे साम्राज्येन नराधिप। ये चान्ये च मही-पाला राजसूयं महाक्रतुम् ॥ २० ॥ यजन्ते ते सहेन्द्रेण मोदन्ते भरतर्षभ। ये चापि निधनं प्राप्ताः संग्रामेष्वपलायिनः ॥ २१ ॥ ते तत्सदनमासाद्य मोदन्ते भरतर्षभ। तपसा ये च तीव्रेण त्यजन्तीह कलेवरम् ॥ २२ ॥ ते तत्स्थानं समासाद्य श्रीमन्तो भान्ति नित्यशः। पिता च त्वाह कौन्तेय पाण्डुः कौरवनन्दन ॥ २३ ॥ हरिश्चन्द्रे श्रियं दृष्ट्वा नृपतौ जातविस्मयः। विज्ञाय

मानुषं लोकमायान्तं मां नराधिप ॥ २४ ॥ प्रोवाच प्रणतो भूत्वा वदेथास्त्वं युधिष्ठिरम्। समर्थोऽसि महीं जेतुं भ्रातरस्ते स्थिताः वशे ॥ २५ ॥ राजसूयं क्रतुश्रेष्ठमाहरस्वेति भारत। त्वयीष्टवति पुत्रेऽहं हरिश्चन्द्रवदाशु वै ॥ २६ ॥ मोदिष्ये बहुलाः शाश्वतीः समाः शक्रस्य संसदि। एवम्भवतु वक्ष्येऽहं तव पुत्रं नराधिपम् ॥ २७ ॥ भूर्लोकं यदि गच्छेयमिति पाण्डुमथाब्रुवम्। तस्य त्वं पुरुषव्याघ्र सङ्कल्पं कुरु पाण्डव ॥ २८ ॥ गन्तासि त्वं महेन्द्रस्य पूर्वैः सह सलोकताम्। बहुविघ्नश्च नृपते क्रतुरेष स्मृतो महान् ॥ २९ ॥ छिद्राण्यस्य तु वाञ्छन्ति यज्ञघ्ना ब्रह्मराक्षसाः। युद्धञ्च चात्र गमनं पृथिवीक्षयकारणम् ॥ ३० ॥ किञ्चिदेव निमित्तञ्च भवत्यत्र क्षयावहम्। एतत् सञ्चिन्त्य राजेन्द्र यत् क्षेमं तत्समाचर ॥ ३१ ॥ अप्रमत्तोत्थितो नित्यं चातुर्वर्ण्यस्य रक्षणे। भव एधस्व मोदस्व धनैस्तर्पय च द्विजान् ॥ ३२ ॥ एतत्ते विस्तरेणोक्तं यन्मां त्वं परिपृच्छसि। आपृच्छे त्वां गमिष्यामि दाशार्हनगरीं प्रति ॥ ३३ ॥

वैशम्पायन उवाच। एवमाख्याय पार्थेभ्यो नारदो जनमेजय। जगाम तैर्वृतो राजन्नृषिभिर्यैः समागतः ॥ ३४ ॥ गते तु नारदे पार्थो भ्रातृभिः सह कौरव। राजसूयं क्रतुश्रेष्ठं चिन्तयामास पार्थिवः ॥ ३५ ॥

इति सभापर्वणि लोकपालसभाख्यानपर्वणि ब्रह्मसभावर्णनं नाम द्वादशोऽध्यायः समाप्तञ्च लोकपालसभाख्यानपर्व ॥ १२ ॥

---

## अथ राजसूयारम्भपर्व।

वैशम्पायन उवाच। ऋषेस्तद्वचनं श्रुत्वा निशश्वास युधि-
ष्ठिरः। चिन्तयन् राजसूयेष्टिं न लेभे शर्म भारत॥ १॥ राज-
र्षीणाञ्च तं श्रुत्वा महिमानं महात्मनाम्। यज्वनां कर्मभिः पुण्यैः
लोकप्राप्तिं समीक्ष्य च॥ २॥ हरिश्चन्द्रञ्च राजर्षिं रोचमानं
विशेषतः। यज्वानं यज्ञमाहर्त्तुं राजसूयमियेष सः॥ ३॥
युधिष्ठिरस्ततः सर्वानर्चयित्वा सभासदः। प्रत्यर्चितश्च तैः सर्वै-
र्यज्ञायैव मनो दधे॥ ४॥ स राजसूयं राजेन्द्र कुरूणामृषभ-
स्तदा। आहर्त्तुं प्रवणञ्चक्रे मनः सञ्चिन्त्य चासकृत्॥ ५॥ भूय-
श्चाद्भुतवीर्य्यौजा धर्ममेवानुचिन्तयन्। किं हितं सर्वलोकानां
भवेदिति मनो दधे॥ ६॥ अनुगृह्णन् प्रजाः सर्वाः सर्वधर्म-
भृतांवरः। अविशेषेण सर्वेषां हितं चक्रे युधिष्ठिरः॥ ७॥
सर्वेषां दीयतां देयं मुष्णन् कोपमदावुभौ। साधुधर्मेति धर्मेति
नान्यत् श्रूयेत भाषितम्॥ ८॥ एवं गते ततस्तस्मिन् पितरी-
वाश्वसन् जनाः। न तस्य विद्यते द्वेष्टा ततोऽस्याजातशत्रुता
॥ ९॥ परिग्रहान्नरेन्द्रस्य भीमस्य परिपालनात्। शत्रूणां
क्षपणाच्चैव बीभत्सोः सव्यसाचिनः॥ १०॥ धीमतः सहदेवस्य
धर्माणामनुशासनात्। वैनत्यात् सर्वतश्चैव नकुलस्य स्वभावतः।
अविग्रहा वीतभयाः स्वकर्मनिरताः सदा॥ ११॥ निकामवर्षाः
स्फीताश्च आसन् जनपदास्तथा। वार्द्धुषी यज्ञसत्त्वानि गोरक्षं
कर्षणं वणिक्॥ १२॥ विशेषात् सर्वमेवैतत् संजज्ञे राजकर्मणा।
अनुकर्षञ्च निष्कर्षं व्याधिपावकमूर्च्छनम्॥ १३॥ सर्वमेव न
तत्रासीद्धर्मनित्ये युधिष्ठिरे। दस्युभ्यो वञ्चकेभ्यश्च राज्ञः प्रति
परस्परम्॥ १४॥ राजवल्लभतश्चैव नाश्रूयत मृषाकृतम्। प्रियं
कर्त्तुमुपस्थातुं बलिकर्म स्वकर्मजम्॥ १५॥ अभिहर्त्तुं नृपाः
षट्सु पृथक् जात्यैश्च नैगमैः। ववृधे विषयस्तत्र धर्मनित्ये युधि-

ष्ठिरे ॥ १६ ॥ कामतोऽप्युपभुञ्जानैराजसैर्लोभजैर्जनैः। सर्व-
व्यापी सर्वगुणी सर्वसाहः स सर्वराट् ॥ १७ ॥ यस्मिन्नभिक्षितः
सम्राट् भ्राजमानो महायशाः। यत्र राजन् दश दिशः पितृतो
मातृतस्तथा। अनुरक्ताः प्रजा आसन्नागोपाला द्विजातयः ॥१८॥
स मन्त्रिणः समानाय्य भ्रातॄंश्च वदतांवरः। राजसूयं प्रति
तदा पुनः पुनरपृच्छत ॥ १९ ॥ ते पृच्छ्यमानाः सहिताः वचोऽर्थ्यं
मन्त्रिणस्तदा। युधिष्ठिरं महाप्राज्ञं यियक्षुमिदमब्रुवन् ॥ २० ॥
येनाभिषिक्तो नृपतिर्वारुणं गुणमृच्छति। तेन राजापि तं
कृत्स्नं सम्राड्गुणमभीप्सति ॥ २१ ॥ तस्य सम्राड्गुणार्हस्य
भवतः कुरुनन्दन। राजसूयस्य समयं मन्यन्ते सुहृदस्तव ॥२२॥
तस्य यज्ञस्य समयः स्वाधीनः क्षत्रसम्पदा। साम्ना षडग्नयो
यस्मिंश्चीयन्ते संशितव्रतैः ॥ २३ ॥ दर्वीहोमानुपादाय सर्वान् यः
प्राप्नुते क्रतून्। अभिषेकञ्च यस्यान्ते सर्वजित्तेन चोच्यते ॥२४॥
समर्थोऽसि महाबाहो सर्वे ते वशगा वयम्। अचिरात्त्वं महा-
राज राजसूयमवाप्स्यसि ॥ २५ ॥ अविचार्य्य महाराज राज-
सूये मनः कुरु। इत्येवं सुहृदः सर्वे पृथक् च सह चाब्रुवन् ॥२६॥
स धर्म्यं पाण्डवस्तेषां वचः श्रुत्वा विशाम्पते। धृष्टमिष्टं वरिष्ठञ्च
जग्राह मनसारिहा ॥ २७ ॥ श्रुत्वा सुहृद्वचस्तच्च जानंश्चाप्यात्मनः
क्षमम्। पुनः पुनर्मनो दध्रे राजसूयाय भारत ॥ २८ ॥ स
भ्रातृभिः पुनर्धीमानृत्विग्भिश्च महात्मभिः। मन्त्रिभिश्चापि सहितो
धर्मराजो युधिष्ठिरः। धौम्यद्वैपायनाद्यैश्च मन्त्रयामास मन्त्र-
वित् ॥ २९ ॥

युधिष्ठिर उवाच। इयं या राजसूयस्य सम्राडर्हस्य सुक्रतोः।
श्रद्दधानस्य वदतः स्पृहा मे सा कथं भवेत् ॥ ३० ॥

वैशम्पायन उवाच। एवमुक्तास्तु ते तेन राज्ञा राजीव-
लोचन। इदमूचुर्वचः काले धर्मराजं युधिष्ठिरम् ॥ ३१ ॥

अर्हस्त्वमपि धर्मज्ञ राजसूयं महाक्रतुम्। अथैवमुक्तो नृपता-
वृत्विग्भिर्ऋषिभिस्तथा ॥ ३२ ॥ मन्त्रिणो भ्रातरश्चास्य तद्वचः
प्रत्यपूजयन्। स तु राजा महाप्राज्ञः पुनरेवात्मनात्मवान् ॥३३॥
भूयो विममृशे पार्थो लोकानां हितकाम्यया। सामर्थ्ययोगं
संप्रेक्ष्य देशकालौ व्ययागमौ ॥ ३४ ॥ विमृश्य सम्यक् च धिया
कुर्वन् प्राज्ञो न सीदति। न हि यज्ञसमारम्भः केवलात्मविनि-
श्चयात् ॥ ३५ ॥ भवतीति समाज्ञाय यत्नतः कार्य्यमुद्वहन्। स
निश्चयार्थं कार्य्यस्य कृष्णमेव जनार्दनम् ॥ ३६ ॥ सर्वलोकात् परं
मत्वा जगाम मनसा हरिम्। अप्रमेयं महाबाहुं कामाज्जातमजं
नृषु ॥ ३७ ॥ पाण्डवस्तर्कयामास कर्मभिर्देवसम्मितैः। नास्य
किञ्चिदविज्ञातं नास्य किञ्चिदकर्मजम् ॥ ३८ ॥ न स किञ्चिन्न
विषहेदिति कृष्णममन्यत। स तु तां नैष्ठिकीं बुद्धिं कृत्वा पार्थो
युधिष्ठिरः। गुरुवद्भूतगुरवे प्राहिणोद्दूतमञ्जसा ॥ ३९ ॥ शीघ्र-
गेन रथेनाशु स दूतः प्राप्य यादवान्। द्वारकावासिनं कृष्णं
द्वारवत्यां समासदत् ॥ ४० ॥ दर्शनाकाङ्क्षिणं पार्थं दर्शना-
काङ्क्षयाच्युतः। इन्द्रसेनेन सहित इन्द्रप्रस्थमगात्तदा ॥ ४१ ॥
व्यतीत्य विविधान्देशांस्त्वरावान् क्षिप्रवाहनः। इन्द्रप्रस्थगतं पार्थ-
मभ्यगच्छज्जनार्दनः ॥ ४२ ॥ स गृहे पितृवद्भ्रात्रा धर्मराजेन
पूजितः। भीमेन च ततोऽपश्यत् स्वसारं प्रीतिमान् पितुः ॥४३॥
प्रीतः प्रीतेन सुहृदा रेमे स सहितस्तदा। अर्जुनेन यमाभ्याञ्च
गुरुवत् पर्य्युपासितः ॥ ४४ ॥ तं विश्रान्तं शुभे देशे क्षणिनं
कल्यमच्युतम्। धर्मराजः समागम्याज्ञापयत् स्वं प्रयोजनम् ॥४५॥

युधिष्ठिर उवाच। प्रार्थितो राजसूयो मे न चासौ केवले-
प्सया। प्राप्यते येन तत्ते हि विदितं कृष्ण सर्वशः ॥ ४६ ॥
यस्मिन् सर्वं सम्भवति यश्च सर्वत्र पूज्यते। यश्च सर्वेश्वरो राजा
राजसूयं स विन्दति ॥ ४७ ॥ तं राजसूयं सुहृदः कार्य्यमाहुः

समेत्य ते। तत्र मे निश्चिततमं तव कृष्ण गिरा भवेत्॥ ४८॥ केचिद्धि सौहृदादेव न दोषं परिचक्षते। स्वार्थहेतोस्तथैवान्ये प्रियमेव वदन्त्युत॥ ४९॥ प्रियमेव परीप्सन्ते केचिदात्मनि यद्धितम्। एवम्प्रायाश्च दृश्यन्ते जनवादाः प्रयोजने॥ ५०॥ त्वन्तु हेतूनतीत्यैतान् कामक्रोधौ व्युदस्य च। परमं यत् क्षमं लोके यथावद्वक्तुमर्हसि॥ ५१॥

इति सभापर्वणि राजसूयारम्भपर्वणि
त्रयोदशोऽध्यायः॥ १३॥

---

श्रीकृष्ण उवाच। सर्वैर्गुणैर्महाराज राजसूयं त्वमर्हसि। जानतस्त्वेव ते सर्वं किञ्चिद्वक्ष्यामि भारत॥ १॥ जामदग्न्येन रामेण क्षत्रं यदवशेषितम्। तस्मादवरजं लोके यदिदं क्षत्रसंज्ञितम्॥ २॥ कृतोऽयं कुलसङ्कल्पः क्षत्रियैर्वसुधाधिप। निदेशवाग्भिस्तत्ते हि विदितं भरतर्षभ॥ ३॥ ऐलस्येक्ष्वाकुवंशस्य प्रकृतिं परिचक्षते। राजानः श्रेणिबद्धाश्च तथान्ये क्षत्रिया भुवि॥ ४॥ ऐलवंश्यास्तु ये राजंस्तथैवेक्ष्वाकवो नृपाः। तानि चैकशतं विद्धि कुलानि भरतर्षभ॥ ५॥ ययातेस्त्वेव भोजानां विस्तरो गुणतो महान्। भजतेऽद्य महाराज विस्तरं स चतुर्दिशम्॥ ६॥ तेषां तथैव तां लक्ष्मीं सर्वक्षत्रमुपासते। इदानीमेव वै राजन् जरासन्धो महीपतिः। अभिभूय श्रियं तेषां कुलानामभिषेचितः॥ ७॥ स्थितो मूर्ध्नि नरेन्द्राणामोजसाक्रम्य सर्वशः। सोऽवनिं मध्यमां भुक्त्वा मिथोभेदममन्यत॥ ८॥ प्रभुर्यस्तु परो राजा यस्मिन्नेकवशे जगत्। स साम्राज्यं महाराज प्राप्तो भवति योगतः॥ ९॥ तं स राजा जरासन्धं संश्रित्य किल सर्वशः। राजन् सेनापतिर्जातः शिशुपालः प्रतापवान्॥ १०॥ तमेव च

महाराज शिष्यवत् समुपस्थितः । वक्रः करूषाधिपतिर्माया-
योधी महाबलः ॥ ११ ॥ अपरौ च महावीर्य्यौ महात्मानौ समा-
श्रितौ । जरासन्धं महावीर्य्यं तौ हंसडिम्भकावुभौ ॥ १२ ॥
दन्तवक्रः करूषश्च करभो मेघवाहनः । मूर्द्ध्ना दिव्यमणिं बिभ्रत्
यमद्भुतमणिं विदुः ॥ १३ ॥ मुरञ्च नरकञ्चैव शास्ति यो यवना-
धिपः । अपर्य्यन्तबलो राजा प्रतीच्यां वरुणो यथा ॥ १४ ॥
भगदत्तो महाराज वृद्धस्तव पितुः सखा । स वाचा प्रणतस्तस्य
कर्म्मणा च विशेषतः ॥ १५ ॥ स्नेहबद्धश्च मनसा पितृवद्भक्तिमां-
स्त्वयि । प्रतीच्यां दक्षिणञ्चान्तं पृथिव्याः प्रति यो नृपः ॥ १६ ॥
मातुलो भवतः शूरः पुरुजित् कुन्तिवर्द्धनः । स ते सन्नतिमानेकः
स्नेहतः शत्रुसूदनः ॥ १७ ॥ जरासन्धं गतस्त्वेव पुरा यो न
मया हतः । पुरुषोत्तमविज्ञातो योऽसौ चेदिषु दुर्म्मतिः ॥ १८ ॥
आत्मानं प्रति जानाति लोकेऽस्मिन् पुरुषोत्तमम् । आदत्ते
सततं मोहाद्यः स चिह्नञ्च मामकम् ॥ १९ ॥ वङ्गपुण्ड्रकिरातेषु
राजा बलसमन्वितः । पौण्ड्रको वासुदेवेति योऽसौ लोकेऽभि-
विश्रुतः ॥ २० ॥ चतुर्थभाङ्महाराज भोज इन्द्रसखो बली ।
विद्याबलाद्यो व्यजयत् स पाण्ड्यक्रथकैशिकान् ॥ २१ ॥ भ्राता
यस्याकृतिः शूरो जामदग्न्यसमोऽभवत् । स भक्तो मागधं राजा
भीष्मकः परवीरहा ॥ २२ ॥ प्रियाण्याचरतः प्रह्वान् सदा सम्ब-
न्धिनस्ततः । भजतो न भजत्यस्मानप्रियेषु व्यवस्थितः ॥ २३ ॥
न कुलं न बलं राजन्नभ्यजानात्तथात्मनः । पश्यमानो यशो दीप्तं
जरासन्धमुपाश्रितः ॥ २४ ॥ उदीच्याश्च तथा भोजाः कुलान्यष्टा-
दश प्रभो । जरासन्धभयादेव प्रतीचीं दिशमाश्रिताः ॥ २५ ॥
शूरसेना भद्रकारा बोधाः शाल्वाः पटच्चराः । सुस्थलाश्च सुकु-
ट्टाश्च कुलिन्दाः कुन्तिभिः सह ॥ २६ ॥ शाल्वायनाश्च राजानः
सोदर्य्यानुचरैः सह । दक्षिणा ये च पाञ्चालाः पूर्व्वाः कुन्तिषु

कोसलाः ॥ २७ ॥ तथोत्तरां दिशं चापि परित्यज्य भयार्दिताः ।
मत्स्याः संन्यस्तपादाश्च दक्षिणां दिशमाश्रिताः ॥ २८ ॥ तथैव
सर्वपाञ्चाला जरासन्धभयार्दिताः । स्वराष्ट्रं सम्परित्यज्य विद्रुताः
सर्वतो दिशम् ॥ २९ ॥ कस्यचित्त्वथ कालस्य कंसो निर्मथ्य याद-
वान् । बार्हद्रथसुते देव्यावुपागच्छद्वृथामतिः ॥ ३० ॥ अस्तिः
प्राप्तिश्च नाम्ना ते सहदेवानुजेऽबले । बलेन तेन स ज्ञातीनभि-
भूय वृथामतिः ॥ ३१ ॥ श्रैष्ठ्यं प्राप्तः स तस्यासीदतीवापनयो
महान् । भोजराजन्यवृद्धैश्च पीड्यमानैर्दुरात्मना ॥ ३२ ॥ ज्ञाति-
त्राणमभीप्सद्भिरस्मत्सम्भावना कृता । दत्त्वाक्रूराय सुतनुं
तामाहुकसुतां तदा ॥ ३३ ॥ सङ्कर्षणद्वितीयेन ज्ञातिकार्य्यं
मया कृतम् । हतौ कंससुनामानौ मया रामेण चाप्युत ॥ ३४ ॥
भये तु समतिक्रान्ते जरासन्धे समुद्यते । मन्त्रोऽयं मन्त्रितो
राजन् कुलैरष्टादशावरैः ॥ ३५ ॥ अनारमन्तो निघ्नन्तो महास्त्रैः
शतघातिभिः । न हन्यामो वयन्तस्य त्रिभिर्वर्षशतैर्बलम् ॥३६॥
तस्य ह्यमरसङ्काशौ बलेन बलिनांवरौ । नामभ्यां हंसडिम्भका-
वशस्त्रनिधनावुभौ ॥ ३७ ॥ तावुभौ सहितौ वीरौ जरासन्धश्च
वीर्य्यवान् । त्रयस्त्रयाणां लोकानां पर्य्याप्ता इति मे मतिः ॥३८॥
न हि केवलमस्माकं यावन्तोऽन्ये च पार्थिवाः । तथैव तेषामा-
सीच्च बुद्धिर्बुद्धिमतांवर ॥ ३९ ॥ अथ हंस इति ख्यातः कश्चि-
दासीन्महान्नृपः । रामेण स हतस्तत्र संग्रामेऽष्टादशावरे ॥४०॥
हतो हंस इति प्रोक्तमथ केनापि भारत । तच्छ्रुत्वा डिम्भको राजन्
यमुनाम्भस्यमज्जत ॥ ४१ ॥ विना हंसेन लोकेऽस्मिन्नाहं जीवितु-
मुत्सहे । इत्येतां मतिमास्थाय डिम्भको निधनं गतः ॥ ४२ ॥
तथा तु डिम्भकं श्रुत्वा हंसः परपुरञ्जय । प्रपेदे यमुनामेव
सोऽपि तस्यां न्यमज्जत ॥ ४३ ॥ तौ स राजा जरासन्धः श्रुत्वा च
निधनं गतौ । पुरं शून्येन मनसा प्रययौ भरतर्षभ ॥ ४४ ॥

ततो वयममित्रघ्न तस्मिन् प्रतिगते नृपे। पुनरानन्दिनः सर्वे मथुरायां वसामहे ॥ ४५ ॥ यदात्वभ्येत्य पितरं सा वै राजीवलोचना। कंसभार्य्या जरासन्धं दुहिता मागधं नृपम् ॥ ४६ ॥ चोदयत्येव राजेन्द्र पतिव्यसनदुःखिता। पतिघ्नं मे जहीत्येवं पुनः पुनररिन्दम ॥ ४७ ॥ ततो वयं महाराज तम्मन्त्रं पूर्वमन्त्रितम्। संस्मरन्तो विमनसो व्यपयाता नराधिप ॥ ४८ ॥ पृथक्त्वेन महाराज संक्षिप्य महतीं श्रियम्। पलायामो भयात्तस्य ससुतज्ञातिबान्धवाः ॥ ४९ ॥ इति सञ्चिन्त्य सर्वे स्म प्रतीचीं दिशमाश्रिताः। कुशस्थलीं पुरीं रम्यां रैवतेनोपशोभिताम् ॥५०॥ ततो निवेशं तस्याञ्च कृतवन्तो वयं नृप। तथैव दुर्गसंस्कारं देवैरपि दुरासदम् ॥ ५१ ॥ स्त्रियोऽपि यस्यां युध्येयुः किमु वृष्णिमहारथाः। तस्यां वयममित्रघ्न निवसामोऽकुतोभयाः ॥५२॥ आलोच्य गिरिमुख्यं तं मागधं तीर्थमेव च। माधवाः कुरुशार्दूल परां मुदमवाप्नुवन् ॥ ५३ ॥ एवं वयं जरासन्धादभितः कृतकिल्विषाः। सामर्थ्यवन्तः सम्बन्धाद्गोमन्तं समुपाश्रिताः ॥ ५४ ॥ त्रियोजनायतं सद्म त्रिस्कन्धं योजनादधि। योजनान्ते शतद्वारं वीरविक्रमतोरणम् ॥ ५५ ॥ अष्टादशावरैर्नद्धं क्षत्रियैर्युद्धदुर्मदैः। अष्टादशसहस्राणि भ्रातॄणां सन्ति नः कुले ॥ ५६ ॥ आहुकस्य शतं पुत्रा एकैकस्त्रिदशावरः। चारुदेष्णः सह भ्रात्रा चक्रदेवोऽथ सात्यकिः ॥ ५७ ॥ अहञ्च रौहिणेयश्च साम्बः शौरिसमो युधि। एवमेते रथाः सप्त राजन्नन्यान्निबोध मे ॥ ५८ ॥ कृतवर्मा ह्यनाधृष्टिः समीकः समितिञ्जयः। कङ्कः शङ्कुश्च कुन्तिश्च सप्तैते वै महारथाः ॥ ५९ ॥ पुत्रौ चान्धकभोजस्य वृद्धो राजा च ते दश। वज्रसंहनना वीरा वीर्य्यवन्तो महारथाः ॥ ६० ॥ स्मरन्तो मध्यमं देशं वृष्णिमध्ये व्यवस्थिताः। स त्वं सम्राड्गुणैर्युक्तः सदा भरतसत्तम ॥ ६१ ॥ क्षत्रे सम्राज-

मात्मानं कर्तुमर्हसि भारत। न तु शक्यं जरासन्धे जीवमाने महाबले ॥ ६२ ॥ राजसूयं त्वयावाप्तुमेषा राजन्मतिर्मम। तेन रुद्धा हि राजानः सर्वे जित्वा गिरिव्रजे ॥ ६३ ॥ कन्दरे पर्वतेन्द्रस्य सिंहेनेव महाद्विपाः। स हि राजा जरासन्धो यियक्षुर्वसुधाधिपैः ॥ ६४ ॥ महादेवं महात्मानमुमापतिमरिन्दम। आराध्य तपसोग्रेण निर्जितास्तेन पार्थिवाः ॥ ६५ ॥ प्रतिज्ञायाश्च पारं स गतः पार्थिवसत्तमः। स हि निर्जित्य निर्जित्य पार्थिवान् पृतनागतान् ॥ ६६ ॥ पुरमानीय बद्धा च चकार पुरुषव्रजम्। वयञ्चैव महाराज जरासन्धभयात्तदा ॥ ६७ ॥ मथुरां सम्परित्यज्य गता द्वारवतीं पुरीम्। यदि त्वेतन्महाराज यज्ञं प्राप्तुमभीप्ससि ॥ ६८ ॥ यतस्व तेषां मोक्षाय जरासन्धवधाय च। समारम्भो न शक्योऽयमन्यथा कुरुनन्दन ॥ ६९ ॥ राजसूयस्य कार्त्स्न्येन कर्त्तुं मतिमतांवर। इत्येषा मे मतीराजन्यथा वा मन्यसेऽनघ। एवं गते ममाचक्ष्व स्वयं निश्चित्य हेतुभिः ॥ ७० ॥

इति सभापर्वणि राजसूयारम्भपर्वणि कृष्णवाक्ये चतुर्दशोऽध्यायः ॥ १४ ॥

युधिष्ठिर उवाच। उक्तं त्वया बुद्धिमता यन्नान्यो वक्तुमर्हति। संशयानां हि निर्मोक्ता त्वं नान्यो विद्यते भुवि ॥ १ ॥ गृहे गृहे हि राजानः स्वस्य स्वस्य प्रियङ्कराः। न च साम्राज्यमाप्तास्ते सम्राट्शब्दो हि कृच्छ्रभाक् ॥ २ ॥ कथं परानुभावज्ञः स्वं प्रशंसितुमर्हति। परेण समवेतस्तु यः प्रशस्यः स पूज्यते ॥३॥ विशाला बहुला भूमिर्बहुरत्नसमाचिता। दूरं गत्वा विजानाति श्रेयो वृष्णिकुलोद्वह ॥ ४ ॥ शममेव परं मन्ये शमात्

क्षेमं भवेन्मम । आरम्भे पारमेष्ठ्यन्तु न प्राप्यमिति मे मतिः ॥५॥
एवमेते हि जानन्ति कुले जाता मनस्विनः । कश्चित् कदाचि-
देतेषां भवेच्छ्रेष्ठो जनार्दन ॥ ६ ॥ वयञ्चैव महाभाग जरासन्ध-
भयात्तदा । शङ्किताः स्म महाभाग दौरात्म्यात्तस्य चानघ ॥७॥
अहं हि तव दुर्द्धर्ष भुजवीर्य्याश्रयः प्रभो । नात्मानं बलिनं मन्ये
त्वयि तस्माद्विशङ्किते ॥ ८ ॥ त्वत्सकाशाच्च रामाच्च भीमसेनाच्च
माधव । अर्जुनाद्वा महाबाहो हन्तुं शक्यो न वेति वै ॥ ९ ॥
एवं जानन् हि वार्ष्णेय विमृशामि पुनः पुनः । त्वं मे प्रमाण-
भूतोऽसि सर्वकार्य्येषु केशव । तच्छ्रुत्वा चाब्रवीद्भीमो वाक्यं वाक्य-
विशारदः ॥ १० ॥

भीम उवाच । अनारम्भपरो राजा वल्मीक इव सीदति ।
दुर्बलश्चानुपायेन बलिनं योऽधितिष्ठति ॥ ११ ॥ अतन्द्रितस्तु
प्रायेण दुर्बलो बलिनं रिपुम् । जयेत् सम्यक्प्रयोगेन नीत्यार्था-
नात्मनो हितान् ॥ १२ ॥ कृष्णे नयो मयि बलं जयः पार्थे धन-
ञ्जये । मागधं साधयिष्याम इष्टिं त्रय इवाग्नयः ॥ १३ ॥

श्रीकृष्ण उवाच । अर्थानारभते बालो नानुबन्धमवेक्षते ।
तस्मादरिं न मृष्यन्ति बालमर्थपरायणम् ॥ १४ ॥ हित्वा करा-
न्यौवनाश्विः पालनाच्च भगीरथः । कार्त्तवीर्य्यस्तपोवीर्य्याद्बलात्तु
भरतो विभुः ॥ १५ ॥ ऋद्ध्या मरुत्तस्तान् पञ्च सम्राजस्त्वनुशुश्रुम ।
साम्राज्यमिच्छतस्ते तु सर्व्वाकारं युधिष्ठिर ॥ १६ ॥ मन्यान्
वश्यानवश्याश्चैवमेव सतां युगे । निग्राह्यलक्षणं प्राप्तिः धर्मार्थ-
नयलक्षणैः । बार्हद्रथो जरासन्धस्तद्विद्धि भरतर्षभ ॥ १७ ॥ न
चैनमनुरुध्यन्ते कुलान्येकशतं नृपाः । तस्मादिह बलादेव साम्राज्यं
कुरुते हि सः ॥ १८ ॥ रत्नभाजो हि राजानो जरासन्धमुपासते ।
न च तुष्यति तेनापि बाल्यादनयमास्थितः ॥ १९ ॥ मूर्द्धाभि-
षिक्तं नृपतिं प्रधानपुरुषो बलात् । आदत्ते न च नो दृष्टोऽभागः

युध्यतः कश्चित् ॥ २० ॥ एवं सर्वान् वशे चक्रे जरासन्धः शतावरान्। तं दुर्बलतरो राजा कथं पार्थ उपैष्यति ॥ २१ ॥ प्रोक्षितानां प्रमृष्टानां राज्ञां पशुपतेर्गृहे। पशूनामिव का प्रीतिर्जीविते भरतर्षभ ॥ २२ ॥ क्षत्रियः शस्त्रमरणो यदा भवति सत्कृतः। ततः स्म मागधं संख्ये प्रतिबाधेम सङ्गताः ॥ २३ ॥ षडशीतिः समानीताः शेषा राजंश्चतुर्दश। जरासन्धेन राजानस्ततः क्रूरं प्रवर्त्स्यते ॥ २४ ॥ प्राप्नुयात् स यशो दीप्तं तत्र यो विघ्नमाचरेत्। जयेद्यश्च जरासन्धं स सम्राट् नियतं भवेत् ॥२५॥

इति सभापर्वणि राजसूयारम्भपर्वणि कृष्णवाक्ये पञ्चदशोऽध्यायः ॥ १५ ॥

युधिष्ठिर उवाच। सम्राड्गुणमभीप्सन् वै युष्मान् स्वार्थपरायणः। कथं प्रहिणुयां कृष्ण सोऽहं केवलसाहसात् ॥ १ ॥ भीमार्जुनावुभौ नेत्रे मनो मन्ये जनार्दनम्। मनश्चक्षुर्विहीनस्य कीदृशं जीवितं भवेत् ॥ २ ॥ जरासन्धबलं प्राप्य दुष्पारं भीमविक्रमम्। यमो हि न विजेताजौ तत्र वः किं विचेष्टितम् ॥ ३ ॥ अस्मिंस्त्वर्थान्तरे युक्तमनर्थः प्रतिपद्यते। तस्मान्न प्रतिपत्तिस्तु कार्य्या युक्ता मता मम ॥ ४ ॥ यथाहं विमृशाम्येकस्तत्तावत् श्रूयतां मम। सन्न्यासं रोचये साधु कार्य्यस्यास्य जनार्दन। प्रतिहन्ति मनो मेऽद्य राजसूयो दुराहरः ॥ ५ ॥

वैशम्पायन उवाच। पार्थः प्राप्य धनुःश्रेष्ठमक्षय्यौ च महेषुधी। रथं ध्वजं सभाञ्चैव युधिष्ठिरमभाषत ॥ ६ ॥

अर्जुन उवाच। धनुः शस्त्रं शरा वीर्य्यं पक्षो भूमिर्यशो बलम्। प्राप्तमेतन्मया राजन् दुष्प्रापं यदभीप्सितम् ॥ ७ ॥ कुले जन्म प्रशंसन्ति वैद्याः साधु सुनिश्चिताः। बलेन सदृशं

नास्ति वीर्य्यन्तु मम रोचते ॥ ८ ॥ कृतवीर्य्यकुले जातो निर्व्वीर्य्यः
किङ्करिष्यति । निर्व्वीर्य्ये तु कुले जातो वीर्य्यवांस्तु विशिष्यते
॥ ९ ॥ क्षत्रियः सर्व्वशो राजन्यस्य वृत्तिर्द्विषज्जये । सर्व्वैर्गुणै-
र्विहीनोऽपि वीर्य्यवान् हि तरेद्रिपून् ॥ १० ॥ सर्व्वैरपि गुणैर्युक्तो
निर्व्वीर्य्यः किं करिष्यति । गुणीभूता गुणाः सर्व्वे तिष्ठन्ति हि
पराक्रमे ॥ ११ ॥ जयस्य हेतुः सिद्धिर्हि कर्म्म दैवञ्च संश्रितम् ।
संयुक्तो हि बलैः कश्चित् प्रमादान्नोपयुज्यते ॥ १२ ॥ तेन द्वारेण
शत्रुभ्यः क्षीयते सबलो रिपुः । दैन्यं यथा बलवति तथा मोहो
बलान्विते । तावुभौ नाशकौ हेतू राज्ञा त्याज्यौ जयार्थिना
॥ १३ ॥ जरासन्धविनाशञ्च राज्ञाञ्च परिरक्षणम् । यदि कुर्य्याम
यज्ञार्थं किन्ततः परमं भवेत् ॥ १४ ॥ अनारम्भे हि नियतो
भवेदगुणनिश्चयः । गुणान्निःसंशयाद्राजन्नैर्गुण्यं मन्यसे कथम्
॥ १५ ॥ काषायं सुलभं पश्चान्मुनीनां शममिच्छताम् । साम्राज्यन्तु
भवेच्छक्यं वयं योत्स्यामहे परान् ॥ १६ ॥

इति सभापर्व्वणि राजसूयारम्भपर्व्वणि जरासन्धवधमन्त्रणे
षोड़शोऽध्यायः ॥ १६ ॥

वासुदेव उवाच । जातस्य भारते वंशे तथा कुन्त्याः सुतस्य
च । या वै युक्ता मतिः सेयमर्जुनेन प्रदर्शिता ॥ १ ॥ न स्म
मृत्युं वयं विद्म रात्रौ वा यदि वा दिवा । न चापि कञ्चिदमर-
मयुद्धेनानुशुश्रुम ॥ २ ॥ एतावदेव पुरुषैः कार्य्यं हृदयतोष-
णम् । नयेन विधिदृष्टेन यदुपक्रमते परान् ॥ ३ ॥ सुनयस्या-
नपायस्य संयोगे परमः क्रमः । सङ्गत्या जायतेऽसाम्यं साम्यञ्च
न भवेद्द्वयोः ॥ ४ ॥ अनयस्यानुपायस्य संयुगे परमः क्षयः ।
संशयो जायते साम्याज्जयश्च न भवेद्द्वयोः ॥ ५ ॥ ते वयं नय-

माश्रायं शत्रुदेहसमीपगाः। कथमन्तं न गच्छेम वृक्षस्येव
नदीरयाः। परस्य रन्ध्रे समाक्रान्ताः स्वरन्ध्रावरणे स्थिताः॥६॥
व्यूढानीकैरतिबलैर्न युध्येदरिभिः सह। इति बुद्धिमतां नीति-
स्तन्ममापीह रोचते॥७॥ अनवद्या ह्यसम्बुद्धाः प्रविष्टाः शत्रु-
सद्म तत्। शत्रुदेहमुपाक्रम्य तं कामं प्राप्नुयामहे॥८॥
एको ह्येव श्रियं नित्यं बिभर्त्ति पुरुषर्षभः। अन्तरात्मेव भूतानां
तत्क्षयञ्चैव तत्क्षये॥९॥ अथ वैनं निहत्याजौ शेषेणापि
समाहताः। प्राप्नुयाम ततः स्वर्गं ज्ञातित्राणपरायणाः॥१०॥
युधिष्ठिर उवाच। कृष्ण कोऽयं जरासन्धः किंवीर्य्यः किं
पराक्रमः। यस्त्वां स्पृष्ट्वाग्निसदृशं न दग्धः शलभो यथा॥११॥
श्रीकृष्ण उवाच। शृणु राजन् जरासन्धो यद्वीर्य्यो यत्-
पराक्रमः। यथा चोपेक्षितोऽस्माभिर्बहुशः कृतविप्रियः॥१२॥
अक्षौहिणीनां तिसृणामासीत् समरदर्पितः। राजा बृहद्रथो
नाम मगधाधिपतिर्बली॥१३॥ रूपवान्वीर्य्यसम्पन्नः श्रीमा-
नतुलविक्रमः। नित्यं दीक्षाङ्किततनुः शतक्रतुरिवापरः॥१४॥
तेजसा सूर्य्यसङ्काशः क्षमया पृथिवीसमः। यमान्तकसमः क्रोधे
श्रिया वैश्रवणोपमः॥१५॥ तस्याभिजनसंयुक्तैर्गुणैर्भरतसत्तम।
व्याप्तेयं पृथिवी सर्वा सूर्य्यस्येव गभस्तिभिः॥१६॥ स काशि-
राजस्य सुते यमजे भरतर्षभ। उपयेमे महावीर्य्यो रूपद्रविण-
संयुते॥१७॥ तयोश्चकार समयं मिथः स पुरुषर्षभः। नाति-
वर्त्तिष्य इत्येवं पत्नीभ्यां सन्निधौ तदा॥१८॥ स ताभ्यां
शुशुभे राजा पत्नीभ्यां वसुधाधिपः। प्रियाभ्यामनुरूपाभ्यां
करेणुभ्यामिव द्विपः॥१९॥ तयोर्मध्यगतश्चापि रराज वसुधा-
धिपः। गङ्गायमुनयोर्मध्ये मूर्त्तिमानिव सागरः॥२०॥ विष-
येषु निमग्नस्य तस्य यौवनमभ्यगात्। न च वंशकरः पुत्रस्तस्या-
जायत कश्चन॥२१॥ मङ्गलैर्बहुभिर्होमैः पुत्रकामाभिरिष्टिभिः।

आससाद नृपश्रेष्ठः पुत्रं कुलविवर्द्धनम् ॥ २२ ॥ अथ काक्षी-
वतः पुत्रं गौतमस्य महात्मनः । शुश्राव तपसि श्रान्तमुदारं
चण्डकौशिकम् ॥ २३ ॥ यदृच्छयागतं तन्तु वृक्षमूलमुपाश्रितम् ।
पत्नीभ्यां सहितो राजा स च रत्नैरतोषयत् ॥ २४ ॥ तमब्रवीत्
सत्यधृतिः सत्यवागृषिसत्तमः । परितुष्टोऽस्मि राजेन्द्र वरं वरय
सुव्रत ॥ २५ ॥ ततः सभार्य्यः प्रणतस्तमुवाच बृहद्रथः । पुत्र-
दर्शननैराश्याद्बाष्पसन्दिग्धया गिरा ॥ २६ ॥

राजोवाच । भगवन्राज्यमुत्सृज्य प्रस्थितोऽहं तपोवनम् ।
किं वरेणाल्पभाग्यस्य किं राज्येनाप्रजस्य मे ॥ २७ ॥

श्रीकृष्ण उवाच । एतच्छ्रुत्वा मुनिर्ध्यानमगमत् क्षुभितेन्द्रियः ।
तस्यैव चाम्रवृक्षस्य छायायां समुपाविशत् ॥ २८ ॥ तस्योपविष्टस्य
मुनेरुत्सङ्गे निपपात ह । अवातमशुकादष्टमेकमाम्रफलं किल
॥ २९ ॥ तत् प्रगृह्य मुनिश्रेष्ठो हृदयेनाभिमन्त्र्य च । राज्ञे
ददावप्रतिमं पुत्रसम्प्राप्तिकारणम् ॥ ३० ॥ उवाच च महा-
प्राज्ञस्तं राजानं महामुनिः । गच्छ राजन् कृतार्थोऽसि निवर्त्तस्व
नराधिप ॥ ३१ ॥ एतच्छ्रुत्वा मुनेर्वाक्यं शिरसा प्रणिपत्य च ।
मुनेः पादौ महाप्राज्ञः स नृपः स्वगृहं गतः ॥ ३२ ॥ यथा समय-
माज्ञाय तदा स नृपसत्तमः । द्वाभ्यामेकं फलं प्रादात् पत्नीभ्यां
भरतर्षभ ॥ ३३ ॥ ते तदाम्रं द्विधा कृत्वा भक्षयामासतुः शुभे ।
भावित्वादपि चार्थस्य सत्यवाक्यतया मुनेः ॥ ३४ ॥ तयोः सम-
भवद्गर्भः फलप्राशनसम्भवः । ते च दृष्ट्वा स नृपतिः परां मुदमवाप
ह ॥ ३५ ॥ अथ काले महाप्राज्ञ यथासमयमागते । प्राजायेतां
उभे राजन् शरीरशकले तदा ॥ ३६ ॥ एकाक्षिबाहुचरणे अर्द्धो-
दरमुखस्फिचे । दृष्ट्वा शरीरशकले प्रवेपतुरुभे भृशम् ॥ ३७ ॥
उद्विग्ने सह सम्मन्त्र्य ते भगिन्यौ तदाबले । सजीवे प्राणि-
शकले तत्यजाते सुदुःखिते ॥ ३८ ॥ तयोर्धात्र्यौ सुसम्वीते ते

कृत्वा गर्भसंभवे । निर्गम्यान्तःपुरद्वारात् समुत्सृज्याभिजग्मतुः
॥ ३९ ॥ ते चतुष्पथनिक्षिप्ते जरा नामाथ राक्षसी । जग्राह
मनुजव्याघ्र मांसशोणितभोजना ॥ ४० ॥ कर्त्तुकामा सुखवहे
शकले सा तु राक्षसी । संयोजयामास तदा विधानबलचोदिता
॥ ४१ ॥ ते समानीतमात्रे तु शकले पुरुषर्षभ । एकमूर्त्तिधरो
वीरः कुमारः समपद्यत ॥ ४२ ॥ ततः सा राक्षसी राजन् विस्म-
योत्फुल्ललोचना । न शशाक समुद्वोढुं वज्रसारमयं शिशुम्
॥ ४३ ॥ बालस्ताम्रतलं मुष्टिं कृत्वा चास्ये निधाय सः । प्राक्रोश-
दतिसंरब्धः सतोय इव तोयदः ॥ ४४ ॥ तेन शब्देन संभ्रान्तः
सहसान्तःपुरे जनः । निर्जगाम नरव्याघ्र राज्ञा सह परन्तप
॥ ४५ ॥ ते चाबले परिम्लानपयःपूर्णपयोधरे । निराशे पुत्र-
लाभाय सहसैवाभ्यगच्छताम् ॥ ४६ ॥ तेऽथ दृष्ट्वा तथाभूते राजानं
चेष्टसन्ततिम् । तञ्च बालं सुबलिनं चिन्तयामास राक्षसी ॥ ४७ ॥
नार्हामि विषये राज्ञो वसन्ती पुत्रगृद्धिनः । बालं पुत्रमिमं हन्तुं
धार्मिकस्य महात्मनः ॥ ४८ ॥ सा तं बालमुपादाय मेघलेखेव
भास्करम् । कृत्वा च मानुषं रूपमुवाच वसुधाधिपम् ॥ ४९ ॥

राक्षस्युवाच । बृहद्रथ सुतस्तेऽयं मया दत्तः प्रगृह्यताम् ।
तव पत्नीद्वये जातो द्विजातिवरशासनात् । धात्रीजनपरित्यक्तो
मयायं परिरक्षितः ॥ ५० ॥

श्रीकृष्ण उवाच । ततस्ते भरतश्रेष्ठ काशिराजसुते शुभे । तं
बालमभिपत्याशु प्रस्रवैरभ्यषिञ्चताम् ॥ ५१ ॥ ततः स राजा संहृष्टः
सर्वं तदुपलभ्य च । अपृच्छद्धेमगर्भाभां राक्षसीं तामराक्षसीम् ॥ ५२ ॥

राजोवाच । का त्वं कमलगर्भाभे मम पुत्रप्रदायिनी ।
कामया ब्रूहि कल्याणि देवता प्रतिभासि मे ॥ ५३ ॥

इति सभापर्वणि राजसूयारम्भपर्वणि जरासन्धोत्पत्तौ
सप्तदशोऽध्यायः ॥ १७ ॥

राक्षस्युवाच । जरा नामास्मि भद्रं ते राक्षसी कामरूपिणी । तव वेश्मनि राजेन्द्र पूजिता न्यवसं सुखम् ॥ १ ॥ गृहे गृहे मनुष्याणां नित्यं तिष्ठामि राक्षसी । गृहदेवीति नाम्ना वै पुरा सृष्टा स्वयम्भुवा ॥ २ ॥ दानवानां विनाशाय स्थापिता दिव्यरूपिणी । यो मां भक्त्या लिखेत् कुड्ये सपुत्रां यौवनान्विताम् ॥ ३ ॥ गृहे तस्य भवेद्वृद्धिरन्यथा क्षयमाप्नुयात् । त्वद्गृहे तिष्ठमाना तु पूजिताहं सदा विभो ॥ ४ ॥ लिखिता चैव कुड्येऽहं पुत्रैर्बहुभिरावृता । गन्धपुष्पैस्तथा धूपैर्भक्ष्यभोज्यैः सुपूजिता ॥ ५ ॥ साहं प्रत्युपकारार्थं चिन्तयाम्यनिशं तव । तवेमे पुत्रशकले दृष्टवत्यस्मि धार्मिक ॥ ६ ॥ संश्लेषिते मया दैवात् कुमारः समपद्यत । तव भाग्यान्महाराज हेतुमात्रमहं त्विह ॥ ७ ॥ मेरुं वा खादितुं शक्ता किं पुनस्तव बालकम् । गृहसंपूजनात्तुष्ट्या मया प्रत्यर्पितस्तव ॥ ८ ॥

श्रीकृष्ण उवाच । एवमुक्त्वा तु सा राजंस्तत्रैवान्तरधीयत । स संगृह्य कुमारं तं प्रविवेश गृहं नृपः ॥ ९ ॥ तस्य बालस्य यत् कृत्यं तच्चकार नृपस्तदा । आज्ञापयच्च राक्षस्या मगधेषु महोत्सवम् ॥ १० ॥ तस्य नामाकरोच्चैव पितामहसमः पिता । जरया सन्धितो यस्माज्जरासन्धो भवत्वयम् ॥ ११ ॥ सोऽवर्द्धत महातेजाः मगधाधिपतेः सुतः । प्रमाणबलसम्पन्नो हुताहुतिरिवानलः । मातापित्रोर्नन्दिकरः शुक्लपक्षे यथा शशी ॥ १२ ॥

इति सभापर्वणि राजसूयारम्भपर्वणि जरासन्धोत्पत्तौ
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीकृष्ण उवाच । कस्यचित्त्वथ कालस्य पुनरेव महातपाः । मागधेषूपचक्राम भगवांश्चण्डकौशिकः ॥ १ ॥ तस्यागमनसंहृष्टः सामात्यः सपुरःसरः । सभार्यः सह पुत्रेण निर्जगाम बृहद्रथः

॥ २ ॥ पाद्यार्घ्याचमनीयैस्तमर्चयामास भारत । स नृपो राज्य-सहितं पुत्रं तस्मै न्यवेदयत् ॥ ३ ॥ प्रतिगृह्य तु तां पूजां पार्थिवाद्भगवानृषिः । उवाच मागधं राजन् प्रहृष्टेनान्तरात्मना ॥ ४ ॥ सर्वमेतन्मया ज्ञातं राजन् दिव्येन चक्षुषा । पुत्रस्तु शृणु राजेन्द्र यादृशोऽयं भविष्यति ॥ ५ ॥ अस्य रूपञ्च सत्त्वञ्च बल-मूर्जितमेव च । एष श्रिया समुदितः पुत्रस्तव न संशयः ॥ ६ ॥ प्रापयिष्यति तत्सर्वं विक्रमेण समन्वितः । अस्य वीर्य्यवतो वीर्य्यं नानुयास्यन्ति पार्थिवाः ॥ ७ ॥ पततो वैनतेयस्य गतिमन्ये यथा खगाः । विनाशमुपयास्यन्ति ये चास्य परिपन्थिनः ॥ ८ ॥ देवै-रपि विसृष्टानि शस्त्राण्यस्य महीपते । न रुजं जनयिष्यन्ति गिरेरिव नदीरयाः ॥ ९ ॥ सर्वमूर्द्धाभिषिक्तानामेष मूर्द्ध्नि ज्वलिष्यति । प्रभाहरोऽयं सर्वेषां ज्योतिषामिव भास्करः ॥ १० ॥ एनमासाद्य राजानः समृद्धबलवाहनाः । विनाशमुपयास्यन्ति शलभा इव पावकम् ॥ ११ ॥ एष श्रियः समुदिताः सर्वराज्ञां ग्रहीष्यति । वर्षास्विवोदीर्णजला नदीर्नदनदीपतिः ॥ १२ ॥ एष धारयिता सम्यक् चातुर्वर्ण्यं महाबलः । शुभाशुभमिव स्फीता सर्वशस्यधरा धरा ॥ १३ ॥ अस्याज्ञावशगाः सर्वे भविष्यन्ति नराधिपाः । सर्वभूतात्मभूतस्य वायोरिव शरीरिणः ॥ १४ ॥ एष रुद्रं महादेवं त्रिपुरान्तकरं हरम् । सर्वलोकेष्वतिबलः साक्षाद् द्रक्ष्यति मागधः ॥ १५ ॥ एवं ब्रुवन्नेव मुनिः स्वकार्य्य-मिव चिन्तयन् । विसर्जयामास नृपं बृहद्रथमथारिहन् ॥ १६ ॥ प्रविश्य नगरीञ्चापि ज्ञातिसम्बन्धिभिर्वृतः । अभिषिच्य जरासन्धं मगधाधिपतिस्तदा ॥ १७ ॥ बृहद्रथो नरपतिः परां निर्वृति-माययौ । 'अभिषिक्ते जरासन्धे तदा राजा बृहद्रथः ॥ १८ ॥ पत्नीद्वयेनानुगतस्तपोवनचरोऽभवत् । ततो वनस्थे पितरि मातृ-श्चैव विशाम्पते । जरासन्धः स्ववीर्य्येण पार्थिवानकरोद्वशे ॥ १९॥

वैशम्पायन उवाच। अथ दीर्घस्य कालस्य तपोवनचरो नृपः। सभार्य्यः स्वर्गमगमत्तपस्तप्त्वा बृहद्रथः॥ २०॥ जरासन्धोऽपि नृपतिर्यथोक्तं कौशिकेन तत्। वरप्रदानमखिलं प्राप्य राज्यमपालयत्॥ २१॥ निहते वासुदेवेन तदा कंसे महीपतौ। जातो वै वैरनिर्बन्धः कृष्णेन सह तस्य वै॥ २२॥ भ्रामयित्वा शतगुणमेकोनं येन भारत। गदा क्षिप्ता बलवता मागधेन गिरिव्रजात्॥ २३॥ तिष्ठतो मथुरायां वै कृष्णस्याद्भुतकर्म्मणः। एकोनयोजनशते सा पपात गदा शुभा॥ २४॥ दृष्ट्वा पौरैस्तदा सम्यग्गदा चैव निवेदिता। गदावसानं तत् ख्यातं मथुरायाः समीपतः॥ २५॥ तस्यास्तां हंसडिभकावशस्त्रनिधनावुभौ। मन्त्रे मतिमतां श्रेष्ठौ नीतिशास्त्रविशारदौ॥ २६॥ यौ तौ मया ते कथितौ पूर्व्वमेव महाबलौ। त्रयस्त्रयाणां लोकानां पर्य्याप्ता इति मे मतिः॥ २७॥ एवमेष तदा वीर बलिभिः कुकुरान्धकैः। वृष्णिभिश्च महाराज नीतिहेतोरुपेक्षितः॥२८॥

इति सभापर्व्वणि राजसूयारम्भपर्व्वणि जरासन्धप्रशंसायां ऊनविंशोऽध्यायः समाप्तञ्च राजसूयारम्भपर्व्व॥ १९॥

## अथ जरासन्धवधपर्व्व।

वासुदेव उवाच। पतितौ हंसडिभकौ कंसश्च सगणो हतः। जरासन्धस्य निधने कालोऽयं समुपागतः॥ १॥ न शक्योऽसौ रणे जेतुं सर्व्वैरपि सुरासुरैः। प्राणयुद्धेन जेतव्यः स इत्युपलभामहे॥ २॥ मयि नीतिर्बलं भीमे रक्षिता चावयोर्जयः। मागधं साधयिष्याम इष्टिं त्रय इवाग्नयः॥ ३॥ त्रिभिरासादितोऽस्माभिर्विजने स नराधिपः। न सन्देहो यथा युद्धमेकेनाभ्युपयास्यति॥ ४॥ अवमानाच्च लोभाच्च बाहुवीर्य्याच्च दर्पितः।

भीमसेनेन युद्धाय ध्रुवमभ्युपयास्यति ॥ ५ ॥ अलन्तस्य महाबाहुर्भीमसेनो महाबलः। लोकस्य समुदीर्णस्य निधनायान्तको यथा ॥ ६ ॥ यदि मे हृदयं वेत्सि यदि ते प्रत्ययो मयि। भीमसेनार्जुनौ शीघ्रं न्यासभूतौ प्रयच्छ मे ॥ ७ ॥

वैशम्पायन उवाच। एवमुक्तो भगवता प्रत्युवाच युधिष्ठिरः। भीमार्जुनौ समालोक्य संप्रहृष्टमुखौ स्थितौ ॥ ८ ॥

युधिष्ठिर उवाच। अच्युताच्युत मा मैवं व्याहरामित्रकर्षण। पाण्डवानां भवान्नाथो भवन्तं चाश्रिता वयम् ॥ ९ ॥ यथा वदसि गोविन्द सर्वं तदुपपद्यते। न हि त्वमग्रतस्तेषां येषां लक्ष्मीः पराङ्मुखी ॥ १० ॥ निहतश्च जरासन्धो मोक्षिताश्च महीक्षितः। राजसूयश्च मे लब्धो निदेशे तव तिष्ठतः ॥ ११ ॥ क्षिप्रमेव यथा त्वेतत्कार्य्यं समुपपद्यते। अप्रमत्तो जगन्नाथ तथा कुरु नरोत्तम ॥ १२ ॥ त्रिभिर्भवद्भिर्हि विना नाहं जीवितुमुत्सहे। धर्मार्थकामरहितो रोगार्त्त इव दुःखितः ॥ १३ ॥ न शौरिणा विना पार्थो न शौरिः पाण्डवं विना। नाजेयोऽस्त्यनयोर्लोके कृष्णयोरिति मे मतिः ॥ १४ ॥ अयञ्च बलिनां श्रेष्ठः श्रीमानपि वृकोदरः। युवाभ्यां सहितो वीरः किं न कुर्य्यान्महायशाः ॥ १५ ॥ सुप्रणीतो बलौघो हि कुरुते कार्य्यमुत्तमम्। अन्धं बलं जडं प्राहुः प्रणेतव्यं विचक्षणैः ॥ १६ ॥ यतो हि निम्नं भवति नयन्ति हि ततो जलम्। यतश्छिद्रं ततश्चापि नयन्ते धीवरा जलम् ॥ १७ ॥ तस्मान्नयविधानज्ञं पुरुषं लोकविश्रुतम्। वयमाश्रित्य गोविन्दं यतामः कार्य्यसिद्धये ॥ १८ ॥ एवं प्रज्ञानयबलं क्रियोपायसमन्वितम्। पुरस्कुर्वीत कार्य्येषु कृष्णं कार्य्यार्थसिद्धये ॥ १९ ॥ एवमेव यदुश्रेष्ठ यावत् कायार्थसिद्धये। अर्जुनः कृष्णमन्वेतु भीमोऽन्वेतु धनञ्जयम्। नयो जयो बलञ्चैव विक्रमे सिद्धिमेष्यति ॥ २० ॥

वैशम्पायन उवाच । एवमुक्तास्ततः सर्वे भ्रातरो विपुलौजसः । वार्ष्णेयः पाण्डवेयौ च प्रतस्थुर्मागधं प्रति ॥ २१ ॥ वर्च्चस्विनां ब्राह्मणानां स्नातकानां परिच्छदम् । आच्छाद्य सुहृदां वाक्यै-र्मनोज्ञैरभिनन्दिताः ॥ २२ ॥ अमर्षादभितप्तानां ज्ञात्यर्थं मुख्य-तेजसाम् । रविसोमाग्निवपुषां दीप्तमासीत्तदा वपुः ॥ २३ ॥ हतं मेने जरासन्धं दृष्ट्वा भीमपुरोगमौ । एककार्य्यसमुद्युक्तौ कृष्णौ युद्धेऽपराजितौ ॥ २४ ॥ ईशौ हि तौ महात्मानौ सर्व-कार्य्यप्रवर्त्तिनौ । धर्मकामार्थकार्य्याणां लोकानाञ्च प्रवर्त्तकौ ॥ २५ ॥ कुरुभ्यः प्रस्थितास्ते तु मध्येन कुरुजाङ्गलम् । रम्यं पद्मसरो गत्वा कालकूटमतीत्य च ॥ २६ ॥ गण्डकीञ्च महाशोणां सदानीरां तथैव च । एकपर्वतके नद्यः क्रमेणैत्याव्रजन्त ते ॥२७॥ उत्तीर्य्य सरयूं रम्यां दृष्ट्वा पूर्वांश्च कोशलान् । अतीत्य जग्मु-र्मिथिलां मालाञ्चर्मण्वतीं नदीम् ॥ २८ ॥ अतीत्य गङ्गां शोणञ्च त्रयस्ते प्राङ्मुखास्तदा । कुशचीरच्छदा जग्मुर्मागधं क्षेत्रमच्युताः ॥ २९ ॥ ते शश्वद्गोधनाकीर्णमम्बुमन्तं शुभद्रुमम् । गोरथं गिरि-मासाद्य ददृशुर्मागधं पुरम् ॥ ३० ॥

इति सभापर्वणि जरासन्धवधपर्वणि कृष्णपाण्डवमागध-यात्रायां विंशोऽध्यायः ॥ २० ॥

---

श्रीवासुदेव उवाच । एष पार्थ महान् भाति पशुमान्नित्य-मम्बुमान् । निरामयः सुवेश्माढ्यो निवेशो मागधः शुभः ॥ १ ॥ वैहारो विपुलः शैलो वराहो वृषभस्तथा । तथा ऋषिगिरिस्तात शुभाश्चैत्यकपञ्चमाः ॥ २ ॥ एते पञ्च महाशृङ्गाः पर्वताः शीतल-द्रुमाः । रक्षन्तीवाभिसंहत्य संहताङ्गा गिरिव्रजम् ॥ ३ ॥ पुष्प-वेष्टितशाखाग्रैर्गन्धवद्भिर्मनोरमैः । निगूढा इव लोध्राणां वनैः

कामिजनप्रियैः॥ ४॥ यत्रोशीनरीं गौतमो यत्र महात्मा संशितव्रतः। औशीनर्य्यामजनयत् काक्षीवाद्यान् सुतान्मुनिः॥ ५॥ गौतमस्य क्षयात्तस्मादथासौ तत्र सद्मनि। भजते मागधं वंशं स नृपाणामनुग्रहः॥ ६॥ अङ्गवङ्गादयश्चैव राजानः सुमहाबलाः। गौतमक्षयमभ्येत्य रमन्ते स्म पुरार्जुन॥ ७॥ वनराजीस्तु पश्येमाः पिप्पलानां मनोरमाः। लोध्राणाञ्च शुभाः पार्थ गौतमौकःसमीपजाः॥ ८॥ अर्बुदः शक्रवापी च पन्नगौ शत्रुतापनौ। स्वस्तिकस्यालयश्चात्र मणिनागस्य चोत्तमः॥ ९॥ अपरिहार्य्या मेघानां मागधा मनुना कृताः। कौशिको मणिमांश्चैव चक्राते चाप्यनुग्रहम्॥ १०॥ एवं प्राप्य पुरं रम्यं दुराधर्षं समन्ततः। अर्थसिद्धिन्त्वनुपमां जरासन्धोऽभिमन्यते। वयमासादने तस्य दर्पमद्य हरेम हि॥ ११॥

वैशम्पायन उवाच। एवमुक्त्वा ततः सर्वे भ्रातरो विपुलौजसः। वार्ष्णेयः पाण्डवौ चैव प्रतस्थुर्मागधं पुरम्॥ १२॥ हृष्टपुष्टजनोपेतं चातुर्वर्ण्यसमाकुलम्। स्फीतोत्सवमनाधृष्यमासेदुश्च गिरिव्रजम्॥ १३॥ ततो द्वारं समासाद्य पुरस्य गिरिमुच्छ्रितम्। बार्हद्रथैः पूज्यमानं तथा नगरवासिभिः। मागधानान्तु रुचिरं चैत्यकान्तरमाद्रवन्॥ १४॥ यत्र मांसादमृषभमाससाद बृहद्रथः। तं हत्वा मासतालाभिस्तिस्रो भेरीरकारयत्॥ १५॥ स्वपुरे स्थापयामास तेन चानह्य चर्म्मणा। यत्र ताः प्राणदन् भेर्य्यो दिव्यपुष्पावचूर्णिताः॥ १६॥ भङ्क्त्वा भेरीत्रयं तेऽपि चैत्यप्राकारमाद्रवन्। द्वारतोऽभिमुखाः सर्वे ययुर्नानायुधास्तदा॥ १७॥ मागधानां सुरुचिरं चैत्यकन्तं समाद्रवन्। शिरसीव समाघ्नन्तो जरासन्धं जिघांसवः॥ १८॥ स्थिरं सुविपुलं शृङ्गं सुमहत्तत् पुरातनम्। अर्च्चितं गन्धमाल्यैश्च सततं सुप्रतिष्ठितम्॥ १९॥ विपुलैर्बाहुभिर्वीरास्तेऽभिहत्याभ्यपातयन्। ततस्ते

मागधं हृष्टः पुरं प्रविविशुस्तदा ॥ २० ॥ एतस्मिन्नेव काले तु ब्राह्मणा वेदपारगाः । दृष्ट्वा तु दुर्निमित्तानि जरासन्धमदर्शयन् ॥ २१ ॥ पर्य्यग्न्यकुर्वंश्च नृपं द्विरदस्थं पुरोहिताः । ततस्तच्छान्तये राजा जरासन्धः प्रतापवान् ॥ २२ ॥ दीक्षितो नियमस्थोऽसावुपवासपरोऽभवत् । स्नातकव्रतिनस्ते तु बाहुशस्त्रा निरायुधाः ॥ २३ ॥ युयुत्सवः प्रविविशुर्जरासन्धेन भारत । भक्ष्यमाल्यापणानाञ्च ददृशुः श्रियमुत्तमाम् ॥ २४ ॥ स्फीतां सर्वगुणोपेतां सर्वकामसमृद्धिनीम् । तान्तु दृष्ट्वा समृद्धिं ते वीथ्यां तस्यां नरोत्तमाः ॥ २५ ॥ राजमार्गेण गच्छन्तः कृष्णभीमधनञ्जयाः । बलाद्गृहीत्वा माल्यानि मालाकारान्महाबलाः ॥ २६ ॥ विरागवसनाः सर्वे स्रग्विणो मृष्टकुण्डलाः । निवेशनमथाजग्मुर्जरासन्धस्य धीमतः ॥ २७ ॥ गोवासमिव वीक्षन्तः सिंहा हैमवता यथा । शालस्तम्भनिभास्तेषां चन्दनागुरुरूषिताः ॥ २८ ॥ अशोभन्त महाराज बाहवो युद्धशालिनाम् । तान्दृष्ट्वा द्विरदप्रख्याञ्छालस्कन्धानिवोद्गतान् ॥ २९ ॥ व्यूढोरस्कान्मागधानां विस्मयः समपद्यत । ते त्वतीत्य जनाकीर्णाः कक्ष्यास्तिस्रो नरर्षभाः ॥ ३० ॥ अहङ्कारेण राजानमुपतस्थुर्गतव्यथाः । तान् पाद्यमधुपर्कार्हान् गवार्हान् सत्कृतिं गतान् ॥ ३१ ॥ प्रत्युत्थाय जरासन्ध उपतस्थे यथाविधि । उवाच चैतान्राजाऽसौ स्वागतं वोऽस्त्विति प्रभुः ॥ ३२ ॥ मौनमासीत्तदा पार्थभीमयोर्जनमेजय । तेषां मध्ये महाबुद्धिः कृष्णो वचनमब्रवीत् ॥ ३३ ॥ वक्तुं नायाति राजेन्द्र एतयोर्नियमस्थयोः । अर्वाङ्निशीथात् परतस्त्वया सार्द्धं वदिष्यतः ॥ ३४ ॥ यज्ञागारे स्थापयित्वा राजा राजगृहं गतः । ततोऽर्द्धरात्रे सम्प्राप्ते यातो यत्र स्थिता द्विजाः ॥ ३५ ॥ तस्य ह्येतद्व्रतं राजन् बभूव भुवि विश्रुतम् । स्नातकान् ब्राह्मणान् प्राप्तान् श्रुत्वा स समितिञ्जयः ॥ ३६ ॥

अभ्युत्थितो नृपतिः प्रत्युद्गच्छति भारत । तांस्त्वपूर्वेण वेषेण दृष्ट्वा स नृपसत्तमः ॥ ३७ ॥ उपतस्थे जरासन्धो विस्मितश्चाभवत्तदा । ते तु दृष्ट्वैव राजानं जरासन्धं नरर्षभाः ॥ ३८ ॥ इदमूचुरमित्रघ्नाः सर्वे भरतसत्तम । स्वस्त्यस्तु कुशलं राजन्निति तत्र व्यवस्थिताः ॥ ३९ ॥ तं नृपं नृपशार्दूल प्रेक्षमाणाः परस्परम् । तानब्रवीज्जरासन्धस्तथा पाण्डवयादवान् ॥ ४० ॥ आस्यतामिति राजेन्द्र ब्राह्मणच्छद्मसंवृतान् । अथोपविविशुः सर्वे त्रयस्ते पुरुषर्षभाः ॥ ४१ ॥ सम्प्रदीप्तास्त्रयो लक्ष्म्या महाध्वर इवाग्नयः । तानुवाच जरासन्धः सत्यसन्धो नराधिपः ॥ ४२ ॥ विगर्हमाणः कौरव्य वेशग्रहणवैकृतान् । न स्नातकव्रता विप्रा बहिर्माल्यानुलेपनाः ॥ ४३ ॥ भवन्तीति नृलोकेऽस्मिन्विदितं मम सर्वशः । के यूयं पुष्पवन्तश्च भुजैर्ज्याकृतलक्षणैः ॥ ४४ ॥ बिभ्रतः क्षात्रमोजश्च ब्राह्मण्यं प्रतिजानथ । एवं विरागवसना बहिर्माल्यानुलेपनाः ॥ ४५ ॥ सत्यं वदत के यूयं सत्यं राजसु शोभते । चैत्यकस्य गिरेः शृङ्गं भित्त्वा किमिह छद्मना ॥ ४६ ॥ अद्वारेण प्रविष्टाः स्थ निर्भया राजकिल्बिषात् । वदध्वं वापि वीर्यं च ब्राह्मणस्य विशेषतः ॥ ४७ ॥ कर्म चैतद्विलिङ्गस्थं किं वोऽद्य प्रसमीक्षितम् । एवञ्च मामुपास्थाय कस्माच्च विधिनार्हणाम् ॥ ४८ ॥ प्रणीतान्नानुगृह्णीत कार्यं किं वास्मदागमे । एवमुक्ते ततः कृष्णः प्रत्युवाच महामनाः । स्निग्धगम्भीरया वाचा वाक्यं वाक्यविशारदः ॥ ४९ ॥

श्रीकृष्ण उवाच । स्नातकान् ब्राह्मणान् राजन् विद्ध्यस्मांस्त्वं नराधिप । स्नातकव्रतिनो राजन् ब्राह्मणाः क्षत्रिया विशः ॥ ५० ॥ विशेषनियमाश्चैषामविशेषाश्च सन्त्युत । विशेषवांश्च सततं क्षत्रियः श्रियमृच्छति ॥ ५१ ॥ पुष्पवत्सु ध्रुवा श्रीश्च पुष्पवन्तस्ततो वयम् । क्षत्रियो बाहुवीर्यस्तु न तथा वाक्यवीर्यवान् ॥ ५२ ॥ अप्रगल्भं

वधस्तस्य तस्माद्दार्ढ्यैरितम्। स्वंवीर्यं क्षत्रियाणान्तु बाहो-
र्वीर्ता न्यवेशयत् ॥ ५३ ॥ तद्दिदृक्षसि चेद्राजन् द्रष्टास्यद्य न
संशयः। अद्वारेण रिपोर्गेहं द्वारेण सुहृदो गृहान् ॥ ५४ ॥
प्रविशन्ति नरा धीरा द्वाराण्येतानि धर्मतः। कार्य्यवन्तो गृहा-
न्येत्य शत्रुतो नार्हणां वयम्। प्रतिगृह्णीम तद्विद्धि एतन्नः
शाश्वतं व्रतम् ॥ ५५ ॥

इति सभापर्वणि जरासन्धवधपर्वणि कृष्णजरासन्धसंवादे
एकविंशोऽध्यायः ॥ २१ ॥

---

जरासन्ध उवाच। न स्मरामि कदा वैरं कृतं युष्माभि-
रित्युत। चिन्तयंश्च न पश्यामि भवतां प्रति वैकृतम् ॥ १ ॥
वैकृते चासति कथं मन्यध्वं मामनागसम्। अरिं वै ब्रूत हे
विप्राः सतां समय एष हि ॥ २ ॥ अर्थधर्मोपघाताद्धि मनः समुप-
तप्यते। योऽनागसि प्रसृजति क्षत्रियो हि न संशयः ॥ ३ ॥
अतोऽन्यथा चरँल्लोके धर्मज्ञः सन् महारथः। वृजिनां गति-
माप्नोति श्रेयसोऽप्युपहन्ति च ॥ ४ ॥ त्रैलोक्ये क्षत्रधर्मो हि
श्रेयान्वै साधुचारिणाम्। नान्यं धर्मं प्रशंसन्ति ये च धर्मविदो
जनाः ॥ ५ ॥ तस्य मेऽद्य स्थितस्येह स्वधर्मे नियतात्मनः। अना-
गसः प्रजानाञ्च प्रमादादिव जल्पथ ॥ ६ ॥

श्रीकृष्ण उवाच। कुलकार्य्यं महाबाहो कश्चिदेकः कुलो-
द्वहः। वहते यस्तन्नियोगाद्वयमभ्युद्यतास्त्वयि ॥ ७ ॥ त्वया चोप-
हृता राजन् क्षत्रिया लोकवासिनः। तदागः क्रूरमुत्पाद्य मन्यसे
किमनागसम् ॥ ८ ॥ राजा राज्ञः कथं साधून् हिंस्यान्नृपति-
सत्तम। तद्राज्ञः सन्निगृह्य त्वं रुद्रायोपजिहीर्षसि ॥ ९ ॥
अस्मांस्तदेनोपगच्छेत् कृतं बार्हद्रथ त्वया। वयं हि शक्ता धर्मस्य

रक्षणे धर्मचारिणः ॥ १० ॥ मनुष्याणां समालम्भो न च दृष्टः कदाचन। स कथं मानुषैर्देवं यष्टुमिच्छसि शङ्करम् ॥ ११ ॥ सवर्णो हि सवर्णानां पशुसंज्ञां करिष्यसि। कोऽन्य एवं यथा हि त्वं जरासन्ध वृथामतिः ॥ १२ ॥ यस्यां यस्यामवस्थायां यद्यत् कर्म करोति यः। तस्यां तस्यामवस्थायां तत्फलं समवाप्नुयात् ॥ १३ ॥ ते त्वां ज्ञातिक्षयकरं वयमार्त्तानुसारिणः। ज्ञातिवृद्धिनिमित्तार्थं विनिहन्तुमिहागताः ॥ १४ ॥ नास्ति लोके पुमानन्यः क्षत्रियेष्विति चैव यत्। मन्यसे स च ते राजन् सुमहान् बुद्धिविप्लवः ॥ १५ ॥ को हि जानन्नभिजनमात्मवान् क्षत्रियो नृपः। नाविशेत् स्वर्गमतुलं रणानन्तरमव्ययम् ॥ १६ ॥ स्वर्गं ह्येव समास्थाय रणयज्ञेषु दीक्षिताः। जयन्ति क्षत्रिया लोकांस्तद्विद्धि मनुजर्षभ ॥ १७ ॥ स्वर्गयोनिर्महद्ब्रह्म स्वर्गयोनिर्महद्यशः। स्वर्गयोनिस्तपो युद्धे मृत्युः सोऽव्यभिचारवान् ॥ १८ ॥ एष ह्यैन्द्रो वैजयन्तो गुणैर्नित्यं समाहितः। येनासुरान् पराजित्य जगत्पाति शतक्रतुः ॥ १९ ॥ स्वर्गमार्गाय कस्य स्याद्विग्रहो वै यथा तव। मागधैर्विपुलैः सैन्यैर्बाहुल्यबलदर्पितः ॥ २० ॥ मावमंस्थाः परान्राजन्नस्ति वीर्यं नरे नरे। समन्तेजस्त्वया चैव विशिष्टं वा नरेश्वर ॥ २१ ॥ यावदेतदसम्बुद्धं तावदेव भवेत्तव। विषह्यमेतदस्माकमतो राजन् ब्रवीमि ते ॥ २२ ॥ जहि त्वं सदृशेष्वेव मानं दर्पञ्च मागध। मागमः ससुतामात्यः सबलश्च यमक्षयम् ॥ २३ ॥ दम्भोद्भवः कार्त्तवीर्य्य उत्तरश्च बृहद्रथः। श्रेयसो ह्यवमन्येह विनेशुः सबला नृपाः ॥ २४ ॥ युयुक्षमाणास्त्वत्तो हि न वयं ब्राह्मणा ध्रुवम्। शौरिरस्मि हृषीकेशो नृवीरौ पाण्डवाविमौ ॥ २५ ॥ त्वामाह्वयामहे राजन् स्थिरो युध्यस्व मागध। मुञ्च वा नृपतीन् सर्वान् गच्छ वा त्वं यमक्षयम् ॥ २६ ॥

जरासन्ध उवाच। नाजितान्वै नरपतीनहमादद्मि कांश्चन

अजितः पार्थिवस्त्वत्र कोऽत्र यो न मया जितः ॥ २७ ॥ क्षत्रिय-
स्यैतदेवाहुर्धर्मं कृष्णोपजीवनम्। विक्रम्य वशमानीय कामतो
यत्समाचरेत् ॥ २८ ॥ देवतार्थमुपाहृत्य राज्ञः कृष्ण कथं भयात्।
अहमद्य विमुच्येयं चात्तं व्रतमनुस्मरन् ॥ २९ ॥ सैन्यं सैन्येन
व्यूढेन एक एकेन वा पुनः। द्वाभ्यां त्रिभिर्वा योत्स्येऽहं युग-
पत् पृथगेव वा ॥ ३० ॥

वैशम्पायन उवाच। एवमुक्त्वा जरासन्धः सहदेवाभिषेचनम्।
आज्ञापयत्तदा राजा युयुत्सुर्भीमकर्मभिः ॥ ३१ ॥ स तु सेना-
पतिं राजा सस्मार भरतर्षभ। कौशिकं चित्रसेनञ्च तस्मिन् युद्ध
उपस्थिते ॥ ३२ ॥ ययोस्ते नामनी राजन् हंसेति डिम्भकेति
च। पूर्वं सङ्कथिते पुंभिर्नृलोके लोकसत्कृते ॥ ३३ ॥ तन्तु
राजन्विभुः शौरी राजानं बलिनाम्वरम्। स्मृत्वा पुरुषशार्दूलः
शार्दूलसमविक्रमम् ॥ ३४ ॥ सत्यसन्धो जरासन्धं भुवि भीम-
पराक्रमम्। भागमन्यस्य निर्दिष्टमवध्यं मधुभिर्वधे ॥ ३५ ॥
नात्मनात्मवतां मुख्य इयेष मधुसूदनः। ब्राह्मीमाज्ञां पुरस्कृत्य
हन्तुं हलधरानुजः ॥ ३६ ॥

इति सभापर्वणि जरासन्धवधपर्वणि जरासन्धयुद्धोद्योगे
द्वाविंशोऽध्यायः ॥ २२ ॥

वैशम्पायन उवाच। ततस्तं निश्चितात्मानं युद्धाय यदु-
नन्दनः। उवाच वाग्मी राजानं जरासन्धमधोक्षजः ॥ १ ॥
श्रीकृष्ण उवाच। त्रयाणां केन ते राजन्योद्धुमुत्सहते मनः।
अस्मदन्यतमेनेह सज्जीभवतु को युधि ॥ २ ॥ एवमुक्तः स नृपति-
र्युद्धं वव्रे महाद्युतिः। जरासन्धस्ततो राजा भीमसेनेन मागधः
॥ ३ ॥ आदाय रोचनां माल्यं मङ्गल्यान्यपराणि च। धारय-

अगदान् मुख्यान् निर्वृतीर्वेदनानि च। उपतस्थे जरासन्धं युयुत्सुं वै पुरोहितः ॥ ४ ॥ कृतस्वस्त्ययनो राजा ब्राह्मणेन यशस्विना। समनह्यज्जरासन्धः क्षात्रं धर्ममनुव्रतः ॥ ५ ॥ अवमुच्य किरीटं स केशान् समनुगृह्य च। उदतिष्ठज्जरासन्धो वेलातिग इवार्णवः ॥ ६ ॥ उवाच मतिमान् राजा भीमं भीमपराक्रमः। भीम योत्स्ये त्वया सार्द्धं श्रेयसा निर्जितं वरम् ॥ ७ ॥ एवमुक्त्वा जरासन्धो भीमसेनमरिन्दमः। प्रत्युद्ययौ महातेजाः शक्रं बल इवासुरः ॥ ८ ॥ ततः सम्मन्त्र्य कृष्णेन कृतस्वस्त्ययनो बली। भीमसेनो जरासन्धमाससाद युयुत्सया ॥ ९ ॥ ततस्तौ नरशार्दूलौ बाहुशस्त्रौ समीयतुः। वीरौ परमसंहृष्टावन्योन्यजयकांक्षिणौ ॥ १० ॥ करग्रहणपूर्वन्तु कृत्वा पादाभिवन्दनम्। कक्षैः कक्ष्यां विधुन्वानावास्फोटं तत्र चक्रतुः ॥ ११ ॥ स्कन्धे दोर्भ्यां समाहत्य निहत्य च मुहुर्मुहुः। अङ्गमङ्गैः समाश्लिष्य पुनरास्फालनं विभो ॥ १२ ॥ चित्रहस्तादिकं कृत्वा कक्षाबन्धञ्च चक्रतुः। गलगण्डाभिघातेन सस्फुलिङ्गेन चाशनिम् ॥ १३ ॥ बाहुपाशादिकं कृत्वा पादाहतशिरावुभौ। उरोहस्तं ततश्चक्रे पूर्णकुम्भौ प्रयुज्य तौ ॥ १४ ॥ करसम्पीडनं कृत्वा गर्जन्तौ वारणाविव। नर्दन्तौ मेघसङ्काशौ बाहुप्रहरणावुभौ ॥ १५ ॥ तलेनाहन्यमानौ तु अन्योन्यं कृतवीक्षणौ। सिंहाविव सुसंक्रुद्धावाकृष्याकृष्य युध्यताम् ॥ १६ ॥ अङ्गेनाङ्गं समापीड्य बाहुभ्यामुभयोरपि। आवृत्य बाहुभिश्चापि उदरञ्च प्रचक्रतुः ॥ १७ ॥ उभौ कट्यां सुपार्श्वे तु तक्षवन्तौ च शिक्षितौ। अधोहस्तं स्वकण्ठेऽदरस्योरसि चाक्षिपत् ॥ १८ ॥ सर्वातिक्रान्तमर्यादं पृष्ठभङ्गञ्च चक्रतुः। सम्पूर्णमूर्च्छां बाहुभ्यां पूर्णकुम्भं प्रचक्रतुः ॥ १९ ॥ तृणपीडं यथाकामं पूर्णयोगं समुष्टिकम्। एवमादीनि युद्धानि प्रकुर्वन्तौ परस्परम् ॥ २० ॥ तयोर्युद्धं ततो द्रष्टुं समेताः पुर-

वासिनः । ब्राह्मणा वणिजश्चैव क्षत्रियाश्च सहस्रशः ॥ २१ ॥
शूद्राश्च नरशार्दूल स्त्रियो वृद्धाश्च सर्व्वशः । निरन्तरमभूत्तत्र
जनौघैरभिसंवृतम् ॥ २२ ॥ तयोरथ भुजाघातान्निग्रहप्रग्रहा-
त्तथा । आसीत् सुभीमः सम्पातो वज्रपर्व्वतयोरिव ॥ २३ ॥
उभौ परमसंहृष्टौ बलेन बलिनांवरौ । अन्योन्यस्यान्तरं प्रेप्सू
परस्परजयैषिणौ ॥ २४ ॥ तद्भीममुत्सार्य्य जनं युद्धमासीदुप-
ह्वरे । बलिनोः संयुगे राजन् वृत्रवासवयोरिव ॥ २५ ॥ प्रकर्षणा-
कर्षणाभ्यामनुकर्षविकर्षणैः । आचकर्षतुरन्योऽन्यं जानुभिश्चाव-
जघ्नतुः ॥ २६ ॥ ततः शब्देन महता भर्त्सयन्तौ परस्परम् ।
पाषाणसंघातनिभैः प्रहारैरभिजघ्नतुः ॥ २७ ॥ व्यूढोरस्कौ दीर्घ-
भुजौ नियुद्धकुशलावुभौ । बाहुभिः समसज्जेतामायसैः परिघै-
रिव ॥ २८ ॥ कार्त्तिकस्य तु मासस्य प्रवृत्तं प्रथमेऽहनि ।
अनाहारं दिवारात्रमविश्रान्तमवर्त्तत ॥ २९ ॥ तद्वृत्तन्तु त्रयो-
दश्यां समवेतं महात्मनोः । चतुर्दश्यां निशायान्तु निवृत्तो मागधः
क्लमात् ॥ ३० ॥ तं राजानं तथा क्लान्तं दृष्ट्वा राजन् जनार्दनः ।
उवाच भीमकर्म्माणं भीमं सम्बोधयन्निव ॥ ३१ ॥ क्लान्तः शत्रुर्न
कौन्तेय लभ्यः पीड़यितुं रणे । पीड्यमानो हि कार्त्स्न्येन जह्या-
ज्जीवितमात्मनः ॥ ३२ ॥ तस्मात्ते नैव कौन्तेय पीड़नीयो
जनाधिप । सममेतेन युध्यस्व बाहुभ्यां भरतर्षभ ॥ ३३ ॥ एव-
मुक्तः स कृष्णेन पाण्डवः परवीरहा । जरासन्धस्य तद्रूपं ज्ञात्वा
चक्रे मतिं वधे ॥ ३४ ॥ ततस्तमजितं जेतुं जरासन्धं वृकोदरः ।
संरम्भं बलिनां श्रेष्ठो जग्राह कुरुनन्दनः ॥ ३५ ॥

इति सभापर्व्वणि जरासन्धवधपर्व्वणि जरासन्धक्लान्तौ
त्रयोविंशोऽध्यायः ॥ २३ ॥

——

वैशम्पायन उवाच। भीमसेनस्ततः कृष्णमुवाच यदुनन्दनम्। बुद्धिमास्थाय विपुलां जरासन्धवधेप्सया ॥ १ ॥ नायं पापो मया कृष्ण युक्तः स्यादनुरोधितुम्। प्राणेन यदुशार्दूल बद्धकक्षेण वाससा ॥ २ ॥ एवमुक्तस्ततः कृष्णः प्रत्युवाच वृकोदरम्। त्वरयन् पुरुषव्याघ्रो जरासन्धवधेप्सया ॥ ३ ॥ यत्ते दैवं परं सत्त्वं यच्च ते मातरिश्वनः। बलं भीम जरासन्धे दर्शयाशु तदद्य वै ॥ ४ ॥ एवमुक्तस्तदा भीमो जरासन्धमरिन्दम। उत्क्षिप्य भ्रामयामास बलवन्तं महाबलः ॥ ५ ॥ भ्रामयित्वा शतगुणं जानुभ्यां भरतर्षभ। बभञ्ज पृष्ठं संक्षिप्य निष्पिष्य विननाद च। करे गृहीत्वा चरणं द्वेधा चक्रे महाबलः ॥ ६ ॥ तस्य निष्पिष्यमाणस्य पाण्डवस्य च गर्जतः। अभवत्तुमुलो नादः सर्वप्राणिभयङ्करः ॥ ७ ॥ वित्रेसुर्मागधाः सर्वे स्त्रीणां गर्भाश्च सुस्रुवुः। भीमसेनस्य नादेन जरासन्धस्य चैव ह ॥ ८ ॥ किन्नु स्याद्धिमवान् भिन्नः किन्नु स्विद्दीर्य्यते मही। इति वै मागधा जज्ञुर्भीमसेनस्य निःस्वनात् ॥ ९ ॥ ततो राजकुलद्वारि प्रसुप्तमिव तं नृपम्। रात्रौ गतासुमुत्सृज्य निश्चक्रमुररिन्दमाः ॥ १० ॥ जरासन्धरथं कृष्णो योजयित्वा पताकिनम्। आरोप्य भ्रातरौ चैव मोक्षयामास बान्धवान् ॥ ११ ॥ ते वै रत्नभुजं कृष्णं रत्नार्हाः पृथिवीश्वराः। राजानश्चक्रुरासाद्य मोक्षिता महतो भयात् ॥ १२ ॥ अक्षतः शस्त्रसम्पन्नो जितारिः सह राजभिः। रथमास्थाय तं दिव्यं निर्जगाम गिरिव्रजात् ॥ १३ ॥ यः स सोदर्य्यवान्नाम द्वियोधः कृष्णसारथिः। अभ्यासघाती संदृश्यो दुर्जयः सर्वराजभिः ॥ १४ ॥ भीमार्जुनाभ्यां योधाभ्यामास्थितः कृष्णसारथिः। शुशुभे रथवर्य्योऽसौ दुर्जयः सर्वधन्विभिः ॥ १५ ॥ शक्रविष्णू हि संग्रामे चेरतुस्तारकामये। रथेन तेन वै कृष्ण उपारुह्य ययौ तदा ॥ १६ ॥ तप्तचामीकराभेण किङ्किणीजालमालिना। मेघ-

निर्घोषनादेन जेत्रेणामित्रघातिना ॥ १७ ॥ येन शक्रो दानवानां जघान नवतीर्नव । तं प्राप्य समहृष्यन्त रथं ते पुरुषर्षभाः ॥ १८ ॥ ततः कृष्णं महाबाहुं भ्रातृभ्यां सहितं तदा । रथस्थं मागधा दृष्ट्वा समपद्यन्त विस्मिताः ॥ १९ ॥ हयैर्दिव्यैः समायुक्तो रथो वायुसमो जवे । अधिष्ठितः स शुशुभे कृष्णेनातीव भारत ॥ २० ॥ असङ्गो देवविहितस्तस्मिन्रथवरे ध्वजः । योजनाद्ददृशे श्रीमानिन्द्रायुधसमप्रभः ॥ २१ ॥ चिन्तयामास कृष्णोऽथ गरुत्मन्तं स चाभ्ययात् । क्षणे तस्मिन् स तेनासीच्चैत्यवृक्ष इवोच्छ्रितः ॥ २२ ॥ व्यादितास्यैर्महानादैः सह भूतैर्ध्वजालयैः । तस्मिन्रथवरे तस्थौ गरुत्मान् पन्नगाशनः ॥ २३ ॥ दुर्निरीक्ष्यो हि भूतानां तेजसाभ्यधिकं बभौ । आदित्य इव मध्याह्ने सहस्रकिरणावृतः ॥ २४ ॥ न स सज्जति वृक्षेषु शस्त्रैश्चापि न विध्यते । दिव्यो ध्वजवरो राजन्दृश्यते चेह मानुषैः ॥ २५ ॥ तमास्थाय रथं दिव्यं पर्जन्यसमनिःस्वनम् । निर्ययौ पुरुषव्याघ्रः पाण्डवाभ्यां सहाच्युतः ॥ २६ ॥ यं लेभे वासवाद्राजा वसुस्तस्माद्बृहद्रथः । बृहद्रथात् क्रमेणैव प्राप्तो बार्हद्रथं नृपम् ॥ २७ ॥ स निर्याय महाबाहुः पुण्डरीकेक्षणस्ततः । गिरिव्रजाद्बहिस्तस्थौ समदेशे महायशाः ॥ २८ ॥ तत्रैनं नागराः सर्वे सत्कारेणाभ्ययुस्तदा । ब्राह्मणप्रमुखा राजन्विधिदृष्टेन कर्मणा ॥ २९ ॥ बन्धनाद्विप्रमुक्ताश्च राजानो मधुसूदनम् । पूजयामासुरूचुश्च स्तुतिपूर्वमिदं वचः ॥ ३० ॥ नैतच्चित्रं महाबाहो त्वयि देवकिनन्दने । भीमार्जुनबलोपेते धर्मस्य प्रतिपालनम् ॥ ३१ ॥ जरासन्धह्रदे घोरे दुःखपङ्के निमज्जताम् । राज्ञां समभ्युद्धरणं यदिदं कृतमद्य वै ॥ ३२ ॥ विष्णो समवसन्नानां गिरिदुर्गे सुदारुणे । दिष्ट्या मोक्षाद्यशो दीप्तमाप्तं ते यदुनन्दन ॥ ३३ ॥ किं कुर्मः पुरुषव्याघ्र शाधि नः प्रणतिस्थितान् । कृतमित्येव तद्विद्धि नृपैर्यद्यपि

दुष्करम् ॥ ३४ ॥ तामुवाच हृषीकेशः समाश्वास्य महामनाः।
युधिष्ठिरो राजसूयं क्रतुमाहर्त्तुमिच्छति ॥ ३५ ॥ तस्य धर्म-
प्रवृत्तस्य पार्थिवत्वं चिकीर्षतः। सर्वैर्भवद्भिर्विज्ञाय साहाय्यं
क्रियतामिति ॥ ३६ ॥ ततः सुप्रीतमनसस्ते नृपा नृपसत्तम।
तथेत्येवाब्रुवन् सर्वे प्रतिगृह्यास्य तां गिरम् ॥ ३७ ॥ रत्नभाजञ्च
दाशार्हं चक्रुस्ते पृथिवीश्वराः। कृच्छ्राज्जग्राह गोविन्दस्तेषां
तदनुकम्पया ॥ ३८ ॥ जरासन्धात्मजश्चैव सहदेवो महामनाः।
निर्ययौ सजनामात्यः पुरस्कृत्य पुरोहितम् ॥ ३९ ॥ स नीचैः
प्रणतो भूत्वा बहुरत्नपुरोगमः। सहदेवो नृणां देवं वासुदेव-
मुपस्थितः ॥ ४० ॥ भयार्त्ताय ततस्तस्मै कृष्णो दत्त्वाभयं तदा।
आददेऽस्य महार्हाणि रत्नानि पुरुषोत्तमः ॥ ४१ ॥ अभ्यषिञ्चत
तत्रैव जरासन्धात्मजं मुदा। गत्वैकत्वञ्च कृष्णेन पार्थाभ्यां चैव
सत्कृतः ॥ ४२ ॥ विवेश राजा द्युतिमान् बार्हद्रथपुरं नृप।
अभिषिक्तो महाबाहुर्जारासन्धिर्महात्मभिः ॥ ४३ ॥ कृष्णस्तु सह
पार्थाभ्यां श्रिया परमया युतः। रत्नान्यादाय भूरीणि प्रययौ
पुरुषर्षभः ॥ ४४ ॥ इन्द्रप्रस्थमुपागम्य पाण्डवाभ्यां सहाच्युतः।
समेत्य धर्मराजानं प्रीयमाणोऽभ्यभाषत ॥ ४५ ॥ दिष्ट्या भीमेन
बलवान् जरासन्धो निपातितः। राजानो मोक्षिताश्चैव बन्धना-
न्नृपसत्तम ॥ ४६ ॥ दिष्ट्या कुशलिनौ चेमौ भीमसेनधनञ्जयौ।
पुनः स्वनगरं प्राप्तावक्षताविति भारत ॥ ४७ ॥ ततो युधिष्ठिरः
कृष्णं पूजयित्वा यथार्हतः। भीमसेनार्जुनौ चैव प्रहृष्टः परि-
षस्वजे ॥ ४८ ॥ ततः क्षीणे जरासन्धे भ्रातृभ्यां विहितं जयम्।
अजातशत्रुरासाद्य मुमुदे भ्रातृभिः सह ॥ ४९ ॥ यथावयः
समागम्य भ्रातृभिः सह पाण्डवः। सत्कृत्य पूजयित्वा च विस-
सर्ज नराधिपान् ॥ ५० ॥ युधिष्ठिराभ्यनुज्ञातास्ते नृपा हृष्ट-
मानसाः। जग्मुः स्वदेशांस्त्वरिता यानैरुच्चावचैस्ततः ॥ ५१ ॥

एवं पुरुषशार्दूलो महाबुद्धिर्जनार्दनः । पाण्डवैर्घातयामास जरासन्धमरिं तदा ॥ ५२ ॥ घातयित्वा जरासन्धं बुद्धिपूर्वमरिन्दमः । धर्मराजमनुज्ञाप्य पृथां कृष्णाञ्च भारत ॥ ५३ ॥ सुभद्रां भीमसेनञ्च फाल्गुनं यमजौ तथा । धौम्यमामन्त्रयित्वा च प्रययौ स्वां पुरीं प्रति ॥ ५४ ॥ तेनैव रथमुख्येन मनसस्तुल्यगामिना । धर्मराजविसृष्टेन दिव्येनानादयन्दिशः ॥ ५५ ॥ ततो युधिष्ठिरमुखाः पाण्डवा भरतर्षभ । प्रदक्षिणमकुर्वन्त कृष्णमक्लिष्टकारिणम् ॥ ५६ ॥ ततो गते भगवति कृष्णे देवकिनन्दने । जयं लब्ध्वा सुविपुलं राज्ञां दत्त्वाभयन्तदा ॥ ५७ ॥ संवर्द्धितं यशो भूयः कर्मणा तेन भारत । द्रौपद्याः पाण्डवा राजन् परां प्रीतिमवर्द्धयन् ॥ ५८ ॥ तस्मिन् काले तु यद्युक्तं धर्मकामार्थसंहितम् । तद्राजा धर्मतश्चक्रे प्रजापालनकीर्त्तनम् ॥ ५९ ॥

इति सभापर्वणि जरासन्धवधपर्वणि जरासन्धवधे
चतुर्विंशोऽध्यायः समाप्तञ्च जरासन्धवधपर्व ॥ २४ ॥

---

## अथ दिग्विजयपर्व ।

वैशम्पायन उवाच । पार्थः प्राप्य धनुःश्रेष्ठमक्षय्ये च महेषुधी । रथं ध्वजं सभाञ्चैव युधिष्ठिरमभाषत ॥ १ ॥

अर्जुन उवाच । धनुरस्त्रं शरा वीर्यं पक्षो भूमिर्यशो बलम् । प्राप्तमेतन्मया राजन् दुष्प्रापं यदभीप्सितम् ॥ २ ॥ तत्र कृत्यमहं मन्ये कोषस्य परिवर्द्धनम् । करमाहारयिष्यामि राज्ञः सर्वान्नृपोत्तम ॥ ३ ॥ विजयाय प्रयास्यामि दिशं धनदपालिताम् । तिथावथ मुहूर्त्ते च नक्षत्रे चाभिपूजिते ॥ ४ ॥

वैशम्पायन उवाच । धनञ्जयवचः श्रुत्वा धर्मराजो युधिष्ठिरः । स्निग्धगम्भीरनादिन्या तं गिरा प्रत्यभाषत ॥ ५ ॥ स्वस्ति-

गान्धारेशो विमान् प्रयाहि भरतर्षभ। दुःखं दानप्रयानीय सुहृदां नन्दनाय च ॥ ६ ॥ विजयस्ते ध्रुवं पार्थ प्रियं काममवाप्स्यसि। इत्युक्ताः प्रययौ पार्थः सैन्येन महता वृतः ॥ ७ ॥ अग्निदत्तेन दिव्येन रथेनाद्भुतकर्मणा। तथैव भीमसेनोऽपि यमौ च पुरुषर्षभौ ॥ ८ ॥ ससैन्याः प्रययुः सर्वे धर्मराजेन पूजिताः। दिशं धनपतेरिष्टामजयत् पाकशासनिः ॥ ९ ॥ भीमसेनस्तथा प्राचीं सहदेवस्तु दक्षिणाम्। प्रतीचीं नकुलो राजन्दिशं व्यजयतास्त्रवित् ॥ १० ॥ खाण्डवप्रस्थमध्यस्थो धर्मराजो युधिष्ठिरः। आसीत् परमया लक्ष्म्या सुहृद्गणवृतः प्रभुः ॥ ११ ॥

इति सभापर्वणि दिग्विजयपर्वणि दिग्विजयसंक्षेपकथने पञ्चविंशोऽध्यायः ॥ २५ ॥

जनमेजय उवाच। दिशामभिजयं ब्रह्मन्विस्तरेणानुकीर्तय। न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ॥ १ ॥

वैशम्पायन उवाच। धनञ्जयस्य वक्ष्यामि विजयं पूर्वमेव ते। यौगपद्येन पार्थैर्हि निर्जितेयं वसुन्धरा ॥ २ ॥ पूर्वं कुलिन्दविषये वशे चक्रे महीपतीन्। धनञ्जयो महाबाहुर्नातितीव्रेण कर्मणा ॥ ३ ॥ आनर्तान् कालकूटांश्च कुलिन्दांश्च विजित्य सः। सुमण्डलञ्चावजितं कृतवान् सहसैनिकम् ॥ ४ ॥ स तेन सहितो राजन् सव्यसाची परन्तपः। विजिग्ये शाकलं द्वीपं प्रतिविन्ध्यञ्च पार्थिवम् ॥ ५ ॥ शाकलद्वीपवासाश्च सप्तद्वीपेषु ये नृपाः। अर्जुनस्य च सैन्यैस्तैर्विग्रहस्तुमुलोऽभवत् ॥ ६ ॥ स तानपि महेष्वासान् विजिग्ये भरतर्षभ। तैरेव सहितः सर्वैः प्राग्ज्योतिषमुपाद्रवत् ॥ ७ ॥ तत्र राजा महानासीद्भगदत्तो विशाम्पते। तेनासीत् सुमहद्युद्धं पाण्डवस्य महात्मनः ॥ ८ ॥

स किरातैश्च चीनैश्च वृतः प्राग्ज्योतिषोऽभवत् । अन्यैश्च बहुभिर्योधैः सागरानूपवासिभिः ॥ ९ ॥ ततः स दिवसानष्टौ योधयित्वा धनञ्जयम् । प्रहसन्नब्रवीद्राजा संग्रामे विगतक्लमम् ॥ १० ॥ उपपन्नं महाबाहो त्वयि पाण्डवनन्दन । पाकशासनदायादे वीर्य्यमाहवशोभिनि ॥ ११ ॥ अहं सखा महेन्द्रस्य शक्रादनवरो रणे । न शक्ष्यामि च ते तात स्थातुं प्रमुखतो युधि ॥ १२ ॥ त्वमीप्सितं पाण्डवेय ब्रूहि किं करवाणि ते । यद्वक्ष्यसि महाबाहो तत् करिष्यामि पुत्रक ॥ १३ ॥

अर्ज्जुन उवाच । कुरूणामृषभो राजा धर्मपुत्रो युधिष्ठिरः । धर्मज्ञः सत्यसन्धश्च यज्वा विपुलदक्षिणः । तस्य पार्थिवतामीप्से करस्तस्मै प्रदीयताम् ॥ १४ ॥ भवान् पितृसखा चैव प्रीयमाणो मयापि च । ततो नाज्ञापयामि त्वां प्रीतिपूर्वं प्रदीयताम् ॥ १५ ॥

भगदत्त उवाच । कुन्तीमातर्यथा मे त्वं तथा राजा युधिष्ठिरः । सर्वमेतत् करिष्यामि किञ्चान्यत् करवाणि ते ॥ १६ ॥

इति सभापर्वणि दिग्विजयपर्वणि भगदत्तजये
षड्विंशोऽध्यायः ॥ २६ ॥

वैशम्पायन उवाच । एवमुक्तः प्रत्युवाच भगदत्तं धनञ्जयः । अनेनैव कृतं सर्वं भविष्यत्यनुजानता ॥ १ ॥ तं विजित्य महाबाहुः कुन्तीपुत्रो धनञ्जयः । प्रययावुत्तरां तस्माद्दिशं धनदपालिताम् ॥ २ ॥ अन्तर्गिरिञ्च कौन्तेय तथैव च वर्हिर्गिरिम् । तथैवोपगिरिञ्चैव विजिग्ये पुरुषर्षभः ॥ ३ ॥ विजित्य पर्वतान् सर्वान् ये च तत्र नराधिपाः । तान्वशे स्थापयित्वा स धनान्यादाय सर्वशः ॥ ४ ॥ तैरेव सहितः सर्वैरनुरज्य च तान्नृपान् । उलूकवासिनं राजन् वृहन्तमुपजग्मिवान् ॥ ५ ॥ मृदङ्गवरनादेन

रथनेमिनिनादेन च । हस्तिनाञ्च निनादेन कम्पयन्वसुधामिमाम् ॥ ६ ॥ ततो वृन्दानुचरितो बलेन चतुरङ्गिणा । निष्क्रम्य नगरात्तस्माद्योधयामास फाल्गुनम् ॥ ७ ॥ सुमहान् सन्निपातोऽभूद्धनञ्जयबृहन्तयोः । न शशाक बृहन्तस्तु सोढुं पाण्डवविक्रमम् ॥ ८ ॥ सोऽविषह्यतमं मत्वा कौन्तेयं पर्वतेश्वरः । उपावर्त्तत दुर्द्धर्षो धनान्यादाय सर्वशः ॥ ९ ॥ स तद्राज्यमवस्थाप्य उलूकसहितो ययौ । सेनाविन्दुमथो राजन्राज्यादाशु समाक्षिपत् ॥ १० ॥ मोदापुरं वामदेवं सुदामानं सुसंकुलम् । उलूकानुत्तरांश्चैव तांश्च राज्ञः समानयत् ॥ ११ ॥ तत्रस्थः पुरुषैरेव धर्मराजस्य शासनात् । किरीटी जितवान् राजन्देशान् पञ्चगणांस्ततः ॥ १२ ॥ स देवप्रस्थमासाद्य सेनाविन्दोः पुरं प्रति । बलेन चतुरङ्गेण निवेशमकरोत् प्रभुः ॥ १३ ॥ स तैः परिवृतः सर्वैर्विष्वगश्वं नराधिपम् । अभ्यगच्छन्महातेजाः पौरवं पुरुषर्षभम् ॥ १४ ॥ विजित्य चाहवे शूरान् पार्वतीयान्महारथान् । जिगाय सेनया राजन् पुरं पौरवरक्षितम् ॥ १५ ॥ पौरवं युधि निर्जित्य दस्यून् पर्वतवासिनः । गणानुत्सवसङ्केतानजयत् सप्त पाण्डवः ॥ १६ ॥ ततः काश्मीरकान् वीरान् क्षत्रियान् क्षत्रियर्षभः । व्यजयल्लोहितञ्चैव मण्डलैर्दशभिः सह ॥ १७ ॥ ततस्त्रिगर्त्ताः कौन्तेयं दार्वाः कोकनदास्तथा । क्षत्रिया बहवो राजन्नुपावर्त्तन्त सर्वशः ॥ १८ ॥ अभिसारीं ततो रम्यां विजिग्ये कुरुनन्दनः । उरगावासिनञ्चैव रोचमानं रणेऽजयत् ॥ १९ ॥ ततः सिंहपुरं रम्यं चित्रायुधसुरक्षितम् । प्राधमद्बलमास्थाय पाकशासनिराहवे ॥ २० ॥ ततः सुह्मान् सुमालांश्च किरीटी पाण्डवर्षभः । सहितः सर्वसैन्येन प्रामथत् कुरुनन्दनः ॥ २१ ॥ ततः परमविक्रान्तो बाह्लीकान् पाकशासनिः । महता परिमर्देन वशे चक्रे दुरासदान् ॥ २२ ॥ गृहीत्वा तु बलं सारं

महात्मानः पाण्डुनन्दनः । दरदान् सह काम्बोजैरजयत् पाक-
शासनिः ॥ २३ ॥ प्रागुत्तरां दिशं ये च वसन्त्याश्रित्य दस्यवः ।
निवसन्ति वने ये च तान् सर्वानजयत् प्रभुः ॥ २४ ॥ लोहान्
परमकाम्बोजानृषिकानुत्तरानपि । सहितांस्तान्महाराज व्यज-
यत् पाकशासनिः ॥ २५ ॥ ऋषिकेष्वपि संग्रामो बभूवातिभय-
ङ्करः । तारकामयसङ्काशः परस्त्वृषिकपार्थयोः ॥ २६ ॥ स विजित्य
ततो राजन्नृषिकान् रणमूर्द्धनि । शुकोदरसमांस्तत्र हयानष्टौ
समानयत् ॥ २७ ॥ मयूरसदृशानन्यानुत्तरानपरानपि । जव-
नानाशुगांश्चैव करार्थं समुपानयत् ॥ २८ ॥ स विनिर्जित्य संग्रामे
हिमवन्तं सनिष्कुटम् । श्वेतपर्वतमासाद्य न्यविशत् पुरुषर्षभः ॥२९॥

इति सभापर्वणि दिग्विजयपर्वणि नानादेशजये
सप्तविंशोऽध्यायः ॥ २७ ॥

वैशम्पायन उवाच । स श्वेतपर्वतं वीरः समतिक्रम्य वीर्य्य-
वान् । देशं किम्पुरुषावासं द्रुमपुत्रेण रक्षितम् ॥ १ ॥ महता
सन्निपातेन क्षत्रियान्तकरेण ह । अजयत् पाण्डवश्रेष्ठः करे
चैनं न्यवेशयत् ॥ २ ॥ तं जित्वा हाटकं नाम देशं गुह्यकरक्षि-
तम् । पाकशासनिरव्यग्रः सहसैन्यः समासदत् ॥ ३ ॥ तांस्तु
सान्त्वेन निर्जित्य मानसं सर उत्तमम् । ऋषिकुल्यास्तथा सर्वा
ददर्श कुरुनन्दनः ॥ ४ ॥ सरो मानसमासाद्य हाटकानभितः
प्रभुः । गन्धर्वरक्षितं देशमजयत् पाण्डवस्ततः ॥५॥ तत्र तित्तिरि-
कल्माषान् मण्डूकाख्यान् हयोत्तमान् । लेभे स करमत्यन्तं
गन्धर्वनगरात्तदा ॥ ६ ॥ उत्तरं हरिवर्षन्तु स समासाद्य पाण्डवः ।
इयेष जेतुं तं देशं पाकशासननन्दनः ॥ ७ ॥ तत एनं महा-
वीर्य्या महाकाया महाबलाः । द्वारपालाः समासाद्य हृष्टा वचन-

मब्रुवन् ॥ ८ ॥ पार्थ नेदं त्वया शक्यं पुरं जेतुं कथञ्चन। उपावर्त्तस्व कल्याण पर्य्याप्तमिदमच्युत ॥ ९ ॥ इदं पुरं यः प्रविशेद्ध्रुवं न स भवेन्नरः। प्रीयामहे त्वया वीर पर्य्याप्तो विजयस्तव ॥ १० ॥ न चात्र किञ्चिज्जेतव्यमर्ज्जुनात्र प्रदृश्यते। उत्तराः कुरवो ह्येते नात्र युद्धं प्रवर्त्तते ॥ ११ ॥ प्रविष्टोऽपि हि कौन्तेय नेह द्रक्ष्यसि किञ्चन। न हि मानुषदेहेन शक्यमत्राभिवीक्षितुम् ॥ १२ ॥ अथेह पुरुषव्याघ्र किञ्चिदन्यच्चिकीर्षसि। तत् प्रब्रूहि करिष्यामो वचनात्तव भारत ॥ १३ ॥ ततस्तानब्रवीद्राजन्नर्ज्जुनः प्रहसन्निव। पार्थिवत्वं चिकीर्षामि धर्मराजस्य धीमतः ॥ १४ ॥ न प्रवेक्ष्यामि वो देशं विरुद्धं यदि मानुषैः। युधिष्ठिराय यत् किञ्चित् करपण्यं प्रदीयताम् ॥ १५ ॥ ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च। क्षौमाजिनानि दिव्यानि तस्य ते प्रददुः करम् ॥ १६ ॥ एवं स पुरुषव्याघ्रो विजित्य दिशमुत्तराम्। संग्रामान् सुबहून् कृत्वा क्षत्रियैर्दस्युभिस्तथा ॥ १७ ॥ स विनिर्जित्य राज्ञस्तान् करे च विनिवेश्य तु। धनान्यादाय सर्वेभ्यो रत्नानि विविधानि च ॥ १८ ॥ हयांस्तित्तिरिकल्माषान् शुकपत्रनिभानपि। मयूरसदृशानन्यान् सर्वाननिलरंहसः ॥ १९ ॥ वृतः सुमहता राजन् बलेन चतुरङ्गिणा। आजगाम पुनर्वीरः शक्रप्रस्थं पुरोत्तमम् ॥ २० ॥ धर्मराजाय तत् पार्थो धनं सर्वं सवाहनम्। न्यवेदयदनुज्ञातस्तेन राज्ञा गृहान् ययौ ॥ २१ ॥

इति सभापर्वणि दिग्विजयपर्वणि अर्जुनोत्तरदिग्विजये अष्टाविंशोऽध्यायः ॥ २८ ॥

वैशम्पायन उवाच। एतस्मिन्नेव काले तु भीमसेनोऽपि वीर्य्यवान्। धर्मराजमनुज्ञाप्य ययौ प्राचीं दिशं प्रति ॥ १ ॥

महता बलचक्रेण परराष्ट्रावमर्द्दिना। हस्त्यश्वरथपूर्णेन दंशितेन प्रतापवान् ॥ २ ॥ ततो भरतशार्दूलो द्विषच्छोकविवर्द्धनः। स गत्वा नरशार्दूलः पाञ्चालानां पुरं महत् ॥ ३ ॥ पाञ्चालान्विविधोपायैः सान्त्वयामास पाण्डवः। ततः स गण्डकान् शूरो विदेहान् भरतर्षभः ॥ ४ ॥ विजित्याल्पेन कालेन दशार्णानजयत् प्रभुः। तत्र दाशार्णको राजा सुधर्मा लोमहर्षणम् ॥ ५ ॥ कृतवान् भीमसेनेन महद्युद्धं निरायुधम्। भीमसेनस्तु तद्दृष्ट्वा तस्य कर्म्म महात्मनः ॥ ६ ॥ अधिसेनापतिं चक्रे सुधर्माणं महाबलम्। ततः प्राचीं दिशं भीमो ययौ भीमपराक्रमः ॥ ७ ॥ सैन्येन महता राजन् कम्पयन्निव मेदिनीम्। सोऽश्वमेधेश्वरं राजन् रोचमानं सहानुगम् ॥ ८ ॥ जिगाय समरे वीरो बलेन बलिनाम्वरः। स तं निर्जित्य कौन्तेयो नातितीव्रेण कर्म्मणा ॥ ९ ॥ पूर्वदेशं महावीर्य्यो विजिग्ये कुरुनन्दनः। ततो दक्षिणमागम्य पुलिन्दनगरं महत् ॥ १० ॥ सुकुमारं वशे चक्रे सुमित्रञ्च नराधिपम्। ततस्तु धर्म्मराजस्य शासनाद्भरतर्षभ। शिशुपालं महावीर्य्यमभ्यगाज्जनमेजय ॥ ११ ॥ चेदिराजोऽपि तच्छ्रुत्वा पाण्डवस्य चिकीर्षितम्। उपनिष्क्रम्य नगरात् प्रत्यगृह्णात् परन्तपः ॥ १२ ॥ तौ समेत्य महाराज कुरुचेदिवृषौ तदा। उभयोरात्मकुलयोः कौशल्यं पर्य्यपृच्छताम् ॥ १३ ॥ ततो निवेद्य तद्राष्ट्रं चेदिराजो विशाम्पते। उवाच भीमं प्रहसन् किमिदं कुरुषेऽनघ ॥ १४ ॥ तस्य भीमस्तदाचख्यौ धर्म्मराजचिकीर्षितम्। स च तं प्रतिगृह्यैव तथा चक्रे नराधिपः ॥ १५ ॥ ततो भीमस्तत्र राजन्नुषित्वा त्रिदशक्षपाः। सत्कृतः शिशुपालेन ययौ सबलवाहनः ॥ १६ ॥

इति सभापर्व्वणि दिग्विजयपर्व्वणि प्राचीजये ऊनत्रिंशोऽध्यायः ॥ २९ ॥

---

वैशम्पायन उवाच। ततः कुमारविषये श्रेणिमन्तमथा-
जयत्। कोशलाधिपतिञ्चैव बृहद्बलमरिन्दमः॥ १ ॥ अयो-
ध्यायान्तु धर्म्मज्ञं दीर्घयज्ञं महाबलम्। अजयत् पाण्डवश्रेष्ठो
नातितीव्रेण कर्म्मणा॥ २ ॥ ततो गोपालकच्छञ्च सोत्तरानपि कोश-
लान्। मल्लानामधिपञ्चैव पार्थिवञ्चाजयत् प्रभुः॥ ३ ॥ ततो
हिमवतः पार्श्वं समभ्येत्य जलोद्भवम्। सर्व्वमल्पेन कालेन देशं
चक्रे वशं बली॥ ४ ॥ एवं बहुविधान् देशान् विजित्य भरत-
र्षभः। भल्लाटमभितो जिग्ये शुक्तिमन्तञ्च पर्व्वतम्॥ ५ ॥
पाण्डवः सुमहावीर्य्यो बलेन बलिनां वरः। स काशिराजं समरे
सुबाहुमनिवर्त्तिनम्॥ ६ ॥ वशे चक्रे महाबाहुर्भीमो भीम-
पराक्रमः। ततः सुपार्श्वमभितस्तथा राजपतिं क्रथम्॥ ७ ॥
युध्यमानं बलात् सङ्ख्ये विजिग्ये पाण्डवर्षभः। ततो मत्स्या-
न्महातेजा मलदांश्च महाबलान्॥ ८ ॥ अनघानभयांश्चैव पशु-
भूमिञ्च सर्व्वशः। निवृत्य च महाबाहुर्मदधारं महीधरम्॥ ९ ॥
सोमधेयांश्च निर्जित्य प्रययावुत्तरामुखः। वत्सभूमिञ्च कौन्तेयो
विजिग्ये बलवान् बलात्॥ १० ॥ भर्गाणामधिपञ्चैव निषादा-
धिपतिं तथा। विजिग्ये भूमिपालांश्च मणिमत्प्रमुखान् बहून्
॥ ११ ॥ ततो दक्षिणमल्लांश्च भोगवन्तञ्च पर्व्वतम्। तरसैवा-
जयद्भीमो नातितीव्रेण कर्म्मणा॥ १२ ॥ शर्म्मकान् वर्म्मकांश्चैव
व्यजयत् सान्त्वपूर्व्वकम्। वैदेहकञ्च राजानं जनकं जगतीपतिम्
॥ १३ ॥ विजिग्ये पुरुषव्याघ्रो नातितीव्रेण कर्म्मणा। शकांश्च
बर्व्वरांश्चैव अजयच्छद्मपूर्व्वकम्॥ १४ ॥ वैदेहस्थस्तु कौन्तेय इन्द्र-
पर्व्वतमन्तिकात्। किरातानामधिपतीनजयत् सप्त पाण्डवः॥ १५ ॥
ततः सुह्मान् प्रसुह्मांश्च सपक्षानपि वीर्य्यवान्। विजित्य युधि
कौन्तेयो मागधानभ्यधाद्बली॥ १६ ॥ दण्डञ्च दण्डधारञ्च
विजित्य पृथिवीपतीन्। तैरेव सहितः सर्व्वैर्गिरिव्रजमुपाद्रवत्

॥ १७ ॥ आरावन्तिं सान्त्वयित्वा करे च विनिवेश्य च । तैरेव सहितः सर्वैः कर्णमभ्यद्रवद्वली ॥ १८ ॥ स कम्पयन्निव महीं बलेन चतुरङ्गिणा । युयुधे पाण्डवश्रेष्ठः कर्णेनामित्रघातिना ॥ १९ ॥ स कर्णं युधि निर्जित्य वशे कृत्वा च भारत । ततो विजिग्ये बलवान् राज्ञः पर्वतवासिनः ॥ २० ॥ अथ मोदागिरौ चैव राजानं बलवत्तरम् । पाण्डवो बाहुवीर्य्येण निजघान महामृधे ॥ २१ ॥ ततः पुण्ड्राधिपं वीरं वासुदेवं महाबलम् । कौशिकीकच्छनिलयं राजानञ्च महौजसम् ॥ २२ ॥ उभौ बलभृतौ वीरावुभौ तीव्रपराक्रमौ । निर्जित्याजौ महाराज वङ्गराजमुपाद्रवत् ॥ २३ ॥ समुद्रसेनं निर्जित्य चन्द्रसेनञ्च पार्थिवम् । ताम्रलिप्तञ्च राजानं कर्वटाधिपतिं तथा ॥ २४ ॥ सुह्मानामधिपञ्चैव ये च सागरवासिनः । सर्वान् म्लेच्छगणांश्चैव विजिग्ये भरतर्षभ ॥ २५ ॥ एवं बहुविधान् देशान् विजित्य पवनात्मजः । वसु तेभ्य उपादाय लौहित्यमगमद्बली ॥ २६ ॥ स सर्वान् म्लेच्छनृपतीन् सागरानूपवासिनः । करमाहारयामास रत्नानि विविधानि च ॥ २७ ॥ चन्दनागुरुवस्त्राणि मणिमौक्तिककम्बलम् । काञ्चनं रजतञ्चैव विद्रुमञ्च महाधनम् ॥ २८ ॥ ते कोटिशतसङ्ख्येन कौन्तेयं महता तदा । अभ्यवर्षन्महात्मानं धनवर्षेण पाण्डवम् ॥ २९ ॥ इन्द्रप्रस्थमुपागम्य भीमो भीमपराक्रमः । निवेदयामास तदा धर्मराजाय तद्धनम् ॥ ३० ॥

इति सभापर्वणि दिग्विजयपर्वणि भीमदिग्विजये त्रिंशोऽध्यायः ॥ ३० ॥

---

वैशम्पायन उवाच । तथैव सहदेवोऽपि धर्मराजेन पूजितः ।
महत्या सेनया राजन् प्रययौ दक्षिणां दिशम् ॥ १ ॥ स शूर-
सेनान् कार्त्स्न्येन पूर्वमेवाजयत् प्रभुः । मत्स्यराजञ्च कौरव्यो
वशे चक्रे बलाद्बली ॥ २ ॥ अधिराजाधिपञ्चैव दन्तवक्रं महा-
बलम् । जिगाय करदञ्चैव कृत्वा राज्ये न्यवेशयत् ॥ ३ ॥ सुकु-
मारं वशे चक्रे सुमित्रञ्च नराधिपम् । तथैवापरमत्स्यांश्च व्यज-
यत् स पटच्चरान् ॥ ४ ॥ निषादभूमिं गोशृङ्गं पर्वतं प्रवरं तथा ।
तरसैवाजयद्धीमान् श्रेणिमन्तञ्च पार्थिवम् ॥ ५ ॥ नवराष्ट्रञ्च
निर्जित्य कुन्तिभोजमुपाद्रवत् । प्रीतिपूर्वञ्च तस्यासौ प्रति-
जग्राह शासनम् ॥ ६ ॥ ततश्चर्मण्वतीकूले जम्भकस्यात्मजं नृपम् ।
ददर्श वासुदेवेन शेषितं पूर्ववैरिणा ॥ ७ ॥ चक्रे तेन स संग्रामं
सहदेवेन भारत । स तमाजौ विनिर्जित्य दक्षिणाभिमुखो
ययौ ॥ ८ ॥ सेकानपरसेकांश्च व्यजयत् सुमहाबलः । करं तेभ्य
उपादाय रत्नानि विविधानि च ॥ ९ ॥ ततस्तेनैव सहितो
नर्मदामभितो ययौ । विन्दानुविन्दावावन्त्यौ सैन्येन महता वृतौ
॥ १० ॥ जिगाय समरे वीरावाश्विनेयः प्रतापवान् । ततो रत्ना-
न्युपादाय पुरं भोजकटं ययौ ॥ ११ ॥ तत्र युद्धमभूद्राजन्
दिवसद्वयमच्युत । स विजित्य दुराधर्षं भीष्मकं माद्रिनन्दनः
॥ १२ ॥ कोशलाधिपतिञ्चैव तथा वेण्वातटाधिपम् । कान्तार-
कांश्च समरे तथा प्राक्कोशलान्नृपान् ॥ १३ ॥ नाटकेयांश्च समरे
तथा हेरम्बकान् युधि । मारुधञ्च विनिर्जित्य मुञ्जग्राममथो
बलात् ॥ १४ ॥ नाचीनानर्बुकांश्चैव राजानश्च महाबलः । तां-
स्तानाटविकान् सर्वानजयत् पाण्डुनन्दनः ॥ १५ ॥ वाताधिपञ्च
नृपतिं वशे चक्रे महाबलः । पुलिन्दांश्च रणे जित्वा ययौ दक्षि-
णतः पुरः ॥ १६ ॥ युयुधे पाण्ड्यराजेन दिवसं नकुलानुजः ।
तं जित्वा स महाबाहुः प्रययौ दक्षिणापथम् ॥ १७ ॥ गुहा-

नासादयामास किष्किन्धां लोकविश्रुताम्। तत्र वानरराजाभ्यां
मैन्देन द्विविदेन च। युयुधे दिवसान् सप्त न च तौ विकृतिं
गतौ ॥ १८ ॥ ततस्तुष्टौ महात्मानौ सहदेवाय वानरौ। ऊचतु-
श्चैव संहृष्टौ प्रीतिपूर्वमिदं वचः ॥ १९ ॥ गच्छ पाण्डवशार्दूल
रत्नान्यादाय सर्वशः। *अविघ्नमस्तु कार्याय धर्मराजाय धीमते
॥ २० ॥ ततो रत्नान्युपादाय पुरीं माहिष्मतीं ययौ। तत्र
नीलेन राज्ञा स चक्रे युद्धं नरर्षभः ॥ २१ ॥ पाण्डवः परवीरघ्नः
सहदेवः प्रतापवान्। ततोऽस्य सुमहद्युद्धमासीद्भीरुभयङ्करम्
॥ २२ ॥ सैन्यक्षयकरञ्चैव प्राणानां संशयावहम्। चक्रे तस्य हि
साहाय्यं भगवान् हव्यवाहनः ॥ २३ ॥ ततो रथा हया नागाः
पुरुषाः कवचानि च। प्रदीप्तानि व्यदृश्यन्त सहदेवबले तदा
॥ २४ ॥ ततः सुसम्भ्रान्तमनाः बभूव कुरुनन्दनः। नोत्तरं प्रति-
वक्तुञ्च शक्तोऽभूज्जनमेजय ॥ २५ ॥

जनमेजय उवाच। किमर्थं भगवान् वह्निः प्रत्यमित्रोऽभव-
द्युधि। सहदेवस्य यज्ञार्थं घटमानस्य वै द्विज ॥ २६ ॥

वैशम्पायन उवाच। तत्र माहिष्मतीवासी भगवान् हव्य-
वाहनः। श्रूयते हि गृहीतो वै पुरस्तात् पारदारिकः ॥ २७ ॥
नीलस्य राज्ञो दुहिता बभूवातीव शोभना। साग्निहोत्रमुपा-
तिष्ठद्बोधनाय पितुः सदा ॥ २८ ॥ व्यजनैर्धूयमानोऽपि तावत्
प्रज्वलते न सः। यावच्चारुपुटोष्ठेन वायुना न विधूयते ॥ २९ ॥
ततः स भगवानग्निश्चकमे तां सुदर्शनाम्। नीलस्य राज्ञः सर्वे-
षामुपनीतश्च सोऽभवत् ॥ ३० ॥ ततो ब्राह्मणरूपेण रममाणो
यदृच्छया। चकमे तां वरारोहां कन्यामुत्पललोचनाम् ॥ ३१ ॥
तन्तु राजा यथाशास्त्रमशासद्धार्मिकस्तदा। प्रजज्वाल ततः
कोपाद्भगवान् हव्यवाहनः ॥ ३२ ॥ तं दृष्ट्वा विस्मितो राजा
जगाम शिरसावनिम्। ततः कालेन तां कन्यां तथैव हि तदा

नृप: ॥ ३३ ॥ प्रहृष्टो विप्ररूपाय वह्नये शिरसा नत: । प्रतिगृह्य च तां सुभ्रूं नीलराजः सुतां तदा ॥ ३४ ॥ चक्रे प्रसादं भगवांस्तस्य राज्ञो विभावसु: । वरेण च्छन्दयामास तं नृपं स्विष्टकृत्तम: ॥ ३५ ॥ अभयञ्च स जग्राह स्वसैन्ये वै महीपति: । तत: प्रभृति ये केचिदज्ञानात्तां पुरीं नृपा: ॥ ३६ ॥ जिगीषन्ति बलाद्राजन् ते दह्यन्ते स्म वह्निना । तस्यां पुर्य्यां तदा चैव माहिष्मत्यां कुरूद्वह ॥३७॥ बभूवुरनतिग्राह्या योषित: च्छन्दत: किल । एवमग्निर्वरं प्रादात् स्त्रीणामप्रतिवारणे ॥३८॥ स्वैरिण्यस्तत्र नार्य्यो हि यथेष्टं विचरन्त्युत । वर्जयन्ति च राजानस्तत् पुरं भरतर्षभ ॥३९॥ भयादग्नेर्महाराज तदाप्रभृति सर्वदा । सहदेवस्तु धर्मात्मा सैन्यं दृष्ट्वा भयार्दितम् ॥ ४० ॥ परीतमग्निना राजन् नाकम्पत यथाचल: । उपस्पृश्य शुचिर्भूत्वा सोऽब्रवीत् पावकं तत: ॥४१॥

सहदेव उवाच । त्वदर्थोऽयं समारम्भ: कृष्णवर्त्मन्नमोऽस्तु ते । मुखं त्वमसि देवानां यज्ञस्त्वमसि पावक ॥ ४२ ॥ पावनात् पावकश्चासि वहनाद्धव्यवाहन: । वेदास्त्वदर्थं जाता वै जातवेदास्ततो ह्यसि ॥ ४३ ॥ चित्रभानु: सुरेशश्च अनलस्त्वं विभावसो । स्वर्गद्वारस्पृशश्चासि हुताशो ज्वलन: शिखी ॥ ४४ ॥ वैश्वानरस्त्वं पिङ्गेश: प्लवङ्गो भूरितेजस: । कुमारसूस्त्वं भगवान् रुद्रगर्भो हिरण्यकृत् ॥ ४५ ॥ अग्निर्ददातु मे तेजो वायु: प्राणं ददातु मे । पृथिवी बलमादध्याच्छिवञ्चापो दिशन्तु मे ॥ ४६ ॥ अपांगर्भ महासत्त्व जातवेद: सुरेश्वर । देवानां मुखमग्ने त्वं सत्येन विपुनीहि माम् ॥ ४७ ॥ ऋषिभिर्ब्राह्मणैश्चैव देवतैरसुरैरपि । नित्यं सुहुतयज्ञेषु सत्येन विपुनीहि माम् ॥ ४८ ॥ धूमकेतु: शिखी च त्वं पापहानिलसम्भव: । सर्वप्राणिषु नित्यस्थ: सत्येन विपुनीहि माम् ॥ ४९ ॥ एवं स्तुतोऽसि भगवन् प्रीतेन शुचिना मया । तुष्टिं पुष्टिं श्रुतिं चैव प्रीतिं चाग्ने प्रयच्छ मे ॥ ५० ॥

वैशम्पायन उवाच । इत्येवं मन्त्रमाग्नेयं पठन् यो जुहुयाद्विभुम् । ऋद्धिमान् सततं दान्तः सर्व्वपापैः प्रमुच्यते ॥ ५१ ॥

सहदेव उवाच । यज्ञविघ्नमिमं कर्त्तुं नार्हस्त्वं हव्यवाहन । एवमुक्त्वा तु माद्रेयः कुशैरास्तीर्य्य मेदिनीम् ॥ ५२ ॥ विधिवत् पुरुषव्याघ्रः पावकं प्रत्युपाविशत् । प्रमुखे तस्य सैन्यस्य भीतोद्विग्नस्य भारत ॥ ५३ ॥ न चैनमत्यगाद्वह्निर्वेलामिव महोदधिः । तमुपेत्य शनैर्वह्निरुवाच कुरुनन्दनम् ॥ ५४ ॥ सहदेवं नृणां देवं सान्त्वपूर्व्वमिदं वचः । उत्तिष्ठोत्तिष्ठ कौरव्य जिज्ञासेयं मया कृता ॥ ५५ ॥ वेद्मि सर्व्वमभिप्रायं तव धर्म्मसुतस्य च । मया तु रक्षितव्येयं पुरी भरतसत्तम ॥ ५६ ॥ यावद्राज्ञो हि नीलस्य कुले वंशधरा इति । ईप्सितन्तु करिष्यामि मनसस्तव पाण्डव ॥ ५७ ॥ तत उत्थाय हृष्टात्मा प्राञ्जलिः शिरसानतः । पूजयामास माद्रेयः पावकं भरतर्षभ ॥ ५८ ॥ पावके विनिवृत्ते तु नीलो राजाभ्यगात्तदा । पावकस्याज्ञया चैनमर्च्चयामास पार्थिवः ॥ ५९ ॥ सत्कारेण नरव्याघ्रं सहदेवं युधाम्पतिम् । प्रतिगृह्य च तां पूजां करे च विनिवेश्य च । माद्रीसुतस्ततः प्रायाद्विजयी दक्षिणां दिशम् ॥ ६० ॥ त्रैपुरं स्ववशे कृत्वा राजानममितौजसम् । निजग्राह महाबाहुस्तरसा पौरवेश्वरम् ॥ ६१ ॥ आकृतिं कौशिकाचार्य्यं यत्नेन महता ततः । वशे चक्रे महाबाहुः सुराष्ट्राधिपतिं तदा ॥ ६२ ॥ सुराष्ट्रविषयस्थश्च प्रेषयामास रुक्मिणे । राज्ञे भोजकटस्थाय महामात्राय धीमते ॥ ६३ ॥ भीष्मकाय स धर्म्मात्मा साक्षादिन्द्रसखाय वै । स चास्य प्रतिजग्राहससुतः शासनं तदा ॥ ६४ ॥ प्रीतिपूर्व्वं महाराज वासुदेवमवेक्ष्य च । ततः स रत्नान्यादाय पुनः प्रायाद्युधां पतिः ॥ ६५ ॥ ततः शूर्पारकञ्चैव तालाकटमथापि च । वशे चक्रे महातेजा दण्डकांश्च महाबलः ॥ ६६ ॥ सागरद्वीप-

वाटांश्च नृपतीन् म्लेच्छयोनिजान्। निषादान् पुरुषादांश्च कर्णप्रावरणानपि॥ ६७॥ ये च कालमुखा नाम नरराक्षसयोनयः। कृत्स्नं कोलगिरिञ्चैव सुरभीपट्टनं तथा॥ ६८॥ द्वीपं ताम्राह्वयञ्चैव पर्वतं रामकं तथा। तिमिङ्गिलञ्च स नृपं वशे कृत्वा महामतिः॥ ६९॥ एकपादांश्च पुरुषान् केरलान् वनवासिनः। नगरीं सञ्जयन्तीञ्च पाषण्डं करहाटकम्॥ ७०॥ दूतैरेव वशे चक्रे करञ्चैनानदापयत्। पाण्ड्यांश्च द्रविडांश्चैव सहितांश्चोड्रकेरलैः॥ ७१॥ अन्ध्रांस्तालवनांश्चैव कलिङ्गानुष्ट्रकर्णिकान्। आटवीञ्च पुरीं रम्यां यवनानां पुरं तथा॥ ७२॥ दूतैरेव वशे चक्रे करं चैनानदापयत्। ततः कच्छगतो धीमान् दूतान् माद्रवतीसुतः॥ ७३॥ प्रेषयामास राजेन्द्र पौलस्त्याय महात्मने। विभीषणाय धर्मात्मा प्रीतिपूर्वमरिन्दमः॥ ७४॥ स चास्य प्रतिजग्राह शासनं प्रीतिपूर्वकम्। तच्च कालकृतं धीमानभ्यमन्यत स प्रभुः॥ ७५॥ ततः संप्रेषयामास रत्नानि विविधानि च। चन्दनागुरुकाष्ठानि दिव्यान्याभरणानि च॥ ७६॥ वासांसि च महार्हाणि मणींश्चैव महाधनान्। न्यवर्त्तत ततो धीमान् सहदेवः प्रतापवान्॥ ७७॥ एवं निर्जित्य तरसा सान्त्वेन विजयेन च। करदान् पार्थिवान् कृत्वा प्रत्यागच्छदरिन्दमः॥ ७८॥ धर्मराजाय तत्सर्वं निवेद्य भरतर्षभः। कृतकर्मा सुखं राजन्नुवास जनमेजय॥ ७९॥

इति सभापर्वणि दिग्विजयपर्वणि सहदेवदक्षिणदिग्विजये एकत्रिंशोऽध्यायः॥ ३१

वैशम्पायन उवाच। नकुलस्य तु वक्ष्यामि कर्माणि विजयं तथा। वासुदेवजितामाशां यथासावजयत् प्रभुः॥ १ ॥ निर्याय खाण्डवप्रस्थात् प्रतीचीमभितो दिशम्। उद्दिश्य मतिमान् प्रायान्महत्या सेनया सह॥ २ ॥ सिंहनादेन महता योधानां गर्जितेन च। रथनेमिनिनादैश्च कम्पयन् वसुधामिमाम्॥ ३ ॥ ततो बहुधनं रम्यं गवाढ्यं धनधान्यवत्। कार्त्तिकेयस्य दयितं रोहीतकमुपाद्रवत्॥ ४ ॥ तत्र युद्धं महच्चासीच्छूरैर्मत्तमयूरकैः। मरुभूमिं स कार्त्स्न्येन तथैव बहुधान्यकम्॥ ५ ॥ शैरीषकं महेच्छञ्च वशे चक्रे महाद्युतिः। आक्रोशञ्चैव राजर्षिं तेन युद्धमभून्महत्॥ ६ ॥ तान् दशार्णान् स जित्वा च प्रतस्थे पाण्डुनन्दनः। शिवींस्त्रिगर्त्तानम्बष्ठान् मालवान् पञ्च कर्पटान्॥ ७ ॥ तथा मध्यमकेयांश्च वाटधानान् द्विजानथ। पुनश्च परिवृत्याथ पुष्करारण्यवासिनः॥ ८ ॥ गणानुत्सवसङ्केतान् व्यजयत् पुरुषर्षभः। सिन्धुकूलाश्रिता ये च ग्रामणीया महाबलाः॥ ९ ॥ शूद्राभीरगणाश्चैव ये चाश्रित्य सरस्वतीम्। वर्त्तयन्ति च ये मत्स्यैर्ये च पर्वतवासिनः॥ १० ॥ कृत्स्नं पञ्चनदञ्चैव तथैवामरपर्वतम्। उत्तरज्योतिषञ्चैव तथा दिव्यकटं पुरम्॥ ११ ॥ द्वारपालञ्च तरसा वशे चक्रे महाद्युतिः। रामठान् हारहूणांश्च प्रतीच्याश्चैव ये नृपाः॥ १२ ॥ तान् सर्वान् स वशे चक्रे शासनादेव पाण्डवः। तत्रस्थः प्रेषयामास वासुदेवाय भारत॥ १३ ॥ स चास्य यादवैः सार्द्धं प्रतिजग्राह शासनम्। ततः शाकलमभ्येत्य मद्राणां पुटभेदनम्॥ १४ ॥ मातुलं प्रीतिपूर्वेण शल्यं चक्रे वशे बली। स तेन सत्कृतो राज्ञा सत्कारार्हो विशाम्पते॥ १५ ॥ रत्नानि भूरीण्यादाय सम्प्रतस्थे युधाम्पतिः। ततः सागरकुक्षिस्थान् म्लेच्छान् परमदारुणान्॥ १६ ॥ पह्लवान् बर्बरांश्चैव किरातान् यवनान् शकान्। ततो रत्नान्युपादाय वशे कृत्वा च

पार्थिवान् ॥ १७ ॥ अवशं तं कुरुश्रेष्ठो नकुलश्चित्रमार्गवित्।
करभाणां सहस्राणि कोषं तस्य महात्मनः ॥ १८ ॥ ऊहुर्दश
महाराज कृच्छ्रादिव महाधनम्। इन्द्रप्रस्थगतं वीरमभ्येत्य स
युधिष्ठिरम् ॥ १९ ॥ ततो माद्रीसुतः श्रीमान् धनं तस्मै न्यवे-
दयत्। एवं विजित्य नकुलो दिशं वरुणपालिताम्। प्रतीचीं
वासुदेवेन निर्जितां भरतर्षभः ॥ २० ॥

इति सभापर्वणि दिग्विजयपर्वणि नकुलप्रतीचीविजये
द्वात्रिंशोऽध्यायः समाप्तञ्च दिग्विजयपर्व ॥ ३२ ॥

---

## अथ राजसूयिकपर्व।

वैशम्पायन उवाच। रक्षणाद्धर्मराजस्य सत्यस्य परिपाल-
नात्। शत्रूणां क्षपणाच्चैव स्वकर्मनिरताः प्रजाः ॥ १ ॥ बलीनां
सम्यगादानाद्धर्मतश्चानुशासनात्। निकामवर्षी पर्जन्यः स्फीतो
जनपदोऽभवत् ॥ २ ॥ सर्वारम्भाः सुप्रवृत्ताः गोरक्षा कर्षणं
वणिक्। विशेषात् सर्वमेवैतत् सञ्जज्ञे राजकर्मणः ॥ ३ ॥
दस्युभ्यो वञ्चकेभ्यो वा राजन् प्रति परस्परम्। राजवल्लभतश्चैव
नाश्रूयन्त मृषा गिरः ॥ ४ ॥ अवर्षञ्चातिवर्षञ्च व्याधिपावकमूर्च्छ-
नम्। सर्वमेतत्तदा नासीद्धर्मनित्ये युधिष्ठिरे ॥ ५ ॥ प्रियं कर्त्तु-
मुपस्थातुं बलिकर्म स्वभावजम्। अभिहर्त्तुं नृपा जग्मुर्नान्यैः
कार्य्यैः कथञ्चन ॥ ६ ॥ धर्म्यैर्धनागमैस्तस्य ववृधे निचयो महान्।
कर्त्तुं यस्य न शक्येत क्षयो वर्षशतैरपि ॥ ७ ॥ स्वकोष्ठस्य परी-
माणं कोषस्य च महीपतिः। विज्ञाय राजा कौन्तेयो यज्ञायैव
मनो दधे ॥ ८ ॥ सुहृदश्चैव ये सर्वे पृथक् च सहिताब्रुवन्।
यज्ञकालस्तव विभो क्रियतामत्र साम्प्रतम् ॥ ९ ॥ अथैवं ब्रुवता-
मेवं तेषामभ्याययौ हरिः। ऋषिः पुराणो वेदात्मा दृश्यश्चैव

विजानताम् ॥ १० ॥ जगतस्तस्थुषां श्रेष्ठः प्रभवश्चाप्ययश्च ह ।
भूतभव्यभवन्नाथः केशवः केशिसूदनः ॥ ११ ॥ प्राकारः सर्व-
वृष्णीनां आपत्स्वभयदोऽरिहा । बलाधिकारे निक्षिप्य सम्य-
गानकदुन्दुभिम् ॥ १२ ॥ उच्चावचमुपादाय धर्मराजाय माधवः ।
धनौघं पुरुषव्याघ्रो बलेन महता वृतः ॥ १३ ॥ तं धनौघमपर्य्यन्तं
रत्नसागरमक्षयम् । नादयन् रथघोषेण प्रविवेश पुरोत्तमम् ॥ १४ ॥
पूर्णमापूरयंस्तेषां द्विषच्छोकावहोऽभवत् । असूर्य्यमिव सूर्य्येण
निवातमिव वायुना ॥ १५ ॥ कृष्णेन समुपेतेन जहृषे भारतं पुरम् ।
तं मुदाभिः समागम्य सत्कृत्य च यथाविधि ॥ १६ ॥ स पृष्ट्वा
कुशलञ्चैव सुखासीनं युधिष्ठिरः । धौम्यद्वैपायनमुखैर्ऋत्विग्भिः
पुरुषर्षभः । भीमार्जुनयमैश्चैव सहितः कृष्णमब्रवीत् ॥ १७ ॥

युधिष्ठिर उवाच । त्वत्कृते पृथिवी सर्वा मद्वशे कृष्ण
वर्त्तते । धनञ्च बहु वार्ष्णेय त्वत्प्रसादादुपार्जितम् ॥ १८ ॥
सोऽहमिच्छामि तत्सर्वं विधिवद्देवकीसुत । उपयोक्तुं द्विजाग्रेभ्यो
हव्यवाहे च माधव ॥ १९ ॥ तदहं यष्टुमिच्छामि दाशार्ह सहित-
स्त्वया । अनुजैश्च महाबाहो तदनुज्ञातुमर्हसि ॥ २० ॥ तद्दी-
क्षापय गोविन्द त्वमात्मानं महाभुज । त्वयीष्टवति दाशार्ह
विपाप्मा भविता ह्यहम् ॥ २१ ॥ मां वाप्यभ्यनुजानीहि सहैभि-
रनुजैर्विभो । अनुज्ञातस्त्वया कृष्ण प्राप्नुयां क्रतुमुत्तमम् ॥ २२ ॥

वैशम्पायन उवाच । तं कृष्णः प्रत्युवाचेदं वर्णयन् गुण-
विस्तरम् । त्वमेव राजशार्दूल सम्राडर्हो महाक्रतुम् ॥ २३ ॥
संप्राप्नुहि त्वया प्राप्ते कृतकृत्यास्ततो वयम् । यजस्वाभीप्सितं
यज्ञं मयि श्रेयस्यवस्थिते । नियुङ्क्ष्व त्वञ्च मां कृत्ये सर्वं
कर्त्तास्मि ते वचः ॥ २४ ॥

युधिष्ठिर उवाच । सफलः कृष्ण सङ्कल्पः सिद्धिश्च नियता
मम । यस्य मे त्वं हृषीकेश यथेप्सितमुपस्थितः ॥ २५ ॥

वैशम्पायन उवाच। अनुज्ञातस्तु कृष्णेन पाण्डवो भ्रातृभिः
सह। ईजितुं राजसूयेन साधनान्युपचक्रमे ॥ २६ ॥ ततस्त्वा-
ज्ञापयामास पाण्डवोऽरिनिबर्हणः। सहदेवं युधां श्रेष्ठं मन्त्रिण-
श्चैव सर्वशः ॥ २७ ॥ अस्मिन् क्रतौ यथोक्तानि यज्ञाङ्गानि द्विजा-
तिभिः। तथोपकरणं सर्वं मङ्गलानि च सर्वशः ॥ २८ ॥ अधि-
यज्ञांश्च सम्भारान् धौम्योक्तान् क्षिप्रमेव हि। समानयन्तु पुरुषा
यथायोगं यथाक्रमम् ॥ २९ ॥ इन्द्रसेनो विशोकश्च पूरुश्चार्जुन-
सारथिः। अन्नाद्याहरणे युक्ताः सन्तु मत्प्रियकाम्यया ॥ ३० ॥
सर्वकामाश्च कार्य्यन्तां रसगन्धसमन्विताः। मनोरथाः प्रीति-
करा द्विजानां कुरुसत्तम ॥ ३१ ॥ तद्वाक्यसमकालन्तु कृतं सर्वं
न्यवेदयत्। सहदेवो युधां श्रेष्ठो धर्मराजे युधिष्ठिरे ॥ ३२ ॥
ततो द्वैपायनो राजन्नृत्विजः समुपानयत्। वेदानिव महाभागान्
साक्षान्मूर्त्तिमतो द्विजान् ॥ ३३ ॥ स्वयं ब्रह्मत्वमकरोत्तस्य
सत्यवतीसुतः। धनञ्जयानामृषभः सुसामा सामगोऽभवत् ॥ ३४ ॥
याज्ञवल्क्यो बभूवाथ ब्रह्मिष्ठोऽध्वर्य्युसत्तमः। पैलो होता वसोः
पुत्रो धौम्येन सहितोऽभवत् ॥ ३५ ॥ एतेषां शिष्यवर्गाश्च पुत्राश्च
भरतर्षभ। बभूवुर्होत्रगाः सर्वे वेदवेदाङ्गपारगाः ॥ ३६ ॥ ते
वाचयित्वा पुण्याहमूहयित्वा च तं विधिम्। शास्त्रोक्तं पूजया-
मासुस्तद्देवयजनं महत् ॥ ३७ ॥ तत्र चक्रुरनुज्ञाता शरणा-
न्युत शिल्पिनः। गन्धवन्ति विशालानि वेश्मानीव दिवौकसाम्
॥ ३८ ॥ तत आज्ञापयामास स राजा राजसत्तमः। सहदेवं
तदा सद्यो मन्त्रिणं पुरुषर्षभः ॥ ३९ ॥ आमन्त्रणार्थं दूतांस्त्वं
प्रेषयस्वाशुगान् द्रुतम्। उपश्रुत्य वचो राज्ञः स दूतान् प्राहि-
णोत्तदा ॥ ४० ॥ आमन्त्रयध्वं राष्ट्रेषु ब्राह्मणान् भूमिपानथ।
विशश्च मान्यान् शूद्रांश्च सर्वानानयतेति च ॥ ४१ ॥

वैशम्पायन उवाच। समाज्ञप्तास्ततो दूताः पाण्डवेयस्य

शासनात्। आमन्त्रयांबभूवुश्च आनयंश्चापरान् नृप। तथापरानपि नरानात्मनः शीघ्रगामिनः ॥ ४२ ॥ ततस्ते तु यथाकालं कुन्तीपुत्रं युधिष्ठिरम्। दीक्षयाञ्चक्रिरे विप्रा राजसूयाय भारत ॥ ४३ ॥ दीक्षितः स तु धर्मात्मा धर्मराजो युधिष्ठिरः। जगाम यज्ञायतनं वृतो विप्रैः सहस्रशः ॥ ४४ ॥ भ्रातृभिर्ज्ञातिभिश्चैव सुहृद्भिः सचिवैः सह। क्षत्रियैश्च मनुष्येन्द्रैर्नानादेशसमागतैः ॥ ४५ ॥ अमात्यैश्च नरश्रेष्ठो धर्मो विग्रहवानिव। आजग्मुर्ब्राह्मणास्तत्र विषयेभ्यस्ततस्ततः ॥ ४६ ॥ सर्वविद्यासु निष्णाता वेदवेदाङ्गपारगाः। तेषामावसथांश्चक्रुर्धर्मराजस्य शासनात् ॥ ४७ ॥ बह्वन्नाच्छादनैर्युक्तान् सगणानां पृथक् पृथक्। सर्वर्त्तुगुणसम्पन्नान् शिल्पिनोऽथ सहस्रशः ॥ ४८ ॥ तेषु ते न्यवसन् राजन् ब्राह्मणा नृपसत्कृताः। कथयन्तः कथा बह्वीः पश्यन्तो नटनर्त्तकान् ॥ ४९ ॥ भुञ्जतां चैव विप्राणां वदतां च महास्वनः। अनिशं श्रूयते तत्र मुदितानां महात्मनाम् ॥ ५० ॥ दीयतां दीयतामेषां भुज्यतां भुज्यतामिति। एवम्प्रकाराः सञ्जल्पाः श्रूयन्ते स्मात्र नित्यशः ॥ ५१ ॥ गवां शतसहस्राणि शयनानाञ्च भारत। रुक्मस्य योषिताञ्चैव धर्मराजः पृथग्ददौ ॥ ५२ ॥ प्रावर्त्ततैवं यज्ञः स पाण्डवस्य महात्मनः। पृथिव्यामेकवीरस्य शक्रस्येव त्रिविष्टपे ॥ ५३ ॥ ततो युधिष्ठिरो राजा प्रेषयामास पाण्डवम्। नकुलं हास्तिनपुरं भीष्माय पुरुषर्षभः ॥ ५४ ॥ द्रोणाय धृतराष्ट्राय विदुराय कृपाय च। भ्रातृणाञ्चैव सर्वेषां येऽनुरक्ता युधिष्ठिरे ॥ ५५ ॥

इति सभापर्वणि राजसूयिकपर्वणि राजसूयदीक्षायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

———

वैशम्पायन उवाच। स गत्वा हास्तिनपुरं नकुलः समिति-
ञ्जयः। भीष्ममामन्त्रयाञ्चक्रे धृतराष्ट्रञ्च पाण्डवः ॥ १ ॥ सत्-
कृत्यामन्त्रितास्तेन आचार्य्यप्रमुखास्ततः। प्रययुः प्रीतमनसो
यज्ञं ब्रह्मपुरःसराः ॥ २ ॥ संश्रुत्य धर्मराजस्य यज्ञं यज्ञविद-
स्तदा। अन्ये च शतशस्तुष्टैर्मनोभिर्भरतर्षभ ॥ ३ ॥ द्रष्टुकामाः
सभाञ्चैव धर्मराजञ्च पाण्डवम्। दिग्भ्यः सर्वे समापेतुः क्षत्रिया-
स्तत्र भारत ॥ ४ ॥ समुपादाय रत्नानि विविधानि महान्ति च।
धृतराष्ट्रश्च भीष्मश्च विदुरश्च महामतिः ॥ ५ ॥ दुर्य्योधनपुरोगाश्च
भ्रातरः सर्व एव ते। गान्धारराजः सुबलः शकुनिश्च महाबलः
॥ ६ ॥ अचलो वृषकश्चैव कर्णश्च रथिनांवरः। तथा शल्यश्च
बलवान् बाह्लिकश्च महाबलः ॥ ७ ॥ सोमदत्तोऽथ कौरव्यो
भूरिर्भूरिश्रवाः शलः। अश्वत्थामा कृपो द्रोणः सैन्धवश्च जयद्रथः
॥ ८ ॥ यज्ञसेनः सपुत्रश्च शाल्वश्च वसुधाधिपः। प्राग्ज्योतिषश्च
नृपतिर्भगदत्तो महारथः ॥ ९ ॥ स तु सर्वैः सह म्लेच्छैः सागरा-
नूपवासिभिः। पार्वतीयाश्च राजानो राजा चैव बृहद्बलः ॥ १० ॥
पौण्ड्रको वासुदेवश्च वङ्गः कालिङ्गकस्तथा। आकर्षः कुन्तलश्चैव
मालवाश्चान्ध्रकास्तथा ॥ ११ ॥ द्राविडाः सिंहलाश्चैव राजा काश्मी-
रकस्तथा। कुन्तिभोजो महातेजाः पार्थिवो गौरवाहनः ॥ १२ ॥
बाह्लिकाश्चापरे शूराः राजानः सर्व एव ते। विराटः सह पुत्राभ्यां
मावेल्लश्च महाबलः ॥ १३ ॥ राजानो राजपुत्राश्च नानाजनपदे-
श्वराः। शिशुपालो महावीर्य्यः सह पुत्रेण भारत ॥ १४ ॥ आग-
च्छत् पाण्डवेयस्य यज्ञं समरदुर्मदः। रामश्चैवानिरुद्धश्च कङ्कश्च
सहसारणः ॥ १५ ॥ गदप्रद्युम्नशाम्बाश्च चारुदेष्णश्च वीर्य्यवान्।
उल्मुको निशठश्चैव वीरश्चाङ्गावहस्तथा ॥ १६ ॥ वृष्णयो निखिला-
श्चान्ये समाजग्मुर्महारथाः। एते चान्ये च बहवो राजानो
मध्यदेशजाः ॥ १७ ॥ आजग्मुः पाण्डुपुत्रस्य राजसूयं महा-

क्रतुम्। ददुस्तेषामावसथान् धर्मराजस्य शासनात् ॥ १८ ॥
बहुभक्ष्यान्वितान् राजन् दीर्घिकावृक्षशोभितान्। तथा धर्मा-
त्मजः पूजां चक्रे तेषां महात्मनाम् ॥ १९ ॥ सत्कृताश्च यथो-
द्दिष्टान् जग्मुरावसथान्नृपाः। कैलासशिखरप्रख्यान् मनोज्ञान्
द्रव्यभूषितान् ॥ २० ॥ सर्व्वतः संवृतानुच्चैः प्राकारैः सुकृतैः सितैः।
सुवर्णजालसंवीतान् मणिकुट्टिमभूषितान् ॥ २१ ॥ सुखारोहण-
सोपानान् महासनपरिच्छदान्। स्रग्दामसमवच्छन्नानुत्तमागुरु-
गन्धिनः ॥ २२ ॥ हंसेन्दुवर्णसदृशानायोजनसुदर्शनान्। असं-
बाधान् समद्वारान् युतानुच्चावचैर्गुणैः ॥ २३ ॥ बहुधातुनिब-
द्धाङ्गान् हिमवच्छिखरानिव। विश्रान्तास्ते ततोऽपश्यन् भूमिपा
भूरिदक्षिणम् ॥ २४ ॥ वृतं सदस्यैर्बहुभिर्धर्मराजं युधिष्ठिरम्।
तत्सदः पार्थिवैः कीर्णं ब्राह्मणैश्च महर्षिभिः। भ्राजते स्म तदा
राजन् नाकपृष्ठं यथामरैः ॥ २५ ॥

इति सभापर्व्वणि राजसूयिकपर्व्वणि निमन्त्रितराजागमने
चतुस्त्रिंशोऽध्यायः॥ ३४ ॥

वैशम्पायन उवाच। पितामहं गुरुञ्चैव प्रत्युद्गम्य युधिष्ठिरः।
अभिवाद्य ततो राजन्निदं वचनमब्रवीत् ॥ १ ॥ भीष्मं द्रोणं कृपं
द्रौणिं दुर्य्योधनविविंशती। अस्मिन्यज्ञे भवन्तो मामनुगृह्णन्तु
सर्व्वशः ॥ २ ॥ इदं वः स्वमहञ्चैव यदिहास्ति धनं मम। प्रीण-
यन्तु भवन्तो मां यथेष्टमभिमन्त्रिताः ॥ ३ ॥ एवमुक्त्वा स तान्
सर्व्वान् दीक्षितः पाण्डवाग्रजः। युयोज ह यथायोगमधिकारे-
ष्वनन्तरम् ॥ ४ ॥ भक्ष्यभोज्याधिकारेषु दुःशासनमयोजयत्।
परिग्रहे ब्राह्मणानामश्वत्थामानमुक्तवान् ॥ ५ ॥ राज्ञान्तु प्रति-
पूजार्थं सञ्जयं संन्ययोजयत्। कृताकृतपरिज्ञाने भीष्मद्रोणौ

महामतिः ॥ ६ ॥ हिरण्यस्य सुवर्णस्य रत्नानां चान्ववेक्षणे। दक्षिणानाञ्च वै दाने कृपं राजा न्ययोजयत् ॥ ७ ॥ तथान्यान् पुरुषव्याघ्रांस्तस्मिंस्तस्मिन्न्ययोजयत्। बाह्लीको धृतराष्ट्रश्च सोमदत्तो जयद्रथः ॥ ८ ॥ नकुलेन समानीताः स्वामिवत्तत्र रेमिरे। क्षत्ता व्ययकरस्त्वासीद्विदुरः सर्वधर्मवित् ॥ ९ ॥ दुर्योधनस्त्वर्हणानि प्रतिजग्राह सर्वशः। चरणक्षालने कृष्णो ब्राह्मणानां स्वयं ह्यभूत् ॥ १० ॥ सर्वलोकसमावृत्तः पिप्रीषुः फलमुत्तमम्। द्रष्टुकामः सभाञ्चैव धर्मराजं युधिष्ठिरम् ॥ ११ ॥ न कश्चिदाहरत्तत्र सहस्रावरमर्हणम्। रत्नैश्च बहुभिस्तत्र धर्मराजमवर्द्धयत् ॥ १२ ॥ कथन्नु मम कौरव्यो रत्नदानैः समाप्नुयात्। यज्ञमित्येव राजानः स्पर्द्धमाना ददुर्धनम् ॥ १३ ॥ भवनैः सविमानाग्रैः सोदर्कैर्बलसंवृतैः। लोकराजविमानैश्च ब्राह्मणावसथैः सह ॥ १४ ॥ कृतैरावसथैर्दिव्यैर्विमानप्रतिमैस्तथा। विचित्रै रत्नवद्भिश्च ऋद्ध्या परमया युतैः ॥ १५ ॥ राजभिश्च समावृत्तैरतीव श्रीसमृद्धिभिः। अशोभत ततो राजन् कौन्तेयस्य महात्मनः ॥ १६ ॥ ऋद्ध्या च वरुणं देवं स्पर्द्धमानो युधिष्ठिरः। षडग्निनाथ यज्ञेन सोऽयजद्दक्षिणावता ॥ १७ ॥ सर्वान् जनान् सर्वकामैः समृद्धैः समतर्पयत्। अन्नवान् बहुभक्ष्यश्च भुक्तवज्जनसंवृतः ॥ १८ ॥ रत्नोपहारसम्पन्नो बभूव स समागमः। तिलाज्यहोमाहुतिभिर्मन्त्रशिक्षाविशारदैः ॥ १९ ॥ तस्मिन् हि ततृपुर्देवास्तते यज्ञे महर्षिभिः। यथा देवास्तथा विप्रा दक्षिणान्नमहाधनैः। ततृपुः सर्ववर्णाश्च तस्मिन्यज्ञे मुदान्विताः ॥ २० ॥

इति सभापर्वणि राजसूयिकपर्वणि यज्ञकरणे पञ्चत्रिंशोऽध्यायः समाप्तञ्च राजसूयिकपर्व ॥ ३५ ॥

## अथ अर्घाहरणपर्व ।

वैशम्पायन उवाच । ततोऽभिषेचनीयेऽह्नि ब्राह्मणा राजभिः सह । अन्तर्वेदीं प्रविविशुः सत्कारार्थं महर्षयः ॥ १ ॥ नारदप्रमुखास्तस्यामन्तर्वेद्यां महात्मनः । समासीनाः शुशुभिरे सह राजर्षिभिस्तदा ॥ २ ॥ समेता ब्रह्मभवने देवा देवर्षयस्तथा । कर्मान्तरमुपासन्तो जजल्पुरमितौजसः ॥ ३ ॥ एवमेतन्न चाप्येवमेवञ्चैतन्न चान्यथा । इत्यूचुर्बहवस्तत्र वितण्डा वै परस्परम् ॥४॥ कृशानर्थांस्ततः केचिदकृशांस्तत्र कुर्वते । अकृशांश्च कृशांश्चक्रुर्हेतुभिः शास्त्रनिश्चयैः ॥ ५ ॥ तत्र मेधाविनः केचिदर्थमन्यैरुदीरितम् । विचिक्षिपुर्यथा श्येना नभोगतमिवामिषम् ॥ ६ ॥ केचिद्धर्मार्थकुशलाः केचित्तत्र महाव्रताः । रेमिरे कथयन्तश्च सर्वभाष्यविदांवराः ॥ ७ ॥ सा वेदिर्वेदसम्पन्नैर्देवद्विजमहर्षिभिः । आबभासे समाकीर्णा नक्षत्रैर्द्यौरिवायता ॥८॥ न तस्यां सन्निधौ शूद्रः कश्चिदासीन्न चाव्रती । अन्तर्वेद्यां तदा राजन् युधिष्ठिरनिवेशने ॥ ९ ॥ तान्तु लक्ष्मीवतो लक्ष्मीं तदा यज्ञविधानजाम् । तुतोष नारदः पश्यन् धर्मराजस्य धीमतः ॥ १० ॥ अथ चिन्तां समापेदे स मुनिर्मनुजाधिप । नारदस्तु तदा पश्यन् सर्वक्षत्रसमागमम् ॥ ११ ॥ सस्मार च पुरावृत्तां कथान्तां पुरुषर्षभ । अंशावतरणे यासौ ब्रह्मणो भवनेऽभवत् ॥ १२ ॥ देवानां सङ्गमं तन्तु विज्ञाय कुरुनन्दन । नारदः पुण्डरीकाक्षं सस्मार मनसा हरिम् ॥ १३ ॥ साक्षात् स विबुधारिघ्नः क्षत्रे नारायणो विभुः । प्रतिज्ञां पालयंश्चेमां जातः परपुरञ्जयः ॥ १४ ॥ सन्दिदेश पुरा योऽसौ विबुधान् भूतकृत् स्वयम् । अन्योन्यमभिनिघ्नन्तः पुनर्लोकानवाप्स्यथ ॥ १५ ॥ इति नारायणः शम्भुर्भगवान् जगतः प्रभुः । आदिश्य विबुधान् सर्वानजायत यदुक्षये ॥ १६ ॥ क्षितावन्धकवृष्णीनां वंशे वंशभृतां वरः । परया शुशुभे लक्ष्म्या नक्षत्राणामिवोडुराट् ॥ १७ ॥ यस्य बाहुबलं सेन्द्राः सुराः सर्वे

उपागते । सोऽयं मानुषवन्नाम हरिरास्तेऽरिमर्दनः ॥ १८ ॥
अहो बत समुद्भूतं स्वयम्भूर्यदिदं स्वयम् । आदास्यति पुनः
क्षत्रमेवं बलसमन्वितम् ॥ १९ ॥ इत्येतां नारदश्चिन्तां चिन्तया-
मास सर्ववित् । हरिं नारायणं ध्यात्वा यज्ञैरीड्यन्तमीश्वरम्
॥ २० ॥ तस्मिन् धर्मविदां श्रेष्ठो धर्मराजस्य धीमतः । महाध्वरे
महाबुद्धिस्तस्थौ स बहुमानतः ॥ २१ ॥ ततो भीष्मोऽब्रवीद्राजन्
धर्मराजं युधिष्ठिरम् । क्रियतामर्हणं राज्ञां यथार्हमिति भारत
॥ २२ ॥ आचार्यमृत्विजञ्चैव संयुक्तञ्च युधिष्ठिर । स्नातकञ्च प्रियं
प्राहुः षडर्घ्यार्हान् नृपं तथा ॥ २३ ॥ एतानर्घ्यानभिगतानाहुः
संवत्सरोषितान् । त इमे कालपूगस्य महतोऽस्मानुपागताः ॥२४॥
एषामेकैकशो राजन्नर्घ्यं आनीयतामिति । अथ चैषां वरिष्ठाय
समर्थायोपनीयताम् ॥ २५ ॥

युधिष्ठिर उवाच । कस्मै भवान् मन्यतेऽर्घमेकस्मै कुरुनन्दन ।
उपनीयमानं युक्तञ्च तन्मे ब्रूहि पितामह ॥ २६ ॥

वैशम्पायन उवाच । ततो भीष्मः शान्तनवो बुद्ध्या निश्चित्य
वीर्यवान् । वार्ष्णेयं मन्यते कृष्णमर्हणीयतमं भुवि ॥ २७ ॥ एष
ह्येषां समस्तानां तेजोबलपराक्रमैः । मध्ये तपन्निवाभाति
ज्योतिषामिव भास्करः ॥ २८ ॥ असूर्यमिव सूर्येण निर्वात
इव वायुना । भासितं ह्लादितञ्चैव कृष्णेनेदं सदो हि नः ॥२९॥
तस्मै भीष्माभ्यनुज्ञातः सहदेवः प्रतापवान् । उपजह्रेऽथ विधि-
वद्वार्ष्णेयायार्घमुत्तमम् ॥ ३० ॥ प्रतिजग्राह तत् कृष्णः शास्त्र-
दृष्टेन कर्मणा । शिशुपालस्तु तां पूजां वासुदेवे न चक्षमे ॥३१॥
स उपालभ्य भीष्मञ्च धर्मराजञ्च संसदि । अपाक्षिपद्वासुदेवं
चेदिराजो महाबलः ॥ ३२ ॥

इति सभापर्वणि अर्घाभिहरणपर्वणि कृष्णार्घदाने
षट्त्रिंशोऽध्यायः ॥ ३६ ॥

शिशुपाल उवाच। नायमर्हति वार्ष्णेयस्तिष्ठत्स्विह महात्मसु। महीपतिषु कौरव्य राजवत् पार्थिवार्हणम्॥ १॥ नायं युक्तः समाचारः पाण्डवेषु महात्मसु। यत्कामात् पुण्डरीकाक्षं पाण्डवार्चितवानसि॥ २॥ बाला यूयं न जानीध्वं धर्मः सूक्ष्मो हि पाण्डवाः। अयं तत्राभ्यतिक्रान्तो ह्यापगेयोऽल्पदर्शनः॥ ३॥ त्वादृशो धर्मयुक्तो हि कुर्वाणः प्रियकाम्यया। भवत्यभ्यधिकं भीष्म लोकेष्ववमतः सताम्॥ ४॥ कथं ह्यराजा दाशार्हो मध्ये सर्वमहीक्षिताम्। अर्हणामर्हति तथा यथा युष्माभिरर्चितः॥ ५॥ अथ वा मन्यसे कृष्णं स्थविरं कुरुपुङ्गव। वसुदेवे स्थिते वृद्धे कथमर्हति तत्सुतः॥६॥ अथ वा वासुदेवोऽपि प्रियकामोऽनुवृत्तवान्। द्रुपदे तिष्ठति कथं माधवोऽर्हति पूजनम्॥ ७॥ आचार्यं मन्यसे कृष्णमथ वा कुरुनन्दन। द्रोणे तिष्ठति वार्ष्णेयं कस्मादर्चितवानसि॥ ८॥ ऋत्विजं मन्यसे कृष्णमथ वा कुरुनन्दन। द्वैपायने स्थिते वृद्धे कथं कृष्णोऽर्चितस्त्वया॥ ९॥ भीष्मे शान्तनवे राजन् स्थिते पुरुषसत्तमे। स्वच्छन्दमृत्युके राजन् कथं कृष्णोऽर्चितस्त्वया॥ १०॥ अश्वत्थाम्नि स्थिते वीरे सर्वशास्त्रविशारदे। कथं कृष्णस्त्वया राजन्नर्चितः कुरुनन्दन॥ ११॥ दुर्योधने च राजेन्द्रे स्थिते पुरुषसत्तमे। कृपे च भारताचार्ये कथं कृष्णस्त्वयार्चितः॥ १२॥ द्रुमं किम्पुरुषाचार्यमतिक्रम्य तथार्चितः। भीष्मके चैव दुर्धर्षे पाण्डुवत् कृतलक्षणे॥ १३॥ नृपे च रुक्मिणि श्रेष्ठे एकलव्ये तथैव च। शल्ये मद्राधिपे चैव कथं कृष्णस्त्वयार्चितः॥ १४॥ अयं च सर्वराज्ञां वै बलश्लाघी महाबलः। जामदग्न्यस्य दयितः शिष्यो विप्रस्य भारत॥ १५॥ येनात्मबलमाश्रित्य राजानो युधि निर्जिताः। तं च कर्णमतिक्रम्य कथं कृष्णस्त्वयार्चितः॥ १६॥ नैव ऋत्विङ् नाचार्यो न राजा मधुसूदनः। अर्चितश्च कुरुश्रेष्ठ

किमन्यत् प्रियकाम्यया ॥ १७ ॥ अथ वाप्यर्चनीयोऽयं युष्माकं मधुसूदनः। किं राजभिरिहानीतैरवमानाय भारत ॥ १८ ॥ वयन्तु न भयादस्य कौन्तेयस्य महात्मनः। प्रयच्छामः करान् सर्वे न लोभान्न च सान्त्वनात् ॥ १९ ॥ अस्य धर्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः। करानस्मै प्रयच्छामः सोऽयमस्मान्न मन्यते ॥२०॥ किमन्यदवमानाद्धि यदेनं राजसंसदि। अप्राप्तलक्षणं कृष्णमर्घ्येणार्चितवानसि ॥ २० ॥ अकस्माद्धर्मपुत्रस्य धर्मात्मेति यशो गतम्। को हि धर्मच्युते पूजामेवं युक्तां नियोजयेत् ॥ २१ ॥ योऽयं वृष्णिकुले जातो राजानं हतवान् पुरा। जरासन्धं महात्मानमन्यायेन दुरात्मवान् ॥ २२ ॥ अद्य धर्मात्मता चैव व्यपकृष्टा युधिष्ठिरात्। दर्शितं कृपणत्वञ्च कृष्णेऽर्घस्य निवेदनात् ॥ २३ ॥ यदि भीताश्च कौन्तेयाः कृपणाश्च तपस्विनः। ननु त्वयापि बोद्धव्यं यां पूजां माधवार्हसि ॥ २४ ॥ अथ वा कृपणैरेतामुपनीतां जनार्दन। पूजामनर्हः कस्मात्त्वमभ्यनुज्ञातवानसि ॥ २५ ॥ अयुक्तामात्मनः पूजां त्वं पुनर्बहु मन्यसे। हविषः प्राप्य निष्कन्दं प्राशिता श्वेव निर्जने ॥ २६ ॥ न त्वयं पार्थिवेन्द्राणामपमानः प्रयुज्यते। त्वामेव कुरवो व्यक्तं प्रलम्भन्ते जनार्दन ॥ २७ ॥ क्लीबे दारक्रिया यादृगन्धे वा रूपदर्शनम्। अराज्ञो राजवत् पूजा तथा ते मधुसूदन ॥ २८ ॥ दृष्टो युधिष्ठिरो राजा दृष्टो भीष्मश्च यादृशः। वासुदेवोऽप्ययं दृष्टः सर्वमेतद्यथातथम् ॥ २९ ॥ इत्युक्त्वा शिशुपालस्तानुत्थाय परमासनात्। निर्ययौ सदसस्तस्मात्सहितो राजभिस्तदा ॥ ३० ॥

इति सभापर्वणि अर्घाभिहरणपर्वणि शिशुपालक्रोधे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

——

वैशम्पायन उवाच । ततो युधिष्ठिरो राजा शिशुपालमुपा-
द्रवत् । उवाच चैनं मधुरं सान्त्वपूर्व्वमिदं वचः ॥ १ ॥ नेदं
युक्तं महीपाल यादृशं वै त्वमुक्तवान् । अधर्म्मश्च परो राजन्
पारुष्यञ्च निरर्थकम् ॥ २ ॥ न हि धर्म्मं परं जातु नावबुध्येत
पार्थिवः । भीष्मः शान्तनवस्त्वेनं मावमंस्थास्त्वमन्यथा ॥ ३ ॥
पश्य चैतान्महीपालान् त्वत्तो वृद्धतरान् बहून् । मृष्यन्ते चार्हणां
कृष्णे तद्वत्त्वं क्षन्तुमर्हसि ॥ ४ ॥ वेद तत्त्वेन कृष्णं हि भीष्म-
श्चेदिपते भृशम् । न ह्येनं त्वं तथा वेत्थ यथैनं वेद कौरवः ॥५॥

भीष्म उवाच । नास्मै देयो ह्यनुनयो नायमर्हति सान्त्वनम् ।
लोकवृद्धतमे कृष्णे योऽर्हणां नाभिमन्यते ॥ ६ ॥ क्षत्रियः क्षत्रियं
जित्वा रणे रणकृतां वरः । यो मुञ्चति वशे कृत्वा गुरुर्भवति
तस्य सः ॥ ७ ॥ अस्यां हि समितौ राज्ञामेकमप्यजितं युधि ।
न पश्यामि महीपालं सात्वतीपुत्रतेजसा ॥ ८ ॥ न हि केवल-
मस्माकमयमर्च्चतमोऽच्युतः । त्रयाणामपि लोकानामर्च्चनीयो
महाभुजः ॥ ९ ॥ कृष्णेन हि जिता युद्धे बहवः क्षत्रियर्षभाः ।
जगत् सर्व्वञ्च वार्ष्णेये निखिलेन प्रतिष्ठितम् ॥ १० ॥ तस्मात् सत्-
स्वपि वृद्धेषु कृष्णमर्च्चामि नेतरान् । एवं वक्तुं न चार्हस्त्वं
माभूत्ते बुद्धिरीदृशी ॥ ११ ॥ ज्ञानवृद्धा मया राजन् बहवः
पर्य्युपासिताः । तेषां कथयतां शौरेरहं गुणवतो गुणान् ॥१२॥
समागतानामश्रौषं बहून् बहुमतान् सताम् । कर्म्माण्यपि हि
यान्यस्य जन्मप्रभृति धीमतः ॥ १३ ॥ बहुशः कथ्यमानानि नरै-
र्भूयः श्रुतानि मे । न केवलं वयं कामाच्चेदिराज जनार्द्दनम्
॥ १४ ॥ न सम्बन्धं पुरस्कृत्य कृतार्थं वा कथञ्चन । अर्च्चामहे-
ऽर्च्चितं सद्भिर्भुवि भूतसुखावहम् ॥ १५ ॥ यशः शौर्य्यं जयं चास्य
विज्ञायार्च्चां प्रयुञ्ज्महे । न च कश्चिदिहास्माभिः सुबालोऽप्यप-
रीक्षितः ॥ १६ ॥ गुणैर्वृद्धानतिक्रम्य हरिरर्च्च्यतमो मतः । ज्ञान-

द्धो द्विजातीनां क्षत्रियाणां बलाधिकः ॥ १७ ॥ वैश्यानां धान्य-
धनवान् शूद्राणामेव जन्मतः। पूज्यतायाञ्च गोविन्दे हेतू द्वावपि
संस्थितौ ॥ १८ ॥ वेदवेदाङ्गविज्ञानं बलं चाप्यधिकं तथा।
नृणां लोके हि कोऽन्योऽस्ति विशिष्टः केशवादृते ॥ १९ ॥ दानं
दाक्ष्यं श्रुतं शौर्य्यं ह्रीः कीर्त्तिर्बुद्धिरुत्तमा। सन्नतिः श्रीर्धृति-
स्तुष्टिः पुष्टिश्च नियताच्युते ॥ २० ॥ तमिमं लोकसम्पन्नमाचार्य्यं
पितरं गुरुम्। अर्घ्यमर्चितमर्चार्हं सर्वे संमन्तुमर्हथ ॥ २१ ॥
ऋत्विग्गुरुर्विवाह्यश्च स्नातको नृपतिः प्रियः। सर्वमेतद्धृषीकेश-
स्तस्मादभ्यर्चितोऽच्युतः ॥ २२ ॥ कृष्ण एव हि लोकानामुत्-
पत्तिरपि चाव्ययः। कृष्णस्य हि कृते विश्वमिदं भूतं चराचरम्
॥ २३ ॥ एष प्रकृतिरव्यक्ता कर्त्ता चैव सनातनः। परश्च सर्व-
भूतेभ्यस्तस्मात् पूज्यतमोऽच्युतः ॥ २४ ॥ बुद्धिर्मनो महद्वायुस्तेजो-
ऽम्भः खं मही च या। चतुर्विधञ्च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम्
॥ २५ ॥ अग्निहोत्रमुखा वेदा गायत्री छन्दसां मुखम्। राजा
मुखं मनुष्याणां नदीनां सागरो मुखम् ॥ २६ ॥ नक्षत्राणां
मुखं चन्द्र आदित्यस्तेजसां मुखम्। पर्वतानां मुखं मेरुर्गरुड़ः
पततां मुखम् ॥ २७ ॥ ऊर्द्ध्वन्तिर्य्यगधश्चैव यावती जगतो गतिः।
सदेवकेषु लोकेषु भगवान् केशवो मुखम् ॥ २८ ॥ अयन्तु पुरुषो
बालः शिशुपालो न बुध्यते। सर्वत्र सर्वदा कृष्णं तस्मादेवं प्रभा-
षते ॥ २९ ॥ यो हि धर्मं विचिनुयादुत्कृष्टं मतिमान्नरः। स वै
पश्येद्यथा धर्मं न तथा चेदिराड़यम् ॥ ३० ॥ सवृद्धबालेष्वथ वा
पार्थिवेषु महात्मसु। को नार्हं मन्यते कृष्णं को वाप्येनं न पूजयेत्
॥ ३१ ॥ अथैनां दुष्कृतां पूजां शिशुपालो व्यवस्यति। दुष्कृतायां
यथान्यायं तथायं कर्त्तुमर्हति ॥ ३२ ॥

इति सभापर्व्वणि अर्घाभिहरणपर्व्वणि भीष्मवाक्ये
अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

वैशम्पायन उवाच । एवमुक्त्वा ततो भीष्मो विरराम महा-
बलः । व्याजहारोत्तरं तत्र सहदेवोऽर्थवद्वचः ॥ १ ॥ केशवं
केशिहन्तारमप्रमेयपराक्रमम् । पूज्यमानं मया यो वः कृष्णं न
सहते नृपः ॥ २ ॥ सर्वेषां बलिनां मूर्द्ध्नि मयेदं निहितं पदम् ।
एवमुक्ते मया सम्यगुत्तरं प्रब्रवीतु सः ॥ ३ ॥ मतिमन्तश्च ये
केचिदाचार्य्यं पितरं गुरुम् । अर्च्यमर्च्चितमर्च्चार्हमनुजानन्तु ते
नृपाः ॥ ४ ॥ ततो न व्याजहारैषां कश्चिद्बुद्धिमतां सताम् ।
मानिनां बलिनां राज्ञां मध्ये वै दर्शिते पदे ॥ ५ ॥ ततोऽपतत्
पुष्पवृष्टिः सहदेवस्य मूर्द्धनि । अदृश्यरूपा वाचश्चाप्यब्रुवन् साधु-
साध्विति ॥ ६ ॥ सर्वसंशयनिर्मोक्ता नारदः सर्वलोकवित् ।
उवाचाखिलभूतानां मध्ये स्पष्टतरं वचः ॥ ७ ॥ कृष्णं कमल-
पत्राक्षं नार्च्चयिष्यन्ति ये नराः । जीवन्मृतास्तु ते ज्ञेया न सम्भाष्याः
कदाचन ॥ ८ ॥

वैशम्पायन उवाच । पूजयित्वा च पूजार्हान् ब्रह्मक्षत्र-
विशेषवित् । सहदेवो नृणां देवः समापयत कर्म्म तत् ॥ ९ ॥
तस्मिन्नभ्यर्च्चिते कृष्णे सुनीथः शत्रुकर्षणः । अतिताम्रेक्षणः
कोपादुवाच मनुजाधिपान् ॥ १० ॥ स्थितः सेनापतिर्योऽहं मन्यध्वं
किन्नु साम्प्रतम् । युधि तिष्ठाम सन्नह्य समेतान् वृष्णिपाण्डवान्
॥ ११ ॥ इति सर्वान् समुत्साह्य राज्ञस्तान् चेदिपुङ्गवः । यज्ञो-
पघाताय ततः सोऽमन्त्रयत राजभिः ॥ १२ ॥ तत्राहूता गताः
सर्वे सुनीथप्रमुखा गणाः । समदृश्यन्त संक्रुद्धा विवर्णवदनास्तथा
॥ १३ ॥ युधिष्ठिराभिषेकञ्च वासुदेवस्य चार्हणम् । न स्याद्यथा
तथा कार्य्यमेवं सर्वे तदाब्रुवन् ॥ १४ ॥ निष्कर्षान्निश्चयात्सर्वे
राजानः क्रोधमूर्च्छिताः । अब्रुवंस्तत्र राजानो निर्वेदादात्म-
निश्चयात् ॥ १५ ॥ सुहृद्भिर्वार्य्यमाणानां तेषां हि वपुराबभौ ।
आमिषादपकृष्टानां सिंहानामिव गर्जताम् ॥ १६ ॥ तं बलौघ-

सपर्य्यन्तं राजसागरमक्षयम्। कुर्वाणं समयं कृष्णो युद्धाय
बुबुधे तदा ॥ १७ ॥

इति सभापर्वणि अर्घाहरणपर्वणि राजमन्त्रणे
ऊनचत्वारिंशोऽध्यायः समाप्तञ्च अर्घाहरणपर्व ॥ ३९ ॥

---

## अथ शिशुपालवधपर्व।

वैशम्पायन उवाच। ततः सागरसङ्काशं दृष्ट्वा नृपतिमण्ड-
लम्। संवर्त्त वाताभिहतं भीमं क्षुब्धमिवार्णवम्। रोषात्
प्रचलितं सर्व्वमिदमाह युधिष्ठिरः ॥ १ ॥ भीष्मं मतिमतां
मुख्यं वृद्धं कुरुपितामहम्। बृहस्पतिं बृहत्तेजाः पुरुहूत
इवारिहा ॥ २ ॥ असौ रोषात् प्रचलितो महान्नृपति-
सागरः। अत्र यत् प्रतिपत्तव्यं तन्मे ब्रूहि पितामह ॥ ३ ॥
यज्ञस्य च न विघ्नः स्यात् प्रजानाञ्च हितं भवेत्। यथा सर्व्वत्र
तत्सर्व्वं ब्रूहि मेऽद्य पितामह ॥ ४ ॥ इत्युक्तवति धर्म्मज्ञे धर्म्मराजे
युधिष्ठिरे। उवाचेदं वचो भीष्मस्ततः कुरुपितामहः ॥ ५ ॥
माभैस्त्वं कुरुशार्दूल श्वा सिंहं हन्तुमर्हति। शिवः पन्थाः सुनी-
तोऽत्र मया पूर्व्वतरं वृतः ॥ ६ ॥ प्रसुप्ते हि यथा सिंहे श्वान-
स्तस्मिन् समागताः। भषेयुः सहिताः सर्व्वे तथेमे वसुधाधिपाः
॥ ७ ॥ वृष्णिसिंहस्य सुप्तस्य तथामी प्रमुखे स्थिताः। भषन्ते
तात संक्रुद्धाः श्वानः सिंहस्य सन्निधौ ॥ ८ ॥ न हि सम्बुध्यते
यावत् सुप्तः सिंह इवाच्युतः। तेन सिंहीकरोत्येतान् नृसिंह-
श्चेदिपुङ्गवः ॥ ९ ॥ पार्थिवान् पार्थिवश्रेष्ठः शिशुपालोऽल्प-
चेतनः। सर्व्वान् सर्व्वात्मना तात नेतुकामो यमक्षयम् ॥ १० ॥
नूनमेतत्समादातुं पुनरिच्छत्यधोक्षजः। यदस्य शिशुपालस्थं
तेजस्तिष्ठति भारत ॥ ११ ॥ विप्लुता चास्य भद्रन्ते बुद्धिर्बुद्धि-

मताम्बर। चेदिराजस्य कौन्तेय सर्वेषाञ्च महीक्षिताम् ॥ १२ ॥ आदास्यन् नरव्याघ्रो यं यमिच्छत्ययं तदा। तस्य विप्लवते बुद्धिरेवं चेदिपतेर्यथा ॥ १३ ॥ चतुर्विधानां भूतानां त्रिषु लोकेषु माधवः। प्रभवश्चैव सर्वेषां निधनञ्च युधिष्ठिर ॥ १४ ॥

वैशम्पायन उवाच। इति तस्य वचः श्रुत्वा ततश्चेदिपतिर्नृपः। भीष्मं रूक्षाक्षरा वाचः श्रावयामास भारत ॥ १५ ॥

इति सभापर्वणि शिशुपालवधपर्वणि युधिष्ठिराश्वासने चत्वारिंशोऽध्यायः॥ ४० ॥

---

शिशुपाल उवाच। विभीषिकाभिर्बह्वीभिर्भीषयन् सर्वपार्थिवान्। न व्यपत्रपसे कस्माद्वृद्धः सन् कुलपांसनः ॥ १ ॥ युक्तमेतत्तृतीयायां प्रकृतौ वर्त्तता त्वया। वक्तुं धर्मादपेतार्थं त्वं हि सर्वकुरूत्तम ॥ २ ॥ नावि नौरिव सम्बद्धा यथान्धो वान्धमन्वियात्। तथा भूता हि कौरव्या येषां भीष्म त्वमग्रणीः ॥३॥ पूतनाघातपूर्वाणि कर्माण्यस्य विशेषतः। त्वया कीर्त्तयतास्माकं भूयः प्रव्यथितं मनः ॥ ४ ॥ अवलिप्तस्य मूर्खस्य केशवं स्तोतुमिच्छतः। कथं भीष्म न ते जिह्वा शतधेयं विदीर्य्यते ॥५॥ यत्र कुत्सा प्रयोक्तव्या भीष्म बालतरैर्नरैः। तमिमं ज्ञानवृद्धः सन् गोपं संस्तोतुमिच्छसि ॥ ६ ॥ यद्यनेन हता बाल्ये शकुनिश्चित्रमत्र किम्। तौ वाश्ववृषभौ भीष्म यौ न युद्धविशारदौ ॥ ७ ॥ चेतनारहितं काष्ठं यद्यनेन निपातितम्। पादेन शकटं भीष्म तत्र किं कृतमद्भुतम् ॥ ८ ॥ वल्मीकमात्रः सप्ताहं यद्यनेन धृतोऽचलः। तथा गोवर्द्धनो भीष्म न तच्चित्रं मतं मम ॥ ९ ॥ भुक्तमेतेन बह्वन्नं क्रीडता नगमूर्द्धनि। इति ते भीष्म शृण्वानाः परं विस्मयमागताः ॥ १० ॥ यस्य चानेन धर्मज्ञ भुक्तमन्नं बलीयसः।

स चानेन हतः कंस इत्येतन्न महाद्भुतम् ॥११॥ न ते श्रुतमिदं
भीष्म नूनं कथयतां सताम्। यद्वच्मि त्वामधर्मज्ञं वाक्यं कुरुकुला-
धम ॥ १२ ॥ स्त्रीषु गोषु न शस्त्राणि पातयेद्ब्राह्मणेषु च। यस्य
चान्नानि भुञ्जीत यस्य च स्यात् प्रतिश्रयः ॥ १३ ॥ इति सन्तोऽनु-
शासन्ति सज्जनं धर्मिणः सदा। भीष्म लोके हि तत्सर्वं वितथं
त्वयि दृश्यते ॥ १४ ॥ ज्ञानवृद्धञ्च वृद्धञ्च भूयांसं केशवं मम।
अजानत इवाख्यासि संस्तुवन् कौरवाधम ॥ १५ ॥ गोघ्नः स्त्रीघ्नश्च
सन् भीष्म कथं संस्तवमर्हति। असौ मतिमतां श्रेष्ठो य एष
जगतः प्रभुः ॥१६॥ सम्भावयति चाप्येवं त्वद्वाक्याच्च जनार्दनः।
एवमेतत् सर्वमिति तत्सर्वं वितथं ध्रुवम् ॥ १७ ॥ न गाथा गाथिनं
शास्ति बहु चेदपि गायति। प्रकृतिं यान्ति भूतानि भूलिङ्ग-
शकुनिर्यथा ॥ १८ ॥ नूनं प्रकृतिरेषा ते जघन्या नात्र संशयः।
अतः पापीयसी चैषां पाण्डवानामपीष्यते ॥ १८ ॥ येषामर्च्यतमः
कृष्णस्त्वञ्च येषां प्रदर्शकः। धर्मवांस्त्वमधर्मज्ञः सतां मार्गादव-
प्लुतः ॥ १९ ॥ को हि धर्मिणमात्मानं जानन् ज्ञानविदां वरः।
कुर्य्याद्यथा त्वया भीष्म कृतं धर्ममवेक्षता ॥ २० ॥ अन्यकामा
हि धर्मज्ञा कन्यका प्राज्ञमानिना। अम्बा नामेति भद्रन्ते कथं
सापहृता त्वया ॥ २१ ॥ यां त्वयापहृतां भीष्म कन्यां नैषितवान्
यतः। भ्राता विचित्रवीर्य्यस्ते सतां मार्गमनुष्ठितः ॥ २२ ॥
दारयोर्यस्य चान्येन मिषतः प्राज्ञमानिनः। तव जातान्यपत्यानि
सज्जनाचरिते पथि ॥ २३ ॥ को हि धर्मोऽस्ति ते भीष्म ब्रह्म-
चर्य्यमिदं वृथा। यद्धारयसि मोहाद्वा क्लीबत्वाद्वा न संशयः
॥ २४ ॥ न त्वहं तव धर्मज्ञ पश्याम्युपचयं क्वचित्। न हि ते
सेविता वृद्धा य एवं धर्ममब्रवीः ॥ २५ ॥ इष्टं दत्तमधीतञ्च
यज्ञाश्च बहुदक्षिणाः। सर्वमेतदपत्यस्य कलां नार्हति षोडशीम्
॥ २६ ॥ व्रतोपवासैर्बहुभिः कृतं भवति भीष्म यत्। सर्वं तदन-

पत्यस्य मोघं भवति निश्चयात् ॥ २७ ॥ सोऽयं पक्षस्य दुष्टस्य मिथ्या-
धर्मानुसारकः । हंसवत्त्वमपीदानीं ज्ञातिभ्यः प्राप्नुया वधम् ॥२८॥
एवं हि कथयन्त्यन्ये नराः ज्ञानविदः पुरा । भीष्म यथातद्दृष्टं
सम्यग्वक्ष्यामि तव शृण्वतः ॥ २९ ॥ वृद्धः किल समुद्रान्ते कश्चि-
द्धंसोऽभवत् पुरा । धर्मवागन्यथावृत्तः पक्षिणः सोऽनुशास्ति च
॥ ३० ॥ धर्मं चरत मा धर्ममिति तस्य वचः किल । पक्षिणः
शुश्रुवुर्भीष्म सततं सत्यवादिनः ॥ ३१ ॥ अथास्य भक्ष्यमाजह्रुः
समुद्रजलचारिणः । अण्डजा भीष्म तस्यान्ये धर्मार्थमिति शुश्रुम
॥ ३२ ॥ ते च तस्य समभ्याशे निक्षिप्याण्डानि सर्वशः । समु-
द्राम्भस्यमज्जन्त चरन्तो भीष्म पक्षिणः ॥ ३३ ॥ तेषामण्डानि
सर्व्वेषां भक्षयामास पापकृत् । स हंसः सम्प्रमत्तानामप्रमत्तः
स्वकर्मणि ॥ ३४ ॥ ततः प्रक्षीयमाणेषु तेषु तेष्वण्डजोऽपरः।
अशङ्कत महाप्राज्ञः स कदाचिद्ददर्श ह ॥ ३५ ॥ ततः स कथया-
मास दृष्ट्वा हंसस्य किल्बिषम्। तेषां परमदुःखार्त्तः स पक्षी
सर्वपक्षिणाम् ॥ ३६ ॥ ततः प्रत्यक्षतो दृष्ट्वा पक्षिणस्ते समी-
पगाः । निजघ्नुस्तं तदा हंसं मिथ्यावृत्तं कुरूद्वह ॥ ३७ ॥ ते
त्वां हंससधर्माणमपीमे वसुधाधिपाः । निहन्युर्भीष्म संक्रुद्धाः
पक्षिणस्तमिवाण्डजम् ॥ ३८ ॥ गाथामप्यत्र गायन्ति ये पुराण-
विदो जनाः । भीष्म यान्तांश्च ते सम्यक् कथयिष्यामि भारत ॥३९॥
अन्तरात्मन्यभिहते रौषि पत्ररथाशुचि । अण्डभक्षणकर्मैतत्तव
वाचमतीयते ॥ ४० ॥

इति सभापर्व्वणि शिशुपालवधपर्व्वणि शिशुपालवाक्ये
एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

शिशुपाल उवाच। स मे बहुमतो राजा जरासन्धो महाबलः। योऽनेन युद्धं नेयेष दासोऽयमिति संयुगे ॥ १ ॥ केशवेन कृतं कर्म जरासन्धवधे तदा। भीमसेनार्जुनाभ्यां च कस्तत् साध्विति मन्यते ॥ २ ॥ अद्वारेण प्रविष्टेन छद्मना ब्रह्मवादिना। दृष्टः प्रभावः कृष्णेन जरासन्धस्य भूपतेः ॥ ३ ॥ येन धर्मात्मनात्मानं ब्रह्मण्यमभिजानता। नैषितं पाद्यमस्मै तद्दातुमग्रे दुरात्मने ॥ ४ ॥ भुज्यतामिति तेनोक्ताः कृष्णभीमधनञ्जयाः। जरासन्धेन कौरव्य कृष्णेन विकृतं कृतम् ॥ ५ ॥ यद्ययं जगतः कर्ता यथैनं मूर्ख मन्यसे। कस्मान्न ब्राह्मणं सम्यगात्मानमवगच्छति ॥ ६ ॥ इदं त्वाश्चर्यभूतं मे यदीमे पाण्डवास्त्वया। अपकृष्टाः सतां मार्गान् मन्यन्ते तच्च साध्विति ॥ ७ ॥ अथ वा नैतदाश्चर्यं येषां त्वमसि भारत। स्त्रीसधर्मा च वृद्धश्च सर्वार्थानां प्रदर्शकः ॥८॥

वैशम्पायन उवाच। तस्य तद्वचनं श्रुत्वा रूक्षं रूक्षाक्षरं बहु। चुकोप बलिनां श्रेष्ठो भीमसेनः प्रतापवान् ॥ ९ ॥ तथा पद्मप्रतीकाशे स्वभावायतविस्तृते। भूयः क्रोधाभिताम्रान्ते रक्ते नेत्रे बभूवतुः ॥ १० ॥ त्रिशिखां भ्रुकुटीं चास्य ददृशुः सर्वपार्थिवाः। ललाटस्थां त्रिकूटस्थां गङ्गां त्रिपथगामिव ॥ ११ ॥ दन्तान् सन्दशतस्तस्य कोपाद्ददृशुराननम्। युगान्ते सर्वभूतानि कालस्येव दिधक्षतः ॥ १२ ॥ उत्पतन्तं तु वेगेन जग्राहैनं मनस्विनम्। भीष्म एव महाबाहुर्महासेनमिवेश्वरः ॥ २७ ॥ तस्य भीमस्य भीष्मेण वार्यमाणस्य भारत। गुरुणा विविधैर्वाक्यैः क्रोधः प्रशममागतः ॥ २८ ॥ नातिचक्राम भीष्मस्य स हि वाक्यमरिन्दमः। समुद्धूतो घनापाये वेलामिव महोदधिः ॥ २९ ॥ शिशुपालस्तु संक्रुद्धे भीमसेने जनाधिप। नाकम्पत तदा वीरः पौरुषे स्वे व्यवस्थितः ॥ ३० ॥ उत्पतन्तं तु वेगेन पुनः पुनररिन्दम। न स तं चिन्तयामास सिंहः क्रुद्धो मृगं यथा ॥ ३१ ॥ प्रहसं-

यान्यवोचाह्यं चेदिराजः प्रतापवान् । भीमसेनमतिक्रान्तं दृष्ट्वा भीमपराक्रमम् ॥ ३२ ॥ गुरुर्नं भीष्म पश्यन्तु यावदेनं नराधिपाः । मत्प्रभावविनिर्दग्धं पतङ्गमिव वह्निना ॥ ३३ ॥ ततश्चेदिपतेर्वाक्यं श्रुत्वा तत् कुरुसत्तमः । भीमसेनमुवाचेदं भीष्मो मतिमतां वरः ॥ ३४ ॥*

इति सभापर्वणि शिशुपालवधपर्वणि भीमक्रोधे
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

भीष्म उवाच । चेदिराजकुले जातस्त्र्यक्ष एष चतुर्भुजः । रासभारावसदृशं रराम च ननाद च ॥ १ ॥ तेनास्य मातापितरौ त्रेसतुस्तौ सबान्धवौ । वैकृतं तस्य तौ दृष्ट्वा त्यागाय कुरुतां मतिम् ॥ २ ॥ ततः सभार्यं नृपतिं सामात्यं सपुरोहितम् । चिन्तासंमूढहृदयं वागुवाचाशरीरिणी ॥ ३ ॥ एष ते नृपते पुत्रः श्रीमान् जातो बलाधिकः । तस्मादस्मान्न भेतव्यमव्यग्रः पाहि वै शिशुम् ॥ ४ ॥ न चैवैतस्य मृत्युर्वै न कालः प्रत्युपस्थितः । मृत्युर्हन्तास्य शस्त्रेण स चोत्पन्नो नराधिप ॥ ५ ॥ संश्रुत्योदाहृतं वाक्यं भूतमन्तर्हितं ततः । पुत्रस्नेहाभिसन्तप्ता जननी वाक्यमब्रवीत् ॥ ६ ॥ येनेदमीरितं वाक्यं ममैतं तनयं प्रति । प्राञ्जलिस्तं नमस्यामि ब्रवीतु स पुनर्वचः ॥ ७ ॥ याथातथ्येन भगवान् देवो वा यदि वेतरः । श्रोतुमिच्छामि पुत्रस्य कोऽस्य मृत्युर्भविष्यति ॥ ८ ॥ अन्तर्भूतं ततो भूतमुवाचेदं पुनर्वचः । यस्योत्सङ्गे गृहीतस्य भुजावभ्यधिकावुभौ ॥ ९ ॥ पतिष्यतः क्षितितले पञ्चशीर्षाविवोरगौ । तृतीयमेतद्बालस्य ललाटस्थं तु लोचनम् ॥ १० ॥ निमज्जिष्यति यं दृष्ट्वा सोऽस्य मृत्युर्भविष्यति । त्र्यक्षं चतुर्भुजं श्रुत्वा तथा च समुदाहृतम् ॥ ११ ॥ पृथिव्यां

पार्थिवाः सर्वे अभ्यागच्छन् दिदृक्षवः । तान् पूजयित्वा संप्राप्तान् यथार्हं स महीपतिः ॥ १२ ॥ एकैकस्य नृपस्याङ्के पुत्रमारोपयत्तदा । एवं राजसहस्राणां पृथक्त्वेन यथाक्रमम् ॥ १३ ॥ शिशुरङ्के समारूढो न तत् प्राप निदर्शनम् । एतदेव तु संश्रुत्य द्वारवत्यां महाबलौ ॥ १४ ॥ ततश्चेदिपुरीं प्राप्तौ सङ्कर्षणजनार्दनौ । यादवौ यादवीं द्रष्टुं स्वसारं तौ पितुस्तदा ॥ १५ ॥ अभिवाद्य यथान्यायं यथाज्येष्ठं नृपञ्च ताम् । कुशलानामयं पृष्ट्वा निषण्णौ रामकेशवौ ॥ १६ ॥ साभ्यर्चितौ तदा वीरौ प्रीत्या चाभ्यधिकं ततः । पुत्रं दामोदरोत्सङ्गे देवी संन्यदधात् स्वयम् ॥ १७ ॥ न्यस्तमात्रस्य तस्याङ्के भुजावभ्यधिकावुभौ । पेततुस्तच्च नयनं न्यमज्जत ललाटजम् ॥ १८ ॥ तद्दृष्ट्वा व्यथिता त्रस्ता वरं कृष्णमयाचत । ददस्व मे वरं कृष्ण भयार्ताया महाभुज ॥ १९ ॥ त्वं ह्यार्त्तानां समाश्वासो भीतानामभयप्रदः । एवमुक्तस्ततः कृष्णः सोऽब्रवीद्यदुनन्दनः ॥ २० ॥ मा भैस्त्वं देवि धर्मज्ञे न मत्तोऽस्ति भयं तव । ददामि कं वरं किञ्च करवाणि पितृष्वसः ॥ २१ ॥ शक्यं वा यदि वाशक्यं करिष्यामि वचस्तव । एवमुक्ता ततः कृष्णमब्रवीद्यदुनन्दनम् ॥ २२ ॥ शिशुपालस्यापराधान् क्षमेथास्त्वं महाबल । मत्कृते यदुशार्दूल विद्ध्येनं मे वरं प्रभो ॥ २३ ॥

कृष्ण उवाच । अपराधशतं क्षाम्यं मया ह्यस्य पितृष्वसः । पुत्रस्य ते वधार्हस्य मा त्वं शोके मनः कृथाः ॥ २४ ॥

भीष्म उवाच । एवमेष नृपः पापः शिशुपालः सुमन्दधीः । त्वां समाह्वयते वीर गोविन्दवरदर्पितः ॥ २५ ॥

इति सभापर्वणि शिशुपालवधपर्वणि शिशुपालवृत्तान्तकथने एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

———

भीष्म उवाच । नैषा चेदिपतेर्बुद्धिर्यया त्वाह्वयतेऽच्युतम् । नूनमेष जगद्भर्त्तुः कृष्णस्यैव विनिश्चयः ॥ १ ॥ को हि मां भीमसेनाद्य क्षितावर्हति पार्थिवः । क्षेप्तुं कालपरीतात्मा यथैष कुलपांसनः ॥ २ ॥ एष ह्यस्य महाबाहो तेजोंशश्च हरेर्ध्रुवम् । तमेव पुनरादातुमिच्छत्युत तथा विभुः ॥ ३ ॥ येनैष कुरुशार्दूल शार्दूल इव चेदिराट् । गर्जत्यतीव दुर्बुद्धिः सर्वानस्मानचिन्तयन् ॥ ४ ॥

वैशम्पायन उवाच । ततो न ममृषे चैद्यस्तद्भीष्मवचनं तदा । उवाच चैनं संक्रुद्धः पुनर्भीष्ममथोत्तरम् ॥ ५ ॥

शिशुपाल उवाच । द्विषतां नोऽस्तु भीष्मैष प्रभावः केशवस्य यः । यस्य संस्तववक्ता त्वं वन्दिवत् सततोत्थितः ॥ ६ ॥ संस्तवे च मनो भीष्म परेषां रमते यदि । तदा संस्तौषि राज्ञस्त्वमिमं हित्वा जनार्दनम् ॥ ७ ॥ दरदं स्तुहि वाह्लीकमिमं पार्थिवसत्तमम् । जायमानेन येनेयमभवद्दारिता मही ॥ ८ ॥ वङ्गाङ्गविषयाध्यक्षं सहस्राक्षसमं बले । स्तुहि कर्णमिमं भीष्म महाचापविकर्षणम् ॥ ९ ॥ यस्येमे कुण्डले दिव्ये सहजे देवनिर्मिते । कवचञ्च महाबाहो बालार्कसदृशप्रभम् ॥ १० ॥ वासवप्रतिमो येन जरासन्धोऽतिदुर्जयः । विजितो बाहुयुद्धेन देहभेदञ्च लम्भितः ॥ ११ ॥ द्रोणं द्रौणिञ्च साधु त्वं पितापुत्रौ महारथौ । स्तुहि स्तुत्यावुभौ भीष्म सततं द्विजसत्तमौ ॥ १२ ॥ ययोरन्यतरो भीष्म संक्रुद्धः सचराचरम् । इमां वसुमतीं कुर्य्यादशेषामिति मे मतिः ॥ १३ ॥ द्रोणस्य हि समं युद्धे न पश्यामि नराधिपम् । अश्वत्थाम्नः समं भीष्म न च तौ स्तोतुमिच्छसि ॥ १४ ॥ पृथिव्यां सागरान्तायां यो वै प्रतिसमो भवेत् । दुर्य्योधनं त्वं राजेन्द्रमतिक्रम्य महाभुजम् ॥ १५ ॥ जयद्रथञ्च राजानं कृतास्त्रं दृढविक्रमम् । द्रुमं किम्पुरुषाचार्य्यं लोके प्रथितविक्रमम् । हृदय

भारताचार्य्यं तथा शारद्वतं कृपम् ॥ १६ ॥ अतिक्रम्य महावीर्य्यं
किं प्रशंससि केशवम् । धनुर्धराणां प्रवरं रुक्मिणं पुरुषोत्तमम्
॥ १७ ॥ अतिक्रम्य महावीर्य्यं किं प्रशंससि केशवम् । भीष्मकञ्च
महावीर्य्यं दन्तवक्रञ्च भूमिपम् ॥ १८ ॥ भगदत्तं यूपकेतुं जयत्-
सेनञ्च मागधम् । विराटद्रुपदौ चोभौ शकुनिञ्च बृहद्बलम् ॥१९॥
विन्दानुविन्दावावन्त्यौ पाण्ड्यं श्वेतमथोत्तमम् शङ्खञ्च सुमहा-
भागं वृषसेनञ्च मानिनम् ॥ २० ॥ एकलव्यञ्च विक्रान्तं कालिङ्गञ्च
महारथम् । अतिक्रम्य महावीर्य्यं किं प्रशंससि केशवम् ॥२१॥
शल्यादीनपि कस्मात्त्वं न स्तौषि वसुधाधिपान् । स्तवाय यदि ते
बुद्धिर्वर्त्तते भीष्म सर्वदा ॥ २२ ॥ किं हि शक्यं मया कर्त्तुं
यद्वृद्धानां त्वया नृप । पुरा कथयतां नूनं न श्रुतं धर्मवादिनाम्
॥ २३ ॥ आत्मनिन्दात्मपूजा च परनिन्दा परस्तवः । अनाचरित-
मार्य्याणामिति ते भीष्म नः श्रुतम् ॥ २४ ॥ यदस्तव्यमिदं शश्व-
न्मोहात् संस्तौषि भक्तितः । केशवं तच्च ते भीष्म न कश्चिदनु-
मन्यते ॥ २५ ॥ कथं भोजस्य पुरुषे वर्गपाले दुरात्मनि । समा-
वेशयसे सर्वं जगत् केवलकाम्यया ॥ २६ ॥ अथ चैषा न ते
बुद्धिः प्रकृतिं याति भारत । मयैव कथितं पूर्वं भूलिङ्गशकुनि-
र्यथा ॥ २७ ॥ भूलिङ्गशकुनिर्नाम पार्श्वे हिमवतः परे । भीष्म
तस्याः सदा वाचः श्रूयन्तेऽर्थविगर्हिताः ॥ २८ ॥ मा साहस-
मितीदं सा सततं वाशते किल । साहसं चात्मनातीव चरन्ती
नावबुध्यते ॥ २९ ॥ सा हि मांसार्गलं भीष्म मुखात् सिंहस्य
खादतः । दन्तान्तरविलग्नं यत्तदादत्तेऽल्पचेतना ॥ ३० ॥
इच्छतः सा हि सिंहस्य भीष्म जीवत्यसंशयम् । तद्वत्त्वमप्यधर्मिष्ठ
सदा वाचः प्रभाषसे ॥३१॥ इच्छतां भूमिपालानां भीष्म जीवस्य
संशयम् । लोकविद्विष्टकर्मा हि नान्योऽस्ति भवता समः ॥३२॥
वैशम्पायन उवाच । ततश्चेदिपतेः श्रुत्वा भीष्मः सकटुकं

वच:। उवाचेदं वचो राजंश्चेदिराजस्य शृण्वत:॥ ३३॥ इच्छतां किल नामाहं जीवाम्येषां महीक्षिताम्। सोऽहं न गणयाम्येतांस्तृणेनापि नराधिपान्॥ ३४॥ एवमुक्ते तु भीष्मेण तत: संचुक्रुशुर्नृपा:। केचिज्जहृषिरे तत्र केचिद्भीष्मं जगर्हिरे॥ ३५॥ केचिदूचुर्महेष्वासा: श्रुत्वा भीष्मस्य तद्वच:। पापोऽवलिप्तो वृद्धश्च नायं भीष्मोऽर्हति क्षमाम्॥ ३६॥ हन्यतां दुर्मतिर्भीष्म: पशुवत् साध्वयं नृपा:। सर्वै: समेत्य संरब्धैर्दह्यतां वा कटाग्निना॥ ३७॥ इति तेषां वच: श्रुत्वा तत: कुरुपितामह:। उवाच मतिमान् भीष्मस्तानेव वसुधाधिपान्॥ ३८॥ उक्तस्योक्तस्य नेहान्तमहं समुपलक्षये। यत्तु वक्ष्यामि तत्सर्वं शृणुध्वं वसुधाधिपा:॥ ३९॥ पशुवद्घातनं वा मे दहनं वा कटाग्निना। क्रियतां मूर्ध्नि वो न्यस्तं मयेदं सकलं पदम्॥ ४०॥ एष तिष्ठति गोविन्द: पूजितोऽस्माभिरच्युत:। यस्य वा त्वरते बुद्धिर्मरणाय स माधवम्॥ ४१॥ कृष्णमाह्वयतामद्य युद्धे चक्रगदाधरम्। यावदस्यैव देवस्य देहं विशतु पातित:॥ ४२॥

इति सभापर्व्वणि शिशुपालवधपर्व्वणि भीष्मवाक्ये चतुश्चत्वारिंशोऽध्याय:॥ ४४॥

———

वैशम्पायन उवाच। तत: श्रुत्वैव भीष्मस्य चेदिराडुरुविक्रम:। युयुत्सुर्वासुदेवेन वासुदेवमुवाच ह॥ १॥ आह्वये त्वां रणं गच्छ मया सार्द्धं जनार्द्दन। यावदद्य निहन्मि त्वां सहितं सर्वपाण्डवै:॥ २॥ सह त्वया हि मे वध्या: सर्वथा कृष्ण पाण्डवा:। नृपतीन् समतिक्रम्य यैरराजा त्वमर्चित:॥ ३॥ ये त्वां दासमराजानं बाल्यादर्चन्ति दुर्मतिम्। अनर्हमर्हवत् कृष्ण वध्यास्त इति मे मति:॥ ४॥ इत्युक्त्वा राजशार्दूल तस्थौ गर्ज-

अमर्षणः। एवमुक्ते ततः कृष्णो मृदुपूर्वमिदं वचः॥ ५॥ उवाच पार्थिवान् सर्वान् तत्समक्षञ्च पाण्डवान्। एष नः शत्रुरत्यन्तं पार्थिवाः सात्वतीसुतः॥ ६॥ सात्वतानां नृशंसात्मा न हितोऽनपकारिणाम्। प्राग्ज्योतिषपुरं यातानस्मान् ज्ञात्वा नृशंसकृत् ॥ ७॥ अदहद्द्वारकामेष स्वस्रीयः सन्नराधिपाः। क्रीड़तो भोजराजस्य एष रैवतके गिरौ॥ ८॥ हत्वा बद्ध्वा च तान् सर्वानुपायात् स्वपुरं पुरा। अश्वमेधे हयं मेध्यमुत्सृष्टं रक्षिभिर्वृतम्॥ ९॥ पितुर्मे यज्ञविघ्नार्थमहरत्पापनिश्चयः। सौवीरान् प्रतियातांश्च बभ्रोरेष तपस्विनः। भार्य्यामभ्यहरन्मोहादकामां तामितोगताम्॥ १०॥ एष मायाप्रतिच्छन्नः करूषार्थे तपस्विनीम्। जहार भद्रां वैशालीं मातुलस्य नृशंसकृत्॥ ११॥ पितृष्वसुः कृते दुःखं सुमहन्मर्षयाम्यहम्। दिष्ट्या त्विदं सर्वराज्ञां सन्निधावद्य वर्त्तते॥ १२॥ पश्यन्ति हि भवन्तोऽद्य मय्यतीव व्यतिक्रमम्। कृतानि तु परोक्षं मे यानि तानि निबोधत ॥ १३॥ इमं त्वस्य न शक्ष्यामि क्षन्तुमद्य व्यतिक्रमम्। अवलेपाद्वधार्हस्य समग्रे राजमण्डले॥ १४॥ रुक्मिण्यामस्य मूढस्य प्रार्थनासीन्मुमूर्षतः। न च तां प्राप्तवान् मूढः शूद्रो वेदश्रुतीमिव॥ १५॥

वैशम्पायन उवाच। एवमादि ततः सर्वे सहितास्ते नराधिपाः। वासुदेववचः श्रुत्वा चेदिराजं व्यगर्हयन्॥ १६॥ तस्य तद्वचनं श्रुत्वा शिशुपालः प्रतापवान्। जहास स्वनवद्धासं वाक्यं चेदमुवाच ह॥ १७॥ मत्पूर्वां रुक्मिणीं कृष्ण संसत्सु परिकीर्त्तयन्। विशेषतः पार्थिवेषु व्रीड़ां न कुरुषे कथम्॥ १८॥ मन्यमानो हि कः सत्सु पुरुषः परिकीर्त्तयेत्। अन्यपूर्वां स्त्रियं जातु त्वदन्यो मधुसूदन॥ १९॥ क्षम वा यदि ते श्रद्धा मा वा कृष्ण मम क्षम। क्रुद्धाद्वापि प्रसन्नाद्वा किं मे त्वत्तो भविष्यति

॥ २० ॥ तथा ब्रुवत एवास्य भगवान् मधुसूदनः । मनसाचिन्तयच्
चक्रं दैत्यगर्वनिसूदनम् ॥ २१ ॥ एतस्मिन्नेव काले तु चक्रे हस्त-
गते सति । उवाच भगवानुच्चैर्वाक्यं वाक्यविशारदः ॥ २२ ॥
शृण्वन्तु मे महीपाला येनैतत् क्षमितं मया । अपराधशतं क्षाम्यं
मातुरस्यैव याचने ॥ २३ ॥ दत्तं मया याचितञ्च तद्वै पूर्णं हि
पार्थिवाः । अधुना वधयिष्यामि पश्यतां वो महीक्षिताम् ॥२४॥
एवमुक्त्वा यदुश्रेष्ठश्चेदिराजस्य तत्क्षणात् । व्यपाहरत् शिरः
क्रुद्धश्चक्रेणामित्रकर्षणः ॥ २५ ॥ स पपात महाबाहुर्वज्राहत
इवाचलः । ततश्चेदिपतेर्देहात्तेजोऽग्र्यं ददृशुर्नृपाः ॥ २६ ॥ उत्-
पतन्तं महाराज गगनादिव भास्करम् । ततः कमलपत्राक्षं कृष्णं
लोकनमस्कृतम् ॥ २७ ॥ ववन्दे तत्तदा तेजो विवेश च नरा-
धिप । तदद्भुतममन्यन्त दृष्ट्वा सर्वे महीक्षितः ॥ २८ ॥ यद्विवेश
महाबाहुं तत्तेजः पुरुषोत्तमम् । अनभ्रे प्रववर्ष द्यौः पपात
ज्वलिताशनिः ॥ २९ ॥ कृष्णेन निहते चैद्ये चचाल च वसुन्धरा ।
ततः केचिन्महीपाला नाब्रुवंस्तत्र किञ्चन ॥ ३० ॥ अतीतवाक्-
पथे काले प्रेक्षमाणा जनार्दनम् । हस्तैर्हस्ताग्रमपरे प्रत्यपिं-
षन्नमर्षिताः ॥ ३१ ॥ अपरे दशनैरोष्ठानदशन् क्रोधमूर्च्छिताः ।
रहश्च केचिद्वार्ष्णेयं प्रशशंसुर्नराधिपाः ॥ ३२ ॥ केचिदेव सुसं-
रब्धा मध्यस्थास्त्वपरेऽभवन् । प्रहृष्टाः केशवं जग्मुः संस्तुवन्तो
महर्षयः ॥ ३३ ॥ ब्राह्मणाश्च महात्मानः पार्थिवाश्च महाबलाः ।
शशंसुर्निर्वृताः सर्वे दृष्ट्वा कृष्णस्य विक्रमम् ॥ ३४ ॥ पाण्डवस्त्वब्र-
वीत् भ्रातॄन् सत्कारेण महीपतिम् । दमघोषात्मजं वीरं संस्का-
रयत माचिरम् ॥ ३५ ॥ तथा च कृतवन्तस्ते भ्रातुर्वै शासनं
तदा । चेदीनामाधिपत्ये च पुत्रमस्य महीपतेः ॥ ३६ ॥ अभ्य-
षिञ्चत्तदा पार्थः सह तैर्वसुधाधिपैः । ततः स कुरुराजस्य क्रतुः
सर्वसमृद्धिमान् ॥ ३७ ॥ यूनां प्रीतिकरो राजन् स बभौ

विपुलौजसः। प्राप्तविघ्नः सुखारम्भः प्रभूतधनधान्यवान् ॥३८॥
अन्नवान् बहुभक्ष्यश्च केशवेन सुरक्षितः। समापयामास च तं
राजसूयं महाक्रतुम् ॥ ३९ ॥ तन्तु यज्ञं महाबाहुरासमाप्ते-
र्जनार्द्दनः। ररक्ष भगवाञ्छौरिः शार्ङ्गचक्रगदाधरः ॥ ४० ॥
ततस्त्ववभृतस्नातं धर्मात्मानं युधिष्ठिरम्। समस्तं पार्थिवं क्षत्र-
मुपागम्येदमब्रवीत् ॥ ४१ ॥ दिष्ट्या वर्द्धसि धर्मज्ञ साम्राज्यं
प्राप्तवानसि। आजमीढाजमीढानां यशः संवर्द्धितं त्वया ॥४२॥
कर्म्मणैतेन राजेन्द्र धर्मश्च सुमहान् कृतः। आपृच्छामो नरव्याघ्र
सर्वकामैः सुपूजिताः ॥ ४३ ॥ स्वराष्ट्राणि गमिष्यामस्तदनुज्ञातु-
मर्हसि। श्रुत्वा तु वचनं राज्ञां धर्मराजो युधिष्ठिरः ॥ ४४ ॥
यथार्हं पूज्य नृपतीन् भ्रातॄन् सर्वानुवाच ह। राजानः सर्व
एवैते प्रीत्यास्मान् समुपागताः ॥ ४५ ॥ प्रस्थिताः स्वानि राष्ट्राणि
मामापृच्छ्य परन्तपाः। तेऽनुव्रजत भद्रं वो विषयान्तं नृपो-
त्तमान् ॥ ४६ ॥ भ्रातुर्वचनमाज्ञाय पाण्डवा धर्मचारिणः।
यथार्हं नृपतीन् सर्वानेकैकं समनुव्रजन्। विराटमन्वयात्तूर्णं
धृष्टद्युम्नः प्रतापवान् ॥ ४७ ॥ धनञ्जयो यज्ञसेनं महात्मानं
महारथम्। भीष्मञ्च धृतराष्ट्रञ्च भीमसेनो महाबलः ॥ ४४ ॥
द्रोणन्तु ससुतं वीरं सहदेवो युधांपतिः। नकुलः सुबलं राजन्
सहपुत्रं समन्वयात् ॥ ४५ ॥ द्रौपदेयाः ससौभद्राः पार्वतीयान्
महारथान्। अन्वगच्छंस्तथैवान्यान् क्षत्रियान् क्षत्रियर्षभाः ॥४६॥
एवं सुपूजिताः सर्वे जग्मुर्विप्राः सहस्रशः। गतेषु पार्थिवेन्द्रेषु
सर्वेषु ब्राह्मणेषु च ॥ ४७ ॥ युधिष्ठिरमुवाचेदं वासुदेवः प्रताप-
वान्। आपृच्छे त्वां गमिष्यामि द्वारकां कुरुनन्दन ॥ ४८ ॥
राजसूयं क्रतुश्रेष्ठं दिष्ट्या त्वं प्राप्तवानसि। तमुवाचैवमुक्तस्तु
धर्मराजो जनार्द्दनम् ॥ ४९ ॥ तव प्रसादाद्गोविन्द प्राप्तः क्रतु-
वरो मया। क्षत्रं समग्रमपि च त्वत्प्रसादाद्वशे स्थितम् ॥ ५० ॥

उपादाय बलिं मुख्यं मामेव समुपस्थितम् । कथं तद्गमनार्थं मे
वाणी वितरतेऽनघ ॥ ५० ॥ न ह्यहं त्वामृते वीर रतिं प्राप्नोमि
कर्हिचित् । अवश्यञ्चैव गन्तव्या भवता द्वारका पुरी ॥ ५१ ॥
एवमुक्तः स धर्मात्मा युधिष्ठिरसहायवान् । अभिगम्याब्रवीत्
प्रीतः पृथां पृथुयशा हरिः । साम्राज्यं समनुप्राप्ताः पुत्रास्तेऽद्य
पितृष्वसः ॥ ५२ ॥ सिद्धार्था वसुमन्तश्च सा त्वं प्रीतिमवाप्नुहि ।
अनुज्ञातस्त्वया चाहं द्वारकां गन्तुमुत्सहे ॥ ५३ ॥ सुभद्रां द्रौपदीं-
ञ्चैव सभाजयत केशवः । निष्क्रम्यान्तःपुरात्तस्माद्युधिष्ठिरसहाय-
वान् ॥ ५४ ॥ स्नातश्च कृतजप्यश्च ब्राह्मणान् स्वस्ति वाच्य च ।
ततो मेघवपुःप्रख्यं स्यन्दनञ्च सुकल्पितम् ॥ ५५ ॥ योजयित्वा
महाबाहुर्दारुकः समुपस्थितः । उपस्थितं रथं दृष्ट्वा तार्क्ष्य-
प्रवरकेतनम् ॥ ५६ ॥ प्रदक्षिणमुपावृत्य समारुह्य महामनाः ।
प्रययौ पुण्डरीकाक्षस्ततो द्वारवतीं पुरीम् ॥ ५७ ॥ तं पद्भ्यामनु-
वव्राज धर्मराजो युधिष्ठिरः । भ्रातृभिः सहितः श्रीमान् वासु-
देवं महाबलम् ॥ ५८ ॥ ततो मुहूर्त्तं संगृह्य स्यन्दनप्रवरं हरिः ।
अब्रवीत् पुण्डरीकाक्षः कुन्तीपुत्रं युधिष्ठिरम् ॥ ५९ ॥ अप्रमत्तः
स्थितो नित्यं प्रजाः पाहि विशाम्पते । पर्जन्यमिव भूतानि महा-
द्रुममिव द्विजाः ॥ ६० ॥ बान्धवास्त्वोपजीवन्तु सहस्राक्षमिवा-
मराः । कृत्वा परस्परेणैव संविदं कृष्णपाण्डवौ ॥ ६१ ॥ अन्योन्यं
समनुज्ञाप्य जग्मतुः स्वगृहान् प्रति । गते द्वारवतीं कृष्णे सात्वत-
प्रवरे नृप ॥ ६२ ॥ एको दुर्य्योधनो राजा शकुनिश्चापि सौबलः ।
तस्यां सभायां दिव्यायामूषतुस्तौ नरर्षभौ ॥ ६३ ॥

इति सभापर्व्वणि शिशुपालवधपर्व्वणि शिशुपालवधे
पञ्चचत्वारिंशोऽध्यायः समाप्तञ्च शिशुपालवधपर्व्व ॥ ४५ ॥

—

अथ द्यूतपर्व ।

वैशम्पायन उवाच। समाप्ते राजसूये तु क्रतुश्रेष्ठे सुदुर्लभे।
शिष्यैः परिवृतो व्यासः पुरस्तात् समपद्यत ॥ १ ॥ सोऽभ्ययादा-
सनात्तूर्णं भ्रातृभिः परिवारितः। पाद्येनासनदानेन पिता-
महमपूजयत् ॥ २ ॥ अथोपविश्य भगवान् काञ्चने परमासने।
आस्यतामिति चोवाच धर्मराजं युधिष्ठिरम् ॥ ३ ॥ अथोपविष्टं
राजानं भ्रातृभिः परिवारितम्। उवाच भगवान् व्यासस्तत्त-
द्वाक्यविशारदः ॥ ४ ॥ दिष्ट्या वर्द्धसि कौन्तेय साम्राज्यं प्राप्य
दुर्लभम्। वर्द्धिताः कुरवः सर्वे त्वया कुरुकुलोद्वह ॥ ५ ॥
आपृच्छे त्वां गमिष्यामि पूजितोऽस्मि विशाम्पते। एवमुक्तः स
कृष्णेन धर्मराजो युधिष्ठिरः। अभिवाद्योपसंगृह्य पितामह-
मथाब्रवीत् ॥ ६ ॥

युधिष्ठिर उवाच। संशयो द्विपदां श्रेष्ठ ममोत्पन्नः सुदु-
र्लभः। तस्य नान्योऽस्ति वक्ता वै त्वामृते द्विजपुङ्गव। उत्पातां-
स्त्रिविधान् प्राह नारदो भगवानृषिः ॥ ७ ॥ दिव्यांश्चैवान्तरीक्षांश्च
पार्थिवांश्च पितामह। अपि चैद्यस्य पतनाच्छन्नमौत्पातिकं
महत् ॥ ८ ॥

वैशम्पायन उवाच। राज्ञस्तु वचनं श्रुत्वा पराशरसुतः प्रभुः।
कृष्णद्वैपायनो व्यास इदं वचनमब्रवीत् ॥ ९ ॥ त्रयोदश समा
राजन्नुत्पातानां फलं महत्। सर्वक्षत्रविनाशाय भविष्यति विशा-
म्पते ॥ १० ॥ त्वामेकं कारणं कृत्वा कालेन भरतर्षभ। समेतं
पार्थिवं क्षत्रं क्षयं यास्यति भारत ॥ ११ ॥ दुर्योधनापराधेन
भीमार्जुनबलेन च। स्वप्ने द्रक्ष्यसि राजेन्द्र क्षपान्ते त्वं वृष-
ध्वजम्। नीलकण्ठं भवं स्थाणुं कपालिं त्रिपुरान्तकम् ॥ १२ ॥
उग्रं रुद्रं पशुपतिं महादेवमुमापतिम्। हरं शर्वं वृषं शूलिं
पिनाकिं कृत्तिवाससम् ॥ १३ ॥ कैलासकूटप्रतिमं वृषभेऽवस्थितं

शिवम् । निरीक्षमाणं सततं पितृराजाश्रितां दिशम् ॥ १४ ॥
एवमीदृशकं स्वप्नं द्रक्ष्यसि त्वं विशाम्पते । मा तत्कृते ह्यनुध्याहि
कालो हि दुरतिक्रमः ॥ १५ ॥ स्वस्ति तेऽस्तु गमिष्यामि कैलासं
पर्व्वतं प्रति । अप्रमत्तः स्थितो दान्तः पृथिवीं परिपालय ॥ १६ ॥

वैशम्पायन उवाच । एवमुक्त्वा स भगवान् कैलासं पर्व्वतं
ययौ । कृष्णद्वैपायनो व्यासः सह शिष्यैः श्रुतानुगैः ॥ १७ ॥
गते पितामहे राजा चिन्ताशोकसमन्वितः । निःश्वसन्नुष्णमस-
कृत्तमेवार्थं विचिन्तयन् ॥ १८ ॥ कथन्तु दैवं शक्येत पौरुषेण
प्रबाधितुम् । अवश्यमेव भविता यदुक्तं परमर्षिणा ॥ १९ ॥
ततोऽब्रवीन्महातेजाः सर्व्वान् भ्रातॄन् युधिष्ठिरः । श्रुतं वै पुरुष-
व्याघ्रा यन्मां द्वैपायनोऽब्रवीत् ॥ २० ॥ तदा तद्वचनं श्रुत्वा
मरणे निश्चिता मतिः । सर्व्वक्षत्रस्य निधने यद्यहं हेतुरीप्सितः
॥ २१ ॥ कालेन निर्म्मितस्तात को ममार्थोऽस्ति जीवतः । एवं
ब्रुवन्तं राजानं फाल्गुनः प्रत्यभाषत ॥ २२ ॥ मा राजन् कश्मलं
घोरं प्राविशो बुद्धिनाशनम् । सम्प्रधार्य्य महाराज यत् क्षेमं तत्
समाचर ॥ २३ ॥ ततोऽब्रवीत् सत्यधृतिर्भ्रातॄन् सर्व्वान् युधि-
ष्ठिरः । द्वैपायनस्य वचनं तत्रैव समचिन्तयत् ॥ २४ ॥ अद्य
प्रभृति भद्रं वः प्रतिज्ञां मे निबोधत । त्रयोदशसमास्तात को
ममार्थोऽस्ति जीवतः ॥ २५ ॥ न प्रवक्ष्यामि परुषं भ्रातॄनन्यांश्च
पार्थिवान् । स्थितो निदेशे ज्ञातीनां योक्ष्ये तत्समुदाहरन्
॥ २६ ॥ एवं मे वर्त्तमानस्य स्वसुतेष्वितरेषु च । भेदो न
भविता लोके भेदमूलो हि विग्रहः ॥ २७ ॥ विग्रहं दूरतो रक्षन्
प्रियाण्येव समाचरन् । वाच्यतां न गमिष्यामि लोकेषु मनुज-
र्षभाः ॥ २८ ॥ भ्रातुर्ज्येष्ठस्य वचनं पाण्डवाः सन्निशम्य तत् ।
तमेव समवर्त्तन्त धर्म्मराजहिते रताः ॥ २९ ॥ संसत्सु समयं
कृत्वा धर्म्मराट् भ्रातृभिः सह । पितॄंस्तर्प्य यथान्यायं देवताश्च

विशाम्पते ॥ ३० ॥ कृतमङ्गलकल्याणो भ्रातृभिः परिवारितः। गतेषु क्षत्रियेन्द्रेषु सर्वेषु भरतर्षभ ॥ ३१ ॥ युधिष्ठिरः सहामात्यः प्रविवेश पुरोत्तमम्। दुर्योधनो महाराज शकुनिश्चापि सौबलः। सभायां रमणीयायां तत्रैवास्ते नराधिप ॥ ३२ ॥

इति सभापर्वणि द्यूतपर्वणि युधिष्ठिरसमये
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

वैशम्पायन उवाच। वसन् दुर्योधनस्तस्यां सभायां पुरुषर्षभः। शनैर्ददर्श तां सर्वां सभां शकुनिना सह ॥ १ ॥ तस्यां दिव्यानभिप्रायान् ददर्श कुरुनन्दनः। न दृष्टपूर्वा ये तेन नगरे नागसाह्वये ॥ २ ॥ स कदाचित् सभामध्ये धार्त्तराष्ट्रो महीपतिः। स्फाटिकं स्थलमासाद्य जलमित्यभिशङ्कया ॥ ३ ॥ स्ववस्त्रोत्कर्षणं राजा कृतवान् बुद्धिमोहितः। दुर्मना विमुखश्चैव परिचक्राम तां सभाम् ॥ ४ ॥ ततः स्थले निपतितो दुर्मना व्रीडितो नृपः। निःश्वसन्विमुखश्चापि परिचक्राम तां सभाम् ॥ ५ ॥ ततः स्फाटिकतोयां वै स्फाटिकाम्बुजशोभिताम्। वापीं मत्वा स्थलमिव सवासाः प्रापतज्जले ॥ ६ ॥ जले निपतितं दृष्ट्वा भीमसेनो महाबलः। जहास जहसुश्चैव किङ्कराश्च सुयोधनम् ॥ ७ ॥ वासांसि च शुभान्यस्मै प्रददू राजशासनात्। तथागतन्तु तं दृष्ट्वा भीमसेनो महाबलः ॥ ८ ॥ अर्जुनश्च यमौ चोभौ सर्वे ते प्राहसंस्तदा। नामर्षयत्ततस्तेषामवहासममर्षणः ॥ ९ ॥ आकारं रक्षमाणस्तु न स तान् समुदैक्षत। पुनर्वसनमुत्क्षिप्य प्रतरिष्यन्निव स्थलम् ॥ १० ॥ आरुरोह ततः सर्वे जहसुश्च पुनर्जनाः। द्वारन्तु पिहिताकारं स्फाटिकं प्रेक्ष्य भूमिपः ॥ ११ ॥ प्रविशन्नाहतो मूर्ध्नि व्याघूर्णित इव स्थितः। तादृशं चापरं द्वारं स्फाटिको-

वृतकपाटकम् ॥ १२ ॥ विघट्टयन् कराभ्यान्तु निष्क्रम्याग्रे पपात ह। द्वारन्तु विततकारं समापेदे पुनश्च सः ॥ १३ ॥ तद्वृतं चेति मन्वानो द्वारस्थानादुपारमत्। एवं प्रलम्भान् विविधान् प्राप्य तत्र विशाम्पते ॥ १४ ॥ पाण्डवेयाभ्यनुज्ञातस्ततो दुर्य्योधनो नृपः। अप्रहृष्टेन मनसा राजसूये महाक्रतौ। प्रेक्ष्य तामद्भुतामृद्धिं जगाम गजसाह्वयम् ॥ १५ ॥ पाण्डवश्रीप्रतप्तस्य ध्यायमानस्य गच्छतः। दुर्य्योधनस्य नृपतेः पापा मतिरजायत ॥ १६ ॥ पार्थान् सुमनसो दृष्ट्वा पार्थिवांश्च वशानुगान्। कृत्स्नं चापि हितं लोकमाकुमारं कुरूद्वह ॥ १७ ॥ महिमानं परञ्चापि पाण्डवानां महात्मनाम्। दुर्य्योधनो धार्त्तराष्ट्रो विवर्णः समपद्यत ॥ १८ ॥ स तु गच्छन्ननेकाग्रः सभामेकोऽन्वचिन्तयत्। श्रियञ्च तामनुपमां धर्मराजस्य धीमतः ॥ १९ ॥ प्रमत्तो धृतराष्ट्रस्य पुत्रो दुर्य्योधनस्तदा। नाभ्यभाषत् सुबलजं भाषमाणं पुनः पुनः ॥ २० ॥ अनेकाग्रन्तु तं दृष्ट्वा शकुनिः प्रत्यभाषत। दुर्य्योधन कुतोमूलं निश्वसन्निव गच्छसि ॥ २१ ॥

दुर्य्योधन उवाच। दृष्ट्वेमां पृथिवीं कृत्स्नां युधिष्ठिरवशानुगाम्। जितामस्त्रप्रतापेन श्वेताश्वस्य महात्मनः ॥ २२ ॥ तञ्च यज्ञं तथाभूतं दृष्ट्वा पार्थस्य मातुल। यथा शक्रस्य देवेषु तथाभूतं महाद्युते ॥ २३ ॥ अमर्षेण तु सम्पूर्णो दह्यमानो दिवानिशम्। शुचिशुक्रागमे काले शुष्ये तोयमिवाल्पकम् ॥ २४ ॥ पश्य सात्वतमुख्येन शिशुपालो निपातितः। न च तत्र पुमानासीत् कश्चित्तस्य पदानुगः ॥ २५ ॥ दह्यमाना हि राजानः पाण्डवोत्थेन वह्निना। क्षान्तवन्तोऽपराधं ते को हि तत् क्षन्तुमर्हति ॥ २६ ॥ वासुदेवेन तत् कर्म यथायुक्तं महत् कृतम्। सिद्धञ्च पाण्डुपुत्राणां प्रतापेन महात्मनाम् ॥ २७ ॥ तथा हि रत्नान्यादाय विविधानि नृपा नृपम्। उपातिष्ठन्त कौन्तेयं

द्वेष्टा ह्यकृतबुद्धयः ॥ २८ ॥ श्रियं तथागतां दृष्ट्वा ज्वलन्तीमिव पाण्डवे। अमर्षवशमापन्नो दह्यामि न तथोचितः ॥ २९ ॥ एवं स निश्चयं कृत्वा ततो वचनमब्रवीत्। पुनर्गान्धारनृपतिं दह्यमान इवाग्निना ॥ ३० ॥ वह्निमेव प्रवेक्ष्यामि भक्षयिष्यामि वा विषम्। अपो वापि प्रवेक्ष्यामि न हि शक्ष्यामि जीवितुम् ॥ ३१ ॥ को हि नाम पुमान् लोके मर्षयिष्यति सत्त्ववान्। सपत्नानृध्यतो दृष्ट्वा हीनमात्मानमेव च ॥ ३२ ॥ सोऽहं न स्त्री न चाप्यस्त्री न पुमान्नापुमानपि। योऽहं तां मर्षयाम्यद्य तादृशीं श्रियमागताम् ॥ ३३ ॥ ईश्वरत्वं पृथिव्याश्च वसुमत्ताञ्च तादृशीम्। यज्ञञ्च तादृशं दृष्ट्वा मादृशः को न संज्वरेत् ॥ ३४ ॥ अशक्तश्चैक एवाहं तामाहर्त्तुं नृपश्रियम्। सहायांश्च न पश्यामि तेन मृत्युं विचिन्तये ॥ ३५ ॥ दैवमेव परं मन्ये पौरुषञ्च निरर्थकम्। दृष्ट्वा कुन्तीसुते शुभ्रां श्रियं तां महतीं तथा ॥ ३६ ॥ कृतो यत्नो मया पूर्वं विनाशे तस्य सौबल। तच्च सर्वमतिक्रम्य संवृद्धोऽप्स्विव पङ्कजम् ॥ ३७ ॥ तेन दैवं परं मन्ये पौरुषञ्च निरर्थकम्। धार्त्तराष्ट्रा हि हीयन्ते पार्था वर्द्धन्ति नित्यशः ॥ ३८ ॥ सोऽहं श्रियञ्च तां दृष्ट्वा सभां ताञ्च तथाविधाम्। रक्षिभिश्चावहासं तं परितप्ये यथाग्निना ॥ ३९ ॥ स मामभ्यनुजानीहि मातुलाद्य सुदुःखितम्। अमर्षञ्च समाविष्टं धृतराष्ट्रे निवेदय ॥ ४० ॥

इति सभापर्वणि द्यूतपर्वणि दुर्य्योधनसन्तापे
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

शकुनिरुवाच। दुर्य्योधन न तेऽमर्षः कार्य्यः प्रति युधिष्ठिरम्। भागधेयानि हि स्वानि पाण्डवा भुञ्जते सदा ॥ १ ॥

विधानं विविधाकारं परं तेषां विधानतः । अनेकैरभ्युपायैश्च त्वया न शकिताः पुरा ॥ २ ॥ आरब्धापि महाराज पुनः पुनररिन्दम । विमुक्ताश्च नरव्याघ्रा भागधेयपुरस्कृताः ॥ ३ ॥ तैर्लब्धा द्रौपदी भार्य्या द्रुपदश्च सुतैः सह । सहायः पृथिवीलाभे वासुदेवश्च वीर्य्यवान् ॥ ४ ॥ लब्धश्च नाभिभूतार्थैः पित्र्योंऽशः पृथिवीपते । विवृद्धस्तेजसा तेषां तत्र का परिदेवना ॥ ५ ॥ धनञ्जयेन गाण्डीवमक्षय्यौ च महेषुधी । लब्धान्यस्त्राणि दिव्यानि तर्पयित्वा हुताशनम् ॥ ६ ॥ तेन कार्म्मुकमुख्येन बाहुवीर्य्येण चात्मनः । कृता वशे महीपालास्तत्र का परिदेवना ॥ ७ ॥ अग्निदाहान्मयञ्चापि मोक्षयित्वा स दानवम् । सभां तां कारयामास सव्यसाची परन्तपः ॥८॥ तेन चैव मयेनोक्ताः किङ्करा नाम राक्षसाः । वहन्ति तां सभां भीमास्तत्र का परिदेवना ॥ ९ ॥ यच्चासहायतां राजन्नुक्तवानसि भारत । तन्मिथ्या भ्रातरो हीमे तव सर्व्वे वशानुगाः ॥ १० ॥ द्रोणस्तव महेष्वासः सह पुत्रेण वीर्य्यवान् । सूतपुत्रश्च राधेयो गौतमश्च महारथः ॥११॥ अहञ्च सह सोदर्य्यैः सौमदत्तिश्च पार्थिवः । एतैस्त्वं सहितः सर्व्वैर्जय कृत्स्नां वसुन्धराम् ॥ १२ ॥

दुर्य्योधन उवाच । त्वया च सहितो राजन्नेतैश्चान्यैर्महारथैः । एतानेव विजेष्यामि यदि त्वमनुमन्यसे ॥ १३ ॥ एतेषु विजितेष्वद्य भविष्यति मही मम । सर्व्वे च पृथिवीपालाः सभा सा च महाधना ॥ १४ ॥

शकुनिरुवाच । धनञ्जयो वासुदेवो भीमसेनो युधिष्ठिर । नकुलः सहदेवश्च द्रुपदश्च सहात्मजैः ॥ १५ ॥ नैते युधि पराजेतुं शक्या देवगणैरपि । महारथा महेष्वासाः कृतास्त्रा युद्धदुर्म्मदाः ॥ १६ ॥ अहन्तु तद्विजानामि विजेतुं येन शक्यते । युधिष्ठिरं स्वयं राजंस्तन्निबोध जुषस्व च ॥ १७ ॥

दुर्य्योधन उवाच। अप्रमादेन सुहृदामन्येषाञ्च महात्मनाम्। यदि शक्या विजेतुं ते तन्ममाचक्ष्व मातुल ॥ १८ ॥

शकुनिरुवाच। द्यूतप्रियश्च कौन्तेयो न स जानाति देवितुम्। समाहूतश्च राजेन्द्रो न शक्ष्यति निवर्त्तितुम् ॥ १९ ॥ देवने कुशलश्चाहं न मेऽस्ति सदृशो भुवि। त्रिषु लोकेषु कौरव्य तं त्वं द्यूते समाह्वय ॥ २० ॥ तस्याक्षकुशलो राजन्नादास्येऽहमसंशयम्। राज्यं श्रियञ्च तां दीप्तां त्वदर्थं पुरुषर्षभ ॥ २१ ॥ इदन्तु सर्वं त्वं राज्ञे दुर्य्योधन निवेदय। अनुज्ञातस्तु ते पित्रा विजेष्ये तान्न संशयः ॥ २२ ॥

दुर्य्योधन उवाच। त्वमेव कुरुमुख्याय धृतराष्ट्राय सौबल। निवेदय यथान्यायं नाहं शक्ष्ये निवेदितुम् ॥ २३ ॥

इति सभापर्वणि द्यूतपर्वणि दुर्य्योधनसन्तापे
अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

——

वैशम्पायन उवाच। अनुभूय तु राज्ञस्तं राजसूयं महाक्रतुम्। युधिष्ठिरस्य नृपतेर्गान्धारीपुत्रसंयुतः ॥ १ ॥ प्रियकृन्मतमाज्ञाय पूर्वं दुर्य्योधनस्य तत्। प्रज्ञाचक्षुषमासीनं शकुनिः सौबलस्तदा ॥ २ ॥ दुर्य्योधनवचः श्रुत्वा धृतराष्ट्रं जनाधिपम्। उपगम्य महाप्राज्ञं शकुनिर्वाक्यमब्रवीत् ॥ ३ ॥

शकुनिरुवाच। दुर्य्योधनो महाराज विवर्णो हरिणः कृशः। दीनश्चिन्तापरश्चैव तं विद्धि मनुजाधिप ॥ ४ ॥ न वै परीक्षसे सम्यगसह्यं शत्रुसम्भवम्। ज्येष्ठपुत्रस्य हृच्छोकं किमर्थं नावबुध्यसे ॥ ५ ॥

धृतराष्ट्र उवाच। दुर्य्योधन कुतो मूलं भृशमार्त्तोऽसि पुत्रक। श्रोतव्यश्चेन्मया सोऽर्थो ब्रूहि मे कुरुनन्दन ॥ ६ ॥ अयं त्वां शकुनिः

प्राप्तश्च विवर्णं हरिणं कृशम् । चिन्तयंश्च न पश्यामि शोकस्य तव सम्भवम् ॥ ७ ॥ ऐश्वर्य्यं हि महत् पुत्र त्वयि सर्वं प्रतिष्ठितम् । भ्रातरः सुहृदश्चैव नाचरन्ति तवाप्रियम् ॥ ८ ॥ आच्छादयसि प्रावारानश्नासि पिशितौदनम् । आजानेया वहन्त्यश्वाः केनासि हरिणः कृशः ॥ ९ ॥ शयनानि महार्हाणि योषितश्च मनोरमाः । गुणवन्ति च वेश्मानि विहाराश्च यथासुखम् ॥ १० ॥ देवानामिव ते सर्वं वाचि बद्धं न संशयः । स दीन इव दुर्द्धर्ष कस्माच्छोचसि पुत्रक ॥ ११ ॥

दुर्य्योधन उवाच । अश्नाम्याच्छादये चाहं यथा कुपुरुषस्तथा । अमर्षं धारये चोग्रं निनीषुः कालपर्य्ययम् ॥ १२ ॥ अमर्षणः स्वाः प्रकृतीरभिभूय परं स्थितः । क्लेशान्मुमुक्षुः परजात् स वै पुरुष उच्यते ॥ १३ ॥ सन्तोषो वै श्रियं हन्ति ह्यभिमानश्च भारत । अनुक्रोशभये चोभे यैर्वृतो नाश्नुते महत् ॥१४॥ न मां प्रीणाति मद्भुक्तं श्रियं दृष्ट्वा युधिष्ठिरे । अतिज्वलन्तीं कौन्तेये विवर्णीकरणीं मम ॥ १५ ॥ सपत्नानृध्यतोऽऽत्मानं हीयमानं निशम्य च । अदृश्यामपि कौन्तेयश्रियं पश्यन्निवोद्यताम् ॥ १६ ॥ तस्मादहं विवर्णश्च दीनश्च हरिणः कृशः । अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ॥ १७ ॥ त्रिंशद्दासीक एकैको यान्बिभर्त्ति युधिष्ठिरः । दशान्यानि सहस्राणि नित्यं तत्रान्नमुत्तमम् ॥ १८ ॥ भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने । कदलीमृगमोकानि कृष्णश्यामारुणानि च ॥ १९ ॥ काम्बोजः प्राहिणोत्तस्मै परार्द्ध्यानपि कम्बलान् । गजयोषिद्गवाश्वस्य शतशोऽथ सहस्रशः ॥ २० ॥ त्रिंशतं चोष्ट्रवामीनां शतानि विचरन्त्युत । राजन्या बलिमादाय समेता हि नृपक्षये ॥ २१ ॥ पृथग्विधानि रत्नानि पार्थिवाः पृथिवीपते । आहरन् क्रतुमुख्येऽस्मिन् कुन्तीसुताय भूरिशः ॥ २२ ॥ न क्वचिद्धि मया तादृग्दृष्टपूर्वो न च

श्रुतः। यादृग्धनागमो यज्ञे पाण्डुपुत्रस्य धीमतः ॥ २३ ॥ अप-
र्य्यन्तं धनौघं तं दृष्ट्वा शत्रोरहं नृप। शर्म नैवाधिगच्छामि चिन्त-
यानो विशाम्पते ॥ २४ ॥ ब्राह्मणा वाटधानाश्च गोमन्तः शत-
संघशः। त्रिखर्वं बलिमादाय द्वारि तिष्ठन्ति वारिताः ॥ २५ ॥
कमण्डलूनुपादाय जातरूपमयान् शुभान्। एतद्धनं समादाय
प्रवेशं लेभिरे न च ॥ २६ ॥ यन्नैव मधु शक्राय धारयन्त्यमर-
स्त्रियः। तदस्मै कांस्यमाहार्षीत् वारुणं कलशोदधिः ॥ २७ ॥
शैक्यं रुक्मसहस्रस्य बहुरत्नविभूषितम्। शङ्खप्रवरमादाय वासु-
देवोऽभिषिक्तवान् ॥ २८ ॥ दृष्ट्वा च मम तत्सर्वं ज्वररूपमिवा-
भवत्। गृहीत्वा यत्तु गच्छन्ति समुद्रौ पूर्वदक्षिणौ ॥ २९ ॥
तथैव पश्चिमं यान्ति गृहीत्वा भरतर्षभ। उत्तरन्तु न गच्छन्ति
विना तात पतत्रिणः ॥ ३० ॥ तत्र गत्वार्जुनो दण्डमाजहारा-
मितं धनम्। इदं चाद्भुतमत्रासीत्तन्मे निगदतः शृणु। पूर्णे
शतसहस्रे तु विप्राणां परिवेश्यताम् ॥ ३१ ॥ स्थापिता तत्र
संज्ञाभूच्छङ्खो ध्मायति नित्यशः। मुहुर्मुहुः प्रणदतस्तस्य शङ्खस्य
भारत ॥ ३२ ॥ अनिशं शब्दमश्रौषं ततो रोमाणि मेऽहृषन्।
पार्थिवैर्बहुभिः कीर्णमुपस्थानं दिदृक्षुभिः ॥ ३३ ॥ अशोभत
महाराज नक्षत्रैर्द्यौरिवामला। सर्वरत्नान्युपादाय पार्थिवा वै
जनेश्वर ॥ ३४ ॥ यज्ञे तस्य महाराज पाण्डुपुत्रस्य धीमतः।
वैश्या इव महीपाला द्विजातिपरिवेशकाः ॥ ३५ ॥ न सा श्री-
र्देवराजस्य यमस्य वरुणस्य च। गुह्यकाधिपतेर्वापि या श्री
राजन् युधिष्ठिरे ॥ ३६ ॥ तां दृष्ट्वा पाण्डुपुत्रस्य श्रियं परमिका-
महम्। शान्तिं न परिगच्छामि दह्यमानेन चेतसा ॥ ३७ ॥

शकुनिरुवाच। यामेतामातुलां लक्ष्मीं दृष्टवानसि पाण्डवे।
तस्याः प्राप्तावुपायं मे शृणु सत्यपराक्रम ॥ ३८ ॥ अहमक्षेष्वभि-
ज्ञातः पृथिव्यामपि भारत। हृदयज्ञः पणज्ञश्च विशेषज्ञश्च देवने

॥ ३९ ॥ द्यूतप्रियश्च कौन्तेयो न च जानाति देवितुम्। आहूत-
श्चैष्यति व्यक्तं द्यूतादपि रणादपि ॥ ४० ॥ नियतं तं विजेष्यामि
कृत्वा तु कपटं विभो। आनयामि समृद्धिं तां दिव्यां चोपा-
ह्वयस्व तम् ॥ ४१ ॥

वैशम्पायन उवाच। एवमुक्तः शकुनिना राजा दुर्य्योधनस्ततः।
धृतराष्ट्रमिदं वाक्यमपदान्तरमब्रवीत्॥ ४२ ॥ अयमुत्सहते राजन्
श्रियमाहर्त्तुमक्षवित्। द्यूतेषु पाण्डुपुत्रस्य तदनुज्ञातुमर्हसि ॥४३॥

धृतराष्ट्र उवाच। क्षत्ता मन्त्री महाप्राज्ञः स्थितो यस्यास्मि
शासने। तेन सङ्गम्य वेत्स्यामि कार्य्यस्यास्य विनिश्चयम् ॥ ४४ ॥
स हि धर्म्मं पुरस्कृत्य दीर्घदर्शी परं हितम्। उभयोः पक्षयो-
र्युक्तं वक्ष्यत्यर्थविनिश्चयम् ॥ ४५ ॥

दुर्य्योधन उवाच। निवर्त्तयिष्यति त्वासौ यदि क्षत्ता समे-
ष्यति। निवृत्ते त्वयि राजेन्द्र मरिष्येऽहं न संशयः ॥ ४६ ॥ स
त्वं मयि मृते राजन्विदुरेण सुखी भव। भोक्ष्यसे पृथिवीं कृत्स्नां
किं मया त्वं करिष्यसि ॥ ४७ ॥

वैशम्पायन उवाच। आर्त्तवाक्यन्तु तत्तस्य प्रणयोक्तं निशम्य
सः। धृतराष्ट्रोऽब्रवीत् प्रेष्यान् दुर्य्योधनमते स्थितः ॥ ४७ ॥
स्थूणासहस्रैर्बृहतीं शतद्वारां सभां मम। मनोरमां दर्शनीया-
माशु कुर्वन्तु शिल्पिनः ॥ ४८ ॥ ततः संस्तीर्य्य रत्नैस्तां तक्ष्ण
आनाय्य सर्व्वशः। सुकृतां सुप्रवेशाञ्च निवेदयत मे शनैः ॥ ४९ ॥
दुर्य्योधनस्य शान्त्यर्थमिति निश्चित्य भूमिपः। धृतराष्ट्रो महाराज
प्राहिणोद्विदुराय वै ॥ ५० ॥ अपृष्ट्वा विदुरं ह्यस्य नासीत्कश्चि-
द्विनिश्चयः। द्यूते दोषांश्च जानन् स पुत्रस्नेहादकृष्यत ॥ ५१ ॥
तच्छ्रुत्वा विदुरो धीमान् कलिद्वारमुपस्थितम्। विनाशमुखमुत्-
पन्नं धृतराष्ट्रमुपाद्रवत् ॥ ५२ ॥ सोऽभिगम्य महात्मानं भ्राता
भ्रातरमग्रजम्। मूर्द्ध्ना प्रणम्य चरणाविदं वचनमब्रवीत् ॥५३॥

विदुर उवाच । नाभिनन्दामि ते राजन् व्यवसायमिमं प्रभो । पुत्रैर्भेदो यथा न स्यात् द्यूतहेतोस्तथा कुरु ॥ ५४ ॥

धृतराष्ट्र उवाच । क्षत्तः पुत्रेषु पुत्रैर्मे कलहो न भविष्यति । यदि देवाः प्रसादन्नः करिष्यन्ति न संशयः ॥ ५५ ॥ अशुभं वा शुभं वापि हितं वा यदि वाहितम् । प्रवर्त्ततां सुहृद्द्यूतं दिष्ट-मेतन्न संशयः ॥ ५६ ॥ मयि सन्निहिते द्रोणे भीष्मे त्वयि च भारत । अनयो दैवविहितो न कथञ्चिद्भविष्यति ॥ ५७ ॥ गच्छ त्वं रथमास्थाय हयैर्वातसमैर्जवे । खाण्डवप्रस्थमद्यैव समानय युधिष्ठिरम् ॥ ५८ ॥ न वार्य्यो व्यवसायो मे विदुरैतद्ब्रवीमि ते । दैवमेव परं मन्ये येनैतदुपपद्यते ॥ ५९ ॥ इत्युक्तो विदुरो धीमा-न्नेदमस्तीति चिन्तयन् । आपगेयं महाप्राज्ञमभ्यगच्छत् सुदुः-खितः ॥ ६० ॥

इति सभापर्वणि द्यूतपर्वणि दुर्य्योधनसन्तापे
ऊनपञ्चाशोऽध्यायः ॥ ४९ ॥

जनमेजय उवाच । कथं समभवद्द्यूतं भ्रातॄणां तन्महात्ययम् । यत्र तद्व्यसनं प्राप्तं पाण्डवैर्मे पितामहैः ॥ १ ॥ के च तत्र सभा-स्तारा राजानो ब्रह्मवित्तम । के चैनमन्वमोदन्त के चैनं प्रत्य-षेधयन् ॥ २ ॥ विस्तरेणैतदिच्छामि कथ्यमानं त्वया द्विज । मूलं ह्येतद्विनाशस्य पृथिव्या द्विजसत्तम ॥ ३ ॥

सौतिरुवाच । एवमुक्तस्तदा राज्ञा व्यासशिष्यो महामतिः । आचचक्षे यथा वृत्तं तत् सर्वं सर्ववेदवित् ॥ ४ ॥

वैशम्पायन उवाच । शृणु मे विस्तरेणेमां कथां भरतसत्तम । भूय एव महाराज यदि ते श्रवणे मतिः ॥ ५ ॥ विदुरस्य मतं

ज्ञात्वा धृतराष्ट्रोऽम्बिकासुतः । दुर्य्योधनमिदं वाक्यमुवाच विजने पुनः ॥ ५ ॥ अलं द्यूतेन गान्धारे विदुरो न प्रशंसति । न ह्यसौ सुमहाबुद्धिरहितं नो वदिष्यति ॥ ६ ॥ हितं हि परमं मन्ये विदुरो यत् प्रभाषते । क्रियतां पुत्र तत्सर्वमेतन्मन्ये हितं तव ॥ ७ ॥ देवर्षिर्वासवगुरुर्देवराजाय धीमते । यत् प्राह शास्त्रं भगवान् वृहस्पतिरुदारधीः । तद्वेद विदुरः सर्वं सरहस्यं महाकविः ॥ ८ ॥ स्थितस्तु वचने तस्य सदाहमपि पुत्रक । विदुरो वापि मेधावी कुरूणां प्रवरो मतः ॥ ९ ॥ उद्धवो वा महाबुद्धिर्वृष्णीनामर्च्चितो नृप । तदलं पुत्र द्यूतेन द्यूते भेदो हि दृश्यते ॥ १० ॥ भेदे विनाशो राज्यस्य तत् पुत्र परिवर्जय । पिता माता च पुत्रस्य यद्वै कार्य्यं परं स्मृतम् ॥ ११ ॥ प्राप्तस्त्वमसि तन्नाम पितृपैतामहं पदम् । अधीतवान् कृती शास्त्रे लालितः सततं गृहे ॥ १२ ॥ भ्रातृज्येष्ठः स्थितो राज्ये विन्दसे किं न शोभन । पृथग्जनैरलभ्यं यद्भोजनाच्छादनं परम् ॥ १३ ॥ तत् प्राप्तोऽसि महाबाहो कस्माच्छोचसि पुत्रक । स्फीतं राष्ट्रं महाबाहो पितृपैतामहं महत् ॥ १४ ॥ नित्यमाज्ञापयन् भासि दिवि देवेश्वरो यथा । तस्य ते विदितप्रज्ञ शोकमूलमिदं कथम् । समुत्थितं दुःखकरं तन्मे शंसितुमर्हसि ॥ १५ ॥

दुर्य्योधन उवाच । अश्नाम्याच्छादयामीति प्रपश्यन् पापपूरुषः । नामर्षं कुरुते यस्तु पुरुषः सोऽधमः स्मृतः ॥ १६ ॥ न मां प्रीणाति राजेन्द्र लक्ष्मीः साधारणी विभो । ज्वलितामेव कौन्तेये श्रियं दृष्ट्वा च विव्यथे ॥ १७ ॥ सर्वाञ्च पृथिवीञ्चैव युधिष्ठिरवशानुगाम् । स्थिरोऽस्मि योऽहं जीवामि दुःखादेतद्ब्रवीमि ते ॥ १८ ॥ आवर्जिता इवाभान्ति नीपाश्चित्रककौकुराः । कारस्करा लोहजङ्घा युधिष्ठिरनिवेशने ॥ १९ ॥ हिमवत्सागरानूपाः सर्वे रत्नाकरास्तथा । अन्त्याः सर्वे पर्य्युदस्ता युधिष्ठिर-

निवेशने ॥ २० ॥ श्रेष्ठोऽयमिति मां मत्वा श्रेष्ठमेति विस्मा-
स्यते। युधिष्ठिरेण सत्कृत्य युक्तो रत्नपरिग्रहे ॥ २१ ॥ उप-
स्थितानां रत्नानां श्रेष्ठानामर्घहारिणाम्। नादृश्यत परः पारो
नापरस्तत्र भारत ॥ २२ ॥ न मे हस्तः समभवद्वसु तत् प्रति-
गृह्णतः। प्रातिष्ठन्त मयि श्रान्ते गृह्य दूराहृतं वसु ॥ २३ ॥
कृतां बिन्दुसरोरत्नैर्मयेन स्फाटिकच्छदाम्। अपश्यं नलिनीं पूर्णा-
मुदकस्येव भारत ॥ २४ ॥ वस्त्रमुत्कर्षति मयि प्राहसत् स वृको-
दरः। शत्रोर्ऋद्धिविशेषेण विमूढं रत्नवर्जितम् ॥ २५ ॥ तत्र
स्म यदि शक्तः स्यां पातयेऽहं वृकोदरम्। यदि कुर्य्यां समा-
रम्भं भीमं हन्तुं नराधिप ॥ २६ ॥ शिशुपाल इवास्माकं गतिः
स्यान्नात्र संशयः। सपत्नेनावहासो मे स मां दहति भारत ॥२७॥
पुनश्च तादृशीमेव वापीं जलजशालिनीम् ॥ २८ ॥ मत्वा शिला-
समां तोये पतितोऽस्मि नराधिप ॥ २९ ॥ तत्र मां प्राहसत्
कृष्णः पार्थेन सह सुस्वरम्। द्रौपदी च सह स्त्रीभिर्व्यथयन्ती
मनो मम ॥ ३० ॥ क्लिन्नवस्त्रस्य तु जले किङ्करा राजचोदिताः।
ददुर्वासांसि मेऽन्यानि तच्च दुःखं परं मम ॥ ३१ ॥ प्रलम्भञ्च
शृणुष्वान्यद्वदतो मे नराधिप। अद्वारेण विनिर्गच्छन् द्वार-
संस्थानरूपिणा। अभिहत्य शिलां भूयो ललाटेनास्मि विक्षतः
॥ ३२ ॥ तत्र मां यमजौ दूरादालोक्याभिहतं तदा। बाहुभिः
परिगृह्णीतां शोचन्तौ सहिताबुभौ ॥ ३३ ॥ उवाच सहदेवस्तु
तत्र मां विस्मयन्निव। इदं द्वारमितो गच्छ राजन्निति पुनः
पुनः ॥ ३४ ॥ भीमसेनेन तत्रोक्तो धृतराष्ट्रात्मजेति च। सम्बोध्य
प्रहसित्वा च इतो द्वारं नराधिप ॥३५॥ नामधेयानि रत्नानां पुर-
स्तान्न श्रुतानि मे। यानि दृष्टानि मे तस्यां मनस्तपति तच्च मे ॥३६॥

इति सभापर्व्वणि द्यूतपर्व्वणि दुर्य्योधनसन्तापे
पञ्चाशोऽध्यायः ॥ ५० ॥

दुर्योधन उवाच । यन्मया पांडवेयानां दृष्टं तच्छृणु भारत । आहृतं भूमिपालैर्हि वसु मुख्यं ततस्ततः ॥ १ ॥ नाविदं मूढमात्मानं दृष्ट्वाहं तदरेर्धनम् । फलतो भूमितो वापि प्रतिपद्यस्व भारत ॥ २ ॥ और्णान् वैलान् वार्षदंशान् जातरूपपरिष्कृतान् । प्रावाराजिनमुख्यांश्च काम्बोजः प्रददौ बहून् ॥ ३ ॥ अश्वांस्तित्तिरिकल्माषांस्त्रिशतं शुकनासिकान् । उष्ट्रवामीस्त्रिशतञ्च पुष्टाः पीलुशमीङ्गुदैः ॥ ४ ॥ गोवासना ब्राह्मणाश्च दासनीयाश्च सर्वशः । प्रीत्यर्थं ते महाराज धर्मराज्ञो महात्मनः ॥ ५ ॥ त्रिखर्वं बलिमादाय द्वारि तिष्ठन्ति वारिताः । ब्राह्मणा वाटधानाश्च गोमन्तः शतसङ्घशः ॥ ६ ॥ कमण्डलूनुपादाय जातरूपमयान् शुभान् । एवं बलिं समादाय प्रवेशं लेभिरे न च । शतं दासीसहस्राणां कार्पासिकनिवासिनाम् ॥ ७ ॥ श्यामास्तन्व्यो दीर्घकेश्यो हेमाभरणभूषिताः । शूद्रा विप्रोत्तमार्हाणि राङ्कवाण्यजिनानि च ॥ ८ ॥ बलिञ्च कृत्स्नमादाय मरुकच्छनिवासिनः । उपनिन्युर्महाराज हयान् गान्धारदेशजान् ॥ ९ ॥ इन्द्रकृष्टैर्वर्त्तयन्ति धान्यैर्ये च नदीमुखैः । समुद्रनिष्कुटे जाताः पारेसिन्धु च मानवाः ॥ १० ॥ ते वैरामाः पारदाश्च आभीराः कितवैः सह । विविधं बलिमादाय रत्नानि विविधानि च ॥ ११ ॥ अजाविकं गोहिरण्यं खरोष्ट्रं फलजं मधु । कम्बलान् विविधांश्चैव द्वारि तिष्ठन्ति वारिताः ॥ १२ ॥ प्राग्ज्योतिषाधिपः शूरो म्लेच्छानामधिपो बली । यवनैः सहितो राजा भगदत्तो महारथः ॥ १३ ॥ आजानेयान् हयान् शीघ्रानादायानिलरंहसः । बलिञ्च कृत्स्नमादाय द्वारि तिष्ठति वारितः ॥ १४ ॥ अश्मसारमयं भाण्डं शुद्धदन्तत्सरूनसीन् । प्राग्ज्योतिषाधिपो दत्त्वा भगदत्तोऽव्रजत्तदा ॥ १५ ॥ द्व्यक्षांस्त्र्यक्षान् ललाटाक्षान्नानादिग्भ्यः समागतान् । औष्णीकानन्तवासांश्च रोमकान् पुरुषा-

दकान् ॥ १६ ॥ एकपादांश्च तत्राहमपश्यं द्वारि वारितान्। राजानो बलिमादाय नानावर्णाननेकशः ॥ १७ ॥ कृष्णग्रीवान्महाकायान्रासभान् दूरपातिनः। आजह्रुर्दशसाहस्रान् विनीतान् दिक्षु विश्रुतान् ॥ १८ ॥ प्रमाणरागसम्पन्नान् वङ्क्षुतीरसमुद्भवान्। बल्यर्थं ददतस्तस्मै हिरण्यं रजतं बहु ॥ १९ ॥ दत्त्वा प्रवेशं प्राप्तास्ते युधिष्ठिरनिवेशने। इन्द्रगोपकवर्णाभान् शुकवर्णान्मनोजवान् ॥ २० ॥ तथैवेन्द्रायुधनिभान् सन्ध्याभ्रसदृशानपि। अनेकवर्णानारण्यान् गृहीत्वाश्वान् महाजवान् ॥ २१ ॥ जातरूपमनर्घ्यञ्च ददुस्तस्यैकपादकाः। चीनान् शकांस्तथा चोड्रान् बर्बरान् वनवासिनः ॥ २२ ॥ वार्ष्णेयान् हारहूणांश्च कृष्णान् हैमवतांस्तथा। नीपानूपानधिगतान् विविधान् द्वारि वारितान् ॥ २३ ॥ बल्यर्थं ददतस्तस्य नानारूपाननेकशः। कृष्णग्रीवान् महाकायान्रासभान् शतपातिनः ॥ २४ ॥ अहार्षुर्दशसाहस्रान् विनीतान् दिक्षु विश्रुतान्। प्रमाणरागसंस्पर्शान् वङ्क्षुतीरनिवासिनः ॥ २५ ॥ ऊर्णाञ्च राङ्कवञ्चैव कीटजं पट्टजं तथा। कुटीकृतं तथैवात्र कमलाभं सहस्रशः ॥ २६ ॥ श्लक्ष्णं वस्त्रमकार्पासमाविकं मृदु चाजिनम्। निशितांश्चैव दीर्घासीनृष्टिशक्तिपरश्वधान् ॥ २७ ॥ अपरान्तसमुद्भूतांस्तथैव परशून् शितान्। रसान् गन्धांश्च विविधान् रत्नानि च सहस्रशः ॥ २८ ॥ बलिञ्च कृत्स्नमादाय द्वारि तिष्ठन्ति वारिताः। शकास्तुखाराः कङ्काश्च रोमशाः शृङ्गिणो नराः ॥ २९ ॥ महागजान् दूरगमान् गणितानर्बुदान् हयान्। शतशश्चैव बहुशः सुवर्णं पद्मसम्मितम् ॥ ३० ॥ बलिमादाय विविधं द्वारि तिष्ठन्ति वारिताः। आसनानि महार्हाणि यानानि शयनानि च ॥ ३१ ॥ मणिकाञ्चनचित्राणि गजदन्तमयानि च। कवचानि विचित्राणि शस्त्राणि विविधानि च ॥३२॥ रथांश्च विविधाकारान् जातरूपपरिष्कृतान्। हयैर्विनीतैः सम्प-

न्मान् वैयाघ्रपरिवारितान् ॥ ३३ ॥ विचित्रांश्च परिस्तोमांस्तानि विविधानि च । नाराचानर्द्धनाराचान् शस्त्राणि विविधानि च ॥ ३४ ॥ एतद्दृत्वा महद्द्रव्यं पूर्व्वदेशाधिपा नृपाः । प्रविष्टा यज्ञसदनं पाण्डवस्य महात्मनः ॥ ३५ ॥

इति सभापर्व्वणि द्यूतपर्व्वणि दुर्य्योधनसन्तापे
एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

दुर्य्योधन उवाच । दायन्तु विविधं तस्मै शृणु मे गदतोऽनघ । यज्ञार्थं राजभिर्दत्तं महान्तं धनसञ्चयम् ॥ १ ॥ मेरुमन्दरयोर्मध्ये शैलोदामभितो नदीम् । ये ते कीचकवेणूनां छायां रम्यामुपासते ॥ २ ॥ खसा एकासना ह्यर्हाः प्रदरा दीर्घवेणवः । पारदाश्च कुलिन्दाश्च तङ्गणाः परतङ्गणाः ॥ ३ ॥ तद्वै पिपीलिकं नाम उद्धृतं यत् पिपीलिकैः । जातरूपं द्रोणमेयमहार्षुः पुञ्जशो नृपाः ॥ ४ ॥ कृष्णान् ललामांश्चमरान् शुक्लांश्चान्यान् शशिप्रभान् । हिमवत्पुष्पजञ्चैव स्वादु क्षौद्रं तथा बहु ॥ ५ ॥ उत्तरेभ्यः कुरुभ्यश्चाप्यपोढं माल्यमम्बुभिः । उत्तरादपि कैलासादोषधीः सुमहाबलाः ॥ ६ ॥ पार्व्वतीया बलिञ्चान्यमाहृत्य प्रणताः स्थिताः । अजातशत्रोर्नृपतेर्द्वारि तिष्ठन्ति वारिताः ॥७॥ ये परार्द्धे हिमवतः सूर्य्योदयगिरौ नृपाः । वारिषेण च समुद्रान्ते लौहित्यमभितश्च ये ॥ ८ ॥ फलमूलाशना ये च किराताश्चर्म्मवाससः । क्रूरशस्त्राः क्रूरकृतस्तांश्च पश्याम्यहं प्रभो ॥ ९ ॥ चन्दनागुरुकाष्ठानां भारान् कालीयकस्य च । चर्म्मरत्नसुवर्णानां गन्धानाञ्चैव राशयः ॥ १० ॥ कैरातकीनामयुतं दासीनाञ्च विशाम्पते । आहृत्य रमणीयार्थान् दूरजान् मृगपक्षिणः ॥ ११ ॥ निचितं पर्व्वतेभ्यश्च हिरण्यं भूरिवर्च्चसम् । बलिञ्च कृत्स्नमादाय

द्वारि तिष्ठन्ति वारिताः ॥ १२ ॥ कैराता दरदा दर्वाः शूरा वैयमकास्तथा । औदुम्बरा दुर्विभागाः पारदा बाह्लिकैः सह ॥१३॥ काश्मीराश्च कुमाराश्च घोरका हंसकायनाः । शिविलिगर्त्तयौधेया राजन्या मद्रकेकयाः ॥ १४ ॥ अम्बष्ठाः कौकुरास्तार्क्ष्या वस्त्रपाः पह्लवैः सह । वशातयश्च मौलेयाः सह क्षुद्रकमालवैः ॥ १५ ॥ पौण्ड्रिकाः कुकुराश्चैव शकाश्चैव विशाम्पते । अङ्गा वङ्गाश्च पुण्ड्राश्च शाणवत्या गयास्तथा ॥ १६ ॥ सुजातयः श्रेणिमन्तः श्रेयांसः शस्त्रधारिणः । अहार्षुः क्षत्रिया वित्तं शतशोऽजातशत्रवे ॥१७॥ वङ्गाः कलिङ्गा मगधास्ताम्रलिप्ताः सपुण्ड्रकाः । दौवालिकाः सागरकाः पत्त्रोर्णाः शैशवास्तथा ॥ १८ ॥ कर्णप्रावरणाश्चैव बहवस्तत्र भारत । तत्रस्था द्वारपालैस्ते प्रोच्यन्ते राजशासनात् । कृतकालाः सुबलयस्ततो द्वारमवाप्स्यथ ॥ १९ ॥ ईषादन्तान् हेमकक्षान् पद्मवर्णान् कुथावृतान् । शैलाभान्नित्यमत्तांश्चाप्यभितः काम्यकं सरः ॥ २० ॥ दत्त्वैकैको दशशतान् कुञ्जरान् कवचावृतान् । क्षमावतः कुलीनांश्च द्वारेण प्राविशंस्तथा ॥ २१ ॥ एते चान्ये च बहवो गणा दिग्भ्यः समागताः । अन्यैश्चोपाहृतान्यत्र रत्नानीह महात्मभिः ॥ २२ ॥ राजा चित्ररथो नाम गन्धर्वो वासवानुगः । शतानि चत्वार्यददद्धयानां वातरंहसाम् ॥ २३ ॥ तुम्बुरुस्तु प्रमुदितो गन्धर्वो वाजिनां शतम् । आम्रपत्रसवर्णानामददद्धेममालिनाम् ॥ २४ ॥ कृती राजा च कौरव्य शूकराणां विशाम्पते । अददद्गजरत्नानां शतानि सुबहून्यथ ॥ २५ ॥ विराटेन तु मत्स्येन बल्यर्थं हेममालिनाम् । कुञ्जराणां सहस्रे द्वे मत्तानां समुपाहृते ॥ २६ ॥ पांशुराष्ट्राद्वसुदानो राजा षड्विंशतिं गजान् । अश्वानाञ्च सहस्रे द्वे राजन् काञ्चनमालिनाम् ॥ २७ ॥ जवसत्त्वोपपन्नानां वयःस्थानां नराधिप । बलिञ्च कृत्स्नमादाय पाण्डवेभ्यो न्यवेदयत् ॥ २८ ॥

यज्ञसेनेन दासीनां सहस्राणि चतुर्दश । दासानामयुतञ्चैव सदाराणां विशाम्पते ॥ २९ ॥ अददद्गजरत्नानां शतानि च बहूनि च । गजयुक्ता महाराज रथाः षड्विंशतिस्तथा ॥ ३० ॥ राज्यञ्च कृत्स्नं पार्थेभ्यो यज्ञार्थं वै निवेदितम् । वासुदेवोऽपि वार्ष्णेयो मानं कुर्वन् किरीटिनः ॥ ३१ ॥ अददद्गजमुख्यानां सहस्राणि चतुर्दश । आत्मा हि कृष्णः पार्थस्य कृष्णस्यात्मा धनञ्जयः ॥ ३२ ॥ यद्ब्रूयादर्जुनः कृष्णं सर्वं कुर्य्यादसंशयम् । कृष्णो धनञ्जयस्यार्थे स्वर्गलोकमपि त्यजेत् ॥ ३३ ॥ तथैव पार्थः कृष्णार्थे प्राणानपि परित्यजेत् । सुरभींश्चन्दनरसान् हेमकुम्भसमास्थितान् ॥ ३४ ॥ मलयाद्दर्दुराच्चैव चन्दनागुरुसञ्चयान् । मणिरत्नानि भास्वन्ति काञ्चनं सूक्ष्मवस्त्रकम् ॥ ३५ ॥ चोलपाण्ड्यावपि द्वारं न लेभाते ह्युपस्थितौ । समुद्रसारं वैदूर्यं मुक्तासंघांस्तथैव च ॥ ३६ ॥ शतशश्च कुथांस्तत्र सिंहलाः समुपाहरन् । संवृता मणिचीरैस्तु श्यामास्ताम्रान्तलोचनाः ॥३७॥ तान् गृहीत्वा नरास्तत्र द्वारि तिष्ठन्ति वारिताः । प्रीत्यर्थं ब्राह्मणाश्चैव क्षत्रियाश्च विनिर्जिताः ॥ ३८ ॥ उपाजह्रुर्विशश्चैव शूद्राः शुश्रूषवस्तथा । प्रीत्या च बहुमानाच्चाप्युपागच्छन् युधिष्ठिरम् ॥ ३९ ॥ सर्वे म्लेच्छाः सर्ववर्णा आदिमध्यान्तजास्तथा । नानादेशसमुत्थैश्च नानाजातिभिरेव च ॥ ४० ॥ पर्यस्त इव लोकोऽयं युधिष्ठिरनिवेशने । उच्चावचानुपग्राहान् राजभिः प्रापितान् बहून् ॥ ४१ ॥ शत्रूणां पश्यतो दुःखात् मुमूर्षा मे व्यजायत । भृत्यास्तु ये पाण्डवानां तांस्ते वक्ष्यामि पार्थिव ॥ ४२ ॥ येषामामञ्च पक्वञ्च संविधत्ते युधिष्ठिरः । अयुतं त्रीणि पद्मानि गजारोहाः ससादिनः ॥ ४३ ॥ रथानामर्बुदञ्चापि पादाता बहवस्तथा । प्रमीयमाणमामञ्च पच्यमानं तथैव च ॥ ४४ ॥ विसृज्यमानञ्चान्यत्र पुण्याहस्वन एव च । नाभुक्तवन्तं नापीतं नालंकृतमसत्कृतम्

॥ ४५ ॥ अपश्यं सर्ववर्णानां युधिष्ठिरनिवेशने । अष्टाशीति-
सहस्राणि स्नातका गृहमेधिनः ॥ ४६ ॥ त्रिंशद्दासीक एकैको
यान् बिभर्त्ति युधिष्ठिरः । सुप्रीताः परितुष्टाश्च ते ह्याशंसन्त्य'रि-
क्षयम् ॥ ४७ ॥ दशान्यानि सहस्राणि यतीनामूर्द्ध्वरेतसाम् ।
भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने ॥ ४८ ॥ अभुक्तं भुक्तवद्वापि
सर्वमाकुब्जवामनम् । अभुञ्जाना याज्ञसेनी प्रत्यवैक्षद्विशाम्पते
॥ ४९ ॥ द्वौ करौ न प्रयच्छेतां कुन्तीपुत्राय भारत । साम्बन्धि-
केन पाञ्चालाः सख्येनान्धकवृष्णयः ॥ ५० ॥

इति सभापर्वणि द्यूतपर्वणि दुर्योधनसन्तापे
द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

दुर्योधन उवाच । आर्य्यास्तु ये वै राजानः सत्यसन्धा महा-
व्रताः । पर्याप्तविद्या वक्तारो वेदान्तावभृथप्लुताः ॥ १ ॥ धृति-
मन्तो ह्रीनिषेवा धर्मात्मानो यशस्विनः । मूर्द्धाभिषिक्तास्ते चैनं
राजानः पर्य्युपासते ॥ २ ॥ दक्षिणार्थं समानीता राजभिः
कांस्यदोहनाः । आरण्या बहुसाहस्रा अपश्यंस्तत्र तत्र गाः ॥ ३ ॥
आजह्रुस्तत्र सत्कृत्य स्वयमुद्यम्य भारत । अ'भिषेकार्थमव्यग्रा
भाण्डमुच्चावचं नृपाः ॥ ४ ॥ बाह्लीको रथमाहार्षीज्जाम्बूनद-
विभूषितम् । सुदक्षिणस्तु युयुजे श्वेतैः काम्बोजजैर्हयैः ॥ ५ ॥
सुनीथः प्रीतिमांश्चैव ह्यनुकर्षं महाबलः । ध्वजञ्चेदिपतिश्चैव-
माहार्षीत् स्वयमुद्यतम् ॥ ६ ॥ दाक्षिणात्यः सन्नहनं स्रगुष्णीषे
च मागधः । वसुदानो महेष्वासो गजेन्द्रं षष्टिहायनम् ॥ ७ ॥
मत्स्यः स्वक्षान् हेमनद्धानेकलव्य उपानहौ । आवन्त्यस्त्वभि-
षेकार्थमापो बहुविधास्तथा ॥ ८ ॥ चेकितान उपासङ्गं धनुः

कांश्च उपाहरत् । असिञ्च सुत्सरुं शल्यः शैक्यं काञ्चनभूषणम् ॥९॥
अभ्यषिञ्चत्ततो धौम्यो व्यासश्च सुमहातपाः । नारदञ्च पुरस्कृत्य
देवलञ्चासितं मुनिम् ॥१०॥ प्रीतिमन्त उपातिष्ठन्नभिषेकं महर्-
षयः । जामदग्न्येन सहितास्तथान्ये वेदपारगाः ॥ ११ ॥ अभि-
जग्मुर्महात्मानो मन्त्रवद्भूरिदक्षिणम् । महेन्द्रमिव देवेन्द्रं दिवि
सप्तर्षयो यथा ॥ १२ ॥ अधारयच्छत्रमस्य सात्यकिः सत्यविक्रमः ।
धनञ्जयश्च व्यजने भीमसेनश्च पाण्डवः ॥ १३ ॥ चामरे चापि
शुद्धे द्वे यमौ जगृहतुस्तदा । उपागृह्णाद्यमिन्द्राय पुराकल्पे
प्रजापतिः ॥ १४ ॥ तमस्मै शङ्खमाहार्षीद्वारुणं कलशोदधिः ।
शैक्यं निष्कसहस्रेण सुकृतं विश्वकर्मणा । तेनाभिषिक्तः कृष्णेन
तत्र मे कश्मलोऽभवत् ॥ १५ ॥ गच्छन्ति पूर्वादपरं समुद्रञ्चापि
दक्षिणम् । उत्तरन्तु न गच्छन्ति विना तात पतत्रिभिः ॥१६॥
तत्र स्म दध्मुः शतशः शङ्खान् मङ्गलकारणान् । प्राणदन्त समा-
ध्मातास्ततो रोमाणि मेऽहृषन् ॥ १७ ॥ प्रापतन् भूमिपालाश्च
ये तु हीनाः स्वतेजसा । धृष्टद्युम्नः पाण्डवाश्च सात्यकिः केशवो-
ऽष्टमः ॥ १८ ॥ सत्त्वस्था वीर्यसम्पन्ना ह्यन्योऽन्यप्रियदर्शनाः ।
विसंज्ञान् भूमिपान् दृष्ट्वा मां च ते प्राहसंस्तदा ॥ १९ ॥ ततः
प्रहृष्टो बीभत्सुः प्रादाद्धेमविषाणिनाम् । शतान्यनडुहां पञ्च
द्विजमुख्येषु भारत ॥ २० ॥ न रन्तिदेवो नाभागो यौवनाश्वो
मनुर्न च । न च राजा पृथुर्वैन्यो न चाप्यासीद्भगीरथः ॥ २१ ॥
ययातिर्नहुषो वापि यथा राजा युधिष्ठिरः । यथातिमात्रं
कौन्तेयः श्रिया परमया युतः ॥ २२ ॥ राजसूयमवाप्यैवं हरि-
श्चन्द्र इव प्रभुः । एतां दृष्ट्वा श्रियं पार्थे हरिश्चन्द्रे यथा विभो
॥ २३ ॥ कथन्तु जीवितं श्रेयो मम पश्यसि भारत । अन्धेनैव
युगं नद्धं विपर्यस्तं नराधिप । कनीयांसो विवर्द्धन्ते ज्येष्ठा
हीयन्त एव च ॥ २४ ॥ एवं दृष्ट्वा नाभिविन्दामि शर्म समीक्ष-

माद्रयोऽपि कुरुवीर । तेनाहमेवं कृशतां गतश्च विवर्णतांश्चैव सशोकतां च ॥ २५ ॥

इति सभापर्वणि द्यूतपर्वणि दुर्य्योधनसन्तापे त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

धृतराष्ट्र उवाच । त्वं वै ज्येष्ठो ज्यैष्ठिनेयः पुत्र मा पाण्डवान् द्विष । द्वेष्टा ह्यसुखमादत्ते यथैव निधनं तथा ॥ १ ॥ अव्युत्पन्नं समानार्थं तुल्यमित्रं युधिष्ठिरम् । अद्विषन्तं कथं द्विष्यात्त्वादृशो भरतर्षभ ॥ २ ॥ तुल्याभिजनवीर्यश्च कथं भ्रातुः श्रियं नृप । पुत्र कामयसे मोहान्मैवं भूः शाम्य मा शुचः ॥ ३ ॥ अथ यज्ञविभूतिं तां काङ्क्षसे भरतर्षभ । ऋत्विजस्तव तन्वन्तु सप्ततन्तुं महाध्वरम् ॥ ४ ॥ आहरिष्यन्ति राजानस्तवापि विपुलं धनम् । प्रीत्या च बहुमानाच्च रत्नान्याभरणानि च ॥ ५ ॥ अनार्य्यचरितं तात परस्वस्पृहणं भृशम् । स्वसन्तुष्टः स्वधर्मस्थो यः स वै सुखमेधते ॥ ६ ॥ अव्यापारः परार्थेषु नित्योद्योगः स्वकर्मसु । रक्षणं समुपात्तानामेतद्वैभवलक्षणम् ॥ ७ ॥ विपत्तिष्वव्यथो दक्षो नित्यमुत्थानवान्नरः । अप्रमत्तो विनीतात्मा नित्यं भद्राणि पश्यति ॥ ८ ॥ बाहूनिवैतान्मा च्छेत्सीः पाण्डुपुत्रांस्तथैव ते । भ्रातॄणां तद्धनार्थं वै मित्रद्रोहं च मा कुरु ॥ ९ ॥ पाण्डोः सुतान्मा द्विषस्वेह राजंस्तथैव ते भ्रातृधनं समग्रम् । मित्रद्रोहे तात महानधर्मः पितामहा ये तव तेऽपि तेषाम् ॥ १० ॥ अन्तर्वेद्यां ददद्वित्तं कामाननुभवन् प्रियान् । क्रीड़न् स्त्रीभिर्निरातङ्कः प्रशाम्य भरतर्षभ ॥ ११ ॥

इति सभापर्वणि द्यूतपर्वणि दुर्य्योधनसन्तापे चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

दुर्य्योधन उवाच । यस्य नास्ति निजा प्रज्ञा केवलन्तु बहु-
श्रुतः । न स जानाति शास्त्रार्थं दर्वी सूपरसानिव ॥ १ ॥
जानन् वै मोहयसि मां नावि नौरिव संयता । स्वार्थे किं नाव-
धानं ते उताहो द्वेष्टि मां भवान् ॥ २ ॥ न सन्तीमे धार्त्तराष्ट्रा
येषां त्वमनुशासिता । भविष्यमर्थमाख्यासि सर्वदा कृत्यमात्मनः
॥ ३ ॥ परनेयोऽग्रणीर्य्यस्य स मार्गान् प्रतिमुह्यति । पन्थान-
मनुगच्छेयुः कथं तस्य पदानुगाः ॥ ४ ॥ राजन् परिगतप्रज्ञो
वृद्धसेवी जितेन्द्रियः । प्रतिपन्नान् स्वकार्य्येषु संमोहयसि नो
भृशम् ॥ ५ ॥ लोकवृत्ताद्राजवृत्तमन्यदाह बृहस्पतिः । तस्मा-
द्राज्ञाप्रमत्तेन स्वार्थश्चिन्त्यः सदैव हि ॥ ६ ॥ क्षत्रियस्य महा-
राज जये वृत्तिः समाहिता । स वै धर्मस्त्वधर्मो वा स्ववृत्तौ का
परीक्षणा ॥ ७ ॥ प्रकालयेद्दिशः सर्वाः प्रतोदेनेव सारथिः ।
प्रत्यमित्रश्रियं दीप्तां जिघृक्षुर्भरतर्षभ ॥ ८ ॥ प्रच्छन्नो वा प्रकाशो
वा योगो योऽरिं प्रबाधते । तद्वै शस्त्रं शस्त्रविदां न शस्त्रं
छेदनं स्मृतम् ॥ ९ ॥ शत्रुश्चैव हि मित्रञ्च न लेख्यं न च मातृका ।
यो वै सन्तापयति यं स शत्रुः प्रोच्यते नृप ॥ १० ॥ असन्तोषः
श्रियो मूलं तस्मात्तं कामयाम्यहम् । समुच्छ्रये यो यतते स
राजन् परमो नयः ॥ ११ ॥ ममत्वं हि न कर्त्तव्यमैश्वर्य्ये वा
धनेऽपि वा । पूर्वावाप्तं हरन्त्यन्ये राजधर्मं हि तं विदुः ॥ १२ ॥
अद्रोहसमयं कृत्वा चिच्छेद नमुचेः शिरः । शक्रः साभिमता
तस्य रिपौ वृत्तिः सनातनी ॥ १३ ॥ द्वावेतौ ग्रसते भूमिः सर्पो
बिलशयानिव । राजानञ्चाविरोद्धारं ब्राह्मणञ्चाप्रवासिनम् ॥ १४ ॥
नास्ति वै जातितः शत्रुः पुरुषस्य विशाम्पते । येन साधारणी
वृत्तिः स शत्रुर्नेतरो जनः ॥ १५ ॥ शत्रुपक्षं समध्यासं यो
मोहात् समुपेक्षते । व्याधिराप्यायित इव तस्य मूलं छिनत्ति सः
॥ १६ ॥ अल्पोऽपि ह्यरिरत्यन्तं वर्द्धमानः पराक्रमैः । वल्मीको

मूलज इव ग्रसते वृक्षमन्तिकात् ॥ १७ ॥ आजमीढ रिपोर्लक्ष्मीर्मा ते रोचिष्ट भारत । एष भारः सत्त्ववतां नयः शिरसि धिष्ठितः ॥ १८ ॥ जन्मवृद्धिमिवार्थानां यो वृद्धिमभिकाङ्क्षते । एधते ज्ञातिषु स वै सद्यो वृद्धिर्हि विक्रमः ॥ १९ ॥ नाप्राप्य पाण्डवैश्वर्यं संशयो मे भविष्यति । अवाप्स्ये वा श्रियं तां हि शेष्ये वा निहतो युधि ॥ २० ॥ एतादृशस्य किं मेऽद्य जीवितेन विशाम्पते । वर्धन्ते पाण्डवा नित्यं वयन्त्वस्थिरवृद्धयः ॥ २१ ॥

इति सभापर्वणि द्यूतपर्वणि दुर्योधनसन्तापे
पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

शकुनिरुवाच । यां त्वमेतां श्रियं दृष्ट्वा पाण्डुपुत्रे युधिष्ठिरे । तप्यसे तां हरिष्यामि द्यूतेन जयताम्वर ॥ १ ॥ आहूयतां परं राजन् कुन्तीपुत्रो युधिष्ठिरः । अक्षान् क्षिपन्नक्षतः सन् विद्वानविदुषो जयेत् ॥ २ ॥ ग्लहान् धनूंषि मे विद्धि शरानक्षांश्च भारत । अक्षाणां हृदयं मे ज्या रथं विद्धि ममास्तरम् ॥ ३ ॥

दुर्योधन उवाच । अयमुत्सहते राजन् श्रियमाहर्तुमक्षवित् । द्यूतेन पाण्डुपुत्रेभ्यस्तदनुज्ञातुमर्हसि ॥ ४ ॥

धृतराष्ट्र उवाच । स्थितोऽस्मि शासने भ्रातुर्विदुरस्य महात्मनः । तेन सङ्गम्य वेत्स्यामि कार्यस्यास्य विनिश्चयम् ॥ ५ ॥

दुर्योधन उवाच । व्यपनेष्यति ते बुद्धिं विदुरो मुक्तसंशयः । पाण्डवानां हिते युक्तो न तथा मम कौरव ॥ ६ ॥ नारभेतान्यसामर्थ्यात् पुरुषः कार्यमात्मनः । मतिसाम्यं द्वयोर्नास्ति कार्येषु कुरुनन्दन ॥ ७ ॥ भयं परिहरन्मन्द आत्मानं परिपालयन् । वर्षासु क्लिन्नकटवत्तिष्ठन्नेवावसीदति ॥ ८ ॥ न

व्याधयो नापि यमः प्राप्तं श्रेयः प्रतीक्षते । यावदेव भवेत् कल्पस्तावच्छ्रेयः समाचरेत् ॥ ६ ॥

धृतराष्ट्र उवाच । सर्व्वथा पुत्र बलिभिर्विग्रहो मे न रोचते । वैरं विकारं सृजति तद्वै शस्त्रमनायसम् ॥ १० ॥ अनर्थमर्थं मन्यसे राजपुत्र संग्रन्थनं कलहस्यातिघोरम् । तद्वै प्रवृत्तन्तु यथाकथञ्चित् सृजेदसीन्निशितान् सायकांश्च ॥ ११ ॥

दुर्य्योधन उवाच । द्यूते पुराणैर्व्यवहारः प्रणीतस्तत्रात्ययो नास्ति न सम्प्रहारः । तद्रोचतां शकुनेर्वाक्यमद्य सभां क्षिप्रं त्वमिहाज्ञापयस्व ॥ १३ ॥ स्वर्गद्वारं दीव्यतां नो विशिष्टं तद्वर्त्तिनां चापि तथैव युक्तम् । भवेदेवं ह्यात्मना तुल्यमेव दुरोदरं पाण्डवैस्त्वं कुरुष्व ॥ १४ ॥

धृतराष्ट्र उवाच । वाक्यं न मे रोचते यत्त्वयोक्तं यत्ते प्रियं तत् क्रियतां नरेन्द्र । पश्चात्तप्स्यसे तदुपाक्रम्य वाक्यं नहीदृशं भावि वचो हि धर्म्म्यम् ॥ १५ ॥ दृष्टं ह्येतद्विदुरेणैव सर्व्वं विपश्चिता बुद्धिविद्यानुगेन । तदेवैतद्वशादुपैति महद्भयं क्षत्रियजीवघाति ॥ १६ ॥

वैशम्पायन उवाच । एवमुक्त्वा धृतराष्ट्रो मनीषी दैवं मत्वा परमं दुस्तरञ्च । शशासोच्चैः पुरुषान् पुत्रवाक्ये स्थितो राजा दैवसंमूढचेताः ॥ १७ ॥ सहस्रस्तम्भां हेमवैदूर्य्यचित्रां शतद्वारां तोरणस्फाटिकाख्याम् । सभामग्र्यां क्रोशमात्रायतां मे तद्विस्तारामाशु कुर्व्वन्तु युक्ताः ॥ १८ ॥ श्रुत्वा तस्य त्वरिता निर्विशङ्काः प्राज्ञा दक्षास्तां तदा चक्रुराशु । सर्व्वद्रव्याण्युपजह्रुः सभायां सहस्रशः शिल्पिनश्चैव युक्ताः ॥ १९ ॥ कालेनाल्पेनाथ निष्ठां गतां तां सभां रम्यां बहुरत्नां विचित्राम् । चित्रैर्हैमैरासनैरभ्युपेतामाचख्युस्ते तस्य राज्ञः प्रतीताः ॥ २० ॥ ततो विद्वान् विदुरं मन्त्रिमुख्यमुवाचेदं धृतराष्ट्रो नरेन्द्रः । युधिष्ठिरं

राजपुत्रश्च गत्वा मद्वाक्येन क्षिप्रमिहानयस्व ॥ २१ ॥ सभेयं मे बहुरत्ना विचित्रा शय्यासनैरुपपन्ना महार्हैः। सा दृश्यतां भ्रातृभिः सार्धमेत्य सुहृद्द्यूतं वर्ततामत्र चेति ॥ २२ ॥

इति सभापर्वणि द्यूतपर्वणि युधिष्ठिरानयने
षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

---

वैशम्पायन उवाच। मतमाज्ञाय पुत्रस्य धृतराष्ट्रो नराधिपः। मत्वा च दुस्तरञ्चैवमेतद्राजंश्चकार ह ॥ १ ॥ अन्यायेन तथोक्तस्तु विदुरो विदुषां वरः। नाभ्यनन्दद्वचो भ्रातुर्वचनञ्चेदमब्रवीत् ॥२॥

विदुर उवाच। नाभिनन्दे नृपते प्रैषमेतं मैवं कृथाः कुलनाशाद्बिभेमि। पुत्रैर्भिन्नैः कलहस्ते ध्रुवं स्यादेतच्छङ्के द्यूतकृते नरेन्द्र ॥ ३ ॥

धृतराष्ट्र उवाच। नेह क्षत्तः कलहस्तप्स्यते मां न चेद्दैवं प्रतिलोमं भविष्यत्। धात्रा तु दिष्टस्य वशे किलेदं सर्वं जगत्तिष्ठति न स्वतन्त्रम् ॥ ४ ॥ तदद्य विदुर प्राप्य राजानं मम शासनात्। क्षिप्रमानय दुर्धर्षं कुन्तीपुत्रं युधिष्ठिरम् ॥ ५ ॥

इति सभापर्वणि द्यूतपर्वणि युधिष्ठिरानयने
सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

वैशम्पायन उवाच। ततः प्रायाद्विदुरोऽश्वैरुदारैर्महाजवैर्बलिभिः साधुदान्तैः। बलान्नियुक्तो धृतराष्ट्रेण राज्ञा मनीषिणां पाण्डवानां सकाशे ॥ १ ॥ सोऽभिपत्य तदध्वानमासाद्य नृपतेः पुरम्। प्रविवेश महाबुद्धिः पूज्यमानो द्विजातिभिः ॥२॥

स राजगृहमासाद्य कुबेरभवनोपमम्। अभ्यागच्छत धर्मात्मा धर्मपुत्रं युधिष्ठिरम् ॥ ३ ॥ तं वै राजा सत्यधृतिर्महात्मा अजातशत्रुर्विदुरं यथावत्। पूजापूर्वं प्रतिगृह्याजमीढस्ततोऽपृच्छद्धृतराष्ट्रं सपुत्रम् ॥ ४ ॥

युधिष्ठिर उवाच। विज्ञायते ते मनसोऽप्रहर्षः कच्चित् क्षत्तः कुशलेनागतोऽसि। कच्चित् पुत्राः स्थविरस्यानुलोमा वशानुगाश्चापि विशोऽथ कच्चित् ॥ ५ ॥

विदुर उवाच। राजा महात्मा कुशली सपुत्र आस्ते वृतो ज्ञातिभिरिन्द्रकल्पः। प्रीतो राजन् पुत्रगणैर्विनीतो विशोक एवात्मरतिर्दृढात्मा ॥ ६ ॥ इदन्तु त्वां कुरुराजोऽभ्युवाच पूर्वं पृष्ट्वा कुशलञ्चाव्ययञ्च। इयं सभा त्वत्सभातुल्यरूपा भ्रातॄणां ते दृश्यतामेत्य पुत्र ॥ ७ ॥ समागम्य भ्रातृभिः पार्थ तस्यां सुहृद्द्यूतं क्रियतां रम्यताञ्च। प्रीयामहे भवतां सङ्गमेन समागताः कुरवश्चापि सर्वे ॥ ८ ॥ दुरोदरा विहिता ये तु तत्र महात्मना धृतराष्ट्रेण राज्ञा। तान् द्रक्ष्यसे कितवान् सन्निविष्टानित्यागतोऽहं नृपते तज्जुषस्व ॥ ९ ॥

युधिष्ठिर उवाच। द्यूते क्षत्तः कलहो विद्यते नः को वै द्यूतं रोचते बुध्यमानः। किं वा भवान् मन्यते युक्तरूपं भवद्वाक्ये सर्व एव स्थिताः स्म ॥ १० ॥

विदुर उवाच। जानाम्यहं द्यूतमनर्थमूलं कृतश्च यत्नोऽस्य मया निवारणे। राजा च मां प्राहिणोत्त्वत्सकाशं श्रुत्वा विद्वन् श्रेय इहाचरस्व ॥ ११ ॥

युधिष्ठिर उवाच। के तत्रान्ये कितवा दीव्यमाना विना राज्ञो धृतराष्ट्रस्य पुत्रैः। पृच्छामि त्वां विदुर ब्रूहि नस्तान् यैर्दीव्यामः शतशः सन्निपत्य ॥ १२ ॥

विदुर उवाच। गान्धारराजः शकुनिर्विशाम्पते राजाति-

हृवी कृतश्चलो महात्मः । विविंशतिश्चित्रसेनश्च राजा सत्यव्रतः पुरुमित्रो जयश्च ॥ १३ ॥

युधिष्ठिर उवाच । महाभयाः कितवाः सन्निविष्टा मायोपधा देवितारोऽत्र सन्ति । धात्रा तु दिष्टस्य वशे किलेदं सर्वं जगत्तिष्ठति न स्वतन्त्रम् ॥ १४ ॥ नाहं राज्ञो धृतराष्ट्रस्य शासनान्नगन्तुमिच्छामि कवे दुरोदरम् । इष्टो हि पुत्रस्य पिता सदैव तदस्मि कर्त्ता विदुरात्थ मां यथा ॥ १५ ॥ न चाकामः शकुनिना देविताहं न चेन्मां धृष्ट आह्वयिता सभायाम् । आहूतोऽहं न निवर्त्ते कदाचित्तदाहितं शाश्वतं वै व्रतं मे ॥ १६ ॥

वैशम्पायन उवाच । एवमुक्त्वा विदुरं धर्मराजः प्रायात्रिकं सर्वमाज्ञाप्य तूर्णम् । प्रायाच्छ्वोभूते सगणः सानुयात्रः सह स्त्रीभिर्द्रौपदीमादि कृत्वा ॥ १७ ॥ दैवं हि प्रज्ञां मुष्णाति चक्षुस्तेज इवापतत् । धातुश्च वशमन्वेति पाशैरिव नरः सितः ॥ १८ ॥ इत्युक्त्वा प्रययौ राजा सह क्षत्त्रा युधिष्ठिरः । अमृष्यमाणस्तत्पार्थः समाह्वानमरिन्दमः ॥ १९ ॥ बाह्लीकेन रथं दत्तमास्थाय परवीरहा । परिच्छन्नो ययौ पार्थो भ्रातृभिः सह पाण्डवः ॥ २० ॥ राजश्रिया दीप्यमानो ययौ ब्रह्मपुरःसरः । धृतराष्ट्रेण चाहूतः कालस्य समयेन च ॥ २१ ॥ स हास्तिनपुरं गत्वा धृतराष्ट्रगृहं ययौ । समियाय च धर्मात्मा धृतराष्ट्रेण पाण्डवः ॥ २२ ॥ तथा भीष्मेण द्रोणेन कर्णेन च कृपेण च । समियाय यथान्यायं द्रौणिना च विभुः सह ॥ २३ ॥ समेत्य च महाबाहुः सोमदत्तेन चैव ह । दुर्योधनेन शल्येन सौबलेन च वीर्यवान् ॥ २४ ॥ ये चान्ये तत्र राजानः पूर्वमेव समागताः । दुःशासनेन वीरेण सर्वैर्भ्रातृभिरेव च ॥ २५ ॥ जयद्रथेन च तथा कुरुभिश्चापि सर्वशः । ततः सर्वैर्महाबाहुर्भ्रातृभिः परिवारितः ॥ २६ ॥ प्रविवेश गृहं राज्ञो धृतराष्ट्रस्य धीमतः ।

ददर्श तत्र गान्धारीं देवीं पतिमनुव्रताम्। स्नुषाभिः संवृतां
शश्वत्ताराभिरिव रोहिणीम् ॥ २७ ॥ अभिवाद्य स गान्धारीं
तया च प्रतिनन्दितः। ददर्श पितरं वृद्धं प्रज्ञाचक्षुषमीश्वरम्
॥ २८ ॥ राज्ञा मूर्द्धन्युपाघ्रातास्ते च कौरवनन्दनाः। चत्वारः
पाण्डवा राजन् भीमसेनपुरोगमाः ॥ २९ ॥ ततो हर्षः समभवत्
कौरवाणां विशाम्पते। तान् दृष्ट्वा पुरुषव्याघ्रान् पाण्डवान् प्रिय-
दर्शनान् ॥ ३० ॥ विविशुस्तेऽभ्यनुज्ञाता रत्नवन्ति गृहाणि च।
ददृशुश्चोपयातांस्तान् द्रौपदीप्रमुखाः स्त्रियः ॥ ३१ ॥ याज्ञ-
सेन्याः परामृद्धिं दृष्ट्वा प्रज्वलितामिव। स्नुषास्ता धृतराष्ट्रस्य
नातिप्रमनसोऽभवन् ॥ ३२ ॥ ततस्ते पुरुषव्याघ्रा गत्वा स्त्रीभिस्तु
संविदम्। कृत्वा व्यायामपूर्वाणि कृत्यानि प्रतिकर्म च ॥ ३३ ॥
ततः कृताह्निकाः सर्वे दिव्यचन्दनभूषिताः। कल्याणमनसश्चैव
ब्राह्मणान् स्वस्ति वाच्य च ॥ ३४ ॥ मनोज्ञमशनं भुक्त्वा विविशुः
शरणान्यथ। उपगीयमाना नारीभिरस्वपन् कुरुपुङ्गवाः।
अनन्तरञ्च तत् प्राप्य प्रीताः परपुरञ्जयाः ॥ ३५ ॥ जगाम तेषां
सा रात्रिः पुण्या रतिविहारिणाम्। स्तूयमानाश्च विश्रान्ताः
काले निद्रामथात्यजन् ॥ ३६ ॥ सुखोषितास्ते रजनीं प्रातः सर्वे
कृताह्निकाः। सभां रम्यां प्रविविशुः कितवैरभिनन्दिताः ॥३७॥

इति सभापर्वणि द्यूतपर्वणि युधिष्ठिरसभागमनं
अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

वैशम्पायन उवाच। प्रविश्य तां सभां पार्था युधिष्ठिरपुरो-
गमाः। समेत्य पार्थिवान् सर्वान् पूजार्हानभिपूज्य च ॥ १ ॥
यथावयः समेयाना, उपविष्टा यथार्हतः। आसनेषु विचित्रेषु
स्पर्द्ध्यास्तरणवत्सु च ॥ २ ॥ तेषु तत्रोपविष्टेषु सर्वेष्वथ नृपेषु
च। शकुनिः सौबलस्तत्र युधिष्ठिरमभाषत ॥ ३ ॥

शकुनिरुवाच। उपस्तीर्णा सभा राजन् सर्वे त्वयि कृतक्षणाः। अक्षानुप्त्वा देवनस्य समयोऽस्तु युधिष्ठिर ॥ ४ ॥

युधिष्ठिर उवाच। निकृतिर्देवनं पापं न क्षात्रोऽत्र पराक्रमः। न च नीतिर्ध्रुवा राजन् किं त्वं द्यूतं प्रशंससि ॥ ५ ॥ न हि मानं प्रशंसन्ति निकृतौ कितवस्य हि। शकुने मैव नो जैषीरमार्गेण नृशंसवत् ॥ ६ ॥

शकुनिरुवाच। यो वेत्ति संख्यां निकृतौ विधिज्ञश्चेष्टास्वखिन्नः कितवोऽक्षजासु। महामतिर्यश्च जानाति द्यूतं स वै सर्वं सहते प्रक्रियासु ॥ ७ ॥ अक्षग्लहः सोऽभिभवेत् परं नस्तेनैव दोषो भवतीह पार्थ। दीव्यामहे पार्थिव मा विशङ्कां कुरुष्व पाणञ्च चिरञ्च मा कृथाः ॥ ८ ॥

युधिष्ठिर उवाच। एवमाहायमसितो देवलो मुनिसत्तमः। इमानि लोकद्वाराणि यो वै संचरते सदा ॥ ९ ॥ इदं वै देवनं पापं निकृत्या कितवैः सह। धर्मेण तु जयो युद्धे तत्परं न तु देवनम् ॥ १० ॥ नार्या म्लेच्छन्ति भाषाभिर्मायया न चरन्त्युत। अजिह्ममशठं युद्धमेतत् सत्पुरुषव्रतम् ॥ ११ ॥ शक्तितो ब्राह्मणार्थाय शिक्षितुं प्रयतामहे। तद्वै वित्तं मातिदेवीर्मा जैषीः शकुने परान् ॥ १२ ॥ निकृत्या कामये नाहं सुखान्युत धनानि वा। कितवस्याप्यनिकृतेर्वृत्तमेतन्न पूज्यते ॥ १३ ॥

शकुनिरुवाच। श्रोत्रियः श्रोत्रियानेति निकृत्यैव युधिष्ठिर। विद्वानविदुषोऽभ्येति नाहुस्तां निकृतिं जनाः ॥ १४ ॥ अक्षैर्हि शिक्षितोऽभ्येति निकृत्यैव युधिष्ठिर। विद्वानविदुषोऽभ्येति नाहुस्तां निकृतिं जनाः ॥ १५ ॥ अकृतास्त्रं कृतास्त्रश्च दुर्बलं बलवत्तरः। एवं कर्मसु सर्वेषु निकृत्यैव युधिष्ठिर ॥ १६ ॥ एवं त्वं मामिहाभ्येत्य निकृतिं यदि मन्यसे। देवनाद्विनिवर्त्तस्व यदि ते विद्यते भयम् ॥ १७ ॥

युधिष्ठिर उवाच। आहूतो न निवर्त्तेयमिति मे व्रतमाहितम्। विधिश्च बलवान्राजन् दिष्टस्यास्मि वशे स्थितः॥१८॥ अस्मिन् समागमे केन देवनं मे भविष्यति। प्रतिपाणश्च कोऽन्योऽस्ति ततो द्यूतं प्रवर्त्तताम्॥ १९ ॥

दुर्य्योधन उवाच। अहं दातास्मि रत्नानां धनानाञ्च विशाम्पते। मदर्थे देविता चायं शकुनिर्मातुलो मम॥ २०॥

युधिष्ठिर उवाच। अन्येनान्यस्य वै द्यूतं विषमं प्रतिभाति मे। एतद्विद्वन्नुपादत्स्व काममेवं प्रवर्त्तताम्॥ २१ ॥

वैशम्पायन उवाच। उपोह्यमाने द्यूते तु राजानः सर्व्व एव ते। धृतराष्ट्रं पुरस्कृत्य विविशुस्तां सभां ततः॥ २२ ॥ भीष्मो द्रोणः कृपश्चैव विदुरश्च महामतिः। नातिप्रीतेन मनसा तेऽन्ववर्त्तन्त भारत॥ २३ ॥ ते द्वन्द्वशः पृथक् चैव सिंहग्रीवा महौजसः। सिंहासनानि भूरीणि विचित्राणि विभेजिरे॥ २४ ॥ शुशुभे सा सभा राजन् राजभिस्तैः समागतैः। देवैरिव महाभागैः समवेतैस्त्रिपिष्टपम्॥ २५ ॥ सर्व्वे वेदविदः शूराः सर्व्वे भास्वरमूर्त्तयः। प्रावर्त्तत महाराज सुहृद्द्यूतमनन्तरम्॥२६॥

युधिष्ठिर उवाच। अयं बहुधनो राजन् सागरावर्त्तसम्भवः। मणिर्हारोत्तरः श्रीमान् कनकोत्तमभूषणः॥ २७ ॥ एतद्राजन् मम धनं प्रतिपाणोऽस्ति कस्तव। येन मां त्वं महाराज धनेन प्रतिदीव्यसे॥ २८ ॥

दुर्य्योधन उवाच। सन्ति मे मणयश्चैव धनानि सुबहूनि च। मत्सरश्च न मेऽर्थेषु जयस्वैनं दुरोदरम्॥ २९ ॥

वैशम्पायन उवाच। ततो जग्राह शकुनिस्तानक्षानक्षतत्त्ववित्। जितमित्येव शकुनिर्युधिष्ठिरमभाषत॥ ३० ॥

इति सभापर्व्वणि द्यूतपर्व्वणि द्यूतारम्भे एकोनषष्टोऽध्यायः॥ ५९ ॥

युधिष्ठिर उवाच। मत्तः कैतवकेनैव यज्जितोऽस्मि दुरोदरे। शकुने हन्त दीव्यामो ग्लहमानाः परस्परम्॥ १॥ सन्ति निष्कसहस्रस्य कुण्डिनो भरिताः शुभाः। कोषो हिरण्यमक्षय्यं जातरूपमनेकशः। एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया॥२॥

वैशम्पायन उवाच। कौरवाणां कुलकरं ज्येष्ठं पाण्डवमच्युतम्। इत्युक्तः शकुनिः प्राह जितमित्येव तं नृपम्॥ ३॥

युधिष्ठिर उवाच। अयं सहस्रसमितो वैयाघ्रः सुप्रतिष्ठितः। सुचक्रोपस्करः श्रीमान् किङ्किणीजालमण्डितः॥ ४॥ संह्रादनो राजरथो य इहास्मानुपावहत्। जैत्रो रथवरः पुण्यो मेघसागरनिस्वनः॥ ५॥ अष्टौ यं कुमुदच्छायाः सदश्वा राष्ट्रसम्मताः। वहन्ति नैषां मुच्येत पदाद्भूमिमुपस्पृशन्। एतद्राजन् धनं मह्यं तेन दीव्याम्यहं त्वया॥ ६॥

वैशम्पायन उवाच। एवं श्रुत्वा व्यवसितो निकृतिं समुपाश्रितः। जितमित्येव शकुनिर्युधिष्ठिरमभाषत॥ ७॥

युधिष्ठिर उवाच। शतं दासीसहस्राणि तरुण्यो हेमभद्रिकाः। कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलंकृताः॥ ८॥ महार्हमाल्याभरणाः सुवस्त्राश्चन्दनोक्षिताः। मणीन् हेम च बिभ्रत्यश्चतुःषष्टिविशारदाः॥ ९॥ अनुसेवाश्चरन्तीमाः कुशला नृत्यसामसु। स्नातकानाममात्यानां राज्ञाञ्च मम शासनात्। एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया॥ १०॥

वैशम्पायन उवाच। एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः। जितमित्येव शकुनिर्युधिष्ठिरमभाषत॥ ११॥

युधिष्ठिर उवाच। एतावन्ति च दासानां सहस्राण्युत सन्ति मे। प्रदक्षिणानुलोमाश्च प्रावारवसनाः सदा॥१२॥ प्राज्ञा मेधाविनो दान्ता युवानो मृष्टकुण्डलाः। पात्रीहस्ता दिवारात्रमतिथीन् भोजयन्त्युत। एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया॥ १३॥

वैशम्पायन उवाच । एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ १४ ॥

युधिष्ठिर उवाच । सहस्रसङ्ख्या नागा मे मत्तास्तिष्ठन्ति सौबल । हेमकक्षाः कृतापीड़ाः पद्मिनो हेममालिनः ॥ १५ ॥ सुदान्ता राजवहनाः सर्वशब्दक्षमा युधि । ईषादन्ता महाकायाः सर्वे चाष्टकरेणवः ॥ १६ ॥ सर्वे च पुरभेत्तारो नवमेघनिभा गजाः । एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया ॥१७॥

वैशम्पायन उवाच । इत्येवं वादिनं पार्थं प्रहसन्निव सौबलः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ १८ ॥

युधिष्ठिर उवाच । रथास्तावन्त एवेमे हेमदण्डाः पताकिनः । हयैर्विनीतैः सम्पन्ना रथिभिश्चित्रयोधिभिः ॥ १९ ॥ एकैको यत्र लभते सहस्रपरमां भृतिम् । युध्यतोऽयुध्यतो वापि वेतनं मासकालिकम् । एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया ॥ २० ॥

वैशम्पायन उवाच । इत्येवमुक्ते वचने कृतवैरो दुरात्मवान् । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २१ ॥

युधिष्ठिर उवाच । अश्वांस्तित्तिरिकल्माषान् गान्धर्वान् हेममालिनः । ददौ चित्ररथस्तुष्टो यांस्तान् गाण्डीवधन्वने ॥ २२ ॥ युद्धे जितः पराभूतः प्रीतिपूर्वमरिन्दमः । एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया ॥ २३ ॥

वैशम्पायन उवाच । एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २४ ॥

युधिष्ठिर उवाच । रथानां शकटानाञ्च श्रेष्ठानाञ्चायुतानि मे । युक्तान्येव हि तिष्ठन्ति वाहैरुच्चावचैस्तथा ॥ २५ ॥ एवं वर्णस्य वर्णस्य समुच्चीय सहस्रशः । तथा समुदिता वीराः सर्वे वीरपराक्रमाः ॥ २६ ॥ क्षीरं पिबन्तस्तिष्ठन्ति भुञ्जानाः शालि-

तत्कुलान् । षष्टिस्तानि सहस्राणि सर्वे विपुलवक्षसः । एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया ॥ २७ ॥

वैशम्पायन उवाच । एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २८ ॥

युधिष्ठिर उवाच । ताम्रलोहैः परिवृता निधयो ये चतुःशताः । पञ्चद्रौणिक एकैकः सुवर्णस्याहतस्य वै ॥ २९ ॥ जातरूपस्य मुख्यस्य अनर्घेयस्य भारत । एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया ॥ ३० ॥

वैशम्पायन उवाच । एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ३१ ॥

इति सभापर्वणि द्यूतपर्वणि देवने
षष्टोऽध्यायः ॥ ६० ॥

---

वैशम्पायन उवाच । एवं प्रवर्त्तिते द्यूते घोरे सर्वापहारिणि । सर्वसंशयनिर्मोक्ता विदुरो वाक्यमब्रवीत् ॥ १ ॥

विदुर उवाच । महाराज विजानीहि यत्त्वां वक्ष्यामि भारत । मुमूर्षोरौषधमिव न रोचेतापि ते श्रुतम् ॥ २ ॥ यद्वै पुरा जातमात्रो रुराव गोमायुवद्विस्वरं पापचेताः । दुर्य्योधनो भारतानां कुलघ्नः सोऽयं व्यक्तो भवतां कालहेतुः ॥ ३ ॥ गृहे वसन्तं गोमायुं त्वं वै मोहान्न बुध्यसे । दुर्य्योधनस्य रूपेण शृणु काव्यां गिरं मम ॥ ४ ॥ मधु वै माध्विको लब्ध्वा प्रपातं नैव बुध्यते । आरुह्य तं मज्जति वा पतनं वाधिगच्छति ॥ ५ ॥ सोऽयं मत्तोऽक्षद्यूतेन मधुवन्न परीक्षते । प्रपातं बुध्यते नैव वैरं कृत्वा महारथैः ॥ ६ ॥ विदितं मे महाप्राज्ञ भोजेष्वेवासमञ्जसम् । पुत्रं सन्त्यक्तवान् पूर्वं पौराणां हितकाम्यया ॥ ७ ॥ अन्धका यादवा

भोजाः समेताः कंसमत्यजन् । नियोगाच्च हते तस्मिन् कृष्णे-
नामित्रघातिना ॥ ८ ॥ एवं ते ज्ञातयः सर्वे मोदमाना शतं
समाः । त्वन्नियुक्तः सव्यसाची निगृह्णातु सुयोधनम् ॥ ९ ॥
निग्रहादस्य पापस्य मोदन्तां कुरवः सुखम् । काकेनेमांश्चित्र-
बर्हान् शार्दूलान् क्रोष्टुकेन च । क्रीणीष्व पाण्डवान् राजन् मा
मज्जीः शोकसागरे ॥ १० ॥ त्यजेत् कुलार्थे पुरुषं ग्रामस्यार्थे
कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ११ ॥
सर्वज्ञः सर्वभावज्ञः सर्वशत्रुभयङ्करः । इति स्म भाषते काव्यो
जम्भत्यागे महासुरान् ॥ १२ ॥ हिरण्यष्ठीविनः कश्चित् पक्षिणो
वनगोचरान् । गृहे किल कृतावासान् लोभाद्राजन्नपीडयत् ।
स चोपभोगलोभान्धो हिरण्यार्थी परन्तप ॥ १३ ॥ आयतिञ्च
तदात्वञ्च उभे सद्यो व्यनाशयत् । तदर्थकामः पाण्डवान् मा
द्रुहः कुरुसत्तम ॥ १४ ॥ मोहात्मा तप्यसे पश्चात् पक्षिहा
पुरुषो यथा । जातं जातं पाण्डवेभ्यः पुष्पमादत्स्व भारत ॥ १५ ॥
मालाकार इवारामे स्नेहं कुर्वन् पुनः पुनः । वृक्षानङ्गारकारीव
मैनान् धाक्षीः समूलकान् ॥ १६ ॥ मा गमः ससुतामात्यः सबलश्च
यमक्षयम् । समवेतान् हि कः पार्थान् प्रतियुध्येत भारत ।
मरुद्भिः सहितो राजन्नपि साक्षान्मरुत्पतिः ॥ १७ ॥

इति सभापर्वणि द्यूतपर्वणि विदुरवाक्ये
एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

विदुर उवाच । द्यूतं मूलं कलहस्याभ्युपैति मिथो भेदं
महते वै भयाय । तदास्थितोऽयं धृतराष्ट्रस्य पुत्रो दुर्योधनः
सृजते वैरमुग्रम् ॥ १ ॥ प्रातिपीयाः शान्तनवा भैमसेनाः
सबाह्लिकाः । दुर्योधनापराधेन कृच्छ्रं प्राप्स्यन्ति सर्वशः ॥ २ ॥

दुर्य्योधनो मदेनैव क्षेमं राष्ट्रादपोहति। विषाणं गौरिव मदात् स्वयमारुजतेऽबलः॥ ३॥ यश्चित्तमन्वेति परस्य राजन् वीरः कविः स्वामतिमन्य दृष्टिम्। नावं समुद्र इव बालनेत्रामारुह्य घोरे व्यसने निमज्जेत्॥ ४॥ दुर्य्योधनो ग्लहते पाण्डवेन प्रीयायसे त्वं जयतीति तच्च। अतः समुत्पद्यति सम्प्रहारो यतो विनाशः समुपैति पुंसाम्॥ ५॥ आकर्षस्तेऽवाक्फलः सुप्रणीतो हृदि प्रौढो मन्त्रपदः समाधिः। युधिष्ठिरेण कलहस्तवाय-मचिन्तितोऽभिमतः स्वबन्धुना॥ ६॥ प्रातिपेयाः शान्तनवाः शृणुध्वं काव्यां वाचं संसदि कौरवाणाम्। वैश्वानरं प्रज्वलितं सुघोरं मा यास्यध्वं मन्दमनुप्रपन्नाः॥ ७॥ यदा मन्युं पाण्डवोऽजातशत्रुर्न संयच्छेदक्षमदाभिभूतः। वृकोदरः सव्यसाची यमौ च कोऽत्र द्वीपः स्यात्तुमुले वस्तदानीम्॥ ८॥ महाराज प्रभवस्त्वं धनानां पुरा द्यूतान् मनसा यावदिच्छेः। बहु-वित्तान् पाण्डवांश्चेज्जयेस्त्वं किन्तेन तत् स्याद्वसु विन्देह पार्थान्॥ ९॥ जानीमहे देवितं सौबलस्य वेद द्यूते निकृतिं पार्वतीयः। यतः प्राप्तः शकुनिस्तत्र यातु मायायुधो भारत पाण्डवेयान्॥ १०॥

इति सभापर्वणि द्यूतपर्वणि विदुरवाक्ये द्विषष्टितमोऽध्यायः॥ ६२॥

---

दुर्य्योधन उवाच। परेषामेव यशसा श्लाघसे त्वं सदा छन्नः कुत्सयन् धार्त्तराष्ट्रान्। जानीमहे विदुर यत्प्रियस्त्वं बाला-निवास्मानवमन्यसे नित्यमेव॥ १॥ स विज्ञेयः पुरुषोऽन्यत्र-कामो निन्दाप्रशंसे हि तथा युनक्ति। जिह्वा मनस्ते हृदयं

व्यनक्ति व्यायोऽन्तरात्मनस: प्रातिकूल्यम् ॥ २ ॥ उत्सङ्गे च व्याल इवाहितोऽसि मार्जारवत् पोषकञ्चोपहंसि। भर्तृघ्नत्वान्न हि पापीयमाहुस्तस्मात् क्षत्त: किं न बिभेषि पापात् ॥ ३ ॥ जित्वा शत्रून् फलमाप्तं महन्नो मास्मान् क्षत्त: परुषाणीह वोच:। द्विषद्भिस्त्वं सम्प्रयोगाभिनन्दी मुहुर्द्वेषं यासि न: सम्प्रयोगात् ॥४॥ अमित्रतां याति नरोऽक्षमं ब्रुवन्निगूहते गुह्यममित्रसंस्तवे। तदाश्रितोऽपत्रप किं नु बाधसे यदिच्छसि त्वं तदिहाभिभाषसे ॥ ५ ॥ मा नोऽवमंस्था विद्म मनस्तवेदं शिक्षस्व बुद्धिं स्थविराणां सकाशात्। यशो रक्षस्व विदुर सम्प्रणीतं मा व्यापृत: परकार्य्येषु भूस्त्वम् ॥ ६ ॥ अहं कर्त्तेति विदुर मावमंस्था मा नो नित्यं परुषाणीह वोच:। न त्वां पृच्छामि विदुर यद्धितं मे स्वस्ति क्षत्तर्मा तितिक्षून् क्षिणु त्वम् ॥ ७ ॥ एक: शास्ता न द्वितीयोऽस्ति शास्ता गर्भे शयानं पुरुषं शास्ति शास्ता। तेनानुशिष्ट: प्रवणादिवाम्भो यथा नियुक्तोऽस्मि तथा भवामि ॥ ८ ॥ भिनत्ति शिरसा शैलमहिं भोजयते च य:। धीरेव कुरुते तस्य कार्य्याणामनुशासनम् ॥ ९ ॥ यो बलादनुशास्तीह सोऽमित्रं तेन विन्दति। मित्रतामनुवृत्तन्तु समुपेक्षेत पण्डित: ॥ १० ॥ प्रदीप्य य: प्रदीप्ताग्निं प्राक् चिरं नाभिधावति। भस्मापि स न विन्देत शिष्टं क्वचन भारत ॥ ११ ॥ न वासयेत् पारवर्ग्यं द्विषन्तं विशेषत: क्षत्तरहितं मनुष्यम्। स यत्रेच्छसि विदुर तत्र गच्छ सुसान्त्विता ह्यसती स्त्री जहाति ॥ १२ ॥

विदुर उवाच। एतावता पुरुषं ये त्यजन्ति तेषां सख्यमन्तवद्ब्रूहि राजन्। राज्ञां हि चित्तानि परिप्लुतानि सान्त्वं दत्त्वा मुषलैर्घातयन्ति ॥ १३ ॥ अबालस्त्वं मन्यसे राजपुत्र बालोऽहमित्येव सुमन्दबुद्धे। य: सौहृदे पुरुषं स्थापयित्वा पश्चादेनं दूषयते स बाल: ॥ १४ ॥ न श्रेयसे नीयते मन्दबुद्धि: स्त्री

श्रोत्रियस्येव ग्टहे प्रदुष्टा। ध्रुवं न रोचेद्भरतर्षभस्य पतिः कुमार्य्या इव षष्टिवर्षः ॥ १५ ॥ अतः प्रियञ्चेदनुकाङ्क्षसे त्वं सर्व्वेषु कार्य्येषु हिताहितेषु। स्त्रियश्च राजन् जड़पङ्गुकांश्च पृच्छ त्वं वै तादृशांश्चैव सर्व्वान् ॥ १६ ॥ लभ्यते खलु पापीयान्नरः सुप्रियवागिह। अप्रियस्य हि पथ्यस्य वक्ता श्रोता हि दुर्लभः ॥ १७ ॥ यस्तु धर्म्मपरश्च स्याद्धित्वा भर्त्तुः प्रियाप्रिये। अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥ १८ ॥ अव्याधिजं कटुकं तीक्ष्णमुष्णं यशोमुषं परुषं पूतिगन्धि। सतां पेयं यन्न पिबन्त्यसन्तो मन्युं महाराज पिब प्रशाम्य ॥ १९ ॥ वैचित्रवीर्य्यस्य यशो धनञ्च वाञ्छाम्यहं सहपुत्रस्य शश्वत्। यथा तथा तेऽस्तु नमश्च तेऽस्तु ममापि च स्वस्ति दिशन्तु विप्राः ॥ २० ॥ आशीविषान्नेत्रविषान् कोपयेन्न च पण्डितः। एवं तेऽहं वदामीदं प्रयतः कुरुनन्दन ॥ २१ ॥

इति सभापर्व्वणि द्यूतपर्व्वणि विदुरवाक्ये
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

शकुनिरुवाच। बहु वित्तं पराजैषीः पाण्डवानां युधिष्ठिर। आचक्ष्व वित्तं कौन्तेय यदि तेऽस्त्यपराजितम् ॥ १ ॥

युधिष्ठिर उवाच। मम वित्तमसंख्येयं यदहं वेद सौबल। अथ त्वं शकुने कस्माद्वित्तं समनुपृच्छसि ॥ २ ॥ अयुतं प्रयुतञ्चैव पद्मं खर्व्वमथार्व्बुदम्। शङ्खञ्चैव महापद्मं निखर्व्वं कोटिरेव च ॥ ३ ॥ मध्यञ्चैव परार्द्धञ्च सपरञ्चात्र पण्यताम्। एतन्मम धनं राजंस्तेन दीव्याम्यहं त्वया ॥ ४ ॥

वैशम्पायन उवाच। एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः। जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ५ ॥

युधिष्ठिर उवाच । गवाश्वं बहुधेनूकमसंख्येयमजाविकम् । यत्किञ्चिदनुपर्णाशां प्राक्सिन्धोरपि सौबल । एतन्मम धनं सर्व्वं तेन दीव्याम्यहं त्वया ॥ ६ ॥

वैशम्पायन उवाच । एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ७ ॥

युधिष्ठिर उवाच । पुरं जनपदो भूमिरब्राह्मणधनैः सह । अब्राह्मणाश्च पुरुषा राजन् शिष्टं धनं मम । एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया ॥ ८ ॥

वैशम्पायन उवाच । एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ९ ॥

युधिष्ठिर उवाच । राजपुत्रा इमे राजन् शोभन्ते यैर्विभूषिताः । कुण्डलानि च निष्काश्च सर्व्वराजविभूषणम् । एतन्मम धनं राजंस्तेन दीव्याम्यहं त्वया ॥ १० ॥

वैशम्पायन उवाच । एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ११ ॥

युधिष्ठिर उवाच । श्यामो युवा लोहिताक्षः सिंहस्कन्धो महाभुजः । नकुलो ग्लह एवैको विद्ध्येतन्मम तद्धनम् ॥ १२ ॥

शकुनिरुवाच । प्रियस्ते नकुलो राजन्राजपुत्रो युधिष्ठिर । अस्माकं वशतां प्राप्तो भूयः केनेह दीव्यसे ॥ १३ ॥

वैशम्पायन उवाच । एवमुक्त्वा तु तानक्षान् शकुनिः प्रत्यपद्यत । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ १४ ॥

युधिष्ठिर उवाच । अयं धर्मान् सहदेवोऽनुशास्ति लोके ह्यस्मिन् पण्डिताख्यां गतश्च । अनर्हता राजपुत्रेण तेन दीव्याम्यहं चाप्रियवत् प्रियेण ॥ १५ ॥

वैशम्पायन उवाच । एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ १६ ॥

शकुनिरुवाच। माद्रीपुत्रौ प्रियौ राजंस्तवेमौ विजितौ मया। गरीयांसौ तु ते मन्ये भीमसेनधनञ्जयौ ॥ १७ ॥

युधिष्ठिर उवाच। अधर्मं चरसे नूनं यो नावेक्षसि वै नयम्। यो नः सुमनसां मूढ विभेदं कर्त्तुमिच्छसि ॥ १८ ॥

शकुनिरुवाच। गर्त्ते मत्तः प्रपतति प्रमत्तः स्थाणुमृच्छति। ज्येष्ठो राजन् वरिष्ठोऽसि नमस्ते भरतर्षभ ॥ १९ ॥ स्वप्ने तानि न पश्यन्ति जाग्रतो वा युधिष्ठिर। कितवा यानि दीव्यन्तः प्रलपन्त्युत्कटा इव ॥ २० ॥

युधिष्ठिर उवाच। यो नः संख्ये नौरिव पारनेता जेता रिपूणां राजपुत्रस्तरस्वी। अनर्हता लोकवीरेण तेन दीव्याम्यहं शकुने फाल्गुनेन ॥ २१ ॥

वैशम्पायन उवाच। एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः। जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २२ ॥

शकुनिरुवाच। अयं मया पाण्डवानां धनुर्द्धरः पराजितः पाण्डवः सव्यसाची। भीमेन राजन् दयितेन दीव्य यत् कैतवं पाण्डव तेऽवशिष्टम् ॥ २३ ॥

युधिष्ठिर उवाच। यो नो नेता यो युधि नः प्रणेता यथा वज्री दानवशत्रुरेकः। तिर्य्यक्प्रेक्षी संहतभ्रूर्महात्मा सिंहस्कन्धो यश्च सदात्यमर्षी ॥ २४ ॥ बलेन तुल्यो यस्य पुमान्न विद्यते गदाभृतामग्र्य इहारिमर्द्दनः। अनर्हता राजपुत्रेण तेन दीव्याम्यहं भीमसेनेन राजन् ॥ २५ ॥

वैशम्पायन उवाच। एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः। जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २६ ॥

शकुनिरुवाच। बहुवित्तं पराजैषीर्भ्रातॄंश्च सहयद्विपान्। आचक्ष्व वित्तं कौन्तेय यदि तेऽस्त्यपराजितम् ॥ २७ ॥

युधिष्ठिर उवाच । अहं विशिष्टः सर्व्वेषां भ्रातृणां दयित-
स्तथा । कुर्य्यामहं जितः कर्म स्वयमात्मन्युपप्लुते ॥ २८ ॥
वैशम्पायन उवाच । एतच्छ्रुत्वा व्यवसितो निकृतिं समुपा-
श्रितः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २९ ॥
शकुनिरुवाच । एतत् पापिष्ठमकरोर्यदात्मानं पराजये ।
शिष्टे सति धने राजन् पाप आत्मपराजयः ॥ ३० ॥
वैशम्पायन उवाच । एवमुक्त्वा मताक्षस्तान् ग्लहे सर्व्वानव-
स्थितान् । पराजयल्लोकवीरानुक्त्वा राज्ञां पृथक् पृथक् ॥ ३१ ॥
शकुनिरुवाच । अस्ति ते वै प्रिया राजन् ग्लह एकोऽपरा-
जितः । पणस्व कृष्णां पाञ्चालीं तयात्मानं पुनर्जय ॥ ३२ ॥
युधिष्ठिर उवाच । नैव ह्रस्वा न महती न कृशा नापि
रोहिणी । नीलकुञ्चितकेशी च तया दीव्याम्यहं त्वया ॥ ३३ ॥
शारदोत्पलपत्राक्ष्या शारदोत्पलगन्धया । शारदोत्पलसेविन्या
रूपेण श्रीसमानया ॥ ३४ ॥ तथैव स्यादानृशंस्यात्तथा स्याद्रूप-
सम्पदा । तथा स्याच्छीलसम्पत्त्या यामिच्छेत् पुरुषः स्त्रियम् ॥३५॥
सर्व्वैर्गुणैर्हि सम्पन्नामनुकूलां प्रियंवदाम् । यादृशीं धर्म्मकामार्थ-
सिद्धिमिच्छेन्नरः स्त्रियम् ॥ ३६ ॥ चरमं संविशति या प्रथमं
प्रतिबुध्यते । आगोपालाविपालेभ्यः सर्व्वं वेद कृताकृतम् ॥ ३७ ॥
आभाति पद्मवद्वक्त्रं सस्वेदं मल्लिकेव च । वेदीमध्या दीर्घकेशी
ताम्राक्षी नातिलोमशा ॥ ३८ ॥ तयैवंविधया राजन् पाञ्चा-
ल्याहं सुमध्यया । ग्लहं दीव्यामि चार्व्वङ्ग्या द्रौपद्या हन्त
सौबल ॥ ३९ ॥
वैशम्पायन उवाच । एवमुक्ते तु वचने धर्म्मराजेन धीमता ।
धिग्धिगित्येव वृद्धानां सभ्यानां निःसृता गिरः ॥ ४० ॥ चुक्षुभे
सा सभा राजन् राज्ञां सञ्जज्ञिरे शुचः । भीष्मद्रोणकृपादीनां
स्वेदश्च समजायत ॥ ४१ ॥ शिरो गृहीत्वा विदुरो गतसत्त्व

इवाभवत्। श्वासं चायम्य अधोवक्त्रो निःश्वसन्निव पन्नगः॥ ४२॥ धृतराष्ट्रस्तु संहृष्टः पर्यपृच्छत् पुनः पुनः। किं जितं किं जितमिति ह्याकारं नाभ्यरक्षत॥ ४३॥ जहर्ष कर्णोऽतिभृशं सह दुःशासनादिभिः। इतरेषान्तु सभ्यानां नेत्रेभ्यः प्रापतज्जलम्॥ ४४॥ सौबलस्त्वभिधायैवं जितकाशी मदोत्कटः। जितमित्येव तानक्षान् पुनरेवान्वपद्यत॥ ४५॥

इति सभापर्वणि द्यूतपर्वणि द्रौपदीपराजये
चतुःषष्टोऽध्यायः॥ ६४॥

दुर्योधन उवाच। एहि क्षत्तर्द्रौपदीमानयस्व प्रियां भार्यां सम्मतां पाण्डवानाम्। सम्मार्जतां वेश्म परैतु शीघ्रं तत्रास्तु दासीभिरपुण्यशीला॥ १॥

विदुर उवाच। दुर्विभाषं भाषितं त्वादृशेन न मन्द सम्बुध्यसि पाशबद्धः। प्रपाते त्वं लम्बमानो न वेत्सि व्याघ्रान् मृगः कोपयसेऽतिवेलम्॥ २॥ आशीविषास्ते शिरसि पूर्णकोपा महाविषाः। मा कोपिष्ठाः सुमन्दात्मन् मा गमस्त्वं यमक्षयम्॥ ३॥ न हि दासीत्वमापन्ना कृष्णा भवितुमर्हति। अनीशेन हि राज्ञैषा पणे न्यस्तेति मे मतिः॥ ४॥ अयं धत्ते वेणुरिवात्मघाती फलं राजा धृतराष्ट्रस्य पुत्रः। द्यूतं हि वैराय महाभयाय मत्तो न बुध्यत्ययमन्तकाले॥ ५॥ नारुन्तुदः स्यान्नृशंसवादी न हीनतः परमभ्याददीत। ययास्य वाचा पर उद्विजेत न तां वदेदुशतीं पापलोक्याम्॥ ६॥ समुच्चरन्त्यतिवादाश्च वक्त्राद्यैराहतः शोचति रात्र्यहानि। परस्य नाममर्मसु ते पतन्ति तान् पण्डितो नावसृजेत् परेषु॥ ७॥ अजो हि शस्त्रमगिलत् किलैकः शस्त्रे विपन्ने शिरसास्य भूमौ। निकृन्तनं स्वस्य कण्ठस्य घोरं

तद्वदेवं भाकथाः पाण्डुपुत्रैः ॥ ८ ॥ न किञ्चिदित्थं प्रवदन्ति पार्थो वनेचरं वा गृहमेधिनं वा । तपस्विनं वा परिपूर्णविद्यं भषन्ति हैवं श्वनराः सदैव ॥ ९ ॥ द्वारं सुघोरं नरकस्य जिह्मं न बुध्यते धृतराष्ट्रस्य पुत्रः । तमन्वेतारो बहवः कुरूणां द्यूतोदये सह दुःशासनेन ॥ १० ॥ मज्जन्त्यलाबूनि शिलाः प्लवन्ते मुह्यन्ति नावोऽम्भसि शश्वदेव । मूढो राजा धृतराष्ट्रस्य पुत्रो न मे वाचः पथ्यरूपाः शृणोति ॥ ११ ॥ अन्तो नूनं भवितायं कुरूणां सुदारुणः सर्व्वहरो विनाशः । वाचः काव्याः सुहृदां पथ्यरूपा न श्रूयन्ते वर्द्धते लोभ एव ॥ १२ ॥

इति सभापर्व्वणि द्यूतपर्व्वणि विदुरवाक्ये
पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

वैशम्पायन उवाच । धिगस्तु क्षत्तारमिति ब्रुवाणो दर्पेण मत्तो धृतराष्ट्रस्य पुत्रः । अवैक्षत प्रातिकामीं सभायामुवाच चैनं परमार्य्यमध्ये ॥ १ ॥

दुर्य्योधन उवाच । त्वं प्रातिकामिन् द्रौपदीमानयस्व न ते भयं विद्यते पाण्डवेभ्यः । क्षत्ता ह्ययं विवदत्येव भीतो न चास्माकं वृद्धिकामः सदैव ॥ २ ॥

वैशम्पायन उवाच । एवमुक्तः प्रातिकामी स सूतः प्रायाच्छीघ्रं राजवचो निशम्य । प्रविश्य च श्वेव हि सिंहगोष्ठं समासदन्महिषीं पाण्डवानाम् ॥ ३ ॥

प्रातिकाम्युवाच । युधिष्ठिरो द्यूतमदेन मत्तो दुर्य्योधनो द्रौपदि त्वामजैषीत् । सा त्वं प्रपद्यस्व धृतराष्ट्रस्य वेश्म नयामि त्वां कर्म्मणे याज्ञसेनि ॥ ४ ॥

द्रौपद्युवाच । कथं त्वेवं वदसि प्रातिकामिन् को हि दीव्ये-

ह्यास्थया राजपुत्र:। मूढो राजा द्यूतमदेन मत्तो ह्यभून्नान्यत् कैतवमस्य किञ्चित् ॥ ५ ॥

प्रातिकाम्युवाच। यदा नाभूत् कैतवमन्यदस्य तदादेवीत् पाण्डवोऽजातशत्रुः। न्यस्ताः पूर्वं भ्रातरस्तेन राज्ञा स्वयञ्चात्मा त्वमथो राजपुत्रि ॥ ६ ॥

द्रौपद्युवाच। गच्छ त्वं कितवं गत्वा सभायां पृच्छ सूतज। किन्नु पूर्वं पराजैषीरात्मानमथ वा नु माम् ॥ ७ ॥ एतज्ज्ञात्वा समागच्छ ततो मां नय सूतज। ज्ञात्वा चिकीर्षितमहं राज्ञो यास्यामि दुःखिता ॥ ८ ॥

वैशम्पायन उवाच। सभां गत्वा स चोवाच द्रौपद्यास्तद्वचस्तदा। युधिष्ठिरं नरेन्द्राणां मध्ये स्थितमिदं वचः ॥ ९ ॥ कस्येशो नः पराजैषीरिति त्वामाह द्रौपदी। किन्नु पूर्वं पराजैषीरात्मानमथ वापि माम् ॥ १० ॥ युधिष्ठिरस्तु निश्चेता गतसत्त्व इवाभवत्। न तं सूतं प्रत्युवाच वचनं साध्वसाधु वा ॥ ११ ॥

दुर्य्योधन उवाच। इहैवागत्य पाञ्चाली प्रश्नमेनं प्रभाषताम्। इहैव सर्वे शृण्वन्तु तस्याश्चैतस्य यद्वचः ॥ १२ ॥

वैशम्पायन उवाच। स गत्वा राजभवनं दुर्य्योधनवशानुगः। उवाच द्रौपदीं सूतः प्रातिकामी व्यथन्निव ॥ १३ ॥

प्रातिकाम्युवाच। सभ्यास्त्वमी राजपुत्त्र्याह्वयन्ति मन्ये प्राप्तः संक्षयः कौरवाणाम्। न वै समृद्धिं पालयते लघीयान् यत्त्वां समानेष्यति राजपुत्रि ॥ १४ ॥

द्रौपद्युवाच। एवं नूनं व्यदधात् संविधाता स्पर्शावुभौ स्पृशतो वृद्धबालौ। धर्मन्त्वेकं परमं प्राह लोके स नः शमं धास्यति गोप्यमानः ॥ १५ ॥ सोऽयं धर्मो मात्यगात् कौरवान् वै सभ्यान् गत्वा पृच्छ धर्म्यं वचो मे। ते मां ब्रूयुर्निश्चितं तत् करिष्ये धर्मात्मानो नीतिमन्तो वरिष्ठाः ॥ १६ ॥ श्रुत्वा सूत-

आहत्यो याज्ञसेन्याः सभां गत्वा प्राह वाक्यं तदानीम्। अधोमुखास्ते न च किञ्चिदूचुर्निर्बन्धन्तं धार्त्तराष्ट्रस्य बुद्ध्वा ॥ १७ ॥

वैशम्पायन उवाच। युधिष्ठिरस्तु तच्छ्रुत्वा दुर्य्योधनचिकीर्षितम्। द्रौपद्याः सम्मतं दूतं प्राहिणोद्भरतर्षभ ॥ १८ ॥ एकवस्त्रा त्वधोनीवी रोदमाना रजस्वला। सभामागम्य पाञ्चाली श्वशुरस्याग्रतो भव ॥ १९ ॥ स गत्वा त्वरितं दूतः कृष्णाया भवनं नृप। न्यवेदयन्मतं धीमान् धर्मराजस्य निश्चितम् ॥ २० ॥ पाण्डवाश्च महात्मानो दीना दुःखसमन्विताः। सत्येनातिपरीताङ्गा नो दीयन्ते स्म किञ्चन ॥ २१ ॥ ततस्तेषां मुखमालोक्य राजा दुर्य्योधनः सूतमुवाच हृष्टः। इहैवैनामानय प्रातिकामिन् प्रत्यक्षमस्याः कुरवो ब्रुवन्तु ॥ २२ ॥ ततः सूतस्तस्य वशानुगामी भीतश्च कोपाद्द्रुपदात्मजायाः। विहाय मानं पुनरेव सभ्यानुवाच कृष्णां किमहं ब्रवीमि ॥ २३ ॥

दुर्य्योधन उवाच। दुःशासनैष मम सूतपुत्रो वृकोदरादुद्विजतेऽल्पचेताः। स्वयं प्रगृह्यानय याज्ञसेनीं किन्ते करिष्यन्त्यवशाः सपत्नाः ॥ २४ ॥ ततः समुत्थाय स राजपुत्रः श्रुत्वा भ्रातुः शासनं रक्तदृष्टिः। प्रविश्य तद्वेश्म महारथानामित्यब्रवीद्द्रौपदीं राजपुत्रीम् ॥ २५ ॥ एह्येहि पाञ्चालि जितासि कृष्णे दुर्य्योधनं पश्य विमुक्तलज्जा। कुरून् भजस्वायतपद्मनेत्रे धर्मेण लब्धासि सभां परैहि ॥ २६ ॥ ततः समुत्थाय सुदुर्मनाः सा विवर्णमामृज्य मुखं करेण। आर्त्ता प्रदुद्राव यतः स्त्रियस्ता वृद्धस्य राज्ञः कुरुपुङ्गवस्य ॥ २७ ॥ ततो जवेनाभिससार रोषाद्दुःशासनस्तामभिगर्जमानः। दीर्घेषु नीलेष्वथ चोर्म्मिमत्सु जग्राह केशेषु नरेन्द्रपत्नीम् ॥ २८ ॥ ये राजसूयावभृथे जलेन महाक्रतौ मन्त्रपूतेन सिक्ताः। ते पाण्डवानां परिभूय वीर्य्यं बलात् प्रमृष्टा धृतराष्ट्रजेन ॥ २९ ॥ स तां पराकृष्य सभासमीप-

आनीय कृष्णामतिदीर्घकेशीम् । दुःशासनो नाथवतीमनाथव-
च्चकर्ष वायुः कदलीमिवार्त्ताम् ॥ ३० ॥ सा कृष्यमाणा नमि-
ताङ्गयष्टिः शनैरुवाचाथ रजस्वलास्मि । एकञ्च वासो मम मन्द-
बुद्धे सभां नेतुं नार्हसि मामनार्य्य ॥ ३१ ॥ ततोऽब्रवीत्तां प्रसभं
निगृह्य केशेषु कृष्णेषु तदा स कृष्णाम् । कृष्णञ्च जिष्णुञ्च हरिं
नरञ्च त्राणाय विक्रोशति याज्ञसेनी ॥ ३२ ॥

दुःशासन उवाच । रजस्वला वा भव याज्ञसेनि एकाम्बरा
वाप्यथ वा विवस्त्रा । द्यूते जिता चासि कृतासि दासी दासीषु
वासश्च यथोपजोषम् ॥ ३३ ॥

वैशम्पायन उवाच । प्रकीर्णकेशी पतितार्द्धवस्त्रा दुःशासनेन
व्यवधूयमाना । ह्रीमत्यमर्षेण च दह्यमाना शनैरिदं वाक्य-
मुवाच कृष्णा ॥ ३४ ॥

द्रौपद्युवाच । इमे सभायामुपदिष्टशास्त्राः क्रियावन्तः सर्व्व
एवेन्द्रकल्पाः । गुरुस्थाना गुरवश्चैव सर्व्वे तेषामग्रे नोत्सहे स्थातु-
मेवम् ॥ ३५ ॥ नृशंसकर्म्मंस्त्वमनार्य्यवृत्त मा मां विवस्त्रां कुरु
मा विकार्षीः । न मर्षयेयुस्तव राजपुत्राः सेन्द्रा्दिदेवा यदि ते
सहायाः ॥ ३६ ॥ धर्म्मे स्थितो धर्म्मसुतो महात्मा धर्म्मश्च सूक्ष्मो
निपुणोपलभ्यः । वाचापि भर्त्तुः परमाणुमात्रमिच्छामि दोषं
न गुणान् विसृज्य ॥ ३७ ॥ इदन्त्वकार्य्यं कुरुवीरमध्ये रजस्वलां
यत् परिकर्षसे माम् । न चापि कश्चित् कुरुतेऽत्र कुत्सां ध्रुवं
तवेदं मतमभ्युपेतः ॥ ३८ ॥ धिगस्तु नष्टः खलु भारतानां धर्म्म-
स्तथा क्षत्रविदाञ्च वृत्तम् । यत्र ह्यतीतां कुरुधर्म्मवेलां प्रेक्षन्ति
सर्व्वे कुरवः सभायाम् ॥ ३९ ॥ द्रोणस्य भीष्मस्य च नास्ति सत्त्वं
क्षत्तुस्तथैवास्य महात्मनोऽपि । राज्ञस्तथा हीममधर्म्ममुग्रं न
लक्षयन्ते कुरुवृद्धमुख्याः ॥ ४० ॥

वैशम्पायन उवाच । तथा ब्रुवन्ती करुणं सुमध्यमा भर्त्तॄन्

कटाचैः कुपितानपश्यत् । सा पाण्डवान् कोपपरीतदेहान् सन्दीपयामास कटाचपातैः ॥ ४१ ॥ हृतेन राज्येन तथा धनेन रत्नैश्च मुख्यैर्न तथा बभूव । यथा त्रपाकोपसमीरितेन कृष्णाकटाचेण बभूव दुःखम् ॥ ४२ ॥ दुःशासनश्चापि समीक्ष्य कृष्णामवेचमाणां कृपणान् पतींस्तान् । आधूय वेगेन विसंज्ञकल्पामुवाच दासीति हसन् सशब्दम् ॥ ४३ ॥ कर्णस्तु तद्वाक्यमतीव हृष्टः सम्पूजयामास हसन् सशब्दम् । गान्धारराजः सुबलस्य पुत्रस्तथैव दुःशासनमभ्यनन्दत् ॥ ४४ ॥ सभ्यास्तु ये तत्र बभूवुरन्ये ताभ्यामृते धार्त्तराष्ट्रेण चैव । तेषामभूद्दुःखमतीव कृष्णां दृष्ट्वा सभायां परिकृष्यमाणाम् ॥ ४५ ॥

भीष्म उवाच । न धर्मसौक्ष्म्यात् सुभगे विवेक्तुं शक्नोमि ते प्रश्नमिमं यथावत् । अस्वो ह्यशक्तः पणितुं परस्वं स्त्रियश्च भर्त्तुर्वशतां समीक्ष्य ॥ ४६ ॥ त्यजेत सर्वां पृथिवीं समृद्धां युधिष्ठिरो धर्ममथो न जह्यात् । उक्तं जितोऽस्मीति च पाण्डवेन तस्मान्न शक्नोमि विवेक्तुमेतत् ॥ ४७ ॥ द्यूतेऽद्वितीयः शकुनिर्नरेषु कुन्तीसुतस्तेन निसृष्टकामः । न मन्यते तां निकृतिं युधिष्ठिरस्तस्मान्न ते प्रश्नमिमं ब्रवीमि ॥ ४८ ॥

द्रौपद्युवाच । आहूय राजा कुशलैरनार्य्यैर्दुष्टात्मभिर्नैकृतिकैः सभायाम् । द्यूतप्रियैर्नातिकृतप्रयत्नः कस्मादयं नाम निसृष्टकामः ॥ ४९ ॥ अशुद्धभावैर्निकृतिप्रवृत्तैरबुध्यमानः कुरुपाण्डवाग्र्यः । सम्भूय सर्वैश्च जितोऽपि यस्मात् पश्चादयं कैतवमभ्युपेतः ॥ ५० ॥ तिष्ठन्ति चेमे कुरवः सभायामीशाः सुतानाञ्च तथा स्नुषाणाम् । समीक्ष्य सर्वे मम चापि वाक्यं विब्रूत मे प्रश्नमिमं यथावत् ॥ ५१ ॥

वैशम्पायन उवाच । तथा ब्रुवन्तीं करुणं रुदन्तीमवेक्षमाणां कृपणान् पतींस्तान् । दुःशासनः परुषाण्यप्रियाणि वाक्या-

न्यवाचामधुराणि चैव ॥ ५२ ॥ तां कृष्यमाणाञ्च रजस्वलाञ्च स्रस्तोत्तरीयामतदर्हमाणाम्। वृकोदरः प्रेक्ष्य युधिष्ठिरञ्च चकार कोपं परमार्त्तरूपः ॥ ५३ ॥

इति सभापर्वणि द्यूतपर्वणि द्रौपदीप्रश्ने
षट्षष्टितमोऽध्यायः ॥ ६६ ॥

भीम उवाच। भवन्ति गेहे बन्धक्यः कितवानां युधिष्ठिर। न ताभिरुत दीव्यन्ति दया चैवास्ति तास्वपि ॥ १ ॥ काश्यो यद्बलिमाहार्षीद्द्रव्यं यच्चान्यदुत्तमम्। तथान्ये पृथिवीपाला यानि रत्नान्युपाहरन् ॥ २ ॥ वाहनानि धनञ्चैव कवचान्यायुधानि च। राज्यमात्मा वयञ्चैव कैतवेन हृतं परैः ॥ ३ ॥ न च मे तत्र कोपोऽभूत् सर्वस्येशो हि नो भवान्। इमं त्वतिक्रमं मन्ये द्रौपदी यत्र पण्यते ॥ ४ ॥ एषा ह्यनर्हती बाला पाण्डवान् प्राप्य कौरवैः। त्वत्कृते क्लिश्यते क्षुद्रैर्नृशंसैरकृतात्मभिः ॥ ५ ॥ अस्याः कृते मन्युरयं त्वयि राजन्निपात्यते। बाहू तेऽहं प्रधक्ष्यामि सहदेवाग्निमानय ॥ ६ ॥

अर्जुन उवाच। न पुरा भीमसेन त्वमीदृशीर्वदिता गिरः। परैस्ते नाशितं नूनं नृशंसैर्धर्मगौरवम् ॥ ७ ॥ न सकामाः परे कार्या धर्ममेवाचरोत्तमम्। भ्रातरं धार्मिकं ज्येष्ठं कोऽतिवर्त्तितुमर्हति ॥ ८ ॥ आहूतो हि परै राजा क्षात्रं व्रतमनुस्मरन्। दीव्यते परकामेन तन्नः कीर्त्तिकरं महत् ॥ ९ ॥

भीमसेन उवाच। एवमस्मिन् कृतं विद्यां यदि नाहं धनञ्जय। दीप्तेऽग्नौ सहितौ बाहू निर्दहेयं बलादिव ॥ १० ॥

वैशम्पायन उवाच। तथा तान् दुःखितान् दृष्ट्वा पाण्डवान्

धृतराष्ट्रजः। क्लिश्यमानाञ्च पाञ्चालीं विकर्ण इदमब्रवीत्॥११॥ याज्ञसेन्या यदुक्तं तद्वाक्यं विब्रूत पार्थिवाः। अविवेकेन वाक्यस्य नरकः सद्य एव नः॥१२॥ भीष्मश्च धृतराष्ट्रश्च कुरुवृद्धतमावुभौ। समेत्य नाहतुः किञ्चिद्विदुरश्च महामतिः॥१३॥ भारद्वाजश्च सर्वेषामाचार्य्यः कृप एव च। कुत एतावपि प्रश्नं नाहतुर्द्विजसत्तमौ॥१४॥ ये त्वन्ये पृथिवीपालाः समेताः सर्वतो दिशम्। कामक्रोधौ समुत्सृज्य ते ब्रुवन्तु यथामति॥१५॥ यदिदं द्रौपदी वाक्यमुक्तवत्यसकृच्छुभा। विमृश्य कस्य कः पक्षः पार्थिवा वदतोत्तरम्॥१६॥ एवं स बहुशः सर्वानुक्तवांस्तान् सभासदः। न च ते पृथिवीपालास्तमूचुः साध्वसाधु वा॥१७॥ उक्त्वासकृत्तथा सर्वान् विकर्णः पृथिवीपतीन्। पाणौ पाणिं विनिष्पिष्य निश्वसन्निदमब्रवीत्॥१८॥ विब्रूत पृथिवीपाला वाक्यं मा वा कथञ्चन। मन्ये न्याय्यं यदत्राहं तद्धि वक्ष्यामि कौरवाः॥१९॥ चत्वार्य्याहुर्नरश्रेष्ठा व्यसनानि महीक्षिताम्। मृगया पानमक्षाश्च ग्राम्ये चैवातिरक्तता॥२०॥ एतेषु हि नरः सक्तो धर्म्ममुत्सृज्य वर्त्तते। तथायुक्तेन च कृतां क्रियां लोको न मन्यते॥२१॥ तदयं पाण्डुपुत्रेण व्यसने वर्त्तता भृशम्। समाहूतेन कितवैरास्थितो द्रौपदी पणः॥२२॥ साधारणी च सर्वेषां पाण्डवानामनिन्दिता। जितेन पूर्वञ्चानेन पाण्डवेन कृतः पणः॥२३॥ इयञ्च कीर्त्तिता कृष्णा सौबलेन पणार्थिना। एतत्सर्वं विचार्य्याहं मन्ये न विजितामिमाम्॥२४॥ एतच्छ्रुत्वा महान्नादः सभ्यानामुदतिष्ठत। विकर्णं शंसमानानां सौबलञ्चापि निन्दताम्॥२५॥ तस्मिन्नुपरते शब्दे राधेयः क्रोधमूर्च्छितः। प्रगृह्य रुचिरं बाहुमिदं वचनमब्रवीत्॥२६॥

कर्ण उवाच। दृश्यन्ते वै विकर्णेऽस्मिन् वैकृतानि बहून्यपि। तज्जातस्तद्विनाशाय यथाग्निररणीप्रजः॥२७॥ एते न किञ्चि-

दप्याह्वयोदिता ह्यपि कृष्णया । धर्मेण विजितामेतां मन्यन्ते द्रुपदात्मजाम् ॥ २८ ॥ त्वन्तु केवलबाल्येन धार्त्तराष्ट्र विदीर्य्यसे । यद्ब्रवीषि सभामध्ये बालः स्थविरभाषितम् ॥ २९ ॥ न च धर्मं यथातत्त्वं वेत्सि दुर्य्योधनावर । यद्ब्रवीषि जितां कृष्णां न जितेति सुमन्दधीः ॥ ३० ॥ कथं ह्यविजितां कृष्णां मन्यसे धृतराष्ट्रज । यदा सभायां सर्वस्वं न्यस्तवान् पाण्डवाग्रजः ॥३१॥ अभ्यन्तरा च सर्वस्वे द्रौपदी भरतर्षभ । एवं धर्मजितां कृष्णां मन्यसे न जितां कथम् ॥ ३२ ॥ कीर्त्तिता द्रौपदी वाचा अनुज्ञाता च पाण्डवैः । भवत्यविजिता केन हेतुनैषा मता तव ॥ ३३ ॥ मन्यसे वा सभामेतामानीतामेकवाससम् । अधर्म्मेणेति तत्रापि शृणु मद्वाक्यमुत्तमम् ॥ ३४ ॥ एको भर्त्ता स्त्रिया देवैर्विहितः कुरुनन्दन । इयं त्वनेकवशगा बन्धकीति विनिश्चिता ॥ ३५ ॥ अस्याः सभायां नयनं न चित्रमिति मे मतिः । एकाम्बरधरत्वं वाप्यथ वापि विवस्त्रता ॥ ३६ ॥ यच्चैषां द्रविणं किञ्चिद्या चैषा ये च पाण्डवाः । सौबलेनेह तत् सर्वं धर्मेण विजितं वसु ॥ ३७ ॥ दुःशासन सुबालोऽयं विकर्णः प्राज्ञवादिकः । पाण्डवानाञ्च वासांसि द्रौपद्याश्चाप्युपाहर ॥ ३८ ॥ तच्छ्रुत्वा पाण्डवाः सर्वे स्वानि वासांसि भारत । अवकीर्य्योत्तरीयाणि सभायां समुपाविशन् ॥ ३९ ॥ ततो दुःशासनो राजन् द्रौपद्या वसनं बलात् । सभामध्ये समाक्षिप्य व्यपाक्रष्टुं प्रचक्रमे ॥ ४० ॥

वैशम्पायन उवाच । आकृष्यमाणे वसने द्रौपद्या चिन्तितो हरिः । गोविन्द द्वारकावासिन् कृष्ण गोपीजनप्रिय ॥ ४१ ॥ कौरवैः परिभूतां मां किं न जानासि केशव । हे नाथ हे रमानाथ व्रजनाथार्त्तिनाशन ॥ ४२ ॥ कौरवार्णवमग्नां मामुद्धरस्व जनार्द्दन । कृष्ण कृष्ण महायोगिन् विश्वात्मन् विश्वभावन ॥४३॥ प्रपन्नां पाहि गोविन्द कुरुमध्येऽवसीदतीम् । इत्यनुस्मृत्य कृष्णं

श्चा हरिं त्रिभुवनेश्वरम् ॥ ४४ ॥ प्रारुदद्दुःखिता राजन् मुख-
माच्छाद्य भामिनी । याज्ञसेन्याः वचः श्रुत्वा कृष्णो गह्वरितो-
ऽभवत् ॥ ४५ ॥ त्यक्त्वा शय्यासनं पद्भ्यां कृपालुः कृपयाभ्यगात् ।
कृष्णञ्च विष्णुञ्च हरिं नरञ्च त्राणाय विक्रोशति याज्ञसेनी ॥ ४६॥
ततस्तु धर्मोऽन्तरितो महात्मा समावृणोद्वै विविधैः सुवस्त्रैः ।
आकृष्यमाणे वसने द्रौपद्यास्तु विशाम्पते ॥ ४७ ॥ तद्रूपमपरं
वस्त्रं प्रादुरासीदनेकशः । नानारागविरागाणि वसनान्यथ वै
प्रभो ॥ ४८ ॥ प्रादुर्भवन्ति शतशो धर्मस्य परिपालनात् । ततो
हलहलाशब्दस्तत्रासीद्घोरनिस्वनः ॥ ४९ ॥ तदद्भुततमं लोके
वीक्ष्य सर्वे महीभृतः । शशंसुर्द्रौपदीं तत्र कुत्सन्तो धृतराष्ट्रजम्
॥ ५० ॥ शशाप तत्र भीमस्तु राजमध्ये बृहत्स्वनः । क्रोधा-
द्विस्फुरमाणोष्ठो विनिष्पिष्य करे करम् ॥ ५१ ॥

भीमसेन उवाच । इदं मे वाक्यमादद्ध्वं क्षत्रिया लोकवासिनः ।
नोक्तपूर्वं नरैरन्यैर्न चान्यो यद्वदिष्यति ॥ ५२ ॥ यद्येतदेव-
मुक्त्वाहं न कुर्य्यां पृथिवीश्वराः । पितामहानां पूर्वेषां नाहं
गतिमवाप्नुयाम् ॥ ५३ ॥ अस्य पापस्य दुर्बुद्धेर्भारतापसदस्य च ।
न पिबेयं बलाद्वक्षो भित्त्वा चेद्रुधिरं युधि ॥ ५४ ॥

वैशम्पायन उवाच । तस्य ते तद्वचः श्रुत्वा रौद्रं लोमप्रह-
र्षणम् । प्रचक्रुर्बहुलां पूजां कुत्सन्तो धृतराष्ट्रजम् ॥ ५५ ॥ यदा
तु वाससां राशिः सभामध्ये समाचितः । ततो दुःशासनः श्रान्तो
व्रीडितः समुपाविशत् ॥ ५६ ॥ धिक्शब्दस्तु ततस्तत्र समभूल्लोम-
हर्षणः । सभ्यानां नरदेवानां दृष्ट्वा कुन्तीसुतांस्तथा ॥ ५७ ॥ न
विब्रुवन्ति कौरव्याः प्रश्नमेतमिति स्म ह । सुजनः क्रोशति स्मात्र
धृतराष्ट्रं विगर्हयन् ॥ ५८ ॥ ततो बाहू समुत्क्षिप्य निवार्य्य च
सभासदः । विदुरः सर्वधर्मज्ञ इदं वचनमब्रवीत् ॥ ५९ ॥

विदुर उवाच । द्रौपदी प्रश्नमुक्त्वैवं रौरवीति त्वनाथवत् ।

न च विब्रूत तं प्रश्नं सभ्या धर्मोऽत्र पीड्यते ॥ ६० ॥ सभां प्रपद्यते ह्यार्त्तः प्रज्वलन्निव हव्यवाट्। तं वै सत्येन धर्मेण सभ्याः प्रशमयन्त्युत ॥ ६१ ॥ धर्मप्रश्नमतो ब्रूयादार्त्तः सत्येन मानवः। विब्रुवन्तु तं प्रश्नं कामक्रोधबलातिगाः ॥ ६२ ॥ विकर्णेन यथाप्रज्ञमुक्तः प्रश्नो नराधिपाः। भवन्तोऽपि हि तं प्रश्नं विब्रुवन्तु यथामति ॥ ६३ ॥ यो हि प्रश्नं न विब्रूयाद्धर्मदर्शी सभागतः। अनृते या फलावाप्तिस्तस्याः सोऽर्द्धं समश्नुते ॥ ६४ ॥ यः पुनर्वितथं ब्रूयाद्धर्मदर्शी सभां गतः। अनृतस्य फलं कृत्स्नं स प्राप्नोतीति निश्चयः ॥ ६५ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्। प्रह्लादस्य च संवादं मुनेराङ्गिरसस्य च ॥ ६६ ॥ प्रह्लादो नाम दैत्येन्द्रस्तस्य पुत्रो विरोचनः। कन्याहेतोराङ्गिरसं सुधन्वानमुपाद्रवत् ॥ ६७ ॥ अहं ज्यायानहं ज्यायानिति कन्येप्सया तदा। तयोर्देवनमत्रासीत् प्राणयोरिति नः श्रुतम् ॥ ६८ ॥ तयोः प्रश्नविवादोऽभूत् प्रह्लादं तावपृच्छताम्। ज्यायान् क आवयोरेकः प्रश्नं प्रब्रूहि मा मृषा ॥ ६९ ॥ स वै विवदनाद्भीतः सुधन्वानं विलोकयन्। तं सुधन्वाब्रवीत् क्रुद्धो ब्रह्मदण्ड इव ज्वलन् ॥ ७० ॥ यदि वै वक्ष्यसि मृषा प्रह्लादाथ न वक्ष्यसि। शतधा ते शिरो वज्री वज्रेण प्रहरिष्यति ॥ ७१ ॥ सुधन्वना तथोक्तः सन् व्यथितोऽश्वत्थपर्णवत्। जगाम कश्यपं दैत्यः परिप्रष्टुं महौजसम् ॥ ७२ ॥

प्रह्लाद उवाच। त्वं वै धर्मस्य विज्ञाता दैवस्येहासुरस्य च। ब्राह्मणस्य महाभाग धर्मकृच्छ्रमिदं शृणु ॥ ७३ ॥ यो वै प्रश्नं न विब्रूयाद्वितथञ्चैव निर्दिशेत्। के वै तस्य परे लोकास्तन्ममाचक्ष्व पृच्छतः ॥ ७४ ॥

कश्यप उवाच। जानन्न विब्रुवन् प्रश्नान् कामात् क्रोधाद्भयात्तथा। सहस्रं वारुणान् पाशानात्मनि प्रतिमुञ्चति ॥ ७५ ॥

साक्षी वा विब्रुवन् साक्ष्यं गोकर्णशिथिलश्चरन्। सहस्रं वारुणान् पाशानात्मनि प्रतिमुञ्चति ॥ ७६ ॥ तस्य संवत्सरे पूर्णे पाश एकः प्रमुच्यते। तस्मात् सत्यन्तु वक्तव्यं जानता सत्यमञ्जसा ॥ ७७ ॥ विद्धो धर्मो ह्यधर्मेण सभां यत्रोपपद्यते। न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ॥ ७८ ॥ अर्द्धं हरति वै श्रेष्ठः पादो भवति कर्त्तृषु। पादश्चैव सभासत्सु ये न निन्दन्ति निन्दितम् ॥ ७९ ॥ अनेना भवति श्रेष्ठो मुच्यन्ते च सभासदः। एनो गच्छति कर्त्तारं निन्दार्हो यत्र निन्द्यते ॥ ८० ॥ वितथन्तु वदेयुर्ये धर्मं प्रह्लाद पृच्छते। इष्टापूर्त्तञ्च ते घ्नन्ति सप्त सप्त परावरान् ॥ ८१ ॥ हृतस्वस्य हि यद्दुःखं हतपुत्रस्य चैव यत्। ऋणिनः प्रति यच्चैव स्वार्थाद्भ्रष्टस्य चैव यत् ॥ ८२ ॥ स्त्रियाः पत्या विहीनाया राज्ञा ग्रस्तस्य चैव यत्। अपुत्रायाश्च यद्दुःखं व्याघ्राघ्रातस्य चैव यत् ॥ ८३ ॥ अध्यूढायाश्च यद्दुःखं साक्षिभिर्विहतस्य च। एतानि वै समान्याहुर्दुःखानि त्रिदिवेश्वराः ॥८४॥ तानि सर्वाणि दुःखानि प्राप्नोति वितथं ब्रुवन्। समक्षदर्शनात् साक्ष्यं श्रवणाच्चेति धारणात् ॥ ८५ ॥ तस्मात् सत्यं ब्रुवन् साक्षी धर्मार्थाभ्यां न हीयते। कश्यपस्य वचः श्रुत्वा प्रह्लादः पुत्रमब्रवीत् ॥ ८६ ॥ श्रेयान् सुधन्वा त्वत्तो वै मत्तः श्रेयांस्तथाङ्गिराः। माता सुधन्वनश्चापि मातृतः श्रेयसी तव। विरोचन सुधन्वायं प्राणानामीश्वरस्तव ॥ ८७ ॥

सुधन्वोवाच। पुत्रस्नेहं परित्यज्य यस्त्वं धर्मे व्यवस्थितः। अनुजानाति ते पुत्रं जीवत्वेष शतं समाः ॥ ८८ ॥

विदुर उवाच। एवं वै परमं धर्मं श्रुत्वा सर्वे सभासदः। यथाप्रश्नन्तु कृष्णाया मन्यध्वं तत्र किं परम् ॥ ८९ ॥

वैशम्पायन उवाच। विदुरस्य वचः श्रुत्वा नोचुः किञ्चन पार्थिवाः। कर्णो दुःशासनं त्वाह कृष्णां दासीं गृहं नय ॥९०॥

तां वेपमानां सव्रीडां प्रलपन्तीं स्म पाण्डवान्। दुःशासनः सभामध्ये विचकर्ष तपस्विनीम्॥ ९१॥

इति सभापर्व्वणि द्यूतपर्व्वणि द्रौपद्याकर्षणे सप्तषष्टितमोऽध्यायः॥ ६७॥

द्रौपद्युवाच। तावत् प्रतीक्ष दुष्प्रज्ञ दुःशासन नराधम। पुरस्तात् करणीयं मे न कृतं कार्य्यमुत्तरम्॥ १॥ विह्वलास्मि कृतानेन कर्षिता बलिना बलात्। अभिवादं करोम्येषां गुरूणां कुरुसंसदि। न मे स्यादपराधोऽयं यदिदं न कृतं मया॥ २॥

वैशम्पायन उवाच। सा तेन च समाधूता दुःखेन च तपस्विनी। पतिता विललापेदं सभायामतथोचिता॥ ३॥

द्रौपद्युवाच। स्वयम्वरे यास्मि नृपैर्दृष्टा रङ्गे समागतैः। न दृष्टपूर्व्वा चान्यत्र साहमद्य सभां गता॥ ४॥ यां न वायुर्न चादित्यो दृष्टवन्तौ पुरा गृहे। साहमद्य सभामध्ये दृश्यास्मि जनसंसदि॥ ५॥ यां न मृष्यन्ति वातेन स्पृश्यमानां गृहे पुरा। स्पृश्यमानां सहन्तेऽद्य पाण्डवास्तां दुरात्मना॥ ६॥ मृष्यन्ति कुरवश्चेमे मन्ये कालस्य पर्य्ययम्। स्नुषां दुहितरञ्चैव क्लिश्यमानामनर्हतीम्॥ ७॥ किन्न्वतः कृपणं भूयो यदहं स्त्री सती शुभा। सभामध्यं विगाहेऽद्य क्व नु धर्म्मो महीक्षिताम्॥ ८॥ धर्म्म्यां स्त्रियं सभां पूर्व्वे न नयन्तीति नः श्रुतम्। स नष्टः कौरवेयेषु पूर्व्वो धर्म्मः सनातनः॥ ९॥ कथं हि भार्य्या पाण्डूनां पार्षतस्य स्वसा सती। वासुदेवस्य च सखी पार्थिवानां सभामियाम्॥ १०॥ तामिमां धर्म्मराजस्य भार्य्यां सदृशवर्णजाम्। ब्रूत दासीमदासीं वा तत्करिष्यामि कौरवाः॥ ११॥ अयं मां सुदृढं क्षुद्रः कौरवाणां यशोहरः। क्लिश्नाति नाहं तत् सोढुं

चिरं शक्ष्यामि कौरवाः ॥१२॥ जितां वाप्यजितां वापि मन्यध्वं मां यथा नृपाः । तथा प्रत्युक्तमिच्छामि तत् करिष्यामि कौरवाः ॥१३॥

भीष्म उवाच । उक्तवानस्मि कल्याणि धर्मस्य परमा गतिः । लोके न शक्यते ज्ञातुमपि विप्रैर्महात्मभिः ॥ १४ ॥ बलवांश्च यथा धर्मं लोके पश्यति पूरुषः । स धर्मोऽधर्मवेलायां भवत्यभिहतः परः ॥ १५ ॥ न विवेक्तुञ्च ते प्रश्नमिमं शक्नोमि निश्चयात् । सूक्ष्मत्वाद्गहनत्वाच्च कार्य्यस्यास्य च गौरवात् ॥ १६ ॥ नूनमन्तः कुलस्यास्य भविता न चिरादिव । तथा हि कुरवः सर्वे लोभमोहपरायणाः ॥ १७ ॥ कुलेषु जाताः कल्याणि व्यसनैराहता भृशम् । धर्म्यान्मार्गान्न च्यवन्ते येषां नस्त्वं वधूः स्थिता ॥ १८ ॥ उपपन्नञ्च पाञ्चालि तवेदं वृत्तमीदृशम् । यत् कृच्छ्रमपि संप्राप्ता धर्ममेवान्ववेक्षसे ॥ १९ ॥ एते द्रोणादयश्चैव वृद्धा धर्मविदो जनाः । शून्यैः शरीरैस्तिष्ठन्ति गतासव इवानताः ॥ २० ॥ युधिष्ठिरस्तु प्रश्नेऽस्मिन् प्रमाणमिति मे मतिः । अजितां वा जितां वेति स्वयं व्याहर्त्तुमर्हति ॥ २१ ॥

इति सभापर्वणि द्यूतपर्वणि भीष्मवाक्ये
अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

वैशम्पायन उवाच । तथा च दृष्ट्वा बहु तत्र देवीं रोरूयमाणां कुररीमिवार्त्ताम् । नोचुर्वचः साध्वथ वाप्यसाधु महीक्षितो धार्त्तराष्ट्रस्य भीताः ॥ १ ॥ दृष्ट्वा तथा पार्थिवपुत्रपौत्रांस्तूष्णीम्भूतान् धृतराष्ट्रस्य पुत्रः । स्मयन्निवेदं वचनं बभाषे पाञ्चालराजस्य सुतां तदानीम् ॥ २ ॥

दुर्य्योधन उवाच । तिष्ठत्वयं प्रश्न उदारसत्त्वे भीमेऽर्जुने सहदेवे तथैव । पत्यौ च ते नकुले धर्मराजे वदन्त्वेते वचनं त्वत्-

प्रसूतम् ॥ ३ ॥ अनीश्वरं विब्रुवन्त्वार्य्यमध्ये युधिष्ठिरं तव पाञ्चालि हेतोः। कुर्वन्तु सर्वे चानृतं धर्मराजं पाञ्चालि त्वं मोक्ष्यसे दासभावात् ॥ ४ ॥ धर्मे स्थितो धर्मसुतो महात्मा स्वयञ्चेदं कथयत्विन्द्रकल्पः। ईशो वा ते ह्यनीशोऽथ वैष वाक्यादस्य क्षिप्रमेकं भजस्व ॥ ५ ॥ सर्वे ह्यीमे कौरवेयाः सभायां दुःखान्तरे वर्त्तमानास्तवैव। न विब्रुवन्त्यार्य्यसत्त्वा यथावत् पतींश्च ते समवेक्ष्याल्पभाग्यान् ॥ ६ ॥

वैशम्पायन उवाच। ततः सभ्याः कुरुराजस्य तस्य वाक्यं सर्वे प्रशशंसुरुच्चैः। चेलावेधांश्चापि चक्रुर्नदन्तो हाहेत्यासीदपि चैवार्त्तनादः ॥ ७ ॥ श्रुत्वा तु तद्वाक्यमनोहरं तद्धर्षश्चासीत् कौरवाणां सभायाम्। सर्वे चासन् पार्थिवाः प्रीतिमन्तः कुरुश्रेष्ठं धार्मिकं पूजयन्तः ॥ ८ ॥ युधिष्ठिरस्य ते सर्वे समुदैक्षन्त पार्थिवाः। किन्नु वक्ष्यति धर्मज्ञ इति साचीकृताननाः ॥ ९ ॥ किन्नु वक्ष्यति बीभत्सुरजितो युधि पाण्डवः। भीमसेनो यमौ चोभौ भृशं कौतूहलान्विताः ॥ १० ॥ तस्मिन्नुपरते शब्दे भीमसेनोऽब्रवीदिदम्। प्रगृह्य रुचिरं दिव्यं भुजं चन्दनचर्च्चितम् ॥ ११ ॥

भीमसेन उवाच। यद्येष गुरुरस्माकं धर्मराजो महामनाः। न प्रभुः स्यात् कुलस्यास्य न वयं मर्षयेमहि ॥ १२ ॥ ईशो नः पुण्यतपसां प्राणानामपि चेश्वरः। मन्यते जितमात्मानं यद्येष विजिता वयम् ॥ १३ ॥ न हि मुच्येत मे जीवन् पदा भूमिमुपस्पृशन्। मर्त्यधर्मा परामृश्य पाञ्चाल्या मूर्द्धजानिमान् ॥ १४ ॥ पश्यध्वं ह्यायतौ वृत्तौ भुजौ मे परिघाविव। नैतयोरन्तरं प्राप्य मुच्येतापि शतक्रतुः ॥ १५ ॥ धर्मपाशसितस्त्वेवं नाधिगच्छामि सङ्कटम्। गौरवेण निरुद्धश्च निग्रहादर्जुनस्य च ॥ १६ ॥ धर्मराजनिसृष्टस्तु सिंहः क्षुद्रमृगानिव। धार्त्तराष्ट्रानिमान् पापान्निष्पिषेयन्तलासिभिः ॥ १७ ॥

वैशम्पायन उवाच। तमुवाच तदा भीष्मो द्रोणो विदुर एव च। उच्यतामिदमित्येवं सर्व्वं सम्भाव्यते त्वयि ॥ १८ ॥

इति सभापर्व्वणि द्यूतपर्व्वणि भीमवाक्ये
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

कर्ण उवाच। त्रयः किलेमे अधनाः सभायां भीष्मः क्षत्ता कौरवाणां गुरुश्च। ये स्वामिनं दुष्टतमं वदन्ति वाञ्छन्ति वृद्धिं न च विक्षिपन्ति ॥ १ ॥ त्रयः किलेमे ह्यधना भवन्ति दासः पुत्रश्चास्वतन्त्रा च नारी। दासस्य पत्नी त्वधनस्य भद्रे हीनेश्वरे दासधनञ्च सर्व्वम् ॥ २ ॥ प्रविश्य राज्ञः परिवारं भजस्व तत्ते कार्य्यं शिष्टमादिश्यतेऽत्र। ईशास्तु सर्व्वे तव राजपुत्रि भवन्ति वै धार्त्तराष्ट्रा न पार्थाः ॥ ३ ॥ अन्यं वृणीष्व पतिमाशु भाविनि यस्माद्दास्यं न लभसि देवनेन। अवाच्या वै पतिषु कामवृत्तिर्नित्यं दास्ये विदितं तत्तवास्तु ॥ ४ ॥ पराजितो नकुलो भीमसेनो युधिष्ठिरः सहदेवार्ज्जुनौ च। दासीभूता त्वं हि वै याज्ञसेनि पराजितास्ते पतयो नैव सन्ति ॥ ५ ॥ प्रयोजनं जन्मनि किन्नु मन्यते पराक्रमं पौरुषञ्चैव पार्थः। पाञ्चालस्य द्रुपदस्यात्मजामिमां सभामध्ये यो व्यदेवीद्ग्लहेषु ॥ ६ ॥

वैशम्पायन। तद्वै श्रुत्वा भीमसेनोऽत्यमर्षी भृशं निशश्वास तदार्त्तरूपः। राजानुगो धर्म्मपाशानुबद्धो दहन्निवैनं क्रोधसंरक्तदृष्टिः ॥ ७ ॥

भीमसेन उवाच। नाहं कुप्ये सूतपुत्रस्य राजन्नेष सत्यं दासभावं प्रविष्टः। किं विद्विषो वै मामेवं व्याहरेयुर्नादेवीस्त्वं यद्यनया नरेन्द्र ॥ ८ ॥

वैशम्पायन उवाच। भीमसेनवचः श्रुत्वा राजा दुर्य्योधनस्तदा। युधिष्ठिरमुवाचेदं तूष्णींभूतमचेतनम् ॥ ९ ॥ भीमार्जुनौ यमौ चैव स्थितौ ते नृप शासने। प्रश्नं ब्रूहि च कृष्णां त्वमजितां यदि मन्यसे ॥ १० ॥ एवमुक्त्वा तु कौन्तेयमपोह्य वसनं स्वकम्। स्मयन्निवैक्ष्य पाञ्चालीमैश्वर्य्यमदमोहितः ॥ ११ ॥ कदलीदण्डसदृशं सर्वलक्षणसंयुतम्। गजहस्तप्रतीकाशं वज्रप्रतिमगौरवम् ॥ १२ ॥ अभ्युत्स्मयित्वा राधेयं भीममाधर्षयन्निव। द्रौपद्याः प्रेक्षमाणायाः सव्यमूरुमदर्शयत् ॥ १३ ॥ भीमसेनस्तमालोक्य नेत्रे उत्फाल्य लोहिते। प्रोवाच राजमध्ये तं सभां विश्रावयन्निव ॥ १४ ॥ पितृभिः सह सालोक्यं मा स्म गच्छेद्वृकोदरः। यद्येतमूरुं गदया न भिन्द्यां ते महाहवे ॥ १५ ॥ क्रुद्धस्य तस्य सर्वेभ्यः स्रोतोभ्यः पावकार्च्चिषः। वृक्षस्येव विनिश्चेरुः कोटरेभ्यः प्रदह्यतः ॥ १६ ॥

विदुर उवाच। परं भयं पश्यत भीमसेनाद्बुध्यध्वं पार्थिवाः प्रातिपेयाः। दैवेरितो नूनमयं पुरस्तात् परोऽनयो भरतेषूदपादि ॥ १७ ॥ अतिद्यूतं कृतमिदं धार्त्तराष्ट्रा यस्मात् स्त्रियं विवदध्वं सभायाम्। योगक्षेमौ नश्यतो वः समग्रौ पापान्मन्त्रान् कुरवो मन्त्रयन्ति ॥ १८ ॥ इमं धर्मं कुरवो जानताशु ध्वस्ते धर्मे परिषत् संप्रदुष्येत्। इमाञ्चेत् पूर्वं कितवोऽग्लहीष्यदीशोऽभविष्यदपराजितात्मा ॥ १९ ॥ स्वप्ने यथैतद्विजितं धनं स्यादेवं मन्ये यस्य दीव्यत्यनीशः। गान्धारराजस्य वचो निशम्य धर्मादस्मात् कुरवो मापयात ॥ २० ॥

दुर्य्योधन उवाच। भीमस्य वाक्ये तद्वदेवार्जुनस्य स्थितोऽहं वै यमयोश्चैवमेव। युधिष्ठिरन्ते प्रवदन्त्वनीशमतो दास्यान्मोक्ष्यसे याज्ञसेनि ॥ २१ ॥

अर्जुन उवाच। ईशो राजा पूर्वमासीद्ग्लहे नः कुन्तीसुतो

धर्मराजो महात्मा। द्यूतमत्रयं कस्य पराजितात्मा तज्जानीध्वं कुरवः सर्व एव ॥ २२ ॥

वैशम्पायन उवाच। ततो राज्ञो धृतराष्ट्रस्य गेहे गोमायुरुच्चैर्व्याहरदग्निहोत्रे। तं रासभाः प्रत्यभाषन्त राजन् समन्ततः पक्षिणश्चैव रौद्राः ॥ २३ ॥ तं वै शब्दं विदुरस्तत्त्ववेदी शुश्राव घोरं सुबलात्मजा च। भीष्मो द्रोणो गौतमश्चापि विद्वान् स्वस्ति स्वस्तीत्यपि चैवाहुरुच्चैः ॥ २४ ॥ ततो गान्धारी विदुरश्चापि विद्वांस्तमुत्पातं घोरमालक्ष्य राज्ञे। निवेदयामासतुरार्त्तवत्तदा ततो राजा वाक्यमिदं बभाषे ॥ २५ ॥

धृतराष्ट्र उवाच। हतोऽसि दुर्य्योधन मन्दबुद्धे यस्त्वं सभायां कुरुपुङ्गवानाम्। स्त्रियं समाभाषसि दुर्विनीत विशेषतो द्रौपदीं धर्मपत्नीम् ॥ २६ ॥ एवमुक्त्वा धृतराष्ट्रो मनीषी हितान्वेषी बान्धवानामपायात्। कृष्णां पाञ्चालीमब्रवीत् सान्त्वपूर्वं विमृश्यैतत् प्रज्ञया तत्त्वबुद्धिः ॥ २७ ॥

धृतराष्ट्र उवाच। वरं वृणीष्व पाञ्चालि मत्तो यदभिवाञ्छसि। वधूनां हि विशिष्टा मे त्वं धर्मपरमा सती ॥ २८ ॥

द्रौपद्युवाच। ददासि चेद्वरं मह्यं वृणोमि भरतर्षभ। सर्वधर्मानुगः श्रीमानदासोऽस्तु युधिष्ठिरः ॥ २९ ॥ मनस्विनमजानन्तो मैवं ब्रूयुः कुमारकाः। एष वै दासपुत्रो हि प्रतिविन्ध्यं ममात्मजम् ॥ ३० ॥ राजपुत्रः पुरा भूत्वा यथा नान्यः पुमान् क्वचित्। राजभिर्लालितस्यास्य न युक्ता दासपुत्रता ॥ ३१ ॥

धृतराष्ट्र उवाच। एवं भवतु कल्याणि यथा त्वमभिभाषसे। द्वितीयं ते वरं भद्रे ददानि वरयस्व ह। मनो हि मे वितरति नैकं त्वं वरमर्हसि ॥ ३२ ॥

द्रौपद्युवाच। सरथौ सधनुष्कौ च भीमसेनधनञ्जयौ। यमौ च वरये राजन्नदासान् स्ववशानहम् ॥ ३३ ॥

धृतराष्ट्र उवाच । तथास्तु ते महाभागे यथा त्वं नन्दिनीच्छसि । तृतीयं वरयास्मत्तो नासि द्वाभ्यां सुसत्कृता । त्वं हि सर्वस्नुषाणां मे श्रेयसी धर्मचारिणी ॥ ३४ ॥

द्रौपद्युवाच । लोभो धर्मस्य नाशाय भगवन्नाहमुत्सहे । अनर्हा वरमादातुं तृतीयं राजसत्तम ॥ ३५ ॥ एकमाहुर्वैश्य-वरं द्वौ तु क्षत्रस्त्रियो वरौ । त्रयस्तु राज्ञो राजेन्द्र ब्राह्मणस्य शतं वराः ॥ ३६ ॥ पापीयांस इमे भूत्वा सन्तीर्णाः पतयो मम । वेत्स्यन्ति चैव भद्राणि राजन् पुण्येन कर्मणा ॥ ३७ ॥

इति सभापर्वणि द्यूतपर्वणि द्रौपदीवरलाभे सप्ततितमोऽध्यायः ॥ ७० ॥

---

कर्ण उवाच । या नः श्रुता मनुष्येषु स्त्रियो रूपेण सम्मताः । तासामेतादृशं कर्म न कस्याश्चन शुश्रुम ॥ १ ॥ क्रोधाविष्टेषु पार्थेषु धार्त्तराष्ट्रेषु चाप्यति । द्रौपदी पाण्डुपुत्राणां कृष्णा शान्तिरिहाभवत् ॥ २ ॥ अप्लवेऽम्भसि मग्नानामप्रतिष्ठे निमज्जताम् । पाञ्चाली पाण्डुपुत्राणां नौरेषा पारगाभवत् ॥ ३ ॥

वैशम्पायन उवाच । तद्वै श्रुत्वा भीमसेनः कुरुमध्येऽत्यमर्षणः । स्त्री गतिः पाण्डुपुत्राणामित्युवाच सुदुर्मनाः ॥ ४ ॥

भीम उवाच । त्रीणि ज्योतींषि पुरुष इति वै देवलोऽब्रवीत् । अपत्यं कर्म विद्या च यतः सृष्टाः प्रजास्ततः ॥ ५ ॥ अमेध्ये वै गतप्राणे शून्ये ज्ञातिभिरुज्झिते । देहे त्रितयमेवैतत् पुरुषस्योपयुज्यते ॥ ६ ॥ तन्नो ज्योतिरभिहतं दाराणामभिमर्शनात् । धनञ्जय कथंस्वित् स्यादपत्यमभिमृष्टजम् ॥७॥

अर्जुन उवाच । न चैवोक्ता न वानुक्ता हीनतः परुषा गिरः । भारत प्रतिजल्पन्ति सदा तूत्तमपूरुषाः ॥ ८ ॥ स्मरन्ति

सुकृतान्येव न वैराणि कृतान्यपि। सन्तः प्रतिविजानन्तो लब्ध-सम्भावनाः स्वयम् ॥ ६ ॥

भीम उवाच। इहैवैतांस्त्वा सर्व्वान् हन्मि शत्रून् समागतान्। अथ निष्क्रम्य राजेन्द्र समूलान् कृन्धि भारत ॥ १० ॥ किं नो विवदितेनेह किमुक्तेन च भारत। अद्यैवैतान्निहन्मीह प्रशाधि पृथिवीमिमाम् ॥ ११ ॥ इत्युक्त्वा भीमसेनस्तु कनिष्ठैर्भ्रातृभिः सह। मृगमध्ये यथा सिंहो मुहुर्मुहुरवैक्षत ॥ १२॥ सान्त्व्यमानो वीक्ष्यमाणः पार्थेनाक्लिष्टकर्म्मणा। खिद्यत्येव महाबाहुरन्तर्दाहेन वीर्य्यवान् ॥ १३ ॥ क्रुद्धस्य तस्य स्रोतोभ्यः कर्णादिभ्यो नराधिप। सधूमः सस्फुलिङ्गार्च्चिः पावकः समजायत ॥ १४ ॥ भ्रुकुटीकृतदुष्प्रेक्ष्यमभवत्तस्य तन्मुखम्। युगान्तकाले संप्राप्ते कृतान्तस्येव रूपिणः ॥ १५ ॥ युधिष्ठिरस्तमावार्य्य बाहुना बाहुशालिनम्। मैवमित्यब्रवीच्चैनं जोषमास्स्वेति भारत ॥ १६ ॥ निवार्य्य च महाबाहुं कोपसंरक्तलोचनम्। पितरं समुपातिष्ठद्धृतराष्ट्रं कृताञ्जलिः ॥ १७ ॥

इति सभापर्व्वणि द्यूतपर्व्वणि भीमक्रोधे
एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

युधिष्ठिर उवाच। राजन् किं करवामस्ते प्रशाध्यस्मांस्त्वमीश्वरः। नित्यं हि स्थातुमिच्छामस्तव भारत शासने ॥ १ ॥

धृतराष्ट्र उवाच। अजातशत्रो भद्रं ते अरिष्टं स्वस्ति गच्छत। अनुज्ञाताः सहधनाः स्वराज्यमनुशासत ॥ २ ॥ इदञ्चैवावबोद्धव्यं वृद्धस्य मम शासनम्। मया निगदितं सर्व्वं पथ्यं निःश्रेयसं परम् ॥ ३ ॥ वेत्थ त्वं तात धर्म्माणां गतिं सूक्ष्मां युधिष्ठिर। विनीतोऽसि महाप्राज्ञ वृद्धानां पर्य्युपासिता ॥ ४ ॥ यतो बुद्धि-

शान्तः शान्तिः प्रथमं गच्छ भारत। नाहारयित्वा परेच्छया
दारुण्येतन्निपात्यते ॥ ५ ॥ न वैराण्यभिजानन्ति गुणान् पश्यन्ति
नागुणान्। विरोधं नाधिगच्छन्ति ये त उत्तमपूरुषाः ॥ ६ ॥
स्मरन्ति सुकृतान्येव न वैराणि कृतान्यपि। सन्तः परार्थं कुर्वाणा
नावेक्षन्ते प्रतिक्रियाम् ॥ ७ ॥ संवादे परुषाण्याहुर्युधिष्ठिर
नराधमाः। प्रत्याहुर्मध्यमास्त्वेतानुक्ताः परुषमुत्तरम् ॥ ८ ॥ न
चोक्ता नैव चानुक्तास्त्वहिताः परुषा गिरः। प्रतिजल्पन्ति वै
धीराः सदा तूत्तमपूरुषाः ॥ ९ ॥ स्मरन्ति सुकृतान्येव न वैराणि
कृतान्यपि। सन्तः प्रतिविजानन्तो लब्ध्वा प्रत्ययमात्मनः ॥ १० ॥
असम्भिन्नार्थमर्यादाः साधवः प्रियदर्शनाः। तथाचरितमार्य्येण
त्वयास्मिन् सत्समागमे ॥ ११ ॥ दुर्य्योधनस्य पारुष्यं तत्तात
हृदि मा कृथाः। मातरञ्चैव गान्धारीं माञ्च त्वं गुणकांक्षया
॥ १२ ॥ उपस्थितं वृद्धमन्धं पितरं पश्य भारत। प्रेक्षापूर्वं मया
द्यूतमिदमासीदुपेक्षितम् ॥ १३ ॥ मित्राणि द्रष्टुकामेन पुत्रा-
णाञ्च बलाबलम्। अशोच्याः कुरवो राजन् येषां त्वमनुशासिता
॥ १४ ॥ मन्त्री च विदुरो धीमान् सर्वशास्त्रविशारदः। त्वयि
धर्मोऽर्जुने धैर्य्यं भीमसेने पराक्रमः ॥ १५ ॥ श्रद्धा च गुरु-
शुश्रूषा यमयोः पुरुषाग्र्ययोः। अजातशत्रो भद्रं ते खाण्डव-
प्रस्थमाविश। भ्रातृभिस्तेऽस्तु सौभ्रात्रं धर्मे ते धीयतां मनः ॥१६॥

वैशम्पायन उवाच। इत्युक्तो भरतश्रेष्ठो धर्मराजो युधि-
ष्ठिरः। कृत्वार्य्यसमयं सर्वं प्रतस्थे भ्रातृभिः सह ॥ १७ ॥ ते
रथान् मेघसङ्काशानास्थाय सह कृष्णया। प्रययुर्हृष्टमनस इन्द्र-
प्रस्थं पुरोत्तमम् ॥ १८ ॥

इति सभापर्वणि द्यूतपर्वणि खाण्डवप्रस्थप्रस्थाने
द्विसप्ततितमोऽध्यायः समाप्तञ्च द्यूतपर्व ॥ ७२ ॥

—

जनमेजय उवाच । अनुज्ञातांस्तान् विदित्वा सरत्नधनसञ्च-
यान् । पाण्डवान् धार्त्तराष्ट्राणां कथमासीन्मनस्तदा ॥ १ ॥

वैशम्पायन उवाच । अनुज्ञातांस्तान् विदित्वा धृतराष्ट्रेण धीमता । राजन् दुःशासनः क्षिप्रं जगाम भ्रातरं प्रति ॥ २ ॥ दुर्य्योधनं समासाद्य सामात्यं भरतर्षभ । दुःखार्त्तो भरतश्रेष्ठ इदं वचनमब्रवीत् ॥ ३ ॥

दुःशासन उवाच । दुःखेनैतत् समानीतं स्थविरो नाशयत्यसौ । शत्रुसाद्गमयन् द्रव्यं तद्बुध्यध्वं महारथाः ॥४॥ अथ दुर्य्योधनः कर्णः शकुनिश्चापि सौबलः । मिथः सङ्गम्य सहिताः पाण्डवान् प्रति मानिनः ॥ ५ ॥ वैचित्रवीर्य्यं राजानं धृतराष्ट्रं मनीषिणम् । अभिगम्य त्वरायुक्ताः श्लक्ष्णं वचनमब्रुवन् ॥ ६ ॥

दुर्य्योधन उवाच । न त्वयेदं श्रुतं राजन् यज्जगाद बृहस्पतिः । शक्रस्य नीतिं प्रवदन् विद्वान् देवपुरोहितः ॥ ७ ॥ सर्व्वोपायैर्निहन्तव्याः शत्रवः शत्रुसूदन । पुरा युद्धाद्बलाद्वापि ये कुर्व्वन्ति तवाहितम् ॥ ८ ॥ ते वयं पाण्डवधनैः सर्व्वान् संपूज्य पार्थिवान् । यदि तान् योधयिष्यामः किं वै नः परिहास्यति ॥ ९ ॥ अहीनाशीविषान् क्रुद्धान्नाशाय समुपस्थितान् । कृत्वा कण्ठे च पृष्ठे च कः समुत्स्रष्टुमर्हति ॥ १० ॥ आत्तशस्त्रा रथगताः कुपितास्तात पाण्डवाः । निःशेषं वः करिष्यन्ति क्रुद्धा ह्याशीविषा इव ॥ ११ ॥ सन्नद्धो ह्यर्जुनो याति विवृत्य परमेषुधी । गाण्डीवं मुहुरादत्ते निश्वसंश्च निरीक्षते ॥ १२ ॥ गदां गुर्व्वीं समुद्यम्य त्वरितश्च वृकोदरः । स्वरथं योजयित्वाशु निर्य्यात इति नः श्रुतम् ॥ १३ ॥ नकुलः खड्गमादाय चर्म चाप्यर्द्धचन्द्रवत् । सहदेवश्च राजा च चक्रुराकारमिङ्गितैः ॥ १४॥ ते त्वास्थाय रथान् सर्व्वे बहुशस्त्रपरिच्छदान् । अभिघ्नन्तो रथव्रातान् सेना-

योगाय निर्ययुः ॥ १५ ॥ न क्षंस्यन्ते तथास्माभिर्जातु विप्रकृता हि ते। द्रौपद्याश्च परिक्लेशं कस्तेषां क्षन्तुमर्हति ॥ १६ ॥ पुनर्दीव्याम भद्रं ते वनवासाय पाण्डवैः। एवमेतान् वशे कर्त्तुं शक्ष्यामः पुरुषर्षभ ॥ १७ ॥ ते वा द्वादश वर्षाणि वयं वा द्यूतनिर्जिताः। प्रविशेम महारण्यमजिनैः प्रतिवासिताः ॥ १८ ॥ त्रयोदशञ्च सजने अज्ञाताः परिवत्सरम्। ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश ॥ १९ ॥ निवसेम वयं ते वा तथा द्यूतं प्रवर्त्तताम्। अक्षानुप्त्वा पुनर्द्यूतमिदं कुर्वन्तु पाण्डवाः ॥ २० ॥ एतत् कृत्यतमं राजन्नस्माकं भरतर्षभ। अयं हि शकुनिर्वेद सविद्यामक्षसम्पदम् ॥ २१ ॥ दृढमूला वयं राज्ये मित्राणि परिगृह्य च। सारवद्विपुलं सैन्यं सत्कृत्य च दुरासदम् ॥ २२ ॥ ते च त्रयोदशं वर्षं पारयिष्यन्ति चेद्व्रतम्। जेष्यामस्तान् वयं राजन् रोचतां ते परन्तप ॥ २३ ॥

धृतराष्ट्र उवाच। तूर्णं प्रत्यानयस्वैतान् कामं व्यध्वगतानपि। आगच्छन्तु पुनर्द्यूतमिदं कुर्वन्तु पाण्डवाः ॥ २४ ॥

वैशम्पायन उवाच। ततो द्रोणः सोमदत्तो बाह्लीकश्चैव गौतमः। विदुरो द्रोणपुत्रश्च वैश्यापुत्रश्च वीर्यवान् ॥ २५ ॥ भूरिश्रवाः शान्तनवो विकर्णश्च महारथः। मा द्यूतमित्यभाषन्त शमोऽस्त्विति च सर्वशः ॥ २६ ॥ अकामानाञ्च सर्वेषां सुहृदामर्थदर्शिनाम्। अकरोत् पाण्डवाह्वानं धृतराष्ट्रः सुतप्रियः ॥ २७ ॥

इति सभापर्वणि अनुद्यूतपर्वणि पुनर्युधिष्ठिराह्वाने
त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

वैशम्पायन उवाच। अथाब्रवीन्महाराज धृतराष्ट्रं जनेश्वरम्। पुत्रहार्द्दाद्धर्मयुक्ता गान्धारी शोककर्षिता ॥ १ ॥

जाते दुर्य्योधने क्षत्ता महामतिरभाषत । नीयतां परलोकाय साध्वयं कुलपांसनः ॥ २ ॥ व्यनदज्जातमात्रो हि गोमायुरिव भारत । अन्तो नूनं कुलस्यास्य तन्निबोधत भारत ॥ ३ ॥ मा निमज्जीः स्वदोषेण महाप्सु त्वं हि भारत । मा बालाना-मशिष्टानामभिमंस्था मतिं प्रभो ॥ ४ ॥ मा कुलस्य क्षये घोरे कारणं त्वं भविष्यसि । बद्धं सेतुं कोऽनुभिन्द्याद्धमेच्छान्तञ्च पावकम् ॥ ५ ॥ शमे स्थितान् को नु पार्थान् कोपयेद्भरतर्षभ । स्मरन्तं त्वामाजमीढ स्मारयिष्याम्यहं पुनः ॥ ६ ॥ शास्त्रं न शास्ति दुर्बुद्धिं श्रेयसे चेतराय च । न वै वृद्धो बालमतिर्भवे-द्राजन् कथञ्चन ॥ ७ ॥ त्वन्नेत्राः सन्तु ते पुत्रा मा त्वां दीर्णाः प्रहासिषुः । तस्मादयं मद्वचनात्त्यज्यतां कुलपांसनः ॥ ८ ॥ तथा ते न कृतं राजन् पुत्रस्नेहान्नराधिप । तस्य प्राप्तं फलं विद्धि कुलान्तकरणाय यत् ॥ ९ ॥ शमेन धर्मेण परस्य बुद्ध्या या ते बुद्धिः सास्तु ते मा प्रमादीः । प्रध्वंसिनी क्रूरसमाहिता श्रीर्मृदु-प्रौढा गच्छति पुत्रपौत्रान् ॥ १० ॥ अथाब्रवीन्महाराजो गान्धारीं धर्मदर्शिनीम् । अन्तः कामं कुलस्यास्तु न शक्नोमि निवारितुम् ॥ ११ ॥ यथेच्छन्ति तथैवास्तु प्रत्यागच्छन्तु पाण्डवाः । पुन-र्द्यूतञ्च कुर्वन्तु मामकाः पाण्डवैः सह ॥ १२ ॥

इति सभापर्व्वणि अनुद्यूतपर्व्वणि गान्धारीवाक्ये
चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

---

वैशम्पायन उवाच । ततो व्यध्वगतं पार्थं प्रातिकामी युधि-ष्ठिरम् । उवाच वचनाद्राज्ञो धृतराष्ट्रस्य धीमतः ॥ १ ॥ उपा-स्तीर्णा सभा राजन्नक्षानुप्त्वा युधिष्ठिर । एहि पाण्डव दीव्येति पिता त्वाहेति भारत ॥ २ ॥

युधिष्ठिर उवाच । धातुर्नियोगाद्भूतानि प्राप्नुवन्ति शुभाशुभम् । न निवृत्तिस्तयोरस्ति देवितव्यं पुनर्यदि ॥ ३ ॥ अक्षद्यूते समाह्वानं नियोगात् स्थविरस्य च । जानन्नपि क्षयकरं नातिक्रमितुमुत्सहे ॥ ४ ॥

वैशम्पायन उवाच । असम्भवे हेममयस्य जन्तोस्तथापि रामो लुलुभे मृगाय । प्रायः समासन्नपराभवानां धियो विपर्य्यस्ततरा भवन्ति ॥ ५ ॥ इति ब्रुवन्निववृते भ्रातृभिः सह पाण्डवः । जानंश्च शकुनेर्मायां पार्थो द्यूतमियात् पुनः ॥ ६ ॥ विविशुस्ते सभां तान्तु पुनरेव महारथाः । व्यथयन्ति स्म चेतांसि सुहृदां भरतर्षभाः ॥ ७ ॥ यथोपजोषमासीनाः पुनर्द्यूतप्रवृत्तये । सर्वलोकविनाशाय दैवेनोपनिपीड़िताः ॥ ८ ॥

शकुनिरुवाच । अमुञ्चत् स्थविरो यद्वो धनं पूजितमेव तत् । महाधनं ग्लहं त्वेकं शृणु भो भरतर्षभ ॥ ९ ॥ वयं वा द्वादशाब्दानि युष्माभिर्द्यूतनिर्जिताः । प्रविशेम महारण्यं रौरवाजिनवाससः ॥ १० ॥ त्रयोदशञ्च सजने अज्ञाताः परिवत्सरम् । ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश ॥ ११ ॥ अस्माभिर्निर्जिता यूयं वने द्वादशवत्सरान् । वसध्वं कृष्णया सार्द्धमजिनैः प्रतिवासिताः ॥ १२ ॥ त्रयोदशे च निर्वृत्ते पुनरेव यथोचितम् । स्वराज्यं प्रतिपत्तव्यमितरैरथ वेतरैः ॥ १३ ॥ अनेन व्यवसायेन सहास्माभिर्युधिष्ठिर । अक्षानुप्त्वा पुनर्द्यूतमेहि दीव्यस्व भारत ॥ १४ ॥ अथ सभ्याः सभामध्ये समुच्छ्रितकरास्तदा । ऊचुरुद्विग्नमनसः संवेगात् सर्व एव हि ॥ १५ ॥

सभ्या ऊचुः । अहो धिग्बान्धवा नैनं बोधयन्ति महद्भयम् । बुद्ध्या बुध्येन्नवा बुध्येदयं वै भरतर्षभ ॥ १६ ॥

वैशम्पायन उवाच । जनप्रवादान् सुबहून् शृण्वन्नपि नराधिपः । ह्रिया च धर्मसंयोगात् पार्थो द्यूतमियात् पुनः ॥१७॥

जानन्नपि महाबुद्धिः पुनर्द्यूतमवर्त्तयत्। अथासन्नो विनाशः स्यात् कुरूणामिति चिन्तयन्॥ १८॥

युधिष्ठिर उवाच। कथं वै मद्विधो राजा स्वधर्ममनुपालयन्। आहूतो विनिवर्त्तेत दीव्यामि शकुने त्वया॥ १९॥

शकुनिरुवाच। गवाश्वं बहुधेनूकमपर्य्यन्तमजाविकम्। गजाः कोषो हिरण्यञ्च दासीदासाश्च सर्वशः॥ २०॥ एष नो ग्लह एवैको वनवासाय पाण्डवाः। यूयं वयं वा विजिता वसेम वनमाश्रिताः॥ २१॥ त्रयोदशञ्च वै वर्षमज्ञाताः सजने तथा। अनेन व्यवसायेन दीव्याम पुरुषर्षभाः॥ २२॥ समुत्क्षेपेण चैकेन वनवासाय भारत। प्रतिजग्राह तं पार्थो ग्लहं जग्राह सौबलः। जितमित्येव शकुनिर्युधिष्ठिरमभाषत॥ २३॥

इति सभापर्वणि अनुद्यूतपर्वणि पुनर्युधिष्ठिरपराजये पञ्चसप्ततितमोऽध्यायः॥ ७५॥

---

वैशम्पायन उवाच। ततः पराजिताः पार्था वनवासाय दीक्षिताः। अजिनान्युत्तरीयाणि जगृहुश्च यथाक्रमम्॥ १॥ अजिनैः संवृतान् दृष्ट्वा हृतराज्यानरिन्दमान्। प्रस्थितान् वनवासाय ततो दुःशासनोऽब्रवीत्॥ २॥ प्रवृत्तं धार्त्तराष्ट्रस्य चक्रं राज्ञो महात्मनः। पराजिताः पाण्डवेया विपत्तिं परमां गताः॥ ३॥ अद्य देवाः संप्रयाताः समैर्वर्त्मभिरस्थलैः। गुणज्येष्ठास्तथा ज्येष्ठा भूयांसो यद्वयं परैः॥ ४॥ नरकं पातिताः पार्था दीर्घकालमनन्तकम्। सुखाच्च हीना राज्याच्च विनष्टाः शाश्वतीः समाः॥ ५॥ धनेन मत्ता ये ते स्म धार्त्तराष्ट्रान् प्रहासिषुः। ते निर्जिता हृतधना वनमेष्यन्ति पाण्डवाः॥ ६॥ चित्रान् सन्नाहानवमुञ्चन्तु चैषां वासांसि दिव्यानि च भानुमन्ति। विवा-

स्यन्तां खरचर्माणि सर्वे यथा कृष्टाः सौबलस्याभ्युपेताः॥ ७॥ न सन्ति लोकेषु पुमांस ईदृशा इत्येव ये भावितबुद्धयः सदा। ज्ञास्यन्ति तेऽत्मानमिमेऽद्य पाण्डवा विपर्य्यये षण्ढतिला इवाफलाः॥ ८॥ इदं हि वासो यदि वेदृशानां मनस्विनां कौरव-माहवेषु। अदीक्षितानामजिनानि यद्वद्बलीयसां पश्यत पाण्डवानाम्॥ ९॥ महाप्राज्ञः सोमकिर्यज्ञसेनः कन्यां पाञ्चालीं पाण्डवेभ्यः प्रदाय। अकार्षीद्वै सुकृतं नेह किञ्चित् क्लीबाः पार्थाः पतयो याज्ञसेन्याः॥ १०॥ सूक्ष्मप्रावारानजिनोत्तरीयान् दृष्ट्वारण्ये निर्धनानप्रतिष्ठान्। कां त्वं प्रीतिं लप्स्यसे याज्ञसेनि पतिं वृणीष्वेह यमन्यमिच्छसि॥ ११॥ एते हि सर्वे कुरवः समेताः क्षान्ता दान्ताः सुद्रविणोपपन्नाः। एषां वृणीष्वैकतमं पतित्वे न त्वां नयेत् कालविपर्य्ययोऽयम्॥ १२॥ यथाफलाः षण्ढतिला यथा चर्ममया मृगाः। तथैव पाण्डवाः सर्वे यथा काकयवा इति॥ १३॥ किं पाण्डवांस्त्वं पतितानुपास्य मोघः श्रमः षण्ढतिलानुपास्य। एवं नृशंसः परुषाणि पार्थानश्रावयद्धृतराष्ट्रस्य पुत्रः॥ १४॥ तद्वै श्रुत्वा भीमसेनोऽत्यमर्षी निर्भर्त्स्योच्चैः सन्निगृह्येव रोषात्। उवाच चैनं सहसैवोपगम्य सिंहो यथा हैमवतः शृगालम्॥ १५॥

भीमसेन उवाच। क्रूर पापजनैर्जुष्टमकृतार्थं प्रभाषसे। गान्धारविद्यया हि त्वं राजमध्ये विकत्थसे॥ १६॥ यथा तुदसि मर्माणि वाक्शरैरिह नो भृशम्। तथा स्मारयिता तेऽहं कृन्तन्मर्माणि संयुगे॥ १७॥ ये च त्वामनुवर्त्तन्ते क्रोधलोभवशानुगाः। गोप्तारः सानुबन्धांस्तान्नेतास्मि यमसादनम्॥ १८॥

वैशम्पायन उवाच। एवं ब्रुवाणमजिनैर्विवासितं दुःशासनस्तं परिनृत्यति स्म। मध्ये कुरूणां धर्मनिबद्धमार्गं गौर्गौरिति स्माह्वयन्मुक्तलज्जः॥ १९॥

भीमसेन उवाच। नृशंस परुषं वक्तुं शक्यं दुःशासन त्वया। निकृत्या हि धनं लब्ध्वा को विकत्थितुमर्हति ॥ २० ॥ मा स्म वै सुकृतान् लोकान् गच्छेत् पार्थो वृकोदरः। यदि वक्षो हि ते भित्त्वा न पिबेच्छोणितं रणे ॥ २१ ॥ धार्त्तराष्ट्रान् रणे हत्वा मिषतां सर्वधन्विनाम्। शमं गन्तास्मि नचिरात् सत्यमेतद्-ब्रवीमि ते ॥ २२ ॥

वैशम्पायन उवाच। तस्य राजा सिंहगतेः सखेलं दुर्योधनो भीमसेनस्य हर्षात्। गतिं स्वगत्यानुचकार मन्दो निर्गच्छतां पाण्डवानां सभायाः ॥ २३ ॥ नैतावता कृतमित्यब्रवीत्तं वृको-दरः सन्निवृत्तार्द्धकायः। शीघ्रं हि त्वां निहतं सानुबन्धं संस्मा-र्य्याहं प्रतिवक्ष्यामि मूढ ॥ २४ ॥ एवं समीक्ष्यात्मनि चावमानं नियम्य मन्युं बलवान् स मानी। राजानुगः संसदि कौरवाणां विनिष्क्रामन् वाक्यमुवाच भीमः ॥ २५ ॥

भीम उवाच। अहं दुर्य्योधनं हन्ता कर्णं हन्ता धनञ्जयः। शकुनिञ्चाक्षकितवं सहदेवो हनिष्यति ॥ २६ ॥ इदञ्च भूयो वक्ष्यामि सभामध्ये बृहद्वचः। सत्यं देवाः करिष्यन्ति यन्नो युद्धं भविष्यति ॥ २७ ॥ सुयोधनमिमं पापं हन्तास्मि गदया युधि। शिरः पादेन चास्याहमधिष्ठास्यामि भूतले ॥ २८ ॥ वाक्यशूरस्य चैवास्य परुषस्य दुरात्मनः। दुःशासनस्य रुधिरं पातास्मि मृग-राडिव ॥ २९ ॥

अर्जुन उवाच। नैवं वाचा व्यवसितं भीम विज्ञायते सताम्। इतश्चतुर्दशे वर्षे द्रष्टारो यद्भविष्यति ॥ ३० ॥

भीमसेन उवाच। दुर्य्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः। दुःशासनचतुर्थानां भूमिः पास्यति शोणितम् ॥ ३१ ॥

अर्जुन उवाच। असूयितारं द्रष्टारं प्रवक्तारं विकत्थनम्। भीमसेन नियोगात्ते हन्ताहं कर्णमाहवे ॥ ३२ ॥ अर्जुनः प्रति-

जानीते भीमस्य प्रियकाम्यया। कर्णं कर्णानुगांश्चैव रणे हन्तास्मि पत्त्रिभिः ॥ ३३ ॥ ये चान्ये प्रतियोत्स्यन्ति बुद्धिमोहेन मां नृपाः। तांश्च सर्वानहं बाणैर्नेतास्मि यमसादनम् ॥ ३४ ॥ चलेद्धि हिमवान् स्थानान्निष्प्रभः स्याद्दिवाकरः। शैत्यं सोमात् प्रणश्येत मत्सत्यं विचलेद्यदि ॥ ३५ ॥ न प्रदास्यति चेद्राज्यमितो वर्षे चतुर्दशे। दुर्य्योधनोऽभिसत्कृत्य सत्यमेतद्भविष्यति ॥ ३६ ॥

वैशम्पायन उवाच। इत्युक्तवति पार्थे तु श्रीमान्माद्रवतीसुतः। प्रगृह्य विपुलं बाहुं सहदेवः प्रतापवान् ॥ ३७ ॥ सौबलस्य वधं प्रेप्सुरिदं वचनमब्रवीत्। क्रोधसंरक्तनयनो निश्वसन्निव पन्नगः ॥ ३८ ॥

सहदेव उवाच। अक्षान् यान्मन्यसे मूढ गान्धाराणां यशोहर। नैतेऽक्षा निशिता बाणास्त्वयैते समरे वृताः ॥ ३९ ॥ यथा चैवोक्तवान् भीमस्त्वामुद्दिश्य सबान्धवम्। कर्त्ताहं कर्म्मणस्तस्य कुरु कार्य्याणि सर्व्वशः ॥ ४० ॥ हन्तास्मि तरसा युद्धे त्वामेवेह सबान्धवम्। यदि स्थास्यसि संग्रामे क्षत्रधर्म्मेण सौबल ॥ ४१ ॥ सहदेववचः श्रुत्वा नकुलोऽपि विशाम्पते। दर्शनीयतमो नृणामिदं वचनमब्रवीत् ॥ ४२ ॥

नकुल उवाच। सुतेयं यज्ञसेनस्य द्यूतेऽस्मिन् धृतराष्ट्रजैः। यैर्वाचः श्राविता रूक्षाः स्थितैर्दुर्य्योधनप्रिये ॥ ४३ ॥ तान् धार्त्तराष्ट्रान् दुर्वृत्तान् मुमूर्षून् कालचोदितान्। गमयिष्यामि भूयिष्ठानहं वैवस्वतक्षयम् ॥ ४४ ॥ निदेशाद्धर्म्मराजस्य द्रौपद्याः पदवीं चरन्। निर्धार्त्तराष्ट्रां पृथिवीं कर्त्तास्मि नचिरादिव ॥ ४५ ॥

वैशम्पायन उवाच। एवं ते पुरुषव्याघ्राः सर्व्वे व्यायतबाहवः। प्रतिज्ञा बहुलाः कृत्वा धृतराष्ट्रमुपागमन् ॥ ४६ ॥

इति सभापर्व्वणि अनुद्यूतपर्व्वणि धृतराष्ट्रसमीपगमने

षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

युधिष्ठिर उवाच । आमन्त्रयामि भरतांस्तथा वृद्धं पितामहम् । राजानं सोमदत्तञ्च महाराजञ्च वाह्लिकम् ॥ १ ॥ द्रोणं कृपं नृपांश्चान्यानश्वत्थामानमेव च । विदुरं धृतराष्ट्रञ्च धार्त्तराष्ट्रांश्च सर्वशः ॥ २ ॥ युयुत्सुं सञ्जयञ्चैव तथैवान्यान् सभासदः । सर्वानामन्त्र्य गच्छामि द्रष्टास्मि पुनरेत्य वः ॥ ३ ॥

वैशम्पायन उवाच । न ते किञ्चिदथोचुस्तं ह्रियासन्ना युधिष्ठिरम् । मनोभिरेव कल्याणं दध्युस्ते तस्य धीमतः ॥ ४ ॥

विदुर उवाच । आर्य्या पृथा राजपुत्री नारण्यं गन्तुमर्हति । सुकुमारी च वृद्धा च नित्यञ्चैव सुखोचिता ॥ ५ ॥ इह वत्स्यति कल्याणी सत्कृता मम वेश्मनि । इति पार्था विजानीध्वमगदं वोऽस्तु सर्वशः ॥ ६ ॥

पाण्डवा ऊचुः । तथेत्युक्त्वाब्रुवन् सर्वे यथा नो वदसेऽनघ । त्वं पितृव्यः पितृसमो वयञ्च त्वत्परायणाः ॥ ७ ॥ यथाज्ञापयसे विद्वंस्त्वं हि नः परमो गुरुः । यच्चान्यदपि कर्त्तव्यं तद्विधत्स्व महामते ॥ ८ ॥

विदुर उवाच । युधिष्ठिर विजानीहि ममेदं भरतर्षभ । नाधर्म्मेण जितः कश्चिद्व्यथते वै पराजये ॥ ९ ॥ त्वं वै धर्मं विजानीषे युद्धे जेता धनञ्जयः । हन्तारीणां भीमसेनो नकुलस्त्वर्थसंग्रही ॥ १० ॥ संयन्ता सहदेवस्तु धौम्यो ब्रह्मविदुत्तमः । धर्मार्थकुशला चैव द्रौपदी धर्मचारिणी ॥ ११ ॥ अन्योऽन्यस्य प्रियाः सर्वे तथैव प्रियदर्शनाः । परैरभेद्याः सन्तुष्टाः को वो न स्पृहयेदिह ॥ १२ ॥ एष वै सर्वकल्याणः समाधिस्तव भारत । नैनं शत्रुर्विषहते शक्रेणापि समोऽच्युत ॥ १३ ॥ हिमवत्यनुशिष्टोऽसि मेरुसावर्णिना पुरा । द्वैपायनेन कृष्णेन नगरे वारणावते ॥ १४ ॥ भृगुतुङ्गे च रामेण दृषद्वत्याञ्च शम्भुना । अश्रौषीरसितस्यापि महर्षेरञ्जनं प्रति ॥ १५ ॥ कल्माषीतीरसंस्थस्य

गतस्त्वं शिष्यतां भृगोः । द्रष्टा सदा नारदस्ते धौम्यस्तेऽयं पुरोहितः ॥ १६ ॥ मा हासीः साम्पराये त्वं बुद्धिं तामृषिपूजिताम् । पुरूरवसमैलं त्वं बुद्ध्या जयसि पाण्डव ॥ १७ ॥ शक्त्या जयसि राज्ञोऽन्यानृषीन् धर्मोपसेवया । ऐन्द्रे जये धृतमना याम्ये कोपविधारणे ॥ १८ ॥ तथा विसर्गे कौवेरे वारुणे चैव संयमे । आत्मप्रदानं सौम्यं त्वमद्भ्यश्चैवोपजीवनम् ॥ १९ ॥ भूमेः क्षमाञ्च तेजश्च समग्रं सूर्यमण्डलात् । वायोर्बलं विद्धि सत्त्वं भूतेभ्यश्चात्मसम्पदम् ॥ २० ॥ अगदं वोऽस्तु भद्रं वो द्रष्टास्मि पुनरागतान् । आपद्धर्मार्थकृच्छ्रेषु सर्वकार्येषु वा पुनः ॥ २१ ॥ यथावत् प्रतिपद्येथाः काले काले युधिष्ठिर । आपृष्टोऽसीह कौन्तेय स्वस्ति प्राप्नुहि भारत ॥ २२ ॥ कृतार्थं स्वस्तिमन्तं त्वां द्रक्ष्यामः पुनरागतम् । न हि वो वृजिनं किञ्चिद्वेद कश्चित् पुराकृतम् ॥२३॥

वैशम्पायन उवाच । एवमुक्तस्तथेत्युक्त्वा पाण्डवः सत्यविक्रमः । भीष्मद्रोणौ नमस्कृत्य प्रातिष्ठत युधिष्ठिरः ॥ २४ ॥

इति सभापर्वणि अनुद्यूतपर्वणि युधिष्ठिरवनप्रस्थाने सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

वैशम्पायन उवाच । तस्मिन् संप्रस्थिते कृष्णा पृथां प्राप्य यशस्विनीम् । आपृच्छद्भृशदुःखार्त्ता याश्चान्यास्तत्र योषितः ॥१॥ यथार्हं वन्दनाश्लेषान् कृत्वा गन्तुमियेष सा । ततो निनादः सुमहान् पाण्डवान्तःपुरेऽभवत् ॥ २ ॥ कुन्ती च भृशसन्तप्ता द्रौपदीं प्रेक्ष्य गच्छतीम् । शोकविह्वलया वाचा कृच्छ्राद्वचनमब्रवीत् ॥ ३ ॥ वत्से शोको न ते कार्य्यः प्राप्येदं व्यसनं महत् । स्त्रीधर्माणामभिज्ञासि शीलाचारवती तथा ॥ ४ ॥ न त्वां सन्देष्टुमर्हामि भर्तॄन् प्रति शुचिस्मिते । साध्वी गुणसमापन्ना भूषितं

ते कुलद्वयम् ॥ ५ ॥ सभाग्याः कुरवश्चेमे ये न दग्धास्त्वयानघे ।
अरिष्टं व्रज पन्थानं मदनुध्यानबृंहिता ॥ ६ ॥ भाविन्यर्थे हि
सत्स्त्रीणां वैकृतं नोपजायते । गुरुधर्माभिगुप्ता च श्रेयः क्षिप्र-
मवाप्स्यसि ॥ ७ ॥ सहदेवश्च मे पुत्रः सदावेक्ष्यो वने वसन् ।
यथेदं व्यसनं प्राप्य नायं सीदेन्महामतिः ॥ ८ ॥ तथेत्युक्त्वा तु
सा देवी स्रवन्नेत्रजलाविला । शोणिताक्तैकवसना मुक्तकेशी
निर्ययौ ॥ ९ ॥ तां क्रोशन्तीं पृथा दुःखादनुवव्राज गच्छतीम् ।
ापश्यत् सुतान् सर्वान् हृताभरणवाससः ॥ १० ॥ रुरुचर्मा-
ततनून् ह्रिया किञ्चिदवाङ्मुखान् । परैः परीतान् संहृष्टैः
सुहृद्भिश्चानुशोचितान् ॥ ११ ॥ तदवस्थान् सुतान् सर्वानुपसृत्या-
तिवत्सला । सस्वजानावदच्छोकात्तत्तद्विलपती बहु ॥ १२ ॥
कुन्त्युवाच । कथं सद्धर्मचारित्रवृत्तस्थितिविभूषितान् ।
अक्षुद्रान् दृढभक्तांश्च दैवतेज्यापरान् सदा ॥ १३ ॥ व्यसनं वः
समभ्यागात् कोऽयं विधिविपर्य्ययः । कस्यापध्यानजञ्चेदमागः
पश्यामि वो धिया ॥ १४ ॥ स्यात्तु मद्भाग्यदोषोऽयं याहं युष्मा-
नजीजनम् । दुःखायासभुजोऽत्यर्थं युक्तानप्युत्तमैर्गुणैः ॥ १५ ॥
कथं वत्स्यथ दुर्गेषु वने ऋद्धिविनाकृताः । वीर्य्यसत्त्वबलोत्साह-
तेजोभिरकृशाः कृशाः ॥ १६ ॥ यद्येतदहमज्ञास्यं वने वासो
हि वो ध्रुवम् । शतशृङ्गान्मृते पाण्डौ नागमिष्यं गजाह्वयम् ॥ १७ ॥
धन्यं वः पितरं मन्ये तपोमेधान्वितं तथा । यः पुत्राधिमसं-
प्राप्य स्वर्गेच्छामकरोत् प्रियाम् ॥ १८ ॥ धन्याञ्चातीन्द्रियज्ञाना-
मिमां प्राप्तां परां गतिम् । मन्ये तु माद्रीं धर्मज्ञां कल्याणीं
सर्वथैव तु ॥ १९ ॥ रत्या मत्या च गत्या च ययाहमभिसन्धिता ।
जीवितप्रियतां मह्यं धिङ्मां संक्लेशभागिनीम् ॥ २० ॥ पुत्रका न
विहास्ये वः कृच्छ्रलब्धान् प्रियान् सतः । साहं यास्यामि हि वनं
हा कृष्णे किं जहासि माम् ॥ २१ ॥ अन्तवत्यसुधर्मेऽस्मिन् धाता

किं नु प्रमादतः। ममान्तो नैव विहितस्तेनायुर्न जहाति माम्
॥ २२ ॥ हा कृष्ण द्वारकावासिन् क्वासि सङ्कर्षणानुज। कस्मान्न
त्रायसे दुःखान्मां चेमांश्च नरोत्तमान् ॥ २३ ॥ अनादिनिधनं ये
त्वामनुध्यायन्ति वै नराः। तांस्त्वं पासीत्ययं वादः स गतो
व्यर्थतां कथम् ॥ २४ ॥ इमे सद्धर्ममाहात्म्ययशोवीर्यानुवर्त्तिनः।
नार्हन्ति व्यसनं भोक्तुं नन्वेषां क्रियतां दया ॥ २५ ॥ सेयं
नीत्यर्थविज्ञेषु भीष्मद्रोणकृपादिषु। स्थितेषु कुलनाथेषु कथ-
मापदुपागता ॥ २६ ॥ हा पाण्डो हा महाराज क्वासि किं समु-
पेक्षसे। पुत्रान् विवास्यतः साधूनरिभिर्द्यूतनिर्जितान् ॥ २७ ॥
सहदेव निवर्त्तस्व ननु त्वमसि मे प्रियः। शरीरादपि माद्रेय
मां मा त्याक्षीः कुपुत्रवत् ॥ २८ ॥ व्रजन्तु भ्रातरस्तेऽमी यदि
सत्याभिसन्धिनः। मत्परित्राणजं धर्ममिहैव त्वमवाप्नुहि ॥ २९ ॥

वैशम्पायन उवाच। एवं विलपतीं कुन्तीमभिवाद्य प्रणम्य
च। पाण्डवा विगतानन्दा वनायैव प्रवव्रजुः ॥ ३० ॥ विदुरश्चापि
तामार्त्तां कुन्तीमाश्वास्य हेतुभिः। प्रावेशयद्गृहं क्षत्ता स्वय-
मार्त्ततरः शनैः ॥ ३१ ॥ धार्त्तराष्ट्रस्त्रियस्ताश्च निखिलेनोप-
लभ्य तत्। गमनं परिकर्षं च कृष्णाया द्यूतमण्डले ॥३२॥ रुरुदुः
सुस्वनं सर्वा विनिन्दन्त्यः कुरून् भृशम्। दध्युश्च सुचिरं कालं
करासक्तमुखाम्बुजाः ॥ ३३ ॥ राजा च धृतराष्ट्रस्तु पुत्राणामनयं
तदा। ध्यायन्नुद्विग्नहृदयो न शान्तिमधिजग्मिवान् ॥ ३४ ॥ स
चिन्तयन्ननेकाग्रः शोकव्याकुलचेतनः। क्षत्तुः संप्रेषयामास शीघ्र-
मागम्यतामिति ॥ ३५ ॥ ततो जगाम विदुरो धृतराष्ट्रनिवेशनम्।
तं पर्य्यपृच्छत् संविग्नो धृतराष्ट्रो नराधिपः ॥ ३६ ॥

इति सभापर्व्वणि अनुद्यूतपर्व्वणि धृतराष्ट्रप्रश्ने
अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

वैशम्पायन उवाच। तमागतमथो राजा विदुरं दीर्घदर्शिनम्। सशङ्क इव पप्रच्छ धृतराष्ट्रोऽम्बिकासुतः ॥ १ ॥

धृतराष्ट्र उवाच। कथं गच्छति कौन्तेयो धर्मपुत्रो युधिष्ठिरः। भीमसेनः सव्यसाची माद्रीपुत्रौ च पाण्डवौ ॥ २ ॥ धौम्यश्चैव कथं क्षत्तर्द्रौपदी च यशस्विनी। श्रोतुमिच्छाम्यहं सर्वं तेषां शंस विचेष्टितम् ॥ ३ ॥

विदुर उवाच। वस्त्रेण संवृत्य मुखं कुन्तीपुत्रो युधिष्ठिरः। बाहू विशालौ संपश्यन् भीमो गच्छति पाण्डवः ॥ ४ ॥ सिकता वपन् सव्यसाची राजानमनुगच्छति। माद्रीपुत्रः सहदेवो मुखमालिप्य गच्छति ॥ ५ ॥ पांशूपलिप्तसर्वाङ्गो नकुलश्चित्तविह्वलः। दर्शनीयतमो लोके राजानमनुगच्छति ॥ ६ ॥ कृष्णा च केशैः प्रच्छाद्य मुखमायतलोचना। दर्शनीया प्ररुदती राजानमनुगच्छति ॥ ७ ॥ धौम्यो याम्यानि सामानि रौद्राणि च विशाम्पते। गायन् गच्छति मार्गेषु कुशानादाय पाणिना ॥ ८ ॥

धृतराष्ट्र उवाच। विविधानीह रूपाणि कृत्वा गच्छन्ति पाण्डवाः। तन्ममाचक्ष्व विदुर कस्मादेवं व्रजन्ति ते ॥ ९ ॥

विदुर उवाच। निकृतस्यापि ते पुत्रैर्हृते राज्ये धनेषु च। न धर्माच्चलते बुद्धिर्धर्मराजस्य धीमतः ॥ १० ॥ योऽसौ राजा घृणी नित्यं धार्त्तराष्ट्रेषु भारत। निकृत्या भ्रंशितः क्रोधान्नोन्मीलयति लोचने ॥ ११ ॥ नाहं जनं निर्दहेयं दृष्ट्वा घोरेण चक्षुषा। स पिधाय मुखं राजा तस्माद्गच्छति पाण्डवः ॥ १२ ॥ यथा च भीमो व्रजति तन्मे निगदतः शृणु। बाह्वोर्बले नास्ति समो ममेति भरतर्षभ ॥ १३ ॥ बाहू विशालौ कृत्वासौ तेन भीमोऽपि गच्छति। बाहू विदर्शयन् राजन् बाहुद्रविणदर्पितः ॥ १४ ॥ चिकीर्षन् कर्म शत्रुभ्यो बाहुद्रव्यानुरूपतः। प्रदिशन् शरसम्पातान् कुन्तीपुत्रोऽर्जुनस्तदा ॥ १५ ॥ सिकता वपन्

सव्यसाची राजानमनुगच्छति। असक्ताः सिकतास्तस्य यथा संप्रति भारत ॥ १६ ॥ असक्तं शरवर्षाणि तथा मोक्ष्यति शत्रुषु। न मे कश्चिद्विजानीयान्मुखमद्येति भारत ॥ १७ ॥ मुखमालिप्य तेनासौ सहदेवोऽपि गच्छति। नाहं मनांस्याददेयं मार्गे स्त्रीणामिति प्रभो। पांशूपलिप्तसर्वाङ्गो नकुलस्तेन गच्छति ॥ १८ ॥ एकवस्त्रा प्ररुदती मुक्तकेशी रजस्वला। शोणिताक्ताद्रवसना द्रौपदी वाक्यमब्रवीत् ॥ १९ ॥ यत्कृतेऽहमिदं प्राप्ता तेषां वर्षे चतुर्दशे। हतपत्यो हतसुता हतबन्धुजनप्रियाः ॥ २० ॥ बन्धुशोणितदिग्धाङ्ग्यो मुक्तकेश्यो रजस्वलाः। एवं कृतोदका भार्य्याः प्रवेक्ष्यन्ति गजाह्वयम् ॥ २१ ॥ कृत्वा तु नैरृतान् दर्भान् धीरो धौम्यः पुरोहितः। सामानि गायन् याम्यानि पुरतो याति भारत ॥ २२ ॥ हतेषु भरतेष्वाजौ कुरूणां गुरवस्तदा। एवं सामानि गास्यन्तीत्युक्त्वा धौम्योऽपि गच्छति ॥ २३ ॥ हाहा गच्छन्ति नो नाथाः समवेक्षध्वमीदृशम्। अहो धिक् कुरुवृद्धानां बालानामिव चेष्टितम् ॥ २४ ॥ राष्ट्रेभ्यः पाण्डुदायादांल्लोभान्निर्वासयन्ति ये। अनाथाः स्म वयं सर्वे वियुक्ताः पाण्डुनन्दनैः ॥ २५ ॥ दुर्विनीतेषु लुब्धेषु का प्रीतिः कौरवेषु नः। इति पौराः सुदुःखार्त्ताः क्रोशन्ति स्म पुनः पुनः ॥ २६ ॥ एवमाकारलिङ्गैस्ते व्यवसायं मनोगतम्। कथयन्तश्च कौन्तेया वनं जग्मुर्मनस्विनः ॥ २७ ॥ एवं तेषु नराग्र्येषु निर्यात्सु गजसाह्वयात्। अनभ्रे विद्युतश्चासन् भूमिश्च समकम्पत ॥ २८ ॥ राहुरग्रसदादित्यमपर्वणि विशाम्पते। उल्का चाप्यपसव्येन पुरं कृत्वा व्यशीर्य्यत ॥ २९ ॥ प्रत्याहरन्ति क्रव्यादा गृध्रगोमायुवायसाः। देवायतनचैत्येषु प्राकाराट्टालकेषु च ॥ ३० ॥ एवमेते महोत्पाताः प्रादुरासन् दुरासदाः। भारतानामभावाय राजन् दुर्मन्त्रिते तव ॥ ३१ ॥

वैशम्पायन उवाच। एवम्प्रवदतोरेव तयोस्तत्र विशाम्पते।

धृतराष्ट्रस्य राज्ञश्च विदुरस्य च धीमतः ॥ ३२ ॥ नारदश्च सभा-
मध्ये कुरूणामग्रतः स्थितः । महर्षिभिः परिवृतो रौद्रं वाक्य-
मुवाच ह ॥ ३३ ॥ इतश्चतुर्दशे वर्षे विनङ्क्ष्यन्तीह कौरवाः ।
दुर्य्योधनापराधेन भीमार्जुनबलेन च ॥ ३४ ॥ इत्युक्त्वा दिव-
माक्रम्य क्षिप्रमन्तरधीयत । ब्राह्मीं श्रियं सुविपुलां बिभ्रद्देवर्षि-
सत्तमः ॥ ३५ ॥

वैशम्पायन उवाच । ततो दुर्य्योधनः कर्णः शकुनिश्चापि
सौबलः । द्रोणं द्वीपममन्यन्त राज्यं चास्मै न्यवेदयन् ॥ ३६ ॥
अथाब्रवीत्ततो द्रोणो दुर्य्योधनममर्षणम् । दुःशासनञ्च कर्णञ्च
सर्वानेव च भारतान् ॥ ३७ ॥ अवध्यान् पाण्डवानाहुर्देवपुत्त्रान्
द्विजातयः । अहं वै शरणं प्राप्तान् वर्त्तमानो यथाबलम् ॥३८॥
गतान् सर्वात्मना भक्त्या धार्त्तराष्ट्रान् सराजकान् । नोत्सहेयं
परित्यक्तुं दैवं हि बलवत्तरम् ॥ ३९ ॥ धर्मतः पाण्डुपुत्त्रा वै वनं
गच्छन्ति निर्जिताः । ते च द्वादशवर्षाणि वने वत्स्यन्ति
पाण्डवाः ॥ ४० ॥ चरितब्रह्मचर्य्याश्च क्रोधामर्षवशानुगाः । वैरं
निर्य्यातयिष्यन्ति महद्दुःखाय पाण्डवाः ॥ ४१ ॥ मया च भ्रंशितो
राजन् द्रुपदः सखिविग्रहे । पुत्त्रार्थमयजद्राजा बधाय मम
भारत ॥ ४२ ॥ याजोपयाजतपसा पुत्त्रं लेभे स पावकात् ।
धृष्टद्युम्नं द्रौपदीञ्च वेदीमध्यादनिन्दिताम् ॥ ४३ ॥ धृष्टद्युम्नस्तु
पार्थानां श्यालः सम्बन्धिनां मतः । पाण्डवानां प्रियरतस्तस्मान्मां
भयमाविशत् ॥ ४४ ॥ ज्वालावर्णो देवदत्तो धनुष्मान् कवची
शरी । मर्त्यधर्मतया तस्मादद्य मे साध्वसो महान् ॥ ४५ ॥
गतो हि पक्षतां तेषां पार्षतः परवीरहा । रथातिरथसंख्यायां
योऽग्रणीरर्जुनो युवा ॥ ४६ ॥ सृष्टप्राणो भृशतरं तेन चेत्संयुगो
मम । किमन्यद्दुःखमधिकं परमं भुवि कौरवाः ॥ ४७ ॥ धृष्ट-
द्युम्नो द्रोणमृत्युरिति विश्रुतं वचः । मद्बधाय श्रुतोऽप्येष लोके

चाप्यतिविश्रुत: ॥४८॥ सोऽयं नममनुप्राप्तस्तत्क्षते काल उत्तमः ।
त्वरितं कुरुत श्रेयो नैतदेतावता कृतम् ॥ ४९ ॥ मुहूर्त्तं सुख-
मेवैतत्तालच्छायेव हैमनी । यजध्वञ्च महायज्ञैर्भोगानश्नीत
दत्त च ॥ ५० ॥ इतश्चतुर्दशे वर्षे महत् प्राप्स्यथ वैशसम् ।
द्रोणस्य वचनं श्रुत्वा धृतराष्ट्रोऽब्रवीदिदम् ॥ ५१ ॥ सम्यगाह
गुरु: चत्तरुपावर्त्तय पाण्डवान् । यदि ते न निवर्त्तन्ते सत्कृता
यान्तु पाण्डवा: । सशस्त्ररथपादाता भोगवन्तश्च पुत्रका: ॥ ५२ ॥

इति सभापर्वणि अनुद्यूतपर्वणि धृतराष्ट्रवाक्ये
नवसप्ततितमोऽध्याय: ॥ ७९ ॥

---

वैशम्पायन उवाच । वनं गतेषु पार्थेषु निर्जितेषु दुरोदरे ।
धृतराष्ट्रं महाराज तदा चिन्ता समाविशत् ॥ १ ॥ तच्चिन्तयान-
मासीनं धृतराष्ट्रं जनेश्वरम् । निश्वसन्तमनेकाग्रमिति होवाच
सञ्जय: ॥ २ ॥

सञ्जय उवाच । अवाप्य वसुसम्पूर्णां वसुधां वसुधाधिप: ।
प्रव्राज्य पाण्डवान्राज्याद्राजन् किमनुशोचसि ॥ ३ ॥

धृतराष्ट्र उवाच । अशोच्यत्वं कुतस्तेषां येषां वैरम्भविष्यति ।
पाण्डवैर्युद्धशौण्डैर्हि बलवद्भिर्महारथै: ॥ ४ ॥

सञ्जय उवाच । तवेदं सुकृतं राजन्महद्वैरमुपस्थितम् ।
विनाशो येन लोकस्य सानुबन्धो भविष्यति ॥ ५ ॥ वार्य्यमाणो
हि भीष्मेण द्रोणेन विदुरेण च । पाण्डवानां प्रियां भार्य्यां
द्रौपदीं धर्मचारिणीम् ॥ ६ ॥ प्राहिणोदानयेहेति पुत्रो दुर्य्यो-
धनस्तव । सूतपुत्रं सुमन्दात्मा निर्लज्ज: प्रातिकामिनम् ॥ ७ ॥
यस्मै देवा: प्रयच्छन्ति पुरुषाय पराभवम् । बुद्धिं तस्यापकर्षन्ति
सोऽर्वाचीनानि पश्यति ॥ ८ ॥ बुद्धौ कलुषभूतायां विनाशे समु-

पश्यते। अनयो नयसङ्काशो हृदयान्नापसर्पति ॥ ९ ॥ अनर्था-श्चार्थरूपेण अर्थाश्चानर्थरूपिणः । उत्तिष्ठन्ति विनाशाय नूनं तच्चास्य रोचते ॥ १० ॥ न कालो दण्डमुद्यम्य शिरः क्रन्तति कस्यचित् । कालस्य बलमेतावद्विपरीतार्थदर्शनम् ॥ ११ ॥ आसा-दितमिदं घोरं तुमुलं लोमहर्षणम् । पाञ्चालीमपकर्षद्भिः सभा-मध्ये तपस्विनीम् ॥ १२ ॥ अयोनिजां रूपवतीं कुले जातां विभावसोः । को नु तां सर्वधर्मज्ञां परिभूय यशस्विनीम् ॥१३॥ पर्य्यानयेत् सभामध्ये विना दुर्य्यूतदेविनम् । स्त्रीधर्म्मिणी वरा-रोहा शोणितेन परिप्लुता ॥ १४ ॥ एकवस्त्राथ पाञ्चाली पाण्ड-वानभ्यवैक्षत । हृतस्वान् हृतराज्यांश्च हृतवस्त्रान् हृतश्रियः ॥१५॥ विहीनान् सर्वकामेभ्यो दासभावमुपागतान् । धर्म्मपाशपरि-क्षिप्तानशक्तानिव विक्रमे ॥ १६ ॥ क्रुद्धामनर्हतीं कृष्णां दुःखितां कुरुसंसदि । दुर्य्योधनश्च कर्णश्च कटुकान्यभ्यभाषताम् । इति सर्वमिदं राजन्नाकुलं प्रतिभाति मे ॥ १७ ॥

धृतराष्ट्र उवाच । तस्याः कृपणचक्षुर्भ्यां प्रदह्येतापि मेदिनी । अपि शेषं भवेदद्य पुत्राणां मम सञ्जय ॥ १८ ॥ भरतानां स्त्रियः सर्वा गान्धार्य्या सह सङ्गताः । प्राक्रोशन् भैरवं तत्र दृष्ट्वा कृष्णां सभागताम् ॥ १९ ॥ धर्म्मिष्ठां धर्म्मपत्नीञ्च रूपयौवनशालिनीम् । प्रजाभिः सह सङ्गम्य ह्यनुशोचन्ति नित्यशः ॥ २० ॥ अग्नि-होत्राणि सायाह्ने न चाहूयन्त सर्वशः । ब्राह्मणाः कुपिता-श्चासन् द्रौपद्याः परिकर्षणे ॥ २१ ॥ आसीन्निष्टानको घोरो निर्घातश्च महानभूत् । दिव उल्कापतन्तश्च राहुश्चार्कमुपा-ग्रसत् ॥ २२ ॥ अपर्व्वणि महाघोरं प्रजानां जनयन् भयम् । तथैव रथशालासु प्रादुरासीद्धुताशनः ॥ २३ ॥ ध्वजाश्चापि व्यशी-र्य्यन्त भरतानामभूतये । दुर्य्योधनस्याग्निहोत्रे प्राक्रोशन् भैरवं शिवाः ॥ २४ ॥ तास्तदा प्रत्यभाषन्त रासभाः सर्वतो दिशः ।